BIBLIOTHECA INDICA:

A

# COLLECTION OF ORIENTAL WORKS

PUBLISHED BY THE
ASIATIC SOCIETY OF BENGAL.
NEW SERIES, NOS. 1105, 1117, 1124, 1136, 1162, 1167, 1182, 1185, 1207, 1216.

# MAHĀBHĀSYA PRADĪPODDYOTA




BY
NAGEÇA BHAṬṬA
EDITED BY
PAṆḌIT BAHUVALLABHA ÇASTRI.

VOL. III.

CALCUTTA:
PRINTED AT THE BAPTIST MISSION PRESS,
AND PUBLISHED BY THE
ASIATIC SOCIETY, 57, PARK STREET.
1909.

# महाभाष्यप्रदीपोद्द्योतः ।

नागेशभट्टविरचितः ।

बहुवल्लभशर्म्मणा परिशोधितः ।

बङ्गदेशीयासियाटिक् सोसाइट्याख्यसमाजानामनुमत्या

व्ययेन च ।



कलिकाता राजधान्यां

ब्याप्तिस्ट-मिसन यन्त्रे मुद्रितः ।

शकाब्दाः १८११ ।

# सङ्केतचिह्नम् ।

| | |
|---|---|
| अ । पा । आ | अध्यायः । पादः । आह्निकम् । |
| पा | पाणिनिसूत्रम् । |
| भा | महाभाष्यम् । |
| वा | वार्तिकम् । |
| कै | कैय्यटः । |
| मीमा | मीमांसासूत्रम् । |
| सू | सूत्रम् । |
| हरिः | भर्तृहरिकारिका । |
| उणादि | उणादिसूत्रम् । |
| शब्दकौ | शब्दकौस्तुभः । |
| वेदाद | वेदान्तदर्शनम् । |
| पतञ्जल – यो – भा | पतञ्जलयोगसूत्रभाष्यम् । |
| जै – न्या – वि | जैमिनीयन्यायमालाविस्तरः । |

# महाभाष्यप्रदीपोद्योतस्य द्वितीयाध्यायान्तर्गतानां पाणिनिसूत्राणामकारादिक्रमेण सूचीपत्रम् ।

---

## अ

## आ



## इ



## ई



## उ

### ए



### क



### ख



### ग

## च



## ण



## त

## द



## न



## प

## स



## ह

Vol. III. Fasc. I.




# महाभाष्यप्रदीपोद्द्योतः ॥

पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ॥

कृते ऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ॥

## समर्थः पदविधिः ॥ २ । १ । १ ॥

विधिरिति कोऽयमिति (भा)

भाष्यस्य न स्वरूपप्रश्ने तात्पर्यं तस्य लोकेन निश्चितत्वादित्यतोऽभिप्रायमाह

---

समर्थः पदविधिः । २ । १ । १ ॥ सामर्थ्यं चाऽनेकार्थीभावः । पृथगर्थानामेकार्थीभावः सामर्थ्यम् । *राज्ञः पुरुष इति वाक्ये पृथगर्थानि

---

समर्थः पदविधिः ॥ २ । १ । १ ॥ पदसम्बन्धी यो विधिः स समर्थाश्रितो बोध्यः । परिभाषेयम् । समर्थशब्दस्य तदाश्रिते लक्षणा । सामर्थ्यं

---

“समर्थः पदविधिः” ॥ २ । १ । १ ॥ ‘परिभाषेयमिति’ । नाधिकारः पदविधिग्रहणात्, अन्यथा वक्ष्यमाणानां पराङ्गवद्भावादीनां पदविधित्वा-

---

* पृथगर्थानामेकार्थीभावः समर्थवचनम् । वा । पृथगर्थानां पदानामेकार्थीभावः समर्थमित्युच्यते । क्व पुनः पृथगर्थानि क्वैकार्थानि । वाक्ये पृथगर्थानि । राज्ञः पुरुष इति । समासे पुनरेकार्थानि । राजपुरुष इति ॥

अर्थेति ॥ (कै)

कोऽयमि- (भा)

त्यस्य किमर्थकोऽयमित्यर्थः । शब्दार्थयोरभेदादितिभावः ॥

किं भावेति । (कै)

करणाधिकरणसाधनवत्त्वनन्वितत्वात् प्रयोजनाभावाच्च नोक्ति-
खितः ॥

विधीयमानत्वादिति । (कै)

वक्ष्ससादिविधाविति शेषः ॥

---

राजपुरुष इति समासे एकार्थानीति *भाष्यात् ॥ एवं यत्किञ्चित्पदजन्य-पृथगुपस्थितिविषयार्थकत्वेन लोकदृष्टानां विशिष्टविषयैकशक्त्यैकोपस्थिति-जनकत्वमेकार्थीभाव इति कल्पितम् । तेषां तत्त्वं तु सादृश्याद् बोध्यम् ॥ कार्य्यं शब्दं मन्वतां वाक्यादेव वृत्तिनिष्पत्तिबुद्धेर्वा । एकार्थीभाव इति त्रिनिर्देशो गौणमेकार्थत्वं समासघटकपदानां बोधयितुम् । यथा पदा-नामसत्त्वात् तत्सत्त्वाव्यवहारो गौणः । तथा तेषामेकार्थत्वव्यवहारोऽपीति

---

येनैकार्थीभावः । प्रक्रियादशायां पृथगर्थत्वेन प्रथमगृहीतस्य विशिष्टै-कार्थत्वमिति यावत् । राजपुरुषः । पुत्रीयति । कुम्भकारः । औपगवः । इह गुणः कृतात्मसंस्कारेति न्यायेन महाविभाषायाः सामर्थ्यविशेषणता । विकल्पेनैकार्थीभूतं षष्ठ्यन्तं समस्यत इत्याद्यर्थात् । विशेषणबलादेव च व्यपेक्षापक्षोऽपि सम्मतः । वृत्तिस्तु समासादिनियता । अत एव श्रद्धस्येति

---

व्यभिचारादनर्थकं तत्स्यात् । परितः सर्वतः पूर्वत्र परत्र व्यवहिते चानन्तरे च भाष्यते कार्यमनयेति करणे 'गुरोश्च हल' इत्यकारप्रत्ययः, भावसाधन एव वाऽभेदोपचारात्सूत्रे प्रयुज्यते, इदं शब्दस्य सूत्रे प्रयुक्तस्यापि विधेय-परिभाषाशब्दसामानाधिकरण्यात्स्त्रीलिङ्गता । 'स सर्व इति' । ननु यः

इतरचेति । (कै)

कर्मसाधने इत्यर्थः ॥ अर्थभेदाच्छब्दभेद इति मते प्रत्यभिज्ञानुपपत्तिस्तद्भेदेऽपि शब्दैक्ये तु कः शब्द इत्यनुपपन्नमत आह

तचेति ॥ (कै)

औणादिकेनिति । (कै)

[1]इगुपधात्किदित्यनेनेति भावः ॥

स्वरे चेति । (कै)

मङ्गलपरणादौणादिकस्यापि कर्मणि संभव इति भावः ॥

---

१ इगुपधात् कित् उणादि-४ पा-११९ सू ॥

---

बोध्यम् ॥ विभक्त्यन्ते एतद् वारणाय वृत्तानामित्यन्तं तेषां लोके तत्त्वेनावृत्तत्वात् । औपगवादौ प्रत्ययानां तथा वृत्तत्वाभावेन यत् किञ्चित् पदजन्योपस्थितिविशेषणम् ॥ अपत्यरूपार्थस्योपगोरपत्यमित्यादौ तथा दर्शनसत्त्वात् । विभक्त्यर्थस्य तु न तथात्वम् ॥ तदाद्यार्थवाचकस्य शब्दान्तरस्याभावादिति निरूपितम् ॥ विशिष्टविषयैक शक्त्येति हेतुवचनम् । अत

---

विशेषणं तत्र नान्वेति शक्त्यैकदेशत्वात् । न हि श्वशुरशब्दजन्यप्रतीतौ पितृविशेषणत्वेनोपस्थितायां भार्यायां सुशीलाया इत्यादिविशेषणमन्वेति । न चैवं देवदत्तस्य गुरुकुलमित्यादावनन्वयापत्तिः । तत्रापि कुलेनैव देवदत्तशब्दोत्तरषष्ठ्यर्थस्यान्वयात् । सम्बन्धस्तु उपस्थितगुरुद्वारक एव षष्ठ्यर्थो न तु तदितरः । उक्तञ्च । समुदायेन सम्बन्धो येषां गुरुकुलादिना ।

---

कश्चित्पदविधिरिति सामान्यनिर्देशेनैव तद्धर्मभूता व्याप्तिरुक्ता किं सर्वग्रहणेन, नैतदस्ति । यः कश्चिद्ब्राह्मण आनीयतामित्युक्ते क्षत्रियादिनिवृत्तिः प्रतीयते न व्याप्तिः, प्रथमपठितमपि समर्थशब्दमुल्लङ्घ्योद्देश-

प्रयोगदर्शनमिति । (कै)

वैकर्थ्यकाष्टाध्यायीपाठादिह वेदे लोके चेति शेषः ॥

एतद्भावेति । (कै)

तथा सति पदकर्मके विधाने वृत्त्यर्थापत्तौ समासाद्यसंभवः स्याद् बहुचाद्यादेशविधौ चातिप्रसङ्गः स्यादिति भावः ॥

इह । (कै)

सूत्रे ॥

इतर इति । (कै)

प्रकरणपर्यालोचनयेति भावः ॥ समासपदं वृत्तिमात्रोपलक्षणम् ॥

---

एव कैयटः । अन्य एवावयवार्थान्वितः समुदायार्थः प्रादुर्भवतीति तदपेक्षयैकार्थीभाव उच्यते तेषां पांसूदकवदविभागापन्नत्वादिति । अयं भावः । वाक्ये यथा पदैः पृथक् पदार्थानां बोधेऽप्याकाङ्क्षामूलकवाक्यशक्तिवशाद् विशेष्यविशेषणभावापन्नविशिष्टार्थप्रतीतिर्नैवं वृत्तौ किं त्ववयवशक्तिभ्यामाकाङ्क्षामूलकसमुदायशक्तिसहकृताभ्यां नियतोद्बोधकवशात् पदार्थ-

---

संसृष्टावयवार्थास्ते तु युज्यन्ते तद्वता सहेति ॥ यद्वा । सम्बन्धिकपदार्थस्यैकदेशत्वेऽपि भवत्येव विशेषणान्वयः । चैत्रस्य नप्तेत्यादौ तथा दर्शनात् । श्वशुरशब्दोपस्थितायां भार्यायां तत्पतेर्विशेषणत्वाच्च ।' तदंशे उत्थिताकाङ्क्षत्वात् । उक्तं च । सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते । स्वार्थ-

---

समर्पकत्वनतात्पर्येण क्रमेण प्रथमे भाविनं पदविधिशब्दं व्याख्यास्यन्विधिशब्दः कर्मसाधन इति दर्शयति । 'विधीयत इति विधिरिति' । कार्यमित्यर्थः । 'पदानामिति' । शेषलक्षणा षष्ठी । पदानां सतां यत्कार्यं विधीयत इत्यर्थः । यदि तु भावसाधनो विधिशब्द आश्रीयेत विधानं विधिरिति ततः पदेषु कृद्योगलक्षणा कर्मणि षष्ठी पदानामसतां निष्पादनं

समुदायो वेति। (कै)

स अवयवभूतपदानां कार्यः समूहस्यावयवातिरिक्ततया अपि स्वीकारादिति भावः॥ विभक्त्यन्तस्य पदत्वाद् विभक्तिविधानस्य कथं पदोद्देश्यकविधित्वमित्याशङ्क्याह

विभक्तीति॥ (कै)

एवं ह्येति। (कै)

विहितानां वियमस्य विधिना पञ्चप्राप्तेतरविभक्त्यन्तानां निवृत्तिरूपस्याश्रवणेन सा निवृत्तिः पदोद्देश्यिकेत्यर्थः। केचित्तु पदोद्देश्यकः पदत्वसंपादको वा सर्वोऽपि पदसंबन्धित्वात्पदविधि-

---

बोध एव जायमानो विशेष्यविशेषणभावापन्नविशिष्टविषयो भवति। तत्र विशिष्टशक्तिग्रह इत्यम। राजपुरुषादिपदं राजसम्बन्धवत् पुरुषादौ शक्तमिति। तत्र सा विशिष्टशक्तिः प्राप्ताप्राप्तविवेकन्यायेन सम्बन्धांशे विशेषणतावाच्यंशे च पर्यवस्यति। राजादेः स्वतावयवशक्त्यैवोपस्थिति-संभवात्। आकाङ्क्षामूलकेति विशेषणात् नित्यघट इत्यादेर्नैकार्थीभावेन

---

वत्ता अपेक्षास्य वृत्तावपि न क्षीयत इति। तस्मात्समासकृत्तद्धित-विशेषणे। न विशेषणसम्बन्धः सापेक्षेतु भवेदयम्॥ स्यादेतत्। वाक्ये स्वतया ऽवयवशक्त्यैवोपपत्तौ मास्तु शक्त्यन्तरम्। न चैवं विशेषणसंबन्धापत्तिः। सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणयोगो नेति निषेधस्य सम्भवादिति चेत्। सत्यम्। बहूनां वृत्तिधर्माणां वचनैरेव साधने। स्यान्महद्गौरवं

---

पदविधिरिति तत्र समासतद्धितसुब्धातुवृत्तयो न संगृहीताः सुबन्तानां हि पदानां सतां समासादिकार्यं विधीयते न पुनः पदत्वं, ननु च कर्मसाधन-पक्षेऽपि विभक्तिविधानमसंगृहीतं स्यात् पदान्येव हि तत्र विधीयन्ते न तु पदानां सतां किं चिद् उच्यते, कर्मणि द्वितीयेत्यादिना तु नियमः क्रियते

रेवेति वदन्ति ॥ ननु किं विधीयत इति प्रश्ने विभक्तिविधानमित्युत्तरमयुक्तं विधानस्य विधानकर्मत्वाभावादत आह

तत्र विभक्तावेति । (कै)

एवं च पाकं पचतीतिवत् सामान्यविशेषभावे वान्वय इति भावः ॥ क्रियाविशेषणत्वाच्च कर्मत्वम् ॥

रूपद्वयमिति । (कै)

यद्यपि संज्ञात्वमपि तत्र तथाप्येतद्रूपतया शास्त्रव्यवहाराभावात्तन्नोक्तम् ॥

अन्येनेति । (कै)

पूर्वपक्षिणा सिद्धान्तिना चेत्यर्थः ॥

---

साधुत्वम् ॥ विशेषणत्वेनोपस्थितघटत्वादेः स्वविशेषणाकाङ्क्षाभावात् । अतो नित्यो घट इत्यादि वाक्यमपि न । अत एव राजपुरुषैकदेशे राज्ञि वाक्य इव ऋद्धस्य इत्यादि विशेषणान्वयो न । तस्य शब्दार्थैकदेशत्वात् । यद्यपि तस्य राजपदार्थत्वमस्ति । तथापि विशेषणान्वये विशेषस्येतरविशेषणत्वविषयकशक्तिग्रहाविषयत्वस्य तन्त्रत्वेन इतराविशेषणत्वेन ज्ञातस्य

---

तस्मादेकार्थीभाव आस्थितः ॥ चकारादिनिषेधो ऽथ बहुव्युत्पत्तिभञ्जनम् । कर्तव्यं ते न्यायसिद्धं त्वस्माकं तदिति स्थितिः ॥ तथाहि । धवखदिराविति इत्यैव क्रोडीकृतार्थत्वाच्चकारो न प्रयुज्यते । तथा चित्रागवादौ यत्पदम् । त्वया तु वचनं कर्त्तव्यं, निरूढलक्षणया तु शक्तितो नातीव भिद्यते । नैयायिकैश्चकारार्थे तदनभ्युपगमाच्च । अकथितसूत्रे व्युत्पादितरीत्या

---

न पदविधिः । यद्यप्येकवाक्यतया स्वादिसूत्रेण विभक्तीनां विधानम् एवमपि कारकविभक्तिषु तावत्क्रियाकारकयोरविनाभूतः सम्बन्धः, उपपदविभक्तीनां 'अन्तरान्तरेणयुक्ते' इत्यादीनामुपसर्गविभक्तीनां च "नेर्विश"

आद्ये नेति[1] (कै)

पाठे किं पुनरिति सन्देहकलेत्यर्थः ॥

अन्यथा । (कै)

अधिकारपरिभाषयोर्विशेषाज्ञाने ॥

फलाख्यानम् । (कै)

तस्यानिर्देशार्थं इत्येतत् ॥

स्वरूपम् । (कै)

योगे योगेऽनुपस्थितिरूपम् ॥

---

१ उपलब्धकैयटपुस्तके "आद्येन" इति पाठोऽस्ति ॥

---

तन्मतेन वा दोषाभावः ॥ एतन्मूलिकैव **"पदार्थः पदार्थेनान्वेति न तु पदार्थैकदेशेन"** इति व्युत्पत्तिः । "दर्शनीयाया माता" "दर्शनीयामाता" इत्यादौ एकविशेष्यकप्रतीतिजनकत्वरूपसामानाधिकरण्यसत्त्वेऽपि न पुंवत्त्वम् । वृत्तेः पूर्वमपि यत्र सामानाधिकरण्यं तत्रैव

---

नामार्थयोरभेदः प्रत्ययार्थः । प्रधानमित्यादिव्युत्पत्तित्यागश्च । ग्रामोदक इत्यादौ उदककर्तृकग्रामकर्मकत्वाद्यर्थाभ्युपगमात् एकार्थीभावे तु लाघवमिति । यद्यपि सिद्धान्ते पदं वाक्यं वा शक्तं तथापि प्रक्रियादशायां लाघवादेकार्थीभाव इत्याशयः । यैव ह्यस्माकं प्रक्रिया सा परैः पारमार्थिकतया गृह्यते इति युक्तस्तान् प्रति गौरवोपन्यास इति दिक् ॥ क्वचित्तु सापेक्षत्वेऽपि भाष्यप्रामाण्याद् वृत्तिः । तद्यथा । किमोदनः शालीनाम् ।

---

इत्यादीनामेकवाक्यतायां भिन्नवाक्यतायां च पदविधित्वमस्त्येव उपपदानामुपसर्गाणां च पदत्वात्, समासादिरित्यादिशब्देन तद्धितवृत्त्यादीनां ग्रहणं तद्धिता अपि सुबन्तादुत्पद्यन्ते । 'समर्थानां प्रथमाद्वे' त्यस्य तु समर्थग्रहणस्य प्रयोजनं तत्रैव वक्ष्यामः, एवं 'मिसुसोः सामर्थ्ये' इत्यादीनामपि

लिङ्गोपादानेनेति । (वै)

स्वरितत्वप्रयुक्ताधिकारेणेतरत्र तत्तत्पदोपस्थितिरधिकारान्तरं दृष्ट्वा व्याख्यानाद्वा निवृत्तिश्च । परिभाषास्तु लिङ्गवति सर्वत्र तेषां सर्वेषामत्रोपस्थित्या परिभाषाया वा तत्तत्रोपस्थित्या स्वार्थोपस्थितिद्वारा व्याप्तिरिति भावः । इदं च "षष्ठी स्थाने" इति सूत्रे निरूपितम् । तदुक्तम्

"एकदेशस्थिताशास्त्रभवने याति दीपताम् ।
परितो व्यापृतां भाषां परिभाषां प्रचक्षते" ॥

---

१ अ १ । पा १ । सू ४९ इति सूत्रस्थविवरणे ।

---

पुंस्त्वप्रवृत्तेर्भाष्यसंमतत्वात् । राजविशेषणानन्वयरूपविशेषस्यैकार्थीभाव-व्रतत्वं भाष्ये दूषितम् । एकार्थीभावसत्त्वेऽपि देवदत्तस्य गुरुकुलमित्यादौ तदभावात् । इदमुपलक्षणम् । घटादिपदे एकार्थीभावाभावेऽपि तदेका-देशे घटत्वादौ विशेषणान्वयाभावादित्यपि बोध्यम् । राज्ञः पुरुषोऽश्वश्च इति वद् राजपुरुषोऽश्वश्च इत्यप्यत एव न । एकत्रविशेषणत्वेन गृहीत-

---

केषां प्राचीनामोदन इत्यर्थः । सक्ताठकमापणीयानाम् । आपणीयानां सक्तूनामाढकमित्यर्थः । कुतो भवान्पाटलिपुत्रकः । हे पाटलिपुत्रे । तत्र कस्मात्पाटलिपुत्राद्भवानागत इत्यर्थः । रोपधेतोः प्राचामिति वुञ् । (४ । २ । १२३) तथा । नञ्समासा अपि केचित्साधवः । अश्राद्धभोजी ब्राह्मण इति यथा । केचित्तु न साधवः । अकिञ्चित्कुर्वाणमिति यथा ।

---

समर्थः शक्त इति तत्रैव समर्थशब्दस्य रूढत्वात् स्वकार्यनिष्पादनक्षमो हि लोके समर्थ इत्युच्यते, अर्थप्रतिपादनं च शब्दानां स्वकार्यमुत्पाद्यत्वेन चाविकृता लौकिका वैदिकाश्च यस्य कस्य चित्प्रतिपादने समर्था, उच्यते चेदं समर्थ इति तत्र सामर्थ्याद्विशेषोऽवगम्यते न तु विशेषः प्रत्याख्यातेदेवं

## प्रदेशान्तरेष्विति। (कै)

"षष्ठी स्थाने" इतिसूत्रे आद्यम्। "निपात एकाजनाङ्"[1] इत्यत्र चान्त्यम्। सामान्यतः पदविधित्वेन तत्र च पारार्थ्यसामान्यादति-देशसंज्ञयोः परिभाषात्वेन व्यवहार इति बोध्यम्॥

## स्वरितगुणयुक्तमिति। (कै)

स्वरवच्छब्दान्मत्वर्थेऽणिचि मतोर्लुकि टिलोपाभावेऽप्यकृतव्यूह-परिभाषया इष्ठभावे आद्गुणे रूपमिति भावः। यद्वा[2] ऽर्श आद्यजन्तस्वरशब्दात् णिचीदं रूपम्॥

---

१ अ १। पा १। सू १४॥ २ अ ५। पा २। सू १२७।

---

व्यक्तिकस्य ज्ञातस्य वा परमविशेषणत्वायोगात्। घटः पटश्च द्रव्यमितिवत् तदर्थे द्रव्यपदस्य घटरूपविशेषपरतायां द्रव्यं पटश्चेत्यप्रयोगात्। एवं राज्ञः पुरुषो भार्यायाश्चेति वत् राजपुरुषो भार्यायाश्चेति न। एकविशेषण-वैशिष्ट्येन गृहीतव्यक्तिके ज्ञाते वा विशेष्ये तत्सजातीयसम्बन्धेन विशेषणा-न्तरसम्बन्धस्याव्युत्पत्तेः। घटो द्रव्यमित्यर्थे घटो द्रव्यत्वस्य इत्यप्रयोगात्।

---

किञ्चिदप्यकुर्वाणमित्यर्थः। अत्रेदमवधेयम्। वाक्ये त्रेधा सामर्थ्यम्। भेदः संसर्गो भेदसंसर्गौ चेति। आद्ये ऽतद्व्यावृत्तिमात्रस्य शाब्दत्वम्। संसर्ग-स्त्वार्थः। द्वितीये विपरीतम्। तृतीये तूभयं शाब्दम्। अलौकिके प्रक्रियावाक्ये तु प्रथममुपस्थितयान्वितमात्रगमेऽपि वृत्तिः कल्प्यते। परि-

---

रूप इत्याह। 'विग्रहवाक्यार्थाभिधान इति'। विशेषेण गृह्यते ज्ञायतेऽनेन समासार्थ इति विग्रहः, तादृशं च तद्वाक्यं चेति विशेषणसमासः। यद्वा विशेषेण ग्रहणं विग्रहः, तदर्थं वाक्यं विग्रहवाक्यम्, अश्वघासादिवत्षष्ठी-समासः। अथ वा ऽभेदोपचाराद्विग्रहार्थवाक्यं विग्रहं इति विशेषण-

## यावन्तीति। (कै)

भाष्ये

## सर्वमित्यस्य

सिद्धवत्सर्वं शास्त्रमित्यर्थः। तानि सर्वाणि पदविधिशब्दोपादानेन सामान्यतः पदविधित्वेनापेक्ष्यानूद्येत्यर्थः॥

## द्वयोर्भावो द्वित्वेति। (कै)

कोटिद्वये सत्येव संशयोदयाद् द्वित्वभवः संदेह इति भावः॥ द्विविषयनिश्चयस्यापि द्वित्वभवत्वादाह

---

तदुक्तं भाष्ये "राजपुरुषं स्वाम्यन्तरेभ्यो. निवर्त्तयति पुरुषोऽपि राजानं स्वान्तरेभ्यो निवर्त्तयति इति"। राजसम्बन्धविशिष्टे भार्य्यायाः प्रीतिविषयत्वादिसम्बन्धबोधको राजपुरुषो भार्य्याया इति प्रयोगस्तु राजपुरुषः सुन्दर इति वदिष्टः तत्र सुन्दरनिष्ठप्रकारतानिरूपितपुरुषनिष्ठविशेष्यताया अवच्छेदकं पुरुषत्वमेव न तु राजसम्बन्धोऽपीत्यभिप्रायेण प्रधानस्य स विशेषणत्वेऽपि वृत्तिरिति व्यवहारः। सर्वत्र विशिष्टविषयकज्ञाने विशिष्यतावच्छेदक-

---

निष्ठिते विशेषणासम्बन्धाद्यभावदर्शनात्। यथा ग्रामादौ द्वितीयान्तादिसामानाधिकरण्यं दृष्ट्वा ककारे तत्कल्पनेति। अत एव चित्रग्वादेरन्यपदार्थपरतादर्शनादलौकिके प्रक्रियावाक्येऽपि तत्कल्पना। अन्यपदार्थे इत्यादिशैलानुवादेनैव देवताविग्रहवत्तत्सिद्धेश्चेति दिक्।

---

समासः, तद्यथा राजपुरुष इत्ययं समासः, तदर्थं विग्रहवाक्यं राज्ञः पुरुष इति, यस्य योऽर्थस्तदभिधाने राजपुरुषशब्दः समर्थः, अतोऽपि तत्प्रतीतेः, स पुनः राजविशिष्टः पुरुषः। 'समर्थो वेदितव्य इति'। साधुत्वेनेति शेषः, यः पदविधिः स विग्रहवाक्यार्थाभिधाने समर्थः साधुर्भवतीत्यभिप्रायो ऽस्यार्थो वाक्यान्तरं साधीयः पश्यामः, तत्तु सामर्थ्यं प्रतीमतो-

## अथवेति । (कै)

विरुद्धत्वाद्भिन्नाधारवर्तिना प्रकारद्वयेन युक्तमित्यन्वयः । परस्परविरुद्धधर्मद्वयवद्वस्तुद्वयमित्यर्थः ।

## अनेकार्थस्यैकार्थत्वम् एकार्थीभावः

इति प्रथमपक्षमनुसृत्य अजहत्स्वार्थाजहत्स्वार्थयोस्तं दर्शयित्वाद्यजहत्स्वार्थायामत्वं दर्शयति ।

---

त्वादिविशेष्यनिष्ठधर्मे एवेति बोध्यम् । विशिष्टस्य विशेष्यानतिरेकाद् इति कर्मधारयप्रकरणे स्फुटो भविष्यति । एकार्थीभाववशादेव वृत्तावुपसर्जनपदार्थे संख्याबोधकप्रातिपदिकाभावे एकत्वादिरूपसंख्याविशेषानवगतिस्तेन द्विपुत्रादौ न दोषः । मासजातादावपि शब्दान्न तद्बोधः । किं त्वनेकमासजाते द्वित्रिशब्दादिपूर्वमासजातस्यैव प्रयोगाद् एकमासजातविषय एवायं प्रयोग इति निश्चयः । त्वत् पुत्रो युष्मत् पुत्र इत्यादावपि प्रयोक्तुरहंकारानास्पदस्यैकपुत्र इत्येव बोधः । विग्रहवाक्योयैकवचनत्वारोपेणादेशः । अयं चारोपो न बोधफलकः किन्तु शास्त्रप्रवृत्तिमात्रफलकः । वृत्तेस्तथा बोधे भाष्यकृता असाधुत्वबोधनात् । यत्तु 'आदेशतदभावाभ्यां तत्र संख्याविशेषावगतिः । भाष्ये तात्पर्यग्राहकाभावे सतीति

---

ऽनुवर्तनीयं न पुनरियं वृत्तिरस्य वाक्यस्यार्थाभिधानसमर्था नान्यस्येत्येतत्सूत्राक्षरैर्लभ्यते । अत एवास्मिन्व्याख्यानेऽपरितुष्टः सव्याख्यानान्तरमाह । 'अथ वेति' । अत्र पक्षे उपचरितवृत्तिः समर्थशब्दस्तदाह । 'समर्थपदाश्रयत्वादिति' । समर्थानि पदान्याश्रयो यस्य स तथोक्तः, अन्वर्थश्च समर्थशब्दो न रूढ इत्याह । 'समर्थानां पदानां संबद्धार्थानां संसृष्टार्थानामिति' । यः पदानां विधिः-स समर्थानां वेदितव्यः, समर्थानामिति, कोऽर्थः, संबद्धार्थानां संसृष्टार्थानां वेत्यर्थः, तत्र वाक्ये संबद्धार्थता अपेक्षा हि तत्र सामर्थ्यम्

## यत्र पदानीति । (कै)

उपसर्जनपदानीत्यर्थः ॥ तदेव ध्वनयन्नाह

## उपसर्जनीभूतस्वार्थानीति । (कै)

इतरविशेषणभूतस्वार्थोपस्थापकानीत्यर्थो न तु पृथक् स्वार्थोपस्थापकानीति तात्पर्यम् । एवं च तत्पुरुषादावेकं पदं तादृशं बहुव्रीहौ द्वन्द्वे च पदद्वयमपीति बोध्यम् ॥ अजहत्स्वार्थायामाह

---

पूरणीयमिति । तन्न । तद्विधायकशास्त्राज्ञानवतः तद्बोधानापत्तेः । विग्रहे द्विवचनबहुवचनान्तत्वेऽपि एकार्थीभाववशाद् वृत्तौ तदबोधः । अत एव प्रगृह्यसंज्ञासूत्र (१-१-११) भाष्यप्रयुक्ते कुमार्योरगारं कुमार्यगारमित्यादौ द्विवचनान्तेन विग्रहेऽपि वृत्तौ द्वित्वाबोधः । किन्तु कुमारीत्वादिनैव कुमारीद्वयबोधः । अन्यथा सिद्धान्ते प्रगृह्यत्वाभावेन द्वित्वव्यञ्जकाभावादस्य प्रयोगस्यासाधुत्वेनासाधुप्रयोगे भगवतोऽश्रद्धेयतापत्तिः । एवं च वृत्तौ संख्यानवगमेऽपि अनेकार्थप्रतीत्या तथा विग्रहे बाधकाभावः । अत एव संख्याविशेषानवगतिरेवोक्ता न त्वनेकार्थानवगतिरुक्ता । चित्रगुरित्यादौ गोत्वेनैव शब्दतोऽनेकगोव्यक्तिबोधः न तु बहुत्वेन । तन्मध्य इत्यादौ तत्त्वेनैव व्यक्तिद्वयबोधो न तु द्वित्ववत्त्वेनैवमन्यत्राप्यूह्यम् । अत एव कुक्कुटेभ्यगोप-

---

अन्योन्यापेक्षा व्यपेक्षा आकाङ्क्षासंनिधियोग्यत्वेषु सत्सु यः परस्परसम्बन्धः सा व्यपेक्षा, वाक्ये हि राज्ञ इति पदमनियतसंबन्ध्यपेक्षयोद्भूतसंबन्धं विशेषणभूतमर्थमाचष्टे स्वसंनिहितं योग्यं च पुरुषमपेक्षते, ममायमिति पुरुष इत्यनेनापि पुरुषः स्वनिष्ठोऽभिधीयमानः स्वसंनिहितं राजत्वमवच्छेदकत्वेनापेक्षतेऽयमस्येति, अतो विशेषणविशेष्यभावेन संबन्धो ऽनियतसंबन्धिविषयतयापेक्षया यो यः सन्निहितो योग्यश्च तेन सम्बध्यते राज्ञः पुरुषश्चाश्वश्च राज्ञो देवदत्तस्य च पुरुष इति वाक्यान्तरस्य, वृत्तौ तु

निवृत्तस्वार्थामिवेति । (कै)

उभयथापि हेतुः ॥

प्रधानार्थोपादानादिति । (कै)

आद्ये प्रधानार्थेन स्वोपस्थितिकाले एवोपसर्जनपदार्थस्य विशेषणतयोपादानादित्यर्थः । अन्त्ये प्रधानेन पदेन तदर्थस्या-प्युपादानादित्यर्थः । बहुव्रीहौ तु प्रधानं पदं समुदाय इति बोध्यम् । एवं द्वन्द्वे ऽपि प्रधानं पदं समुदायस्तदर्थेन साहित्येन

---

वाचकगोयुचरवर्षासुजादौ बहुवचनसत्त्वेऽपि न संख्याविशेषबोधः । अत्र तादृशस्यैव रूढत्वादबहुवचनान्तेनैव विग्रहः । एवं चाप्यारोपितबहुत्वाश्रयो बहुवचनरूपः संस्कारो न तु प्रकृत्यर्थान्वयि यथा च घटा इत्यादितो बहुत्वे-नैव कदाचित् त्रयाणां कदाचित् चतुरादीनां भानं न तु कदाचिदपि त्रित्व-चतुष्ट्वादिना तथा वृत्तौ राजत्वादिनैकानेकव्यक्तिभानं तात्पर्यवशान्न त्वेकत्वद्वित्वादिना । दन्तोष्ठस्य दन्ताः स्निग्धतरा इत्यादौ च संख्याया अभानाद् दन्तत्वेनोष्ठत्वेन दन्तौष्ठशब्दार्थद्वयस्य प्रतीतेस्तत्रैव अनेक-व्यक्तिसत्त्वेऽपि तासामनेकत्वेनशब्दतो भानाभावादिति बोध्यम् । एतद्-वद्भ्योकाभ्यामुक्त इत्यादावलुकि न साधु । अनभिधानाद् इति स्पष्टं

---

संबद्धार्थता एकार्थीभावो हि तत्र सामर्थ्यं वृत्तौ हि राजपदं राजान-मभिधाय न तावति पर्यवस्यति पुरुषमप्याचष्टे यथा गङ्गायां घोष इति गङ्गापदं तीरं, यदि तु तावत्येव पर्यवस्येत्ततो यथा वाक्ये राज्ञः पुरुषोऽश्व-श्चेति द्वाभ्यां सम्बन्धो भवति तथा राजपुरुषोऽश्वश्चेत्यत्रापि स्यात् सविशेषण-सम्बन्धोऽपि स्याद् ऋद्धस्य राजपुरुष इति, यथा ऋद्धस्य राज्ञः पुरुषइति तथा पुरुषपदमपि राजविशिष्टमेव पुरुषमाचष्टे न पुरुषमात्रं यदि तथा स्यात्ततो यथा वाक्ये राज्ञः पुरुषो देवदत्तस्य चेति द्वाभ्यां सम्बन्धो भवति तथा

स्वविशेषणतया धवाद्यर्थस्योपादानादुपसर्जनभूतस्वार्थानि । यदा विशेष्यवाचित्वोपस्थापकतया प्रधानेन समुदायेनैव धवाद्यर्थस्याप्युपादाना"भिन्नस्वार्थानिवेति" तथायमेकार्थीभावः । समासेतरयोगयोरुभयोरपि वाचित्वं विशेष्यम् । आद्ये ऽनुद्भूतावयवभेदमन्त्ये उद्भूतावयवभेदमित्येव तयोर्भेद इति बोध्यम् ॥

## व्यर्थानीति । (कै)

संनिहितत्वाभिन्नस्वार्थानीत्येतत्पक्षान्तरे ॥ भाष्ये भाष

---

भाष्ये । जातौ बहुवचनमिति कैयटोक्तं तु न युक्तम् । "जात्याख्यायाम्" (१-२-५८) एतत् सूत्रं प्रत्याचक्षाणेन भाष्यकृता जातौ पदार्थे बहुवचनस्याबाधत्वबोधनाद् "यथोत्तरं मुनीनां प्रामाण्यात्" । अत एव भाष्यकृता अस्य विशेषस्योपसर्जनविशेषणाभावरूपविशेषस्य गुरुकुलमित्यादाविव मासजातादावव्यापकत्वं नोक्तं संख्याविशेषानवगतिरेवैकत्वसंख्यापदेनोच्यते । भेदसहचरितद्वित्वादेरेकत्वस्य चाभानमिति तदर्थः । संख्याविशेषप्रतीतौ पृथगुपस्थापकपदज्ञानं कारणमिति तत्प्रतीत्यभावस्यैकार्थीभावकृतत्वमन्यथा घटो घटपटावित्यादौ घटत्वादेरपि संख्याविशेषाकाङ्क्षापत्तिः । तदुक्तं हरिणा—

---

राजपुरुषो देवदत्तस्य चेत्यपि स्यात्, अतो यस्य विशेषैस्य भावादयं विशेषः स एकार्थीभावः, भाष्योक्तास्त्वपरे विशेषाः सुबलोपो व्यवधानं यथेष्टमन्यतरेणाभिसम्बन्धः स्वरभेदश्च संख्याविशेषो व्यक्ताभिधानमुपसर्जनविशेषणं च योगश्चेति, तथा सुपि अलोपश्च भवति वाक्ये राज्ञः पुरुषो नीलमुत्पलमिति, समासे तु द्वयोरेकस्मिन्विशिष्टेऽर्थे वृत्तेः पृथगर्थाभावात्स्वभावत एव विभक्तिर्निवर्तते सैव च स्वाभाविकी निवृत्तिः शास्त्रेणान्वाख्यायते 'सुपो धातुप्रातिपदिकयो' रिति प्रत्ययलक्षणेन नलोपादिपदकार्यं यथा स्यादिति

## अर्थान्तरेति । (कै)

अर्थान्तरान्वितस्वार्थाभिधायीत्यर्थः । प्रत्येकशक्तिसहकृतसमुदायशक्त्या विशिष्टार्थप्रतिपादकानीति भावः ॥

## पदानीति । (कै)

बहुवचनं तु बहुव्रीह्याद्यभिप्रायेण ॥

## स एकार्थीभाव इति । (कै)

आद्ये एकीभूतार्थानि मिलितानीत्यर्थः । तच्च मिलनमत्रे-

---

वाचिका द्योतिका वापि संख्यानां या विभक्तयः ।
तल्लुक्यवयवे वृत्तौ संख्याभेदो निवर्त्तते ॥

यत्त्वत्र अभेदैकत्वसंख्याभासते परित्यक्तविशेषं संख्यासामान्यमेवाभेदैकत्वं संख्या यथैकत्वं द्वित्वादीनां निमित्तं तथेदमभेदैकत्वं सर्वेषामेकत्वादीनां निमित्तमिति सापि संख्येत्युच्यते द्वित्वाद्यनुस्यूतैकत्वादेकत्वभावत्वेनाभिन्नमिवेति तेन पदेनोच्यते इति हेलाराजः । यथा दूराद्रूपमात्रं गृह्यते न तु शुक्लकृष्णादिविशेष एवं राजपुरुष इत्यादौ सत्त्वभूतत्वात् संख्यावान् अर्थ इत्येतावत् प्रतीयते न त्वव्ययार्थवदसंख्यो नापि घटादिवद्विशेषसंख्यावच्छिन्न इति । विशेषपरित्यागश्च तदभानमेव । यदा राजपुरुष इत्युक्ते

---

पृथगर्थाभावे तु पृथग्विभक्तिर्न भवति यथा वर्णेषु व्यवधानं च पृथगर्थत्व एव दृष्टं राज्ञ ऋद्धस्य पुरुष इति, असत्यदृष्टं, यथा राजपुरुषपदेन मध्ये पदान्तरं प्रक्षिप्यते प्रयोगनियमश्च पृथगर्थत्वेऽदृष्टः राज्ञः पुरुषः पुरुषो राज्ञ इति, भवति तु तत्र न दृष्टो यथा पुरुषपदे वर्णेषु स्वरभेदोऽपि पृथगर्थत्व एव दृष्टो राज्ञः पुरुष इति द्वावपि नित्स्वरेणाद्युदात्तौ अभेदेन दृष्टो यथा पुरुष इति वृत्तौ चैकस्वर्यं दृश्यते । किं च संख्याविशेषोऽवगम्यते पृथगर्थेषु राज्ञः राज्ञोः राज्ञां पुरुष इति, वृत्तौ त्वभेदैकत्वसंख्या गम्यते तदेव 'वस्तुगुणान्तर-

तरसाकाङ्क्षत्वाद् द्वयोरपि समर्थत्वं तत्पुरुषादौ। अन्ये पदद्वयार्थयोरेकपदार्थत्वप्राप्तिरित्यर्थः॥

## परस्परेति। (कै)

*विग्रहस्य क्रियाव्यतीहारवृत्तित्वादिति भावः॥*

## तत्रैवैकार्थीभावस्येति। (कै)

तदुक्तत्रयाणां मध्ये तत्रैवेत्यर्थः॥ व्यपेक्षासहिताधिकारत्वेऽधिकारत्वप्रयुक्तदोषमाह

---

राजद्वयादिसम्बन्धिनोऽपि भानात् सर्वविशेषाणां सामान्यरूपेण भानं मधुनि रसानामिव। अत एव तत्र राज्ञो राज्ञां चेति जिज्ञासा। विशेषजिज्ञासायाः सामान्यज्ञानपूर्वकत्वनियमात् सति तु निमित्ते माषजातादौ तत्प्रतीतिर्भवत्येव। उक्तं भाष्यं तु राजपुरुष इत्यादिप्रयोगविषयमेव॥ तदुक्तं हरिणा—

अभेदैकत्वसंख्या वा तत्रान्यैवोपजायते।
संसर्गरूपं संख्यानामविभक्तं तदुच्यते॥

वृत्तावुपसर्जनपदार्थानामपि सत्वभूतत्वात् संख्यायोगावश्यकत्वेन विशेषसंख्याभावेन च सामान्यसंख्यारूपं सर्वसंख्याविशेषाणां संसर्गरूपं तदिति तदर्थः॥

---

पदं' इत्यत्रोपपादयिष्यामः। व्यक्तं चाभिधानं पृथगर्थेषु तिष्ठति ब्राह्मणस्य कम्बल इति, वृत्तौ त्वव्यक्तमभिधानं तिष्ठति ब्राह्मणकम्बल इति सन्देहो भवति संबुद्धिर्वा स्यात् षष्ठीसमासो वेति, न चात्र स्वरान्निर्णयः, वाक्येऽप्यामन्त्रितनिघातः कम्बलशब्दो वृतादित्वादन्तोदात्तः समासेऽप्यन्तोदात्तता, उपसर्जनविशेषणं च व्याख्यातं, योगश्च भवति पृथगर्थेषु राज्ञो गौश्चाश्वश्च कम्बलश्चेति, वृत्तौ त्वैकार्थ्याद्भेदनिबन्धनस्य समुच्चयस्याभावाच्चशब्दो निवर्तते राज्ञो गवाश्वकम्बला इति तदेतैर्विशेषैर्विज्ञायते संभिन्नोऽर्थरूपः पांसूदक-

अन्यच खल्वपीति । (भा)

एकार्थीभावसहिताधिकारत्वे ऽधिकारत्वप्रयुक्तो दोषस्तु मध्ये पादद्वये निवृत्त्या तृतीयाध्यायादावसंबन्धो बोध्यः । एतेनाधिकारत्वसहितोभयविधसामर्थ्याश्रयणपक्षोऽपि निरस्तः[१] ॥

उभयविधे इति । (कै)

अधिकारत्वे परिभाषात्वे चेत्यर्थः ॥

भेदः (कै)

वैरूप्यलक्षणः ॥ ननु पराङ्गवद्भावविधानासंपत्तो दोषो ऽत आह

तत्रेति ॥ (कै)

---

१ एकार्थीभावः सामर्थ्यमधिकारः इत्येकः पक्षः । व्यपेक्षासामर्थ्यमधिकार इति द्वितीयः पक्षः । द्विविधं सामर्थ्यमधिकार इति तृतीयः । एवं परिभाषायामपि त्रयः पक्षा इति षट्पक्षीसम्भवे एकार्थीभावः परिभाषा वेति निर्णयः ॥

---

यथौषधिरसाः सर्वे मधुन्याहितशक्तयः ।
अविभागेन वर्त्तन्ते तां संख्यां तादृशीं विदुः ॥

इत्यनेन यदेति पक्ष उक्तः । आद्यमाह—

भेदानां वा परित्यागात् संख्यात्मा स तथाविधः ।
व्यापाराज्जातिभागस्य भेदापोहेन वर्त्तते ॥

---

वदविभागापन्नो वृत्त्यावर्थ इति तेन राज्ञः पुरुषमानय राजपुरुषमानयेति च यद्यप्येक एवानीयत इति कार्ययोगिनोऽभेदस्तथाप्यभिधानप्रकारो भिद्यते यथा । ब्राह्मण्याः घृतं भोज्यन्तां ब्राह्मणानां घृतं भोज्यतामिति तदेवं वृत्तिवाक्ययोरर्थो भिद्यत इति स्थितम्, एवं च तत्रतत्र वाक्यं



5994

**व्यपेक्षाऽविनाभावित्वादिति । (कै)**

*व्यपेक्षाया नियतत्वादित्यर्थः । एवं चैतदुपस्थितिं विनापि तत्र न दोषः क्रियाकारकयोरेकार्थीभावासंभवस्येति भावः ॥*

**अत्र क्रियाकारकयोः (कै)**

इत्युक्त्या प्रकृत्यर्थविभक्त्यर्थयोः सर्वथा व्यपेक्षाभावो दर्शितः ॥ इदानी-मेकार्थीभावसहितपरिभाषापक्षे उक्तम् । प्रकर्षयोगमुपपादयति ।

**सुब्धातुप्रभृतय इति । (कै)**

एतेनाधिकारत्वे एतदसङ्ग्रहो दोष इति ध्वनितम् ॥

**अन्यत्र युक्तग्रहणमिति । (कै)**

तथा च तदेवाचैकार्थीभावसामर्थ्याश्रयणे लिङ्गमिति भावः ॥

[1]"समर्थानां प्रथमाद्" इत्यत्र समर्थपदस्य कृतसन्धिकार्यार्थकत्वम-जानान आह

---

१ अ ४ । पा १ । सू ८२ ॥

---

पूर्वं समस्तभेदसंसर्गरूपं तदित्युक्तमिदानीं तु समस्तभेदानुगतं भेदा-पोहरूपं तदिति विशेषः । अर्थस्य सामान्यविशेषरूपानेकधर्मवत्त्वेऽपि विचित्रत्वाच्छब्दशक्तीनामुपसर्जनपदे सर्वविशेषसंसर्गभानं सर्वविशेषाणां संख्यात्वेन वा भानम् ।

---

चिन्त्यप्रयोजनं भिन्नार्थया वृत्त्या वाक्यस्य बाधाऽप्रसङ्गात् । अन्ये तु जहत्स्वार्था वृत्तिरिति वदन्तो वर्त्तिपदानामानर्थक्यमेवाहुः, तत्तु न मोचयामहे । किं राजपुरुष इत्यत्र राजार्थो न गम्यते ओमिति चेत्पुरुष-मात्रानयनं प्राप्नोति अथ गम्यते किं निबन्धना तस्यावगतिः, न तावत्समासस्य

एवमपि क्वचिदिति ॥ (भा)

लिङ्गादिति । (कै)

एतल्लिङ्गमूलकात्कृत्रिमत[1] इति सूत्रभाष्योक्तन्यायादित्यर्थः । कृतसन्धिकार्यत्वार्थकमपि तत्र तद्ग्रहणम् । सौत्थितावत्सरङ्गत्वेनैव पूर्वं सन्धिकार्यप्रवृत्तेर्विप्रतिषेधसूत्रे[2] भाष्ये उक्तत्वात् ॥

पञ्चकेति । (कै)

इदं चिन्त्यम् । तत्पक्षेऽपि तदर्थद्योतकतया विभक्तेरावश्यकत्वात् । भाष्ये पूर्वपक्ष्याशयस्त्वेवं पदविधिशब्देन पदोद्देश्यकविधिग्रहणम् । एवं च साक्षात्पदोद्देश्यके समासतद्धितादावेव स्यात्तत्त्वात्त हि यः साक्षादुद्देश्यो धातुर्न स पदम् । किं च धातोरण् कर्म चोपपदसंज्ञमिति सूत्रार्थात्तन्नियोगशिष्टन्यायेन तत्र सति

१ अ २ । पा १ । सू ५३ । २ अ १ । पा ४ । सू २ ॥

---

अगृहीतविशेषेण यथा रूपेण रूपवान् ।
प्रख्यायते न शुक्लादि भेदरूपं तु गृह्यते ॥

इति तन्न । तथा बोधाननुभवात् । द्वयस्य संख्याव्यभिचारेण तज्ज्ञान संभवात् । तत्र तादृशजिज्ञासायाः स्वरसतः सिद्धत्वाभावेन स्ववासना कल्पितत्वाच्च । अत एव हेलाराजेन एतन्मतद्वयोपपादकहरिकारिकामतान्तरमाह इत्यवतारिता । तस्य चात्रचिरन्तनत्वं तन्मते भाष्यस्य सङ्गो-

---

तत्र शक्तिः कल्प्या राजशब्दनिबन्धनायामपि तस्यामनर्थाभावात् । न च वाक्ये राजपदं व्युत्पन्नं पुनः समासे व्युत्पत्तिमपेक्षते तावत्येव च प्रतिपद्यते राजार्थः, अतो न जहत्स्वार्था वृत्तिः, अर्थाभिधानप्रकारभेद इत्येतदेव सांप्रतं, तत्र० सम्बद्धार्थानां संसृष्टार्थानामिति सामर्थ्यद्वयमपि स्थितं

प्रत्यय इति न तदुद्देश्यकः प्रत्ययविधिः। उपपदसंज्ञायास्तदुद्देश्यकत्वेऽपि तत्रैकार्थीभावयोग्यद्वितीयाभाव इति। देवदत्तस्य कुम्भं करोतीत्यादौ प्रत्ययनिवृत्तये समर्थग्रहणस्यावश्यकत्वात्किमुच्यते गम्यते तत्र सामर्थ्यमित्यत आह

यदीति। (कै)

प्रयुक्तानामिदमन्वाख्यानं लोकप्रयुक्तसाधोरेव निवर्त्तकमिति न दोष इति भावः॥ भाष्ये

उत्पन्ने हीति (भा)

विस्पष्टं॥

यथा समासाद्य इति। (कै)

अन्यथाऽपि तद्वैयर्थ्यं स्यात्। प्रयुक्ताप्रयुक्तत्वविवेकरहितानामर्थे इहेव तत्रापि कर्त्तव्यमित्यर्थः॥

---

येन व्याख्यां कुर्वता गोचराथं प्रत्याख्यातमपि "जात्याख्यायाम्" (१-२-५८) इति सूत्रमावश्यकमिति वदता हरिणा कैयटेन च बोधितम्। न च तत्प्रत्याख्याने द्रव्याभिप्रायेनैव बहुवचनस्य साधुत्वं वाच्यं तत्रैकार्थम् एकशेषसूत्रारम्भे (१-२-६४) गौरवमिति वाच्यम्। द्रव्येऽपि पदार्थे तत्प्रत्याख्यानस्य भाष्यकृतत्वेनाप्ततेः। निरूपयिष्यते च उपरिष्टात्। अत एव भाष्ये

---

परिभाषाप्रवृत्तौ हेतुर्नान्यतरत् यतो माभूदव्यपेक्षामात्राश्रयेण सापेक्षस्यापि वृत्तिः, यद्येवं पराङ्गवद्भावे विभक्तिविधाने च सा न प्रवर्तेत तत्रैकार्थीभावस्यासम्भवात् माप्रवर्त्तिष्ट पराङ्गवद्भावे तन्निमित्तग्रहणं नोदयिष्यति विभक्तिविधानेऽपि क्रियाकारकयोर्व्यपेक्षाऽविनाभाविनी क्वचिद्युक्तग्रहणं क्वचियोगग्रहणं क्वचित्तृतीयया योगस्याक्षेप इति न क्वापि

महत्याः संज्ञाया इति । (कै)

संज्ञासूत्रस्थतत्पदग्रहणस्य चेत्यपि बोध्यम् । यथा कथं चित्पद-संबन्धिविधेस्तत्र ग्रहणमिति भावः ॥

न विधीयत इति । (कै)

एवं च न तत्र प्रधानत्वमिति भावः ॥ "सामर्थ्योपस्थानम्" (कै) । समर्थपदोपस्थानम् ॥

पश्य देवदत्तकष्टमिति (भा)

कष्टपदार्थमाह

श्रित इति ॥ (भा)

नन्वसत्यपि समर्थग्रहणे एकार्थीभावाभावे ऽसमर्थकत्वेन प्राति-पदिकसंज्ञा ऽप्रवृत्तौ फलाभावात्समासोऽपि न स्यात् सूत्रं त्वेकार्थी-भाववति चरितार्थमित्यत आह

---

अभेदैकत्वसंख्येति व्यवहारो भासत इति च नास्ति । वृत्तौ संख्याविशेषो न भवतीत्येतावदेव समर्थसूत्रभाष्यन्तेन रूपेण संख्याभानस्यान्यत्रादृष्टत्वाच । अत एव "कालाः परिमाणिना" (२-२-५) इति सूत्रे एकवचनान्तानामुप-संख्यानं मासो जातस्येत्याद्यर्थे माभूदिति वार्त्तिकमनभिधानान्न इत्युक्त-मिति प्रत्याख्यातम् एवम् अलुक् सूत्रेऽपि (६-३-१) भाष्ये "द्विवचनबहुवच-

---

दोषः, अत एवानन्तरमपि पराङ्गवद्भावमुपलक्ष्य समासमुदाहरति । 'वक्ष्यतीति' । 'समर्थग्रहणं किमिति' । सूत्रं किमर्थमित्यर्थः । नहि केवलेन पदविधिग्रहणेन किञ्चित्क्रियते । 'पश्येत्यादि' । ननु च श्रितादि-भिर्द्वितीयां विधास्यामः श्रितादियोगे या द्वितीयेति, एवमपि सापेक्षस्य प्रसङ्गो, महत्कष्टंश्रित इति, भवति ह्यत्र श्रितादिनिमित्ता

**असति सूत्रे इति ॥ (कै)**

नन्वेकार्थीभावविषये एव समासः शिष्टैः प्रयुज्यते इति कथमेतदत आह

**वचनादिति । (कै)**

लक्षणमात्रशरणं प्रतिसूत्रारम्भ इति भावः ॥ ननु फलाभावोऽत आह

**वचनादिति । (कै)**

'तत्तद्धितेति वचनादित्यर्थः ॥

**वाक्यसंबन्धिनमिति । (कै)**

विष्णुमित्रादयो वाक्यसंबन्धिनः ॥ भाष्ये

---

१ अ १ । पा २ । सू ४६ ॥

---

नान्तानामसमासोऽनभिधानाद्" इत्युक्तम् । अनभिधानादित्यस्य समासेन द्वित्वादिसंख्यावैशिष्ट्येनानेकव्यक्त्यनभिधानादित्यर्थः। द्विवचनेत्यादेस्तु द्वित्वादिवैशिष्ट्येन बोधकानामित्यर्थः। किं च "अर्द्धं नपुंसकम्" (२-२-२) इति सूत्रे अर्द्धंपिप्पलीनामित्यर्थे समासमाशङ्क्यैकाधिकरणेनेत्यनुवृत्त्या समाहितम्। भवतूपसर्जनपदार्थे एकत्वस्यैवाङ्गीकारेण समासप्रसङ्ग एव नास्ति। मम तु पिप्पलीत्वेनानेकव्यक्तिभाने समासशङ्कोचितैव। किं चात्र-

---

द्वितीया समर्थग्रहणे तु सति न भवति, यद्यप्यत्र वाक्यावस्थायां अपेक्षालक्षणसामर्थ्यमस्ति वृत्त्यवस्थायान्तु नैकार्थीभावः संभवतीत्यवोचाम, कथं तर्हि देवदत्तस्य गुरुकुलमिति सापेक्षस्य वृत्तिः। नात्र गुरुणा देवदत्तस्य सम्बन्धः किं तर्हि समुदायेन गुरुदारकस्य कुलेन सम्बन्ध इत्यर्थाद्गुरुणापि योगो भवति। उक्तं च।

उपादानविकल इति । (भा)

उपादानेन कृतो विकल इत्यर्थः ॥

[1]तिष्ठ त्वमिति । (भा)

तिष्ठ त्वं शष्कुलया न प्रयोजनं मुसलेन कृतः खण्डो धावतीत्यर्थः ॥

शष्कुलयेति (भा)

सहयोगे[2] तृतीयेत्यपि कश्चित् । हे विष्णुमित्र त्वं शष्कुलया किं करिष्यस्युपलेन पाषाणेन कृतः खण्ड इति द्वितीयार्थः ॥ ननु खण्डस्य प्रकृततृतीयान्तार्थकृतत्वं नास्तीत्यत आह

---

१ बहुषु भाष्यपुस्तकेषु "त्वं तिष्ठ" इति पाठोऽप्यस्ति ॥

२ अ २ । पा २ । सू २८ ॥

---

पक्षे गोषुचरे जात्याख्यायामभेदैकत्वे बहुत्ववदतिदेशाद् बहुवचनमुक्ता-लोकान्मुक्त इत्यादावेकवचनमुत्सर्ग इत्येकवचनमित्युक्तं तस्य परस्परविरुद्ध-त्वदेकत्वे बहुत्वातिदेशवदेकवचनस्यापि प्राप्तेरिति दिक् । एवं चकारयोगो वाक्ये राज्ञो गौश्चाश्वश्च पुरुषश्चेत्यादौ भवति न तु राज्ञो गवाश्वपुरुषा इत्यादौ समासे । वृत्तौ समूहलक्षणैकार्थप्रादुर्भावाद्भेदस्य निबन्धनसमुच्चयरूपस्य द्योत्यस्याभावेन द्योतकस्याप्यप्रयोग इति कैयटः ।

---

समुदायेन सम्बन्धो येषां गुरुकुलादिना ।
संस्पृश्यावयवांस्तेऽपि युज्यन्ते तद्वता सह ॥

इति, अथ वा परिपूर्णार्थस्यान्येन सहैकार्थीभावः स्वार्थपरिपूर्तिश्च सम्बन्धिशब्दस्य प्रतियोगिनेति भवति तदपेक्षस्यापि वृत्तिः । उक्तं च

सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः प्रयुज्यते ।
स्वार्थवत्सा व्यपेक्षास्य वृत्तावपि न हीयते ॥

## तृतीयान्तार्थेति । (कै)

तच्छब्देन तृतीयान्तमात्रं परामृश्यते तत्र च खण्डनस्य करणसाध्यत्वावश्यम्भावादवश्यमस्त्येवेति भावः । प्रत्यासत्तिर्नाश्रीयत इत्यभिप्रायः ॥

## वृकेभ्य (भा)

इत्यस्य मा भैषीरिति क्रियां प्रत्यपादानत्वं यज्ञदत्तादेवदत्तोऽवश्यं रक्ष इति मार्गे संभावितमपि वृकभयं त्यक्त्वा तद्रक्षणार्थं त्वं गच्छेति वाक्यार्थः ॥

## अस्त्वेवाचेति । (कै)

सर्वेषां कारकाणां साक्षात्परम्परया वा क्रियायामन्वयादिति भावः ॥ भाष्ये

---

पृथगुपस्थितयोरेव समुच्चयस्य च द्योत्यतया च प्रयोगाभावस्यापि समासे एकार्थीभावकृतत्वम् । लोकेऽपि पृथक्ज्ञातयोरेवैकदेशस्थत्वे समूहव्यवहारात् । न च समासेन चार्थस्याभिहितत्वात्तदप्रयोगः । समासेन सत्त्वभूतस्य विशेष्यतयाभिधानेऽपि असत्त्वभूतस्य विशेषणतया बोधार्थं च प्रयोगस्य दुर्वारत्वात् । "चार्थे द्वन्द्वः" (२-२-२९) इति तु सादृश्याच्चार्थत्वारोपेण नेयमिति दिक् । अन्येत्वेकार्थीभाववशाद् पृथगुपस्थितेर्वृत्तौ

---

इति, किं त्वं करिष्यसीत्यादि अत्र शक्यं वक्तुं, 'तत्कृतार्थेनेति' । तच्छब्दः प्रकृतपरामर्शाय तृतीयान्तं समस्यते तदर्थेन यः कृतो गुणस्तद्वचनेनेति, अत्र च यस्य समासः शक्यते शङ्कुलयेति न तदर्थेन कृतं खण्डनं यदर्थेन च कृतं खण्डनमुपलेनेति न तस्य समासः शक्यत इति न भविष्यतीति तस्मान्मत्तया शङ्कुलया खण्ड इति सापेक्षमुदाहर्तव्यं, 'गच्छ त्वं

**इह कस्मान्नेति ।** (भा)

समासे इति शेषः ॥

**महांकष्टं श्रित इति ।** (भा)

यद्येवं वाक्यं तदा समासेन महाकष्टश्रित इति भवतीत्यर्थः ॥

**तदा न भवितव्यमिति ।** (भा)

समासेनेति शेषः ॥ ननु यदि सामर्थ्यमस्ति । अस्तु समासः को दोष इत्यत आह

**यद्यपेति ॥** (कै)

**तदा महत्कष्टेति ।** (कै)

महदिति पृथक् पदम् ॥

---

नोद्देश्यविधेयभावेनान्वयः पृथगुपस्थितेस्तथान्वये तन्त्रत्वात् । अविमृष्टविधेयांशदोषनिरूपणावसरे यत्रोद्देश्यविधेययोः पदाभ्यां पृथगुपस्थितिस्तत्र तथान्वयः । न च समासे पदात् पृथगुपस्थितिरपृथगुपस्थितौ च न तथा व्युत्पत्तिरिति काव्यप्रदीपाद्युक्तेः । अत एव "चतुर्थी चाशिषि" (२-३-७२) इति सूत्रविहितचतुर्थ्या न समासः । आशीर्विषये हि उद्देश्यविधेयभावो गम्यते समासे तदवगमाभावादिति हरदत्तादयः । अयमेवैकप्रसरताभङ्गो नाम यद्विशिष्टैकोपस्थितिजनकत्वरूपसामर्थ्यभङ्गः । उद्देश्यविधेयभावे-

---

यूपायेति' । गत्यर्थकर्मणीति चतुर्थी । यदा क्रियार्थोपपदस्य च कर्मणीति । यूपमाहर्त्तुं गच्छेति अत्राप्येतदर्थत्वादेव दारुणो न भविष्यतीति सापेक्षं प्रत्युदाहर्त्तव्यं महते यूपाय दार्विति । 'यणादेशो नित्यश्च तुम्भवतीति' । द्वावप्येतौ वर्णविधी, नित्यस्तुक् च 'दीर्घा' दित्ययमेव यस्तु 'पदान्ताद्वे' ति विकल्पितस्तुक् स पदविधित्वादत्र न भवति । अन्ये तु यणादेशो-

महाकष्टं श्रित इति । (कै)

एतद्विग्रहके समासे य एव "अहीने द्वितीया"[1] इत्यनेन पूर्वपदप्रकृतिस्वरे कृकाराकार उदात्तः त्रिपदसमासे ऽवान्तरतत्पुरुषे तस्य समासान्तोदात्तत्वेऽपि स एवेत्यर्थः ॥

समासस्येत्यनेनेति । (कै)

अवान्तरतत्पुरुषनिमित्तकेनेत्यर्थः ॥

[2]थाथादिस्वर इति । (कै)

प्रत्ययाकार उदात्त इत्यर्थस्तेनान्तोदात्तविधानात् ॥

यथेति । (कै)

तत्र हि त्रिपदे बहुव्रीहाववान्तरतत्पुरुषे [3]तद्धितार्थेत्यनेन जाते सति शिष्टत्वादवान्तरतत्पुरुषप्रयुक्तः स्वर इत्यर्थः ॥ परे तु

१ अ ६ । पा २ । सू ४७ ॥

२ थाथघञ्क्ताजबित्रकाणाम् । ६ । २ । १४४ ॥

३ तद्धितार्थोत्तरपदसमाहारे च । २ । १ । ५१ ॥

नान्वये ऽयुगपदुपस्थितेस्तत्त्वेन तथान्वये तद्भङ्गादिति । तन्न । भाष्यकृता-नुक्तत्वात् । किं चोद्देश्यत्वविधेयत्वे यच्छब्दतच्छब्दोपबन्धव्यङ्ग्ये वृत्तौ ऋद्ध-त्वादिवत् तदन्वयासम्भवान्न तथान्वयः । एकार्थीभावाभावेऽपि घटमित्यादौ

ऽमित्यस्य कुम्भवतीत्यकारप्रश्लेषं वर्णयन्तः 'पदान्तादे'ति विकल्पितत्तुम्भ-वतीति व्याचक्षते । नन्वसौ पदविधिर्नेति, आह, तत्रान्तग्रहणं न कर्त्तव्यं प्रकृतेन दीर्घेण पदस्य विशेषणादेव दीर्घान्तस्य पदस्येति सिद्धम् एवं सिद्धेऽन्तग्रहणस्यैतत्प्रयोजनं पदान्तस्य दीर्घस्य वर्णस्य विधिस्तुक् यथा स्यादीर्घान्तस्य पदस्य मा भूदिति ॥

महान्देवदत्तः प्रियो यस्येति त्रिपदबहुव्रीहौ महादेवदत्तप्रिय इत्यस्याभावाय महद्देवदत्तप्रिय इत्यस्य सिद्धये त्रिपदसमासेऽवान्तरपदयोः [1]'सन्महदि'ति समासाप्रवृत्तिर्बहुलग्रहणादिति महत्कष्टश्रित इत्येवैकपद्येनैकस्वरः स्यात्तच्च नेष्यत इति भाष्याभिप्रायः॥ [2]"विशेषणं विशेष्येणे"त्यस्य त्रिपदे समासेऽवान्तरपदयोरप्रवृत्तिं सूत्रशेषे वदता तत्प्रपञ्चभूतानां पूर्वनिपातनियमार्थानां च तत्राप्रवृत्तिरकमप्रायैवेत्याहुः॥

### परस्परसंबन्धाभावादिति। (कै)

पृथगेकार्थीभावाभावादित्यर्थः॥

### पूज्यमानत्वमिति। (कै)

कष्टेन महत्त्वस्यान्वयाभावादिति भावः॥

### विशेषणविशेष्यत्वं चेति। (कै)

अन्येनैकार्थीभावादेव परस्परं तत्त्वाभाव इत्यर्थः॥

---

१ अ २। पा १। सू ६१॥ २ अ २। पा १। सू ५७॥

---

तथान्वयाभावेन "अभ्यासलोपश्च" इत्यादौ समासेऽपि तथान्वयेन च तस्य तत्कृतत्वाभावाच्च। तथान्वयाभिप्रायेण समासप्रयोगेऽपि प्राप्तत्वाप्राप्तत्वादिपर्य्यालोचनोत्तरं "लोहितोष्णीषा" इत्यादौ तथा बोधो भवत्येवेति नासाधुतेत्याशयेनायं भाष्येनोक्तः। "विशेषणं विशेष्येण" (२-१-५७) इति सूत्रे "उभयविशेषणत्वादुभयोश्च विशेष्यत्वादुपसर्जनाप्रसिद्धिः" इति वार्त्तिके उभयमुद्दिश्यविशेषणत्वस्य विधेयताप्रतीतेश्च। अत एव प्रकाशकृतेदृशसमासवाक्यानि च्युतसंस्कृतिदोषेनोदाहृतानि किन्तु

समासो न स्यादिति। (कै)

अवान्तरतत्पुरुषो न स्यादित्यर्थः॥

स्वरश्च प्रसज्येतेति। (कै)

सौवरीणां सप्तमीनां तदन्तसप्तमीत्वादहीनवाचिक्तान्तोत्तरपदान्तस्य समासस्य संबन्धि द्वितीयान्तं पूर्वपदं प्रकृत्येत्यर्थादिति भावः। अत्रारुचिबीजं तु त्रयाणामेकार्थीभावे द्वयोरपि सोऽस्त्येव पृथगेकार्थीभावाभावेऽपि न क्षतिरिति॥

सामान्येति। (कै)

अन्यथैकपदस्य समासाभावेनैकवचननिर्देशो ऽसङ्गतः स्यादिति भावः॥ तत्फलं दर्शयति।

पदद्वयात्मकस्येति॥ (कै)

सुबित्यनेन सुबन्तसमुदायाग्रहणे हेतुमाह

संख्याया इति। (कै)

अनियतसङ्ख्यावच्छिन्नस्य संज्ञित्वे ऽव्यवस्थापत्तेस्तद्विशेषाकाङ्क्षायामुपात्तसङ्ख्यैव विवक्ष्यत इत्याशयेन दृष्टान्तमाह

---

विमृश्यविधेयांश एव। एवं च पृथगुपस्थितयोस्तथान्वयं इत्युत्सर्गस्य त्यागेन सहृदयहृदयस्य वैमुख्यं तस्य दूषकता बीजम्। प्रदीपेऽपि तत्र तथान्वय इत्यस्य उत्सर्गेणेति शेषः। आशीर्विषयचतुर्थ्यन्ते तु न समासः। विप्राय भद्रं भूयादित्यादौ विप्रभद्रार्थयोरुभयोरपि तिङन्तार्थान्वयेन परस्परमसामर्थ्यात्। "चतुर्थी चाशिषि" (२। ३। ७३) इत्यस्य चाशीर्विषयार्थान्यप्यर्थकात् तद्वाचकभद्रादियोगे चतुर्थीसत्त्वाविरुत्यर्थात्। भद्रकर्तृत्वं विप्रसम्बन्ध्याशंसाविषयो भवतमिताादिक्रमेण बोधः। राजकुले शुभं भूयादिति

यथा पशुनेति ॥ (कै)

आकृतौ प्रवर्त्तमानस्य शास्त्रस्यापि तदाश्रयवह्वव्यक्तिषु युगपत्प्रवृत्तिर्न दृष्टेत्याशङ्क्याह

यथा ब्राह्मण इति ॥ (कै)

एकैकस्यामिति। (कै)

तस्यामेवेत्यर्थः ॥

प्रत्ययाभिधानेति। (कै)

ज्ञानव्यवहारेत्यर्थः ॥

तथा सुबन्तसमुदायस्येति। (कै)

प्रत्ययग्रहणपरिभाषया तस्यासुबन्तात्सुबन्तसमुदायस्य विवक्षितैकत्वमसुप्पदेन वक्तुमशक्यत्वादिति भावः ॥

चिकीर्ष्यत्वम्। (कै)

विधेयत्वम् ॥

---

तु साध्वेव। किं च समासादावपि तथा व्युत्पन्नस्य तद् बोधो दुर्वारः। न चासाधुत्वम्। भाष्याद्यनुक्तेः। विशिष्टोपस्थितावपि विशेषणादौ प्रकारतादिस्वीकारवदुद्देश्यतादिस्वीकारे बाधकाभावात्। अधिकमग्रे वक्ष्यामः। अत एव कश्चिदुद्देश्यत्वादिप्रकारत्वादिरूपमेवोक्तमन्यैस्तु तत्समानाधिकरणम्। किं चान्वादेशस्य किञ्चित्कार्य्यं विधातुमुपात्तस्य कार्य्यान्तरविधानाय पुनरुपादानरूपस्य समासे त्वदुक्तरीत्या सम्भवाभावेन एतच्छ्रितक इत्यादौ एनाद्यादेशशङ्का अप्रयुक्तत्वेन तत्समाधानपरस्य “द्वितीया टौस्स्वेनः” (२।४।३४)। इति सूत्रस्थभाष्यस्यासङ्गतिरित्याहुः। यत्तु निष्कौशाम्बिः गोरथः घृतघटः गुडधानाः केशचूडः सुवर्णालङ्कारः द्विदशाः सप्तपर्णः गौरखरः

## संचित्कीर्थस्य

इत्यपाठः। [१]भूषणाद्यर्थाभावात्सुटो ऽप्राप्तेः समो ऽनुपयोगाच्चेति बोध्यम् ॥

## गुणत्वाच्च प्रातिपदिकस्येति। (कै)

प्रधानगता सङ्ख्या विवक्ष्यते इति ग्रन्थास्त्वार्थप्राधान्यमादाय बोध्याः ॥

## आधारगताया इति। (कै)

जात्याधारद्रव्यगता सङ्ख्या विवक्ष्यत इत्यर्थः ॥ नन्वेवं ब्राह्मणो न हन्तव्य इत्यत्रापि जात्याश्रयसङ्ख्याया विवक्षा स्यात्तत्रापि गुणत्वादत आह

## ब्राह्मणसमुदायस्येति। (कै)

शास्त्रार्थो ऽतिक्रान्त एवेति न्यायेनैवं शास्त्रार्थे जाते कस्यातिक्रम इति चिन्त्यम् ॥ परेतु "सुप्सुपेति वर्त्तत" इति भाष्यस्याकृतिस्तु प्रत्येकं समाप्यत इति वक्ष्यमाण आशयः। इतरस्त्वेकत्वविवक्षयैक-सुबन्तस्यैकसुबन्तेन समास इत्युक्तमिति मत्वा शङ्कते

---

१ सम्परिभ्यां करोतौ भूषणे । ६ । १ । १३७ ।

---

इत्यादिषु क्रान्तयुक्तपूर्णमिश्रसङ्घातविकारसुच प्रत्ययलोपवीप्साजातिविशे-षाद्यभिधानमेकार्थीभावकृतमित्युक्तम्। तन्न। भाष्यानुक्तत्वात्। निरादि-पूर्वपदानां क्रान्ताद्यर्थवृत्तित"योक्तार्थानामि"ति न्यायेन तदप्रयोगसिद्धेश्च गौरखरादेश्च समुदायस्य जातिविशेषवृढिस्वीकारेण न दोषः पङ्कजादि-वत्। एकार्थीभावजनकत्वरूपैकार्थीभावकृतत्वस्य क्रान्तादिलोपे सम्भवा-

नन्वु च भो इति॥ (भा)

आकृताविति। (भा)

प्रवृत्तिनिमित्ताश्रयसर्वव्यक्तावित्यर्थः। अन्यथा व्यक्तिवादेऽपि विनिगमनाविरहाद्रूपसामान्येन सर्वत्र कार्यप्रवृत्त्यैतदुक्तिरसङ्गता स्यादेवं चैकलविवक्षा कर्त्तुमशक्येति भावः॥ सिद्धान्ती स्वाशयं प्रकाशयति।

आकृतिस्त्विति। (भा)

शब्दप्रवृत्तिनिमित्तं त्वित्यर्थः॥ तदेवाह

[1]यावत्येतत्समाप्यते प्रातिपदिकादितीति। (भा)

एतत्पदप्रवृत्तिनिमित्तं प्रातिपदिकत्वादीत्यर्थः॥

द्वयोश्चेति (भा)

पदद्वयप्रवृत्तिनिमित्तप्रत्येकं द्वयोरित्यर्थः। अयं भावः। यथा स्वाङ्गत्वजनपदत्वादेः प्रत्येकं समाप्त्या स्वाङ्गसमुदायजनपदसमुदाय-

१ उपलब्धविवरणे "यावत्येतत्समाप्यते" इत्यस्ति परम् उपलब्धभाष्य-पुस्तके ऽत्र पाठभेदो दृश्यते तत्र कस्मिंश्चित् "यावति परिसमाप्यते" कस्मिंश्चित् "यावत्येतत्परिसमाप्यते" इति॥

भावाच्च। अत एव "संख्ययाव्यय" (२। २। २५) इति सूत्रे समासेनाभिहितः सुबर्थ इति कृत्वा समासे सुप् न भविष्यति। "किं च भोः सुबर्थ इति समास उच्यते। न खलु सुबर्थ इत्युच्यते गम्यते तु सुबर्थः" इति भाष्ये उक्तम्। तत्र "समासेन" इत्यस्य समासघटकपूर्वपदेनेत्यर्थः। पूर्वपदस्य तदर्थत्वद्योतकस्य समासे इति समासेनोक्त इत्युक्तिः। द्योतक-

योर्न स्वाङ्गजनपदग्रहणेन ग्रहणं तथा प्रकृतेऽपि। न च स्वाङ्गादित्यादावप्येकत्वविवक्षया तदर्थलाभस्तत्रैकत्वस्य स्ववाचकप्रत्ययप्रकृत्यर्थस्वाङ्गवाचकशब्दान्वितत्वेऽपि स्वाङ्गान्वितत्वेनैकस्वाङ्गवाचकादित्यर्थालाभात्। एको यः स्वाङ्गवाचकः शब्द इत्येतावत एव ततो लाभात्। एवं चोद्देश्यगता सङ्ख्या ऽविवक्षितैवेति मीमांसकसिद्धान्तविरोधोऽपि न। किं च प्रातिपदिकसमुदायात्तद्धितशङ्काया तत्समाधानपरे 'मतुप्सूत्रे[1] भाष्ये न कैयटोक्तप्रकारो न्याय्यस्तत्र [2]"ङ्याप्प्रातिपदिकादि"त्यस्य समस्तत्वेन समासे सङ्ख्याया अभावेनैकत्वस्याभानात् श्रूयमाणविभक्त्यर्थैकत्वं तु समाहाराश्रयीति बोध्यम्। न च तत्पर्याप्त्यधिकरणैरनेकैः समासादिवारणार्थं सा। [3]"स्त्रीभ्यो ढगि"त्यादेः स्त्रीप्रत्ययान्तसमुदायादापत्तेस्तवापि सत्त्वात्। यथा च तत्र बहुवचनसत्त्वेऽप्येकैकस्त्रीप्रत्ययान्तादेव प्रत्ययस्तथान्यत्रापीत्याहुः॥

---

१ तदस्यास्त्यस्मिन्निति मतुप्। ५। २। ९४॥
२ अ.४। पा १। सू १२०॥ ३ अ ४। पा १। सू १॥

---

विषयेऽपि "उक्तार्थानाम्" इति न्यायोऽस्त्येव। अतिप्रसङ्गस्तु अनित्यत्वात् परिहरणीयः। द्रष्टुं गतश्चैत्रः कृष्णं श्रितो गुरुकुलं मैत्र इत्यादौ न समासः। कृष्णश्रितयोः परस्परसम्बन्धेनाकाङ्क्षामूलकैकार्थीभावस्यासम्भवात्। विशिष्टशक्तिस्वीकारादेव समासस्यार्थवत्त्वात् प्रातिपदिकत्वसिद्धिः। अत एव वृत्तौ विशिष्ट एवार्थो राजपुरुषपदाभ्यामभिधीयते इति कैयटः। भाष्ये चैकार्थीभावपक्षे "संसृष्टार्थं समर्थम्" इति समर्थपदव्युत्पत्तिरुक्ता विशिष्टबुद्धिं प्रति च विशेष्यविषयकस्यैव हेतुत्वमिति न विशिष्टबुद्धौ विशेषणज्ञानस्य

**प्रधानार्थाभिधायिनेति । (कै)**

प्रधानार्थविशेषणीभूतस्वार्थोपस्थापकेनेत्यर्थः ॥

**प्राधान्यम् । (कै)**

स्वार्थमात्रोपस्थापकत्वम् ॥

**कथमेकार्थीभावश्चेति । (कै)**

कथमन्यविशेषणत्वेनैवोपस्थितिरित्यर्थः ॥ इतरविशेषणत्वेनोपस्थितस्य स्वविशेषणे आकाङ्क्षाभाव इति भावः ॥ प्रधानस्य सापेक्षत्वेऽपि वृत्तावुपपत्तिमाह

**प्राधान्याद्वेति ॥ (कै)**

नन्वेवं राजपुरुषो भार्याया इत्यपि स्यादत आह

**सामान्येत्यादि । (कै)**

उपात्तविशेषणविजातीयविशेषणयोगः प्रधानस्य भवतीति ज्ञाप्यत इति भावः । यद्यपि समासे विशिष्ट एवान्वय इति प्रधानस्य न सापेक्षत्वं तथापि दर्शनीयत्वाद्यन्वये पुरुषत्वमेव विशेष्यतावच्छेदकं न राजसंबन्धोऽपीत्याशयेन तथोक्तिरिति बोध्यम् ॥ भाष्ये

---

कारणत्वे व्यभिचारः । अत एव घटपदाद् घटत्वविशिष्टज्ञानोपपत्तिः । न विशिष्टे शक्तिः किन्त्ववयवशक्तिज्ञानसहकृतादुत्तरपदश्रवणरूपादुद्बोधकाद् राजसम्बन्धी पुरुषः चित्राणां गवामयम् इत्यादेर्विग्रहवाक्यतोऽनुभूतस्य विशिष्टार्थस्य स्मरणमयमेवैकार्थीभावो नामातो नोक्तदोषाः । अत एव भट्टपादैस्तेषामेव विग्रहत्वं स्वीकृतम् । स्वावयववृत्तिज्ञानसहकारेणा-

सर्वं गुरुकुलमिति । (भा)

गुरुसंबन्धविशिष्टं कुलं सर्वमपेक्ष्यते न तु तदवयवो गुरुरित्यर्थः ॥ तदाह

[1]गुरुकुलादिनेति ॥ (कै)

नन्वेवं गुरौ देवदत्तसंबन्धित्वं न लभ्येतेत्यत आह

सामर्थ्यादवयवमपीति । (कै)

येषामर्थानां गुरुकुलादिरूपसमुदायेन संबन्धस्तेऽप्यर्था अवयवान्संस्पृश्य संबध्य तद्वता युज्यन्त इति नाच पक्षे ऽवयवानां सत्सम्बन्धालाभ इत्यर्थः ॥ किमः षष्ठ्यन्तापेक्षत्वमुपपादयति ।

केषां शालीनामिति । (कै)

न तु शालीनां कीदृश ओदन इत्यर्थ इति भावः ॥

कलमाः । (कै)

श्यामशालयः ॥ आपणीयानां मध्ये "षड्गाडकमि"त्यर्थो नेत्याह ।

---

१ एतदुक्तं हरिणा—

समुदायेन सम्बन्धो येषां गुरुकुलादिना ।
संस्पृश्यावयवांस्ते तु युज्यन्ते तद्वता सह ॥

---

र्थोपस्थापकत्वस्यापि "अर्थवत्" (१ । २ । ४५) सूत्रे ग्रहणात् समासस्य प्रातिपदिकत्वम् । यदा वाक्यवत् समासेऽपि पृथगुपस्थितयोरेव परस्पराऽन्वयः । अयन्तु विशेषः । वृत्तिघटकपदोपस्थितयोः प्रथमं परस्परमेवैकरूपेणान्वयो वृत्तिस्वभावादतो न तत्र विशेषणान्वयादिकम् । वाक्ये तु यदेव

आपणीयानां सक्तूनामिति ॥ (कै)

उक्तार्थे उपपत्तिमाह

अनेकत्वादिति ॥ (कै)

एकत्वेऽपि तथाह

तदवयवानां वेति ॥ (कै)

सामीप्यादेरपीति । (कै)

सामीप्यादिनिरूपितसंबन्धस्यापीत्यर्थः । अवयवद्वारकसंबन्धस्यैवात्र भानमित्यत्र नियामकाभावादिति भावः ॥ भाष्ये

नैषा समुदायापेक्षेति । (भा)

एवं चाप्रधानस्यापि सापेक्षत्वे वृत्तिदर्शनात्सापेक्षमसमर्थमिति वक्तुमशक्यमिति भावः ॥ गमकत्वाद्वा वृत्तिरिति वक्ष्यमाणाशयमाह

संबन्धिशब्दत्वाच्चेति । (कै)

नित्यसापेक्षविषये आकाङ्क्षाया अग्राह्यता प्रागुक्तन्यायविषयाभावात्सामर्थ्यमिति भावः ॥

---

विशेष्ये राज्ञोऽन्वयस्तदैव राज्ञि ऋद्धत्वान्वयः । तदास्यैकदेशत्वप्रमाणाभावात् । एकरूपेण द्वयक्तेर्नोद्देश्यविधेयभावेनान्वयः । यद्वा विशिष्टलक्षणया वृत्तौ विशिष्टोपस्थितिरिति षष्ठीतत्पुरुषलक्षणायाः सम्बन्धिरूपाधिकविषयत्वेन षष्ठीतत्पुरुषत्वात् कर्मधारयस्य लघुत्वं बोध्यमिति तन्न ॥ आद्ये तादृशविग्रहवाक्यमजानतां विशिष्टोपस्थितेः प्रसक्तिं विनोपपादयितुं अशक्यत्वात् द्वितीये वृत्तिपदं तादृशबोधकारणमिति चानस्य तद्बोधकारणत्वकल्पना-

प्रयुज्यत इति । (कै)

समस्तत्वेनेत्यर्थः ॥

सार्थवदिति । (कै)

स्वार्थ इव स्वार्थवत् । स्वार्थशब्दो भावप्रधानः । स्वार्थमात्रोपस्थापकवाक्यघटकतादशायामिव वृत्तावपीत्यर्थः ॥

किमोदनः (भा)

इत्यादयस्त्वसामर्थ्येऽपि भाष्यकारप्रयोगादेव साधव इति बोध्यम् ॥

सापेक्षमसमर्थम् (भा)

इत्यस्य वाचनिकत्वे दूषणान्तरमाह भाष्ये

अन्यत्र खल्वपीति । (भा)

अन्यथा प्राक् कैयटोक्तन्यायस्यैकार्थीभावविषयत्वाद् "१इसुसोरि"त्यत्र व्यपेक्षारूपसामर्थ्यस्यैव ग्रहादसङ्गतिः स्पष्टैव ॥ तद्ध्वनयन्नाह

वाचनिके हीति ॥ (कै)

स एवेति । (कै)

---

१ अ ८ । पा ३ । सू ४४ ॥

---

पेक्षया शक्तिकल्पनाया लघुत्वात् । बोधकारणत्वस्य सम्बन्धं विधानुपपत्त्या शक्तिसिद्धेश्च । किं चैवं समासादीनां वृत्तित्वासिद्धिः । इत्याश्रयत्वेनैव तेषां वृत्तित्वव्यवहारात् वृतीये बोध्यज्ञानं विनाबोध्यसम्बन्धरूपलक्षणाया अज्ञानेन तया विशिष्टोपस्थिते वक्तुमनौचित्यात् । किं च पङ्कजपदादेरपि पद्मत्वविशिष्टे लक्षणाया एवापत्तौ रूढ़िशक्त्युच्छेदः । बाधादिप्रतिबन्धानां

मदीयं चोद्यं दुष्परिहरमित्याहेति भावः ॥ भाष्यकारो न्यायं दर्शयति ।

**अगमकत्वादित्यादिना ॥** (भा)

**क्रियाविशेषणं वेति ।** (कै)

महद्यथा भवति तथा करोतीत्यर्थ इति भावः ॥

**[1]न कष्टविशेषणमिति ।** (कै)

तस्य पदार्थैकदेशत्वादिति भावः ॥ न चैवं कष्टं श्रित इत्यस्यापि विग्रहत्वं न स्यात् तत्र समाससमानाकाराया एवोपस्थितेः । एतेन वृत्तिविग्रहयोः समानविषयताकत्वं सूचितम् ॥ विशेषणसमभिव्याहारे तु महदन्वयाय कष्टादेर्विशेषणत्वावश्यकान्तविशेष्यतयोपस्थितिरावश्यकीति तयोः समानार्थत्वभङ्गः ।

**इदमेव पादर्थः पदार्थेन**

इतिव्युत्पत्तेर्मूलमिति दिक् ॥ भाष्ये

१ उपलब्धकैयटे "न तु कष्टविशेषणम्" इति पाठोऽस्ति ॥

विनापि बोधात्तत्र शक्तिसिद्धिश्चेत् प्रकृतेऽपि समम् । किं च कर्मधारये शक्यान्यबोधाभावेन लक्षणा न युक्ता शक्यसम्बन्ध्यशक्यार्थबोधो हि सर्वत्र लक्षणया दृश्यते विशेष्यविशेषणभावस्तथेति चेत् वाक्येऽपि तद्बोधेन तत्राप्येकोपस्थित्यापत्तेः । एवं प्रथमं भक्त इत्यादौ तदसंमतस्योद्देश्यविधेयभावेन अन्वयस्यापत्तिरित्यलम् । इदं वृत्तेर्विशिष्टशक्तिमत्वं लोकसिद्धमेव । शास्त्रेऽर्थविधानाभावात् । "अचतुर" (५ । ४ । ७७) इत्यादावदर्शनात् । द्वन्द्वादीनामर्थाविधानाच्च । "चार्थे" (२ । २ । २९) इत्यत्रापि तु चार्थे वृत्ति-

एतस्माद्धेतोर्ब्रूमः (भा)

इत्यादि ॥

अगमकत्वाद् (भा)

इत्येतस्माद्धेतोः सापेक्षमसमर्थमित्यादि ब्रूमो न तु संभावितापशब्दस्य साधुत्वनिवृत्तये तद्वाचनिकं ब्रूम इत्यर्थस्तद्ध्वनयन्नाह ।

यत्र गमकः (भा)

इत्यादिना ॥ एतदेवाभिप्रेत्य व्याचष्टे ।

लोके (कै)

इत्यादिना । अगमकत्वादेव तदर्थे शिष्टलोकैरप्रयुक्तत्वात्समासो न भवतीति भावः । एवं च गमकत्वादेव "किमोदनः शालीनामि"-त्यादेरुपपत्तिः । कैयटाद्युक्तसंबन्धिशब्दत्वादियुक्त्या "देवदत्तस्य गुरुकुलमि"त्यादेः साधुत्वेनोपपादितेऽपि "किमोदन" इत्यादेः साधुत्वं नोपपादितं स्यादतो भाष्योक्तमेव साधु । गमकत्वेऽत्तिवृत्तिरशक्येत्यत आह ।

गमकत्वाभिमत इति । (कै)

तत्र हेतुर्लोके प्रयोगो ऽतो ऽसौ गमकत्वेनेष्ट इत्यर्थः । परं त्वसाधुरिति भावः ॥ असमर्थत्वमुपपादयति

---

मनूद्य द्वन्द्वसंज्ञामात्रविधायकम् । अन्यथा अनेकं सुबन्तं चार्थे वर्त्तते तत्र द्वन्द्वसंज्ञकमिति वाक्यभेदापत्तेः । किं च स्वसमानार्थकवाक्यनिवृत्तये विभाषाधिकारस्य अपूर्वस्य करणे गौरवम् । मम तु एकार्थीभावे समासः । अपेक्षायां वाक्यमिति प्राक्तनत् कल्पितसिद्धार्थानुवाद एव सः । इयं

किं चिदकुर्वाणमिति॥ (कै)

न सूर्यस्थया सत्तयेति। (कै)

सूर्यपदार्थघटकधात्वर्थेनेत्यर्थः। कर्मणि न प्रेरयतीत्यसूर्य इत्यर्थो नेति भावः। सूर्यशब्दस्य रूढत्वेऽपि सूर्यभिन्नमिति तेनान्वयाभावादसामर्थ्यमित्यपि बोध्यम्॥

नियमार्थं भविष्यतीति। (भा)

किञ्चित् कुर्वाणम् (भा)

इत्यादयः प्रयोगाः प्रागुक्ता असाधव इति भावः॥ असूर्येत्यादीनां प्रागुक्तानां बहूनां साधुत्वस्येष्टत्वादेकवचनमनुपपन्नमत आह

अभेदमिति। (कै)

"एतस्यैवे"तिभाष्यस्य प्रागुक्तस्येत्यर्थ इति भावः॥

क्रियायामुभयोरिति। (कै)

इदं चिन्त्यम्। अतः सर्वो म्रत्तिकयेत्यादौ समासापत्तेः। असामर्थ्येऽपि ज्ञापकात्क्वचित्समास इत्येव भाष्याशयेनास्योपयोगा-

---

चैकार्थीभावापादिका विग्रहशक्तिः समर्थाश्रितः पदविधिरित्याद्यर्थक "समर्थः पदविधिः" इति शास्त्रबलात् अलौकिके विग्रहेऽप्यारोप्यते। अत एव तत्र समाससंज्ञायामर्थवत्त्वनिबन्धनप्रातिपदिकत्वे विभक्तिलुक्सिद्धिः। "षष्ठी" (२।२।८) इत्यादिशास्त्रबलेन भेदोपस्थितिनिबन्धनषष्ठ्यादि-निर्वाहाय पृथगर्थत्वमप्यारोप्यते। उभयोरपि काल्पनिकत्वेन विरोधा-भावः शास्त्रप्रामाण्यात्। नन्वेकार्थीभावनिर्वाहकविग्रहशक्तिवादे बहु-व्रीहेरन्यपदार्थत्वं इत्यादिव्यवहारोच्छेदः। बहिर्भूतपदार्थविषयकबोध-

भावाच्च ॥ प्रातिपदिकसंज्ञापि [1]"असूर्यललाटयोरि"ति "अन-पुंसकस्ये"ति च ज्ञापकादिति भाष्याशयः ॥

## अबुधेति । (कै)

सर्वत्र गमकत्वागमकत्वे लक्षणैकचक्षुष्कैर्दुर्ज्ञेये इति भावः । कृतेऽपि क्वचित्परम्परोपदेशगम्यगमकत्वादिनैव सर्वप्रयोगनिर्वाह इति बोध्यम् ॥

## एतत्सिद्धेनेति । (कै)

अनन्त्यवार्त्तिककारोक्तसिद्धविचारमुपादाय पूर्वं भाष्यकृता व्यव-हृतमिति भावः ॥

## पृथगर्था इति । (कै)

अर्थेषु पृथक्त्वं भिन्नभिन्नोपस्थितिविषयत्वम् ॥

## आचष्टे । (कै)

उपस्थापयति ॥

---

[1] अ ३ । पा २ । सू ३६ ॥

---

जनकत्वं हि बहुव्रीहौ वहिरङ्गत्वम् । न चान्यपक्षे तदस्ति अन्यपदार्थेऽपि प्रत्येकातिरिक्तविशिष्टशक्यत्वसत्त्वेन स्वपदार्थत्वस्यैव सत्त्वादिति चेन्न । स्वघटकपदघटितवाक्यवृत्त्यर्थातिरिक्तार्थविषयकत्वेन वहिरङ्गत्वाच्चतेः । एवमेव षष्ठीतत्पुरुषात् कर्मधारयस्य लघुत्वं बोध्यम् । कर्मधारयक-संज्ञकपदसमुदायशक्तिग्रहापेक्षया षष्ठीतत्पुरुषसंज्ञकतच्छक्तिग्रहस्य षष्ठ्याद्यर्थरूपाधिकविषयत्वेन गुरुत्वात् । एवं च निषादस्थपत्यादिशब्दानां षष्ठीसमासकर्मधारयबहुव्रीहिभिर्नानार्थत्वेन क तात्पर्यम्' इति सन्देहे

राजशब्दोऽपि पुरुषार्थमेवेति । (कै)

पुरुषार्थान्वितमेव स्वार्थमुपस्थापयतीत्यर्थः ॥ अजहत्स्वार्थाया-मथाह

अथवेति ॥ (कै)

अवयवार्थान्वित इति । (कै)

पूर्वपदरूपावयवार्थसदृशार्थान्वित इत्यर्थस्तदुक्तमन्य एवेति ॥

समुदायार्थः । (कै)

समुदायशक्तिगम्यः । क्वचित्तु

अवयवार्थानन्वितः (कै)

इति पाठः । तदा स्पष्टमेवान्य एवेत्यस्य विवरणमिदम् । द्वन्द्वबहु-व्रीह्योरेकार्थीभावस्तु सूत्रोपक्रमे दर्शितः ॥ एकार्थत्वमविभागा-पन्नार्थत्वमपृथगुपस्थितिविषयार्थकत्वं तदाह

शक्तिग्रहलाघवानुरोधात् कर्मधारयार्थे तात्पर्यं कल्प्यते "सम्भवति सामा-नाधिकरण्ये वैयधिकरण्यस्यान्याय्यत्वात्" । तदुक्तं जैमिनिना *"स्थपति-र्निषादः स्यात् शब्दसामर्थ्यात्" ( मीमां । अ ६ । पा १ । सू ५१ ) इति

* "वास्तु मध्ये रौद्रं चरुं निर्वपेत् । यत्र रुद्रः प्रजाः शमयेत्" इत्येता-मिष्टिं प्रकृत्य उच्यते । "एतया निषादस्थपतिं याजयेत्" इति । निषाद-स्थपतिं प्रति सन्देहः । किम् अधिकृतानाम् अन्यतमः । उत अन्य एव ? इति । अन्यतमः इति ब्रूमः । स हि समर्थः । विद्वत्त्वात् अग्निमत्त्वाच्च । अन्योऽविद्वत्त्वादनग्नित्वाद् असमर्थः— इति ॥ "ननु निषादस्थपतिशब्दस्तत्र नोपपद्यते" । उच्यते । न । नोपपद्यते निषादानां स्थपतिः— इति षष्ठी-

पांसूदकवदिति। (कै)

यथा मिलितपांसूदकेऽन्यतराविषयकज्ञानविषयत्वं नान्यतरस्य तथा प्रकृतेऽप्यन्यतमाविषयकोपस्थितिविषयत्वं नान्यतमस्येत्यर्थः। यथा पांसूदकमिलने पिण्डाख्यं द्रव्यान्तरमेवैकभावमापन्नं तयो-स्तदवयवत्वव्यवहारस्य तद्वद्चापीति भावः। एवं चापृथगुपस्थिति-विषयत्वमेकार्थीभाव इति फलितम्। गौणमेकार्थत्वं समासघटक-पदानां बोधयितुं च्विनिर्देशः॥ पदानामसत्त्वाद्यथा तत्सत्ताव्यवहारो गौणस्तथा तेषामेकार्थत्वव्यवहारोऽपीति बोध्यम्॥ तदाह

यद्यपीति॥ (कै)

साहश्यादिति। (कै)

यद्यप्येतत्पक्षे वाक्यमप्यखण्डमेव तथापि रेखागवयस्थानीयेन

---

निषादस्थपतिशब्दस्यान्तरङ्गत्वेन निषादरूपस्थपतौ शीघ्रोपस्थितिजनक-त्वानुकूलात् सामर्थ्यात् शक्तिरिति तदर्थः। अत एव बहुव्रीह्यर्थको न सः। अन्यथा बहुव्रीहौ मीमांसावार्त्तिककारैः शक्तिकथनेन निषादपदस्य

---

समासो भविष्यति श्रेष्ठोनिषादानाम्। तस्मादधिकृताधिकारम् एतत् शास्त्रम् इति। एवं प्राप्ते ब्रूमः— "स्थपतिर्निषादः स्यात् शब्दसामर्थ्यात्" निषाद एव स्थपतिर्भवितुमर्हति। कस्मात्? "शब्दसामर्थ्यात्" निषादं हि निषादशब्दः शक्नोति वदितुम् श्रवणेनैव। निषादानान्तु स्थपतिं लक्षणया ब्रूयात्। श्रुतिलक्षणाविषये च श्रुतिर्न्याय्या न लक्षणा। अथ उच्यते नैष दोषः निषादशब्दो निषादवचन एव षष्ठीसम्बन्धस्य वाचिका इति। तन्न। षष्ठ्यश्रवणात्। न तत्र षष्ठीं पश्यामः। आह लोपसामर्थ्यात् षष्ठ्यर्थोऽवगम्यते इति। सत्यवगम्यते। न तु लोपेन। केन तर्हि? निषाद-

शास्त्रनिष्पन्नेन सखण्डेन सादृश्यं बोध्यम्॥ एकार्थीभाव इत्यनेन समर्थवचनमित्यस्य सामानाधिकरण्यानुपपत्तेराह

कर्मणीति। (कै)

बाहुलकादिति शेषः॥ सामान्ये च नपुंसकं तद्ध्वनितं भाष्ये

समर्थमित्युच्यते इति॥ (भा)

वाक्यसमासयोर्विशिष्टपुरुषस्यैकस्यैवावगतेर्विशेषाभावमाशङ्क्याह

राज्ञ इति। (कै)

अनियतसंबन्ध्यपेक्षयेति च्छेदः॥ उद्भूतसंबन्धशब्देन तद्ध्वनितया प्रतीयमानसंबन्धः।

---

तत्रालाक्षणिकत्वेन च तदभावस्य सूत्रतो न लाभः स्यात्। एतेन शब्द-सामर्थ्यादित्यस्य निषादशब्दस्य निषादबोध एव सामर्थ्यात् शक्तेः षष्ठी-तत्पुरुषे तु पूर्वपदस्य लक्षणेति न तस्य ग्रहणं जघन्यत्वादिति शबरस्वामि-

---

शब्दलक्षणया। तस्याश्च दौर्बल्यम् इत्युक्तम्। समानाधिकरणसमासस्तु बलीयान्। तत्र हि स्वार्थे शब्दौ वृत्तौ भवतः। द्वितीया च विभक्तिः तत्रैव उभाभ्यां सम्बध्यते। तेन द्वितीयानिर्दिष्टोनिषादो गम्यते। तत्र षष्ठ्यर्थं कल्पयन् अश्रुतं गृह्णीयात्। तस्मात् निषाद एव स्थपतिः स्यात्॥

लिङ्गदर्शनाच्च। ६। १। ५२॥

लिङ्गं दृश्यते "कूटं दक्षिणा" इति निषादस्य इष्टं दर्शयति। कूटं हि निषादानाम् एवोपकारकं न आर्याणाम्। एवं स्वमेव तन्निषादानाम्॥ मीमां— भाष्य— ६। १। ५१—५२॥

"ऐन्द्रं वास्तुमयं चरुं निर्वपेद्" इति प्रकृत्य श्रुतम्। "एतया निषादस्थपतिं याजयेद्" इति तत्र संशयः किं द्विजातिरेव यो निषादाना-

**विशेषणभावमापन्न इति। (कै)**

विशेषणत्वेनैवाभेदेनोपस्थित इत्यर्थः। स्वप्रत्ययार्थगतविशेषणत्वस्यापि प्रथमातिरिक्तविभक्त्यर्थत्वादिति भावः॥

**अभिधीयते। (कै)**

शब्देनोपस्थाप्यते॥

**स्वनिष्ठः। (कै)**

प्रातिपदिकार्थमात्रनिष्ठः। प्रातिपदिकार्थमात्ररूप इति यावत्। न तु संबन्ध्यन्तरापेक्षयोद्भूतसंबन्ध इत्यर्थः॥

---

क्तं व्याख्यानं प्रौढ्यैव वक्ष्यमाणे भाष्यसंमते व्यपेक्षावादे तत्रापि लक्षणा भावाच्चेति दिक्॥

ननु स्थपतिशब्दः स्वामिश्रेष्ठान्यतरपर्याय इति तस्य गुणशब्दत्वात्। निषादस्य जातिशब्दत्वात् कर्मधारये स्थपतेः पूर्वनिपातापत्तिः।

---

माधिपत्यं करोति तस्यात्राधिकारः षष्ठीसमास एवायम्। उत निषाद एव स्थपतिस्तस्य। कर्मधारयस्तायमिति तत्र—

पक्षद्वयेऽपि शब्दोऽयं योगादेव प्रवर्त्तते।
तत्र षष्ठीसमासत्वे (अपि) विदुषः स्यादधिक्रिया॥
आहिताग्नेश्च यदि तु कर्मधारय इष्यते।
अनाहिताग्नेरप्यस्य प्रसज्येताधिकारिता॥
तेन षष्ठीसमासोऽयमिति प्राप्तेऽभिधीयते।
निषादपदमेवं तु स्थपतौ लक्षणां व्रजेत्॥
न हि षष्ठी श्रुता येन न (तत्) सम्बन्धीविधिर्भवेत्।
निषादपदमेवातः षष्ठ्यर्थं लक्षयेदिदम्॥
कर्मधारयपक्षे तु न काचिदपि लक्षणा।

विधीयमानत्वात्। (कै)

विधेयताख्यविषयतावत्त्वात्। प्रथमाया विधेयविभक्तित्वादिति भावस्तदेवाह

प्राधान्यमिति॥ (कै)

वृत्तौ भेदस्य (कै)

भिन्नोपस्थितिविषयत्वस्य। यथा घटघटत्वयोः घटशब्दजन्य-संबन्धाविषयकोपस्थित्यविषयत्वं तथा वृत्तौ राजपुरुषयोरिति भावः॥

---

किं च स्थपत्यर्थस्य सम्बन्धिनि नित्यसाकाङ्क्षत्वात् षष्ठीसमास एव न्याय्यः। नरपत्यादिष्विवेति चेन्न॥ "लिङ्गदर्शनाच्च" (मीमां अ ६। पा १। सू ५२) इति जैमिनिसूत्रेण हेत्वन्तरोक्तेरदोषात्। "लिङ्गं च दृश्यते, "कूटं दक्षिणा

---

निषाद एव स्थपतिरतः श्रुत्या प्रतीयते॥
तेन श्रुतिबलादग्नोऽनाहितानिश्च सन्नपि।
निषाद एव स्थपतिः कर्मण्यत्राधिकारभाक्॥

शास्त्रदीपिका— अध्याय-६। पाद-१ अधि १३॥

"द्विजः स्थपतिरन्यो वा द्विजः षष्ठीसमासतः।
कर्मधारयमुख्यत्वान्निषादो रौद्रयागकृत्"॥

"निषादानामधिपतिः" इति षष्ठीसमासस्य त्रैवर्णिके सम्भवात्। तस्य चाधीतवेदत्वेन विद्यासम्भवाच्च। इति चेत्— मैवम् "निषादश्चासौ स्थपतिश्च" इति कर्मधारयसमासस्य मुख्यत्वात्। षष्ठीसमासे तु सङ्कीर्ण-जातिविशेषवाचिना निषादशब्देन तत्सम्बन्ध उपलक्ष्यते। न त्वयं कर्मधारये दोषोऽस्ति॥ जैमिनीयन्यायमाला— ६। १। ५१—५२॥

**संबन्धस्यान्तर्भावात् । (कै)**

राजपुरुष इति समुदायेनैवोपस्थापनादित्यर्थः ॥ "उक्तार्थानामप्रयोग इति"। षष्ठ्या निवृत्तिरिति भावः ॥ उक्तविशेषस्य गम्यमानतया ऽविशेषोक्तिः कथमित्यत आह

**एवं हीति ॥ (कै)**

**पृथगर्थत्वं स्यादिति । (कै)**

समासापेक्षया परस्परापेक्षया च भिन्नार्थत्वं स्यादित्यर्थः ॥

**न प्रतीयेतेति । (कै)**

पदाभ्यामिति शेषः ॥

**सामर्थ्यभेदोऽपीति । (कै)**

व्यपेक्षैकार्थीभावरूप इत्यर्थः ॥ भाष्ये

**नापि ब्रूम इति । (भा)**

नैव ब्रूम इत्यर्थः ॥

---

इति"। (शबरभाष्य अ ६ । पा १ । सू ५२) "कूटं हि निषादानामेव स्वम्" (शबरभाष्य अ ६ । पा १ । सू ५२) इति शबरस्वामिनः । एवं राजदन्तादित्वात् (अ २ । पा २ । सू ३१) कर्मधारये स्थपतेः परनिपातः

---

कर्मधारयोऽयं न षष्ठीतत्पुरुषः । एवं पदद्वयं स्वार्थवृत्तम् । इतरथा निषादशब्दो लक्षणया स्थपतावध्यारोपितः स्यात् । सामानाधिकरण्यसमासप्रतिपत्त्यर्थमुत्पन्नशब्दस्यापि तदेवाधिकरणम्, नीलशब्दस्यापि । अत एकाधिकरण्यात् सामर्थ्यम् । सामर्थ्याच्च समासः । यदि च निषादशब्देन निषाद एवोच्यते स्थपतिशब्देन स्थपतिरेव । ततो भिन्नाधिकरणत्वात्

**वाक्ये पृथगर्थत्वेऽपीति । (कै)**

पृथगुपस्थितिविषयत्वेऽपीत्यर्थः ॥

**एकार्थता (कै)**

एकसामर्थ्यवत्ता ॥ एकार्थीभावकृतविशेषप्रश्ने सुबलोप इत्यादिकथनमसङ्गतमत आह

**एकार्थीभावाभावेति । (कै)**

यथा मशकनिवृत्तिकारणमपि धूमो मशककारणमित्युच्यते मशकार्थो धूम इति तथा तदभावकारणकमपि तत्कारणकमित्युच्यते । तदुक्तं पातञ्जलभाष्ये—

[1]"उत्पत्तिस्थित्यभिव्यक्तिविकारप्रत्ययाप्तयः ।
वियोगान्यत्वधृतयः कारणं नवधा स्मृतम्" ॥

---

१ तत्रोत्पत्तिकारणं मनोभवति । विज्ञानस्य । १ ॥ स्थितिकारणं मनसः पुरुषार्थता । शरीरस्येवाहार इति । २ ॥ अभिव्यक्तिकारणं यथा रूपस्याऽऽलोकस्तथारूपज्ञानम् । ३ ॥ विकार कारणं मनसोविषयान्तरम् । यथा अग्निः पाक्यस्य । ४ ॥ प्रत्ययकारणं धूमज्ञानमग्नि-

---

सम्बन्ध्याकाङ्क्षानिवृत्तिरप्यर्थतो निषादानामेव तत्त्वलाभादुपपन्ना । लिङ्गं चानेकार्थस्य शब्दस्यार्थनियामकं दृष्टम् । तस्माद् अनेकार्थनिषादस्थपतिशब्दस्यार्थनियामकं शीघ्रोपस्थितिजनकशक्तिकत्वं लिङ्गं च इत्येव सूत्रतात्पर्यं

---

सामर्थ्याभावः । सामर्थ्याभावात् समासाभावः । तस्मान्निषादशब्देन स्थपतिं यावद्गन्तव्यमित्येषा लक्षणा । न वा अत्र षष्ठीविद्यते । अनुपलभ्यमानत्वात् लुप्तेति चेत् । उच्यते । यद्यत्राश्रवणेन कारणेन लोपः । स्वादयो लुप्ता इति किमिति न कल्प्यते । तस्मात् लोपे नास्ति प्रमाणम् । ततो राज-

उभयत्रापि राजसंबन्धवत्पुरुषप्रतीत्यविशेषे क्वचिद्विभक्त्यादिः क्वचिन्नेति विभागः कथमित्यत आह

तत्रेति। (कै)॰

वाक्यीयन्यायेन विशेषणत्वमेव षष्ठी प्रवृत्तौ निमित्तं तत्रैव संबन्धस्योद्भूततया भानादिति भावः॥

भेदनिवृत्ताविति। (कै)

भिन्नोपस्थितिविषयत्वमत्र भेदः॥

---

ज्ञानस्य। ५॥ प्राप्तिकारणं योगाङ्गानुष्ठानं विवेकख्यातेः। ६॥ वियोगकारणं तदेवाशुद्धेः। ७॥ अन्यत्वकारणं यथा सुवर्णस्य सुवर्णकारः। एवमेकस्य स्त्रीप्रत्ययस्याविद्या मूढत्वे द्वेषो दुःखत्वे रागः सुखत्वे तत्त्वज्ञानं माध्यस्थ्ये। ८॥ धृतिकारणं शरीरमिन्द्रियाणाम्। तानि च तस्य। महाभूतानि शरीराणाम्। तानि च परस्परं सर्वेषां तैर्यग्यौनमानुषदैवतानि च परस्परार्थत्वादित्येवं नव कारणानि। ९॥ २ साधनपाद— सू— २८ भाष्य॥

---

वक्तुं युक्तम्। किं षष्ठी तत्पुरुषेऽपि ऐश्वर्यस्योत्सर्गतो निरूपकसजातीयनिष्ठस्यैव लाभेन कर्मधारयादविशेषः। अत एव नरपतिसुरपत्यादिशब्दतो नरसुरयोरेवेश्वरत्वेन प्रतीतिः। अश्वपतिगजपतिशब्दादौ त्वगत्या तात्प-

---

पुरुष इत्यत्रापि राजा चासौ पुरुषश्च इतीदृशो विग्रहः कर्तव्यः। तत्रापि षष्ठ्यश्रवणादेव नास्ति किन्तु स्वस्वामि सम्बन्धात् षष्ठ्यर्थमध्यारोप्य तदा समासो भवति। राज्ञः पुरुषः इति वाक्यमर्थप्रदर्शनार्थम्। तस्मात् स्वपतिशब्दे या विभक्तिः सेतरत्रानुषज्यते। अन्यस्या अश्रवणात्। अथवा समुदायादुत्पादाद् उभयत्रापि द्रष्टव्या॥ मीमां ६। १। ५१॥

**संबन्धस्योपरमादिति ।** (कै)

प्रातिपदिकोक्ततया तदाकाङ्क्षोपरमादित्यर्थः ॥

**अर्थस्येति ।** (कै)

अर्थगतभिन्नोपस्थितिविषयत्वस्येत्यर्थः ॥ "ऋद्धस्ये"त्यस्य राजसमानाधिकरणत्वेनैकार्थ्याद्व्यवधायकत्वमिति मन्वानं प्रति स्पष्टमुदाहरणमाह

**भार्या राज्ञ इति ।** (कै)

भार्या देवदत्तस्येत्यस्य मध्ये राज्ञः पुरुष इत्यनेन व्यवधानमिति बोध्यम् ॥ ननु वाक्येऽपि राज्ञो विशेषणताया एव नियतत्वाद्यथेष्टमभिसंबन्ध इत्यनुपपन्नमत आह

---

र्थानुपपत्त्या चोत्सर्गस्य त्यागः। अत एव शङ्करभगवत्पादैः *दहराधिकरणे (वेदान्तदर्शन अ १ । पा ३ । सू १५) ब्रह्मलोकशब्दे कर्मधारयसमासः। "सर्वाः प्रजा अहरहर्गच्छन्त्यः एनं ब्रह्मलोकं न विन्दन्तीति" लिङ्गेन साधित इत्यलम् ॥

---

* गतिशब्दाभ्यां तथा हि दृष्टं लिङ्गं च । १ । ३ । १५ ॥ ( वेदान्तदर्शनभाष्य ) दहरः परमेश्वर उत्तरेभ्यो हेतुभ्य इत्युक्तम् । त एवोत्तरे हेतव इदानीं प्रपञ्च्यन्ते । इतश्च परमेश्वर एव दहरो यस्मात् दहर वाक्यशेषे परमेश्वरस्यैव प्रतिपादकौ गतिशब्दौ भवतः। "इमाः सर्वाः प्रजाः अहरहर्गच्छन्त्य एतं ब्रह्मलोकं न विन्दन्तीति" तत्र प्रकृतं दहरं ब्रह्मलोकशब्देनाभिधाय तद्विषया गतिः प्रजाशब्दवाच्यानां जीवानां अभिधीयमाना दहरस्य ब्रह्मतां गमयति तथा हि अहरहर्जीवानां सुषुप्त्यवस्थायां ब्रह्मविषयं गमनं दृष्टं श्रुत्यन्तरे सता सौम्य तदा सम्पन्नो भवतीत्येवमादौ लोकेऽपि किलैनमिदं सुषुप्तमाचक्षते ब्रह्मीभूतो ब्रह्मतां गत इति । तथा

**वाक्ये अनियतेति ।** (कै)

पौर्वापर्यलक्षणः शब्दगतोऽभिसंबन्धो भाष्याभिप्रेत इति भावः ॥ समासासमासकृतः स्वरविशेषो नैकार्थीभावकृत इत्यत आह

**अर्थभेदे इति ॥** (कै)

**स्वरभेद इति ।** (कै)

स्वरशब्देनोदात्तः स्वरितो वाऽत्र विवक्षित इति बोध्यम् ॥

**द्वे अपीति ।** (कै)

राजन्शब्दः कनिनन्तः पुरुषः कुषनन्त इति भावः ॥ "सिद्धे शब्दार्थसंबन्ध" इत्युक्तेर्वाचनिकत्वं कथमत आह

---

तत्र स्वाभाविकत्वपक्षे श्रोत्रियादिवदखण्डा निरवयवा नित्याः शब्दास्तदन्वाख्यानाय कल्पिते रेखा गवयस्थानीये शास्त्रप्रवृत्तिः । तदुक्तम्—

अबुधं प्रत्युपायाश्च विचित्राः प्रतिपत्तये ।
शब्दान्तरत्वादत्यन्तं भेदो वाक्य समासयोः ॥

अत एव गोरथादौ युक्तादीनां लोपाविधानम् । गवां रथ इत्येव वाक्यस्य कल्पनात् । क्रियामन्तरेणाऽन्वयाभावाच्च तदवगतिः गोयुक्तो रथ इति लौकिकं तु समासस्य पर्यायरूपम् । तथा—

---

ब्रह्मलोक शब्दोऽपि प्रकृते दहरे प्रयुज्यमानो जीवभूताकाशाशङ्कां निवर्त्तयन् ब्रह्मतामस्य गमयति । ननु कमलासनलोकमपि ब्रह्मलोकशब्दो गमयेत् । "गमयेद् यदीदं ब्रह्मणो लोक इति" षष्ठीसमासवृत्त्या व्युत्पाद्यते । सामानाधिकरण्यवृत्त्या तु व्युत्पाद्यमानो ब्रह्मैव लोके ब्रह्मलोक इति परमेव ब्रह्मगमयिष्यति । एतदेव चाहरहर्ब्रह्मलोकगमनं दृष्टं ब्रह्मलोकशब्दस्य सामानाधिकरण्यवृत्तिपरिग्रहे लिङ्गम् । न ह्यहरहरिमाः प्रजाः कार्यब्रह्मलोकं सत्यलोकाख्यं गच्छन्तीति शक्यं कल्पयितुम् ॥

वचनेनेति ॥ (कै)

व्यभिचारमेव दर्शयति ।

अथेति ॥ (कै)

ननु वाचकाभावे कथं प्रतीतिरत आह

पञ्चकेति ॥ (कै)

तात्पर्यग्राहकं तु प्रकरणादीति भावः । इदमेव दर्शनं सिद्धान्तिन इति बोध्यम् ॥

राजपदमेवेति । (कै)

शब्दशक्तिस्वभावादिति भावः ॥ एतेन विभक्त्यर्थस्य प्रातिपदिकार्थत्वं न दृष्टमित्यपास्तम् ॥ शब्दाभावे ऽर्थसद्भावं प्रदर्श्य शब्दसद्भावेऽप्यर्थाभावं दर्शयति ।

अर्थाभेदे चेति । (कै)

अभिन्नोपस्थितिविषयत्वे चेत्यर्थः ॥

वाक्ये चेति । (कै)

चादीनां निपातानां परप्रयोग एवेति भावः ॥

---

पदं यथैव रुक्मादिविशिष्टेऽर्थे व्यवस्थितम् ।
नीलोत्पलाद्यपि पदं भागाभ्यां वर्तते तथा ॥

भागाभ्यां कल्पिताभ्याम् । सादृश्यमूलकस्तु वाक्यभेदेन अत्यानामभेदभ्रमो बालानां तन्मूलक एवैकार्थीभावव्यवहारोऽत्र पक्षे वास्तवः । खण्डवाक्यपक्षे पदानां पृथगर्थत्वस्वभावत्वेन स्वभावभङ्गापत्तेः ॥ तथा
"शब्दस्य प्रकृत्यादिविभागोऽपि क्रियते प्रतिपत्तये" इति ॥

तीक्ष्णेनेति। (कै)

पराङ्गवद्भावात्स्वरैक्यमत्रेत्यर्थः॥

अन्तश्च तवै इति। (कै)

आद्यमसमासे ऽन्त्यं समासे स्वरविधायकम्॥

विभक्त्यर्थेति। (कै)

वाक्ये उपसर्जनबोधकपदानां विभक्त्यन्तत्वेन तदर्थसंख्याविशेषयुक्तार्थबोधकत्वमित्यर्थः॥

अन्तर्भूतेति। (कै)

विशेषणीभूतस्वार्थकमित्यर्थः॥

अभेदैकत्वेति। (कै)

विभक्त्यभावेन संख्याविशेषाणां तत्तद्रूपेणाप्रतीतेः संख्यात्वेन सर्वसंख्यानां भानं मधुनि सर्वरसानां रसत्वेन भानवदिति भावः॥ तदाह

यथौषधीति॥ (कै)

---

शास्त्रकृद्भिरबुधानामिति शेषः। पङ्कजादिपदं योगरूढं सप्तपर्णादिपदं रूढं राजपुरुषादियौगिकमित्यादिरपि काल्पनिकः प्रतिपादनोपाय एवेति तदर्थः। तत्र वाक्यार्थानुगमाद्राजपुरुषादियौगिकः सप्तपर्णादौ क्वचिदर्थानुगमेऽपि पौर्वापर्ये तदभावाद्रूढिरेव पङ्कजादौ वाक्यार्थानुगमादर्थान्तरानुगमाच्च योगरूढिरिति दिक्। परे तु वाक्याद्व्युत्पत्तिः शास्त्रनिष्पाद्या। अर्थाभिधानमपि शास्त्रकृतमेव। एवं चानेकं सुबन्तं चार्थे वर्त्तते। चार्थे वर्त्तमानं च द्वन्द्वसंज्ञकमित्यर्थात् घटकपदानामेव चार्थे

अथवेति। (कै)

अत्र पक्षे संख्यात्वेन सामान्यं भासते न तु विशेषा इति पूर्वस्मादिशेषः संख्यावद्द्रव्यसंबन्धीति पक्षद्वयेऽपि बोधः। अत एव भाष्ये "संख्याविशेष" इति विशेषपदोपादानं मधुनि सर्वरस-सत्ताजन्यस्य तत्तद्रोगादिनिवृत्तिरूपस्य फलस्यानुभवात्तत्तत्कल्पने-ऽप्यत्र सर्वसंख्याविशेषकल्पने मानाभाव इति तद्भावः॥ [1]"भेदानां" विशेषाणाम्। "संख्यात्मा" संख्यासामान्यम्। "तथाविधः"। अभेदैकत्वसंख्यापदवाच्यः। निर्विशेषसामान्याभावादिदं कथमत आह "व्यापारादिति" संख्यात्वेनैव तत्प्रतीतेर्विशेषरूपाणां तत्त-द्रूपेणाप्रतीतेश्च भेदापोह इति भावस्तदेव समर्थयति। अगृहीतेति। [2]"शुक्लादिरूपभेदस्त्विति"। शुक्लादिरूपविशेष इत्यर्थः। "भेद-

---

१ भेदानां वा परित्यागात् संख्यात्मा स तथाविधः।
व्यापाराज्जातिभागस्य भेदापोहेन वर्त्तते॥
अगृहीतविशेषेण यथा रूपेण रूपवान्।
प्रख्यायते न शुक्लादिभेदरूपस्तु गम्यते॥

२ "शुक्लादिभेदरूपस्तु" इति पाठोऽप्युपलभ्यपुस्तके॥

---

इत्येवक्लार्थत्वाचकाराप्रयोगः सिद्ध इति नैकार्थीभावस्य फलं सः"। न च तन्मते शब्दवदर्थोऽपि शास्त्राधीनः शास्त्रकार्यतया शब्दानां लोकतोऽर्थ-ज्ञानासम्भव इति वृत्तिमत्समुदायत्वं वृत्तित्वमित्यस्य वक्तुमशक्यतया किं वृत्तिलक्षणमिति वाच्यम् "परार्थाभिधानं वृत्तिः" (समर्थः पद-विधिः। २। १। १) इति सूत्रव्याख्यानावसरे "अथ ये वृत्तिं वर्त्त-

रूप" इति पाठे शुक्लादिविशेषरूपोऽर्थस्तित्यर्थः। तत्र रूपत्वेन रूपप्रतीति सद्वस्तुविषया ऽत्र तु संख्यात्वेन प्रतीतिरसद्वस्तुविषया विकल्पात्मिकेति विशेषः॥ नन्वेकार्थीभावकृतसंख्याविशेषाभावेनैव तदर्शानिश्चमिति चेन्नेत्याह

लुकेति। (कै)

लुकशास्त्रपर्यालोचनयार्थसत्त्वमनुमीयत इति भावः॥ ननु लुक्शास्त्रपर्यालोचनयाऽर्थसत्त्वमेवेत्यत आह

नहीति॥ (कै)

अनुगम्यते इति। (कै)

बोध्यत इत्यर्थः॥ प्रत्ययलक्षणमिद्धय इति शेषः॥ ननु जातौ बहुवचने कथं व्यक्तिगतसंख्याविशेषप्रतीत्यापादनमत आह

यदि त्विति। (कै)

सत्यपि प्रत्यये तदनवगतेर्जातौ तदाश्रीयते इति भावः॥

---

यन्ति किं त आहुः। परार्थाभिधानं वृत्तिरित्याहुः" इत्युक्तं भगवता महाभाष्यकारेण) इत्यस्य भाष्ये एवोक्तत्वात्। परस्य शब्दस्योपसर्जनार्थकस्य यत्र शब्दान्तरेण प्रधानार्थकपदेनार्थाभिधानं विशेषणत्वेन ग्रहणं सा वृत्तिरिति तदर्थः। यद्वा। परार्थस्य प्रधानार्थस्याप्रधानपदैर्यत्र स्वार्थविशेष्यत्वेन ग्रहणं सा वृत्तिः इत्यर्थः। राजपुरुष इत्यत्र पुरुषपदेन वाक्यावस्थायांमानाक्रान्तो राजार्थो राजपदेन वा पुरुषार्थ आक्रा-

१"जात्याख्यायामिति" सूत्रप्रत्याख्यानादवयवबहुत्वारोपेण बहु-वचनमित्यत्रापि वक्तुं युक्तम् ॥

अवाप्यभेदैकत्वमिति । (कै)

अवयविगताभेदैकत्वमित्यर्थः ॥ एवं हि दारा इत्यादावव-यवविन्यभेदैकत्वं स्यादिति तस्य वृत्तिकृतविशेषत्वभङ्ग इति चिन्त्यम् ॥ संख्याविशेषवल्लिङ्गविशेषोऽपि कुतो नोक्तस्तत्राह

लिङ्गविशेषस्यापीति ॥ (कै)

परे तु संख्याविशेष इत्यस्याप्रातिपदिकार्थसंख्याविशेष इत्यर्थ-स्तेन द्विपुत्रादौ न दोषः । मासजातादौ शब्दात्संख्याऽप्रतीतिरेव मासत्वेन त्वेकमासस्यैव बोधः । अनेकमासजाते द्विमासजात इत्यादिदर्शनात् । शब्दशक्तिस्वभावान्न कदापि तेनानेकमासस्य मासत्वेन बोधः । त्वत्पुत्रो युष्मत्पुत्र इत्यादावपि तत्तच्चेतनपुत्र इत्येव बोधः । आदेशतदभावौ तु तत्त्वेन । वस्तुत एकबोधतदभावाभ्यां यथा घटानित्यादितो बहुत्वेनैव कदाचित्त्रयाणां कदाचिच्चतुरा-

१ अ १ । पा २ । सू ५८ ॥

न्दते तत्संवलितः स्वार्थ उपस्थाप्यत इति यावत् । एतावतैवैकार्थीभाव इति व्यवहारः । बहुव्रीहावपि प्रधानं पदं समुदाय एव घटके पदे चाप्र-धाने तत्र प्रधानपदेनावयवार्थास्कन्देनैव स्वार्थबोधनम् । अवयवैर्वा तद-र्थास्कन्देन । समुदायस्य प्राधान्ये चावयवाप्रतिपाद्य प्रधानभूतान्यपदार्थ-बोधकत्वात् ॥ द्वन्द्वेऽपि प्रधानपदसमुदायोपस्थाप्य साहित्यस्यावयवार्था-स्कन्देन बोधः । अवयवाभ्यां वा तदर्थास्कन्देन बोधः । समाहारेतर-

दीनां भानं न तु कदाचिदपि चित्वत्वत्वादिना तथाहृत्तौ राजत्वादिनैवैकानेकव्यक्तिभानं तात्पर्यवशात् न त्वेकत्वद्वित्वादिना। एकवचनत्वादिकं वस्तुत एकत्वादिविशिष्टव्यक्तिबोधकत्वं त्वेकत्वद्वित्वादिनेत्येतावत्पर्यन्तमाशयः। एवमन्यत्रापि बोध्यम्। दन्तोष्ठस्य दन्ताः स्निग्धतरा इत्यादाववयवसंख्याया अभानाद्दन्तत्वेनोष्ठत्वेन दन्तौष्ठलक्षणार्थद्वयप्रतीतेस्तत्रैवानेकव्यक्तिसत्त्वेऽपि तासां शब्दतोऽभानात्। अत एव भाष्यहतोपसर्जनविशेषणरूपविशेषस्य "देवदत्तस्य गुरुकुलमि"त्यादावव्यापकत्वस्य मासजातादावव्यापकत्वं नोक्तमभेदैकत्वसंख्या भासत इति तु भाष्ये न क्वापि दृश्यत इत्याहुः॥

## नास्ति स्वरभेद इति। (कै)

१"आमन्त्रितस्य चे"ति पदात्परस्य निघातविधानादित्यर्थः॥

ननु नियमेन सन्देहस्यैव जनने दुष्ट एव प्रयोगः स्यादत आह

## तत्रापि प्रकरणादीति॥ (कै)

## निपातनाद्वेति। (कै)

---

१ अ ८। पा १। सू १९॥

---

तदयोरुभयोरपि साहित्यं समूहो विशेष्यम् आद्ये अनुद्भूतावयवभेदः। अन्त्ये उद्भूतावयवभेद इति वक्ष्यते। न चेदमसम्भवि। अप्रधानेन सर्वथा स्वार्थत्यागे तदत्यागे वा असम्भवात्। अन्त्यं तेनैवार्थबोधे सिद्धे प्रधानेन तदभिधानासम्भवात्। यद्वा स्वार्थबोधनव्यग्रस्य परार्थाभिधायकत्वासम्भवात्। किं चाद्ये शब्दार्थसम्बन्धानित्यतापत्तिः। राजपुरुषादितः पुरुषादिमात्र बोधापत्तिश्चेति वाच्यम्। उभयथाप्यदोषात्।' न चान्ते राजादिपदैः स्वार्थस्य विशेषत्वावच्छिन्नस्य बोधनात् कथमितरविशेषणतयोपस्थितिरिति

"कन्थाश्च संज्ञायामि"त्यादावित्यर्थः । संख्याविशेषरूपस्य विशेषस्य स्थितत्वा"देषोऽपी"त्यपिशब्दो ऽयुक्त इत्यत आह

**अपिशब्द इति ॥** (कै)

**पदान्तरार्थमप्रतिपन्नः ।** (कै)

पदान्तरार्थान्वयित्वेनैवोपस्थित्यविषयः ॥

**अर्थान्तरं प्रत्यापयतीति ।** (कै)

विशिष्टोपस्थितावप्यपि सहायत्वादिति भावः ॥

**अयोग्यत्वादिति ।** (कै)

पदार्थैकदेशत्वेनायोग्यत्वम् ॥

**भिन्नत्वादिति ।** (कै)

भिन्नोपस्थितिविषयत्वादित्यर्थः ॥

**भेदनिबन्धनसमुच्चयेति ।** (कै)

घटपदजैकोपस्थितिविषययोर्घटघटत्वयोः समुच्चयाप्रतीतेरिति भावः ॥

---

१ अ ५ । पा १ । सू ३°॥

---

वाच्यम् । गुणभूतपदे प्रधानपदार्थविशेषणत्वेनोपस्थितिविरोधिनः स्वार्थभूतस्य राजाद्यर्थगतविशेष्यत्वस्य त्यागेन जहत्स्वार्थत्वाङ्गीकारेणादोषात् । यद्वा सर्वथोपसर्जनपदेन स्वार्थस्य त्यागः वृत्तौ राजपदसम्बन्धमात्रेण पुरुषपदमेव राजसम्बन्धिपुरुषबोधकमामोदान्वयमादाय चम्पकपुट इत्यादिव्यवहारवद् राजपदार्थः पुरुषविशेषणमित्यादिव्यवहारः । अत्र पक्षे एकार्थीभावो नाम पदद्वयबोध्ययोरेकपदबोध्यत्वरूपमलौकिके तु प्राग्-

## भेदस्य निवर्त्तनादिति । (कै)

पृथगुपस्थितिनिवृत्तेरित्यर्थः ॥

## द्योत्यार्थाभावादिति । (कै)

समुच्चयाभावादित्यर्थः ॥ पूर्वग्रन्थेन संगतिं वदन् अभिप्रायमाह

## अयं भाव इति । (कै)

यद्यपि चार्थे द्वन्द्वसंज्ञकसमुदायस्य शक्तावेकार्थीभावः सिद्ध-स्तथाप्यवयवः समुदायेन च पृथगुपस्थितानामन्वय इत्यपि संभाव्येत तथा सति विशेषणाद्यन्वयोऽपि संभाव्येतेति भावः । सूचकादादेश-नस्य भूतत्वाद्वर्तमानप्रयोगो ऽसंगत इत्यत आह

## प्रवृत्तेति ॥ (कै)

"प्रवन्धो" धारा ॥ अर्थादिशनपरत्वे संज्ञापरत्वं न स्यादत आह

## वाक्येति ॥ (कै)

सिद्धान्ताभिप्रायमाह

## यदा त्विति ॥ (कै)

## विकल्पेन कर्मसंज्ञेति । (कै)

अतिप्रसङ्गस्त्वनभिधानाद्वारणीयः ॥ भाष्ये

---

वदेवासावारोपितः । अत एव जहत्स्वार्थापदस्य जहत्युपसर्जनपदानि स्वार्थं यस्यां सेत्यर्थ उक्तो हेलाराजेन । यद्वा । भेदसंसर्गौ सामर्थ्यम् । तथा हि इतो राजपदसन्निधानात् पुरुषपदेनैव राजसम्बन्धवती राजान्य-स्वामिसम्बन्धाभाववती च या पुरुषव्यक्तिः सोपस्थाप्यतेऽतो न राज्ञः स्वान्त-रेण सम्बन्धः राजपदस्यार्थाभावाद् नापि पुरुषस्य स्वाम्यन्तरेण सम्बन्धः ।

अन्वाख्यानं क्रियते इति । (भा)

समासप्रत्ययादिसंज्ञां प्रतीति शेषः ॥

चन्द्रमसश्चेति । (भा)

ग्रहणे दर्शनं च कूपाभ्रयोरिति शेषस्तदाह ।

कूपो लक्षणत्वेनेति । (कै)

निमित्तशब्दो ज्ञापकसाधारण इति भावः ॥ वाक्यभेदरूप-कारणस्य सत्त्वात् किं पुनः कारणमित्यनुपपन्नमत आह

प्रकृतीति । (कै)

यथा "[१]ऋतेरीयङि"त्यादौ लघ्वर्थमित्युक्त्वा ऽर्थादेशने गौरव-मित्युक्तम् । दोषान्तरमनवस्थामप्याह ।

अवश्यं ह्यनेने (भा)

त्यादिना ॥

तस्य च तावत्केन कृत इति । (भा)

यथा चार्थे इत्यत्र चस्यायमर्थ इति केन शब्देनोक्तं यत्करणक-

१ अ ३ । पा १ । सू २९ ॥

यस्य वेदान्तिनामखण्डार्थबोधो लक्षणवाक्यादौ तद्वत् । अखण्डार्थत्वं च पदार्थसंसर्गानवगाहिप्रतीतिजनकत्वम् । यथा कश्चन्द्र इति प्रश्नोत्तरे प्रकृष्टप्रकाशश्चन्द्र इति वाक्ये प्रकृष्टप्रकाशपदार्थं जानतस्तदाश्रयस्य बुभुत्सितचन्द्ररूपस्य वस्तुनश्चन्द्रत्वेन चन्द्रपदवत्त्वेन च बोधः । न तु प्रकृष्टप्रकाश-वैशिष्ट्यविषयकः मानान्तरसिद्धस्याप्युपात्तस्यैव शक्तिविशेषनिर्धारणोपाय-

चार्थज्ञानेनासौ व्यवहारः क्रियते येन शब्देन च तदुक्तं तत्रापि चायमेव पर्यनुयोग इत्यर्थः ॥

अनुषज्यते इति । (कै)

भाष्ये ऽनवस्था च स्यादिति पाठे चेन गौरवमनुषज्यत इत्यर्थः ॥ असंभवे हेतुः

असामर्थ्यादिति । (कै)

आदेष्टुरिति शेषः ॥ गौरवानवस्थासंभवानां परस्परान्तर्भावेण पृथगुपन्यासो ऽसंगत इत्यत आह ।

दोषबाहुल्येति ॥ (कै)

एवकारादिति । (कै)

अनेकार्था अपि धातव इति तत्र तत्र भाष्योक्तेरित्यपि बोध्यम् ॥

यथेष्टमिति । (कै)

गङ्गादिशब्दानां तीरादावपि प्रयोगादिति भावः ॥ नन्वेवं कोशासंगतिरत आह ।

शक्तिनियमे त्विति । (कै)

---

त्समतस्तदुपादानम् । एवं प्रकृतेऽपि राजपदप्रयोगः शक्तिग्रहोऽपि राजपदयुक्तं पुरुषपदं पुरुषत्वेनोक्तव्यक्तिविशेषे शक्तमित्याकारः । एवं प्रकारत्रयं भाष्ये स्पष्टम् ॥ अन्त्ययोर्महाराज इत्यादौ पूर्वपदे आत्वादि-भूतपूर्वगत्यार्थवत्त्वमादाय बोध्यं यद्यपि भेदसंसर्गो भेदः संसर्गो वा सामर्थ्य-मिति भाष्ये उक्तं तथापि वृत्तौ सामर्थ्यस्य लक्षणद्वये भेदवदर्थोपस्थापकत्वं

शक्तिबोधने त्वित्यर्थः ॥ प्रकृतीनामर्थनिर्देशो नावश्यक इत्याक्षिपति भाष्ये

**न चैतदिति ॥ (भा)**

**प्रत्ययार्थे निर्दिष्टे इति । (कै)**

प्रत्ययार्थनिर्देशे प्रकृतीनामर्थस्य संबन्धादेव प्रतीतिसंभवेन प्रकृतीनामर्थनिर्देशो न कार्य इति भावः ॥ प्रत्ययार्थे निर्दिष्टे प्रकृत्यर्थस्य निर्देशो न कृत इत्येतन्न मन्तव्यमित्यक्षरार्थः। एवं च प्रकृत्यर्थनिर्देशो नावश्यक इति भावस्तदाह

**कस्य चिदेवेति ॥ (कै)**

भाष्ये पूर्वपक्षी स्वोक्तं साधयति।

**भवति ह्यीति । (भा)**

द्व्येकयोरित्यादाविति शेषः ॥ स एव गुणेन गुणिन आक्षेपे दृष्टान्तमाह।

**तद्यथेति ॥ (कै)**

**गुणमात्रेति । (कै)**

सामर्थ्यादेव गुणिप्रतीतौ स्वाभाविकी मतुपो निवृत्तिरेव

---

संसर्गवदर्थोपस्थापकत्वं वा उभयवदर्थोपस्थापकत्वं वेति भेदवदित्यादाववधारणमाद्ययोर्बीजं भेदसंसर्गयोः समनैयत्यात्। विनिगमनाविरहस्तृतीये बीजम्। को भेदः संसर्गो वा इत्युपक्रम्य भाष्ये उक्तम्। वाक्ये प्रसक्तं स्वत्वं निर्दिश्यते राज्ञः पुरुषोऽश्वस्येत्यादि तथा प्रसक्तः सर्वस्वामी च प्रयुज्यते राज्ञः पुरुषो भार्य्यायाश्च इति राजपुरुष इत्युक्ते राजा पुरुषं स्वाम्यन्तरा-

[1]"गुणवचनेभ्यो मतुपो लुगि"त्यनेनाम्नायत इति भावः । इदमपि संबन्धिनः पदेनानुपादाने इति बोध्यम् ॥ गुणशब्दः संबन्धिशब्दोपलक्षणमित्याह

एवमपत्ये इति । (कै)

तथा पत्ये इति पाठान्तरम् ॥ समाधत्ते

विषम इति । (कै)

शुक्लः कृष्ण इति दृष्टान्तो विषम इत्यर्थस्तत्र गुणिमात्राक्षेपस्तथा प्रतीतिरत्र तु नियमेन विशेषप्रतीतिरिति वैषम्यमिति भावस्तदाह

यथा शुक्ल इत्यादि ॥

द्रव्यमात्रमिति । (कै)

सुबर्थसंख्यया ऽऽक्षिप्येतेत्यर्थः ॥

निर्दिश्येतार्थ

इत्यस्य तदेतिशेषः ॥ क्वचित्पाठक्रमस्तत्पाठः ।

---

१ अ १ । पा ४ । सू १९ इति सूत्रस्यवार्तिकम् ॥

---

न्निवर्तयति । पुरुषो राजानं स्वान्तरान्निवर्तयति । एवमुभयस्मिन् परस्परेण व्यवच्छिन्ने यदि स्वार्थं जहाति राजपदं तदा कामं जहात्विति स्वान्यन्तरादियुक्त्या राजरूपस्वामितोऽभिव्यक्तिलाभेन तत्संसर्ग उक्तः । अनेन च तयोस्तत्तद्रूपेण बोधाविषयत्वमुक्तं बोधविषयत्वे राजपदार्थस्य भेदसंसर्गस्य प्रतियोगितयान्वयावश्यकत्वे तत् त्यागकथनासङ्गतिः । अर्थस्य

भवति चेति।

विशेषसंप्रत्यय इत्यनुषङ्गः। तस्माद्वालादीनामपर्यादिशब्दमा-वाच्यकं न च तत्संभवतीति स्वाभाविकत्वपक्ष एवाश्रयणीयः। तदाह

तस्मादिति॥

इदंतया। तत्तद्वैजात्यरूपेण॥

विज्ञायत एवेति। (कै)

तत्तत्पदवाच्यः कश्चिदर्थ इत्येवं रूपेणेत्यर्थः॥ भाष्ये

जर्भरीति। (भा)

यद्यपि जर्भरीत्यस्य भर्त्ताराविति तुर्फरीतू इत्यस्य हन्ताराविति त्ययों निरुक्तकारैर्दर्शितस्तथापि सर्वजनप्रसिद्धत्वाभावात् प्रकृति-प्रत्ययविभागेनान्वाख्यानासंभवाच्च न विज्ञायत इत्युक्तं भगवता॥

अन्वाख्याने। (कै)

वाक्यभेदेन विधाने। तस्माल्लोकसिद्धानामेव निमित्तत्वेनान्वा-ख्यानमित्येव युक्तमिति भावः॥ भाष्ये

शृङ्गवेरम्। (भा)

आर्द्रकम्॥

---

बोधाविषयत्वमेव हि त्यागः। तस्मादुक्त एवार्थो भाष्यसंमतः। यत्तु अर्थ-वत्सूत्रे कैयटे समासग्रहणं तुल्यजातीयानां नियमार्थं सुबन्तानामिति भाष्यप्रतीकमुपादाय सुबन्तानामित्युपलक्षणं भेदसंसर्गद्वये कर्मत्वमायुक्ता-मात्येन कुम्भकार इत्यादिसमाससंग्रह इत्युक्तं तत्र वाक्ये पदार्थयोर्विभागे-

**किं तेन कृतं स्यादिति ।** (भा)

अनेनैषां प्रयोगानर्हत्वं सूचयति । यदि तु माधुर्यातिशयादि-प्रतीतिः प्रयोजनं तदा तु प्रयोक्तव्यमेवेति बोध्यम् ॥ अर्थाभिधानस्य स्वाभाविकत्वपक्षे लाघवमपि दर्शयति ।

**वावचनानर्थक्यं चेति ।** (भा)

वाक्यभेदोऽपि न वा वचनानर्थक्यं चेत्यर्थः । वावचनपदेन महाविभाषोच्यते । इदमुपलक्षणं निषेधशास्त्राणां "नित्यं क्रीडे-" (२।२।१७) त्यादि नित्यग्रहणस्य च ॥

**किमन्यदिति ।** (भा)

न च विशेषणीभूतसामर्थ्येनैव संबन्धस्तस्य लोकस्वभावसिद्धत्वेनाविधेयतया विशेषणतया च विकल्पानन्वयादिति भावः ॥

**न च संज्ञाया इति ।** (भा)

एकार्थीभावविषये इति शेषः । तदाह

**एकार्थीभावे इति ।** (कै)

अर्थाभिधानस्य वचनिकत्वपक्षे आह भाष्ये

**अथ ये वृत्तिं वर्त्तयन्तीति ॥** (भा)

---

नापि बोधे सति इतरसंसर्गाकाङ्क्षाभेदसंसर्गः स द्वारभूतो यस्य विशिष्टार्थस्य तदुक्तानामित्यर्थ इति न तद्विरोधः । हरिरपि—

"भेदसंसर्गशक्तीद्वे शब्दस्यैते व्यवस्थिते"।

इति भेदशक्त्या पृथग्भानं संसर्गशक्त्यैकभानमिति तदर्थः । पक्षान्तर-पक्षे भेदसंसर्गौ वाच्यौ राजसम्बन्धी अराजकीयभिन्नः पुरुष इति

## वृत्तिम् । (भा)

एकार्थीभावरूपाम् ॥

## वर्त्तयन्ति । (भा)

शास्त्रेण निष्पादयन्ति । ये शास्त्रैकगम्यं सामर्थ्यं मन्यन्ते इत्यर्थः ॥ अयं भावः । एकार्थीभावकृतविशेषाः समर्थसूत्रविधेयाः सुबन्तं सुबन्तेन सह सामर्थ्यवद्भवति समर्थं च समाससंज्ञकमित्यर्थः । एवं च विभाषाधिकारादिश्चैवं चरितार्थम् । समासादौ वृत्तित्वव्यवहारस्तु वृत्तिवृत्तिमतोरभेदोपचाराद्बोध्यः ॥

## किं ते इति । (भा)

स्वाभाविकत्वमते एकार्थीभावरूपा वृत्तिर्लोकत एव सिद्धेति न किंचित्तत्र वक्तव्यम् । ये तु शास्त्रनिष्पाद्यां मन्यन्ते ते किं तत्स्वरूपं शास्त्रविधानयोग्यमाहुरिति प्रश्नस्तदुत्तरमयंव्याचष्टे ।

## कार्यशब्दिका इति । (कै)

शब्दानां शास्त्रकार्यत्वे तेषां लोके सिद्धभावादर्थसंबन्धस्य लोकतो ज्ञानासंभवेन तस्यापि शास्त्रविधेयत्वमेव वाच्यम् । एवं च तद्विकल्पादिबोधकतया विभाषापदादि चरितार्थमेवं च शास्त्रैकगम्यत्वात्सामर्थ्यरूपवृत्तेर्लक्षणमपि कार्यमिति भावः ॥

---

बोधः। यथा भेद एव वाच्योऽराजकीयभिन्नः पुरुष इति बोधः। एतद्विरोधादेव राजपुरुषो भार्य्याया इति न। संसर्गस्त्वनुमेयः। यद्वा संसर्ग एव शक्यो राजसम्बन्धीति बोधः। अराजकीयभेदस्त्वनुमेय इति तथानुभवविरोधात्। गौरवाच्च। अन्ये भेदादेर्वाच्यताया उपपा-

**वृत्तिम् ।** (कै)

वृत्त्याश्रयसमासादिरूपाम् । तेषां मते वृत्तिव्यवहारप्रयोजकं वृत्तिधर्मवृत्तिरूपं सामर्थ्यमपि विधेयमेवेति भावः ॥

**किंवृत्तेरिति ।** (कै)

सामर्थ्यस्येत्यर्थः ॥

**नैत्यशब्दिकास्त्विति ।** (कै)

कार्थं शब्दमाह । नित्यं शब्दमाहेत्यर्थे[१] "तदाहेति माशब्दादिभ्य" इति ठक् । शब्दस्य नित्यत्वे तदर्थसंबन्धस्यापि नित्यतया तन्मते उभयोरपि लोकत एव विशिष्टविषयत्वेन विशिष्टैकोपस्थितिजनकतावत्समुदायस्यैव वृत्तित्वेन तद्गतैकोपस्थितिजनकतासामर्थ्यं लोकसिद्धमिति न तन्मते प्रश्न इति भावः ॥

**परस्य शब्दस्येति ।** (कै)

प्रधानार्थकशब्दस्योपसर्जनशब्दस्य वेत्यर्थः ॥

**यत्रेति ।** (कै)

समासादिषु वृत्तिव्यवहारादिति भावः । एवं च तन्निष्ठ-

१ तदाहेति माशब्दादिभ्य उपसंख्यानम् । वा । ४ । ४ । १ ।

---

दयितुमशक्यत्वाच्च । किं च भेदसंसर्गयोर्भाने तयोः प्रतियोगिनिरूप्यत्वात् पूर्वपदार्थस्यापि बोधविषयत्वावश्यकत्वेनानेन प्रकारेण पूर्वपदे अजहत्स्वार्थत्वोपपादनपरभाष्यविरोधात् । किं च राजनिष्ठयोरपि भेदसंसर्गयोर्भाष्ये दर्शितत्वेन तयोरपि वृत्तिजबोधे विषयतापत्तिरिति दिक् ॥ यदोपसर्जनपदेऽप्यजहत्स्वार्थैव "भिक्षुको द्वितीयां भिक्षा-

शब्दान्तरकरणकपदार्थाभिधायकत्वं तेषां स्वाश्रयत्वेन वृत्तिव्यवहार-प्रयोजकं सामर्थ्यमिति फलितं तत्र स्वार्थविशेषणकपुरुषार्थोपस्थितौ राजपदशक्तिज्ञानस्य सहकारित्वाद्बोध्यम् ॥ भाष्ये वृत्तिवर्त्तनवा-दिनामित्यर्थकः तेषां पदस्य व्यावर्त्यं दर्शयति ।

**नित्य** (कै)

इत्यादि ॥ पदस्वरूपावयवत्वमपि न वास्तवमित्याह

**वर्णवदिति ।** (कै)

वर्णेष्विवाचाप्यवयवभ्रम इति भावः ॥ तदेवाह

**तत्त्वत इति ॥** (कै)

नन्वेवं तत्पक्षे "समर्थः पदविधिरि"त्याद्यसंगतं तत्राह

**केवलमसत्येति ।** (कै)

वाक्यविषयपदसारूप्यादेव तद्वदर्थमध्यारोप्यान्वाख्यानमिति भावः ॥ एवं च तत्पक्षे तेषामर्थस्यैवाभावात् तत्र त्यक्तत्वात्यक्तत्व-संदेहाभावाद्

**अथ तेषाम् ।** (भा)

---

मासाद्य न पूर्वां जहाति सह्ययायैव प्रवर्त्तत" इति भाष्यात् । अयं भावः स्वस्मिन् स्वपदार्थभूतायां विशेष्यतायां सत्यामेवैतन्निरूपितां विशेषणता-ङ्गीकरोति विशिष्टशक्तिबलात् तत्र सा विशेषणता राजादिपदोपस्थाप्ये संपूर्णा । अविशेषात् । एवं च स्वपदार्थभूतविशेष्यताया अपि विशेषणत्वे-नैव भानेन तत्र विशेषणान्वयः स्वरूपतो विशेष्यत्ववैशिष्ट्येनोपस्थित एव तदन्वयात् । वाक्ये तु पदजन्योपस्थितौ स्वरूपतो विशेष्यत्ववैशिष्ट्येन भान-

इत्युक्तमिति भावः। केचित्तु नित्यशब्दवादेऽप्युपलभ्यमानावयवानां नैरर्थक्ये समुदायस्य निरवयवत्वे च मानाभावः। न चैतावता नित्यत्वहानिशास्त्रनिष्पाद्यत्वरूपनित्यतायास्तथाप्यहानात्। न चैवं भाष्ये

## अथ तेषाम्

इत्यसंगतं स्यात्। शास्त्रनिष्पाद्यत्वं द्वेधा सावयवस्यैव लोकसिद्धत्वेमानादितया निरवयवतया वा। तत्राद्ये अजहत्स्वार्थैव द्वितीये तु तेषामर्थाभाव एवेति जहत्स्वार्थैवेति वाक्यवदेव मतभेदेन नियमात्सन्देहाभावेन तदुक्तिरिति वक्तुं शक्यत्वात्। तत्राप्यन्त्यपक्षे आरोपितमर्थवत्त्वादिशास्त्रप्रवृत्तिमात्रफलकं तेन महासुन्दर इत्यादावात्वमित्यन्यदेतत्। शास्त्रनिष्पाद्यत्वमते तु स्वार्थात्यागेऽर्थान्तराभिधायकत्वानुपपत्तिः। अर्थत्यागे तु पुरुषमात्रानयनापत्तिरिति प्राहुः॥

## जहतीति। (कै)

शब्दम्। बहुवचनं प्रयोगबहुत्वाभिप्रायेण॥

## स्वार्थम्। (कै)

---

मिति तदन्वयसिद्धिरित्याहुः॥ यत्तु सखण्डाः शब्दा इति पक्षेऽप्यवयवशक्तिं तत्सत्त्वां चाजानतां बालानां समुदायशक्त्यैव बोधस्य सर्वानुभवसिद्धत्वेनावश्यकल्प्यतयैव राजविशिष्टपुरुषबोधोपपत्तौ तयोस्तद्बोधकत्वं न कल्प्यम्। वृषभादिपदे वृषादेरिव। आनुपूर्व्यन्तरघटकत्वाभावविशिष्टानुपूर्व्या एव शक्ततावच्छेदकत्वात्। अत एव रामादिपदाम्नामिनारायणा-

तत्त्वेन प्रसिद्धम् जहति स्वानि पदानि यमिति जहत्स्वः जहत्स्वोऽर्थो यस्याः सेत्यर्थ इत्यन्ये ॥

**सक्तेति । (कै)**

षष्ठ्यभावेन संबन्धाप्रतीत्या प्रातिपदिकार्थमात्रवृत्तित्वादित्यभिमानः ॥

**स्वेनार्थेन वशीकृतस्येति । (कै)**

स्वार्थमात्रोपस्थाने व्यासक्तस्येत्यर्थः ॥

**अर्थान्तरोपादानम् ।**

अर्थान्तरं प्रति विशेषणत्वम् । यद्वा अर्थान्तरस्य स्वं प्रति विशेष्यत्वेनोपादानं न च पृथगुपस्थितयोः पश्चादन्वयः । संबन्धबोधकविभक्त्यभावादभेदान्वयस्तु बाधित एवानुभवबाधितत्वस्येत्यभिमानः ॥

**उपात्तस्येति । (भा)**

अर्थोपादानस्यैव तत्त्यागस्याप्येतन्मते वचनं विनाऽशक्यत्वादिति भावः ॥

---

दीनां बोधः । वाक्ये तु पदान्यर्थवन्त्येव राजसम्बन्धी पुरुष इत्यर्थे राज्ञः पुरुषः पुरुषो राज्ञः इत्यनयोः शक्तिकल्पनापेक्षया पदशक्तेर्लघुत्वात् । आरोपितार्थमादाय विग्रहवाक्ये प्रत्येकं विभक्त्यादिपदत्वं च । वृत्तिप्राग्वर्त्ति अर्थारोपेनैव सुपस्था इत्यादावात्वादीति तन्न । आरोपितेनैवार्थवत्त्वस्य ततो बोधस्य च दुर्वारत्वात् । प्रातिपदिकादीनां सर्वत्रारोपितमेवार्थवत्त्वम् । कस्य चिद्विभिन्नशक्तिग्रहमात्राद्बोधस्त्ववयवानां नानर्थकत्वं साध-

## परार्थवृत्तित्वादेव। (कै)

परार्थं प्रति विशेषणत्वेनोपस्थितिविषयत्वादेव॥

## नात्यन्ताय (भा)

इत्यव्ययम्॥

## त्यागमात्रमिति। (कै)

स्वार्थविशेष्यत्वरूपांशस्य त्यागेन तथा व्यवहार इति भावः। विषयता ऽपि शब्दशक्त्येति विस्तरेण मञ्जूषायां निरूपितम्॥

## परोपकारायेति। (कै)

परस्य पुरुषादेरितरसंबन्धव्यवच्छेदरूपोपकारायेत्यर्थः॥ "चिकित्सि-ता"दीनां राजकर्मानुपकारकत्वादिषम उपन्यासस्तत्राह

## तेषामिति। (कै)

प्राणापगमे एव तत्त्यागादिति भावः॥ भाष्ये

## न चायमर्थः परार्थविरोधीति। (भा)

राजपदेन परार्थस्य पुरुषरूपार्थस्याक्षन्दने तद्विशेषणत्वेन राजरूपार्थोपस्थितौ राजरूपोऽर्थः स्वतो न विरोधी किं तु स्वगतं

---

यितुमीष्टे वाक्यादपि कस्यचित्तथाबोधेन तत्राप्यवयवानर्थक्यापत्तेः केवल शास्त्रप्रक्रियोपयोगिविचाररतां तदज्ञानस्य, विशिष्टशक्तिग्रहमात्राद्बोधस्य च वक्तुमशक्यत्वाच। तदुक्तं वृद्धैः—

"जहत् स्वार्था तु तत्रैव यत्र रूढिर्विरोधिनी" इति।

रूढिः समुदायशक्तिर्यत्रावयवार्थविरोधिनी तत्रैव। सा यथा रथन्तरशालिपर्णीगौरखरादाविति तदर्थः। तत्र पदद्वयस्य नैरर्थक्येऽपि

विशेष्यत्वमेव विरोध्यतस्तन्न हास्यति किं तु स्वगतं विशेष्यत्वमेव विरोधिभूतं त्यजतीत्यर्थः । तदध्वनयन् व्याचष्टे

विशेषणं नामेति । (भा)

अन्यथा विशेषणविशिष्टपुरुषोपस्थितिर्न स्यादिति भावः ॥ अमुमेवार्थं प्रश्नोत्तराभ्यां विशदयति

वाक्येऽपीति ॥ (कै)

स्वविशेषणेति । (कै)

इदमुपलक्षणम् । संख्याविशेषसंबन्धप्रतीत्यप्रतीत्योः । एवं पुरुषपदमपीतरान्वितमेव स्वार्थमुपस्थापयति न केवलमतो न भार्याया इत्याद्यन्वयस्तत्र । अत्रायं भावः । पदानां तत्तद्विषयताविशिष्टेऽर्थे शक्तिरत एव बोधे विषयतानियमः । एवं च राजपदादेराजत्वनिष्ठप्रकारतानिरूपितविशेष्यत्वावच्छिन्नं स्वार्थस्तत्र समासे विशेष्यत्वांशत्याग इत्येतावता जहत्स्वार्थत्वमिति ॥ अत्र च बीजं समुदायशक्तिः । एवं चावयवशक्तिसहकृतसमुदायशक्त्या विशिष्टैकोपस्थितिरिति तत्त्वम् ॥ भाष्ये

अथ वा अन्वयाद्विशेषणं भविष्यतीति । (भा)

---

रथकरणकर्तृत्वादिकस्याहर्य्यारोपेण प्रक्रियानिर्वाहो बोध्यः । त्वया तु राजादिपदे आहार्य्योऽर्थारोपो वक्तुमशक्यः तदर्थबाधाभावात् । किं च राजपुरुष इत्यादावुत्तरपदार्थत्यागेन क्षमम् । किं चैषा जहत्स्वार्था न भाष्यसंमता । यदि जहत्स्वार्था पुरुषमात्रस्यानयनं प्राप्नोतीति भाष्यासङ्गतेः । उभयोरप्यनर्थकत्वे कस्याप्यानयनं प्राप्नोतीति वक्तव्यं

*यथा पुष्पाणामभावेऽपि गन्धान्वयमात्रेण पूर्वतनीं पुष्पसत्तामनुमाय मल्लिकापुट इत्यादिव्यवहारः । तथा वृत्तौ राजपदस्यार्थाभावेऽपि* वाक्यदृष्टसार्थकराजशब्दवर्णानुपूर्वीसत्तामात्रेण वाक्ये यथा राजसंबन्धवतः पुरुषस्यैव प्रतीतिस्तथेहापि राजसंबन्धवतः पुरुषस्यैव पुरुषपदात् प्रतीतिरित्यर्थः । तस्मादृश्यमात्रेणैवार्थवत्त्वप्रतीत्या ऽऽस्रायपीति न दोषः ॥

## विशेषणम् (भा)

विशेषकः ॥ इतरव्यावर्त्तक इत्यर्थस्तद्व्याचष्टे ।

## राजशब्द इति । (कै)

वाक्यदृष्टस्वजन्योपस्थितिविषयार्थनिमित्तं विशेषं राजसंबन्धरूपं पुरुषपदजोपस्थितिविषये पुरुषे आधाय पुरुषं तदंशेन पुरुषपदेनोपस्थितिविषयं कृत्वा स्वार्थं तस्य स्वार्थत्वं स्वजन्योपस्थितिविषयत्वं जहाति तद्वाक्यनिष्पन्नवृत्ताविस्यर्थः ॥ अयं हि वाक्याद्वृत्तेर्निष्पत्तिं मन्यते ।

## न च तन्निमित्तमिति । (कै)

एवं च राजशब्दात्तदर्थप्रतीत्यभावेऽपि तच्छब्दान्वयमात्रेण वाक्ये यादृशविशेषणविशिष्टः पुरुषः शब्दात्प्रतीतस्तादृशस्यैवात्राप्युपस्थितिरित्यनुमानात्पुरुषपदस्य तथा शक्तिग्रह इति भावः ॥

---

स्यात् । एवं च वृत्तावानुपूर्व्यन्तरघटकत्वाभावविशिष्टानुपूर्वीशक्ततावच्छेदिकेति न नियमः पूर्वपदेऽप्यनर्थकत्वमेकार्थीभावोपपादनाय शास्त्रकृत् कल्पितमेव प्रत्ययादेरर्थवत् । बहुव्रीहिद्वन्द्वयोस्तु उभयोरपि उपसर्जनत्वेनोक्तरीत्यैव जहत्स्वार्थत्वं वक्तुं युक्तम् ।

विशेषः पुरुषगत इति। (कै)

राजपदकृतो वाक्ये पुरुषगतो विशेषो भविष्यति न निवर्त्स्यत इत्यर्थः। एवं च रात्रे राजादिपदजोपस्थितिविषयत्वाभावेन जहत्स्वार्थत्वमिति बोध्यम्॥ भाष्ये

अथवेति। (भा)

समभिव्याहृतपदार्थनिरूपितसंसर्गतदतिरिक्तभेदैतदुभयवान् योऽर्थः स समासेन प्रत्याय्यते तादृशपुरुषाद्युपस्थितावेव राजादिपदं तात्पर्यग्राहकमन्यथादिति पक्षे पुरुषपदं राजसंबन्धवत्पुरुषत्वेनो-पस्थापकमिह तु पुरुषपदात्पुरुषत्वेनैव पुरुषविशेषोपस्थितिरिति भेदः॥

सामर्थ्यमेव न स्यादिति। (कै)

अन्यथा राज्ञः पुरुषो ऽश्वश्च राज्ञः पुरुषो भार्यायाश्चेतिवद् राजपुरुषो ऽश्वश्च राजपुरुषो भार्यायाश्चेत्यपि स्यात्। अत एकार्थी-भावरूपं स्वाभाविकं सामर्थ्यमाश्रयतापीदमवश्यं वक्तव्यं भेदसंसर्ग-वानेवार्थो वृत्त्योपस्थाप्यत इति तदाह।

तदात्मकत्वादिति। (कै)

---

"जहत्स्वार्थविकल्पे च सर्वार्थत्यागमिच्छता।
बहुव्रीहिपदार्थस्य त्यागः सर्वस्य दर्शितः"॥

इति हर्युक्तेः। एतेन जहत् स्वार्थतैवैकार्थीभावोऽजहत् स्वार्था च व्यपेक्षैवेति भूषणोक्तमपास्तम्। भाष्ये संख्याविशेषभावं च योगाभाव-रूपमेकार्थीभावकृतविशेषमुक्त्वा अथैतस्मिन् एकार्थीभावकृते विशेषे कि

एवं च भेदसंसर्गवदर्थप्रतिपादकत्वमेवैकार्थीभावसामर्थ्यमित्यर्थस्तच युक्तिरुक्तैव॥

## तत्र भेद इति। (कै)

स्वत्वसमानाधिकरणो राजभिन्नस्वामिकभेदो राजसंसर्गव्याप्यः। एवं वृत्त्युपस्थाप्यराजसंबन्धवद्व्यक्तिगतराजसंबन्धो राजभिन्नस्वामिकभेदव्याप्य इति भावः। एवं च भेदवद्व्यक्तिबोधे सा राजसंसर्गवत्यपीति तद्वती व्यक्तिरपि बुद्धैव। एवमितरत्रापीति तात्पर्यम्॥

## उभौ वा यौगपद्येनेति। (कै)

अयं भावः। उक्तरीत्योभयोः समनियतत्वेन विनिगमनाविरह इति। एवं च भेदवदर्थप्रत्यायकत्वं सामर्थ्यम्। न च संसर्गवतोऽपि प्रत्ययेनासंभवो लक्षणस्येति वाच्यम्। तद्व्याप्यत्वात्तद्वतोऽपि प्रत्ययेनादोषाल्लक्षणस्यावधारणागर्भत्वात् संसर्गवदर्थप्रत्यायकत्वं वा सामर्थ्यं भेदवतः प्रतीतिस्तद्व्याप्यत्वात् तेनोक्तरीत्या नासंभवः। एतत्क्लेशपरिहारायापरेणोभयगर्भसामर्थ्यलक्षणमुक्तं सर्ववाक्यं सावधारणमिति न्यायबाधश्च नेति तद्भावः॥

---

स्वाभाविकं प्रवृत्तेः अर्थाभिधानमाहोस्विद्वाचनिकमिति विकल्प्य स्वाभाविकपक्षं व्यवस्थाप्य "अथ ये वृत्तिं वर्तयन्ति किन्त आहुः परार्थाभिधानं वृत्तिरिति" (अत्रैव भाष्ये) ग्रन्थेन वाचनिकमिति पक्षमुक्त्वा "अथ तेषामेव ब्रुवतां किं जहत् स्वार्था वृत्तिः उत अजहत् स्वार्था" इत्युक्तं तद्विरोधात्। अनेन हि एकार्थीभावमुपक्रम्योक्तेस्तत्रैव

**सर्वं स्वं प्रसक्तमिति ।** (भा)

भाष्यस्य प्रसक्तं सर्वस्वं वाक्ये प्रयुज्यत इति शेषः ॥ पुरुषस्य स्वामिनि नित्यसाकाङ्क्षत्वाभावादाह

**यद्वेति ॥** (कै)

**तत्र भेदपक्षे इति ।** (कै)

भेदघटितसामर्थ्यलक्षणपक्षे इत्यर्थः ॥

**स्वाम्यन्तरेभ्यो निवर्त्यैति ।** (कै)

राज्ञः पुरुषो भार्यायाश्चेत्यादाविव भार्यादिसंबन्धवद्वानुपस्थापकत्वान्निवर्त्येत्यर्थः । एतावतैव परार्थाभिधायकत्वमितिभावः ॥

**निवर्त्तयतीति ।** (कै)

राज्ञः पुरुषो ऽश्वस्येत्यादावश्वादिरूपस्वान्तरनिरूपितस्वामित्ववद्वानुपस्थापकत्वं राजपदस्य निवर्त्तयतीत्यर्थः ॥ इदं दृष्टान्तार्थं यथा विशेषणत्वेनानन्वितोऽपि पुरुषो राजानं स्वान्तरेभ्यो निवर्त्तयति एवं राजा विशेषणत्वेनानन्वित एव पुरुषं स्वाम्यन्तरेभ्यो निवर्त्तयिष्यतीति भावः ॥

**भवतु राजार्थस्येति ।** (कै)

---

पच्चदयमिति लभ्यते ॥ वाच्यस्थे, "संज्ञायाम्" (२ । १ । ४४) इति समासे जहत्स्वार्था "सुपसुपा" इति समासे तु अजहत्स्वार्था इत्याशयेन "इदूतौ च सप्तम्यर्थे" (१ । १ । १९) इति सूत्रे तत्र जहत्स्वार्था अजहत्स्वाथ इऽपि भाष्यकृतोक्त इति न तद्विरोधः । यद्वा पूर्वपदे जहत्स्वार्थसमासेन तदुपपत्तिरित्यलम् । अपेक्षा वादिनस्तु परस्पराकाङ्क्षारूपा

द्योतकतामात्रेण चारितार्थ्याद् राजपदात्तदनुपस्थितिरेव निवृत्तिरित्यर्थः ॥

**वृत्तिरेव न स्यादिति।** (कै)

अर्थवत्त्वाभावेन सुबन्तत्वाभावादिति भावः ॥

**एवं संसर्गेऽपीति।** (कै)

संसर्गघटितलक्षणपक्षेऽपीत्यर्थः। भेदस्य तद्व्याप्यत्वात्स्वाम्यन्तरेभ्यो निवर्त्यत्यादिबोध्यम् भाष्ये ॥

**[1]अन्येभ्यः स्वामिभ्यो निवर्त्तयति** (भा)

इत्युक्त्या स्वस्वरूपस्वामिनो न निवर्त्तयतीत्यर्थलाभात्संसर्गो बोधितः। एतेन

**कः पुनर्भेदः संसर्गो वा** (भा)

इति प्रश्ने भेदप्रतिपादनेऽपि संसर्गाप्रतिपादनाद् न्यूनतेत्यपास्तम्। किं चान्येभ्यः स्वामिभ्यो निवर्त्तयतीत्यनेनान्यस्वामिसंबन्धनिवृत्तं पुरुषं बोधविषयीकरोतीत्यर्थकेन भेदादेः शाब्दबोधाविषयत्वं सूचयति

---

१ उपलब्धभाष्यपुस्तके "निवर्त्तयति अन्येभ्यः स्वामिभ्यः" इति पाठोऽस्ति ॥

---

व्यपेक्षैवात्र सामर्थ्यं न त्वेकार्थीभावः। तदुक्तं भाष्ये "परस्परव्यपेक्षा सामर्थ्यमेके संप्रेक्षितार्थं समर्थमिति च" इति। राजपुरुष इत्यादौ परस्पराकाङ्क्षयो राजपुरुषयोः सम्बन्धस्य राजादिपदोत्तरविभक्तिर्वाचिका। राजपुरुष इत्यादावपि पृथगुपस्थितयोस्तयोः परस्पराकाङ्क्षयोः सम्बन्धो

[1]पुरुषो राजानमन्येभ्य इति। (भा)

दृष्टान्तार्थमितोऽपि तयोर्बोधाविषयत्वं बोध्यं नहि राज्ञि तद्भेद-तत्संसर्गभानं कस्यापि संमतमिति दिक्॥

स्वार्थं जहातीति। (कै)

उपसर्जनपदमिति शेषः॥ यत्तु "भेदसंसर्गौ समासवाच्याविति" तन्न भेदप्रकारकबोधाननुभवात्। किं च वृत्तिवर्त्तनवादे जहत्स्वार्थत्वं वृत्तेर्व्युत्पादयितुमेव ग्रन्थस्तत्र संसर्गस्य समासवाच्यत्वे तत्र प्रति-योगित्वेन पूर्वपदार्थस्यान्वयावश्यकत्वे जहत्स्वार्थत्वभङ्ग एव स्यात् उक्तरीत्या भाष्याक्षरस्वारस्यविरोधाच्च। तस्माद्वेदान्तिमते तत्त्वम-स्यादिवाक्यादावखण्डार्थबोध इव वृत्तौ बोधः। अयमेव चैकार्थी-भावस्तस्मये वाक्ये पदेषु तत्तत्कार्यप्रवृत्तिघटके आत्वादिप्रवृत्तिरिति सुधियो विभावयन्तु। इमौ भेदसंसर्गौ द्वन्द्वेऽपि समूहविशेषस्यैव प्रतीतेः। बहुव्रीहावपि संबन्धित्वेन व्यक्तिविशेषस्यैव भानमित्या-भाति। राजपुरुषयोरेव व्यवच्छिन्नत्वादुभयतो व्यवच्छिन्नमन्य-त्सौत्यत आह।

उभयस्मिन्निति। (कै)

---

१ "पुरुषोऽपि राजानमन्येभ्यः" इति "अपि" घटितो पाठो दृश्यते भाष्ये॥

---

राजा सुन्दर इत्यादौ विशेष्यविशेषणभावबत् समुदायशक्त्यो न स्वयं विशिष्टैकोपस्थितिनियामकः। उपस्थितयोराकाङ्क्षानन्तरमेव तत् प्रतीतेः शक्तिग्रहस्योपस्थितयोरवयवार्थयोः संसर्गे इदं शक्तमित्याकारः सामर्थ्य-समन्वयस्य विशिष्टशक्तत्वादेव वाप्यश्व इत्यादौ वापी पदस्य सामर्थ्येऽङ्गत्वेन

सार्वविभक्तिकत्वात्सप्तम्यर्थे तसिरित्यर्थः ॥ एवं च शब्दार्थस्य *नियतत्वात्संशयो ऽनुपपन्न इत्यत आह*

## एवमिति । (कै)

राजनिष्ठविशेष्यताया अत्यागेऽपि पुरुषनिष्ठविशेष्यतानिरूपितविशेषणताया राजपदार्थतास्वीकार एव संशय इति भावः । एवं च स्वार्थमात्रोपस्थित्या न कृतार्थं किं त्वितरान्वितमेव स्वार्थमुपस्थापयतीत्युच पक्षे जहदप्यसौ नात्यन्तायेति पक्षे च "परार्थाभिधानमि"त्यस्य परार्थान्वितस्वार्थाभिधानमित्यर्थः । मध्यमयोस्तु परार्थतात्पर्यग्राहकत्वमिति निष्कर्षः ॥ इतर आशयानभिज्ञः शङ्कते । भाष्ये

## ननु चेति ॥ (भा)

कस्मा अपि भवतु द्वे अपि वा पर्यायेण भवेतां किं प्रश्नेनेत्यत आह ।

## एकयेति । (कै)

## गुणप्रधानभूतस्येति । (कै)

परस्परमित्यादि ॥ ननु प्रथमायां को हेतुरत आह ।

---

शक्यत्वम् । अत एव समुदायस्य प्रातिपदिकसंज्ञासिद्धिः । अयमपि पक्षो वृत्तिवर्त्तनवादिन एवेति भाष्ये स्पष्टतया वाक्यादेवेयं वृत्तिर्निष्पन्नेति मन्यमानस्य वृत्तावपि वाक्यतुल्याकाङ्क्षाया एव सत्त्वेन भेदसम्बन्धबोधः पदभेदेन व्युत्पत्तिभेदादाकाङ्क्षावशेनैव तत्तद्व्युत्पत्तिकल्पनात् । अत एव विभक्तेर्लुक् तदर्थस्यान्यत एव प्रतीतेरत एवात्र न संख्याविशेषावगतिः ।

**प्रधानेति ॥ (कै)**

**संबन्ध्यन्तरापेक्षयति । (कै)**

न तु राजनि पुरुषापेक्ष इति भावः ॥

**[1]न क्वचिदन्तर्भावमिति । (कै)**

न राजसख इत्यादौ बहुव्रीह्यर्थ इव वाचकशब्दं विना नियमेन प्रतीतिविषयो नापि तिङन्ते कर्तृवत् प्रकृत्यर्थे गुणभूत इत्यर्थः ॥

**गुणभावादन्तर्भूत इति । (कै)**

धात्वर्थत्वात्तत्रान्तर्भूत इत्यर्थः ॥

**अभिहितोऽन्तर्भूत इति । (कै)**

प्रथमा प्राप्नोतीत्युक्तावत्रापि प्रथमापत्तिभ्रमः स्यादतः प्रातिपदिकार्थ इत्युक्तमिति भावः ॥

**व्यतिरेकाभावादिति । (कै)**

षष्ठ्यभावे हेतुरुक्तः । पृथगुपस्थितिनिबन्धनसांसर्गिकविषयताया अभानादित्यर्थः । एवं च राजपुरुष इत्यादिवृत्तौ स्वस्वामिभावादेर्घट इत्यादौ घटघटत्वयोः समवायस्येव प्रकृत्युपस्थितत्वेन प्रकारतैव

---

[1] उपलब्धकैयटपुस्तके "न कुत्रचिदन्तर्भावम्" इति पाठोऽस्ति ॥

---

वाक्यदृष्टविरुद्धविभक्तिकत्वस्यात्राप्यनुसन्धानान्न नामार्थयोर्भेदान्वयव्युत्पत्तिविरोधः । अत एव दधि द्रष्टा इत्यादौ भेदान्वयः । विभक्तिलोपमजानतोऽपि तज्ज्ञानवत्तोपदेशाल्लोकव्युत्पत्त्या तथा बोधः । तदभावे तु तद्व्युत्पत्तेरप्यज्ञानान्न दोषः । विभक्त्यर्थस्य च प्रकृतिबोध्यार्थेऽन्वयाद्राजपुरुषं पश्य इत्यादौ विशिष्टे कर्मत्वधीः । यत्तु राजपदस्य राजसम्बन्धिनि लक्षणा ।

*विभक्त्यर्थस्यैव च प्रायः संसर्गतया भानमिति बोध्यम्॥* संघातस्यै-कार्थत्वेऽपि धवखदिरादिसंघातवद् द्विवचनं स्यादत आह

इहेति॥ (कै)

अवयवार्थोपहत इति। (कै)

शास्त्रकृतशक्त्योपस्थितार्थत्यागे तद्बोधायातिरिक्तशक्तिकल्पने च मानाभावादिति भावः। तत्र यद्यप्यवयवार्थस्तत्तद्विशेष्यत्वावच्छिन्न एव तथापि विशेषणत्वेन तस्याविशेष्यताया आच्छादनात्तस्या अपि विशेषणत्वेनैव प्रतीतिर्न तु स्वरूपेणेति न विशेषणाद्यन्वय इति तात्पर्यम्। वाक्ये तु प्रत्येकपदजबोधकाले राजादिगतविशेष्यतायाः स्वरूपेणैव भानमिति विशेषणाद्यन्वयो भवत्येवेति बोध्यम्॥

विशिष्टोऽर्थ इति। (कै)

विशिष्टस्यैवोपस्थितिविषयत्वादित्यर्थः। इयमजहत्स्वार्था वृत्ति-वर्त्तनवादिमस्तदवर्त्तनवादिनश्च तुल्या जहत्स्वार्थं तु वृत्तिवर्त्तन-वादिन एवावृत्त्यवर्त्तनवादिमस्त्वखण्डानि निरवयवानि पदानीति मते उभयोरपि कदाप्यर्थाभावेन त्यक्तस्वार्थेत्यर्थकजहत्स्वार्थापद-प्रयोगोऽप्यसंगतः। सावयवानीति मते क्लृप्तशक्तेस्त्यागे मानाभावे-

---

अत एव राज्ञि न विशेषणान्वयः। भेदसम्बन्धेनान्वये तु ओदनः पचतीत्यादावन्वयबोधवारणाय भेदसंसर्गकनामार्थप्रकारकशाब्दबोधे तद्धित-प्रत्ययजोपस्थितेर्हेतुत्वावश्यकत्वेन तदसम्भवः। प्रत्ययत्वं सङ्केतविशेषसम्बन्धेन प्रत्ययपदवत्त्वं जातिविशेषो वा। न चैवं कर्मधारयत्वापत्तिरिति वाच्यम्। समासघटकपदार्थस्य विशेष्यत्वे सति यदलौकिके विग्रहे पदद्वयेऽपि एक-

नाजहत्स्वार्थैव वृत्तिवर्त्तनवादिनस्तु यदर्थस्तदङ्गीकारस्तदुक्तमेव। अश्वौहिणीरथन्तरादिपदे तु जहत्स्वार्थैवेति बोध्यम् ॥ एकार्थीभावस्यापि व्यपेक्षापूर्वकत्वात् कथमस्य पक्षान्तरत्वमत आह

व्यपेक्षैवेति। (कै)

एकार्थीभाववादिनोऽपि राजपुरुषपदयोः परस्परं विना बोधाजनकत्वमूलाकाङ्क्षासत्त्वे एव तद्बलात्समस्तांशे विशिष्टशक्तिकल्पनम्। व्यपेक्षावादिनस्त्वाकाङ्क्षावशादेव तद्भावं न तु विशिष्टोपस्थापकशक्तिकल्पनेति भावः॥ ननु शब्दयोरचेतनत्वात्ततो व्यपेक्षाभाव एवमर्थस्यापि। अर्थे आरोपेण सेति चेत् शब्दोऽप्यारोपः स्यादत आह

स्वं रूपमिति। (कै)

एतदर्थः क इत्येव शब्दविषयाकाङ्क्षाप्रमातुर्न त्वन्वयिशब्दान्तरविषया। अर्थे ज्ञाते तु कोऽस्यान्वय्यर्थ इत्याकाङ्क्षाप्रमातुरिति भावः॥ न चान्वययोग्यार्थान्तरजिज्ञासाकाङ्क्षा सा च प्रमातृगता नार्थगतेत्यत आह

प्रमातृगतामिति। (कै)

---

विभक्तिनिर्देशस्तत्रैवकर्मधारयत्वस्वीकारात्। सत्यन्तेन चित्रगुः पञ्चपर्णीत्यादेर्व्यावृत्तिरिति तन्न। कण्ठे कालः दास्याः पुत्र इत्यादौ लक्षणायां मानाभावेन तत्र विशेषणान्वयापत्तेः। न च तत्रापि दासीपदस्य तत्सम्बन्धिनि लक्षणा। दासीसम्बन्धि सम्बन्धीति बोधाननुभवात्। विभक्त्यन्तस्य तु न लक्षणा तस्य तत्प्रत्ययभावात् विभक्त्यर्थस्य संसर्गतयैव भानाच्च। भेदसंसर्गकनामार्थप्रकारकबोधे च संसर्गबोधकत्वेन गृहीतपदज्ञानस्य कारण-

तस्याश्च तदुपस्थापितार्थे एवारोपो न तु गुणभूते शब्द इति भावः॥ अर्थबोधोत्तरमेवास्याप्यर्थः क इति जिज्ञासोदयात्। तत्र षष्ठ्युपात्तार्थे तदिच्छारोपः। अयमर्थोऽर्थान्तरमाकाङ्क्षत इति व्यवहारात्। अपरस्त्वाकाङ्क्षाविषयत्वात्साकाङ्क्ष इति बोध्यम्॥

### दानादीति। (कै)

दानं वेतनादेः॥

### स्वाम्यमित्यस्य। (कै)

पुरुष इति शेषः। भाष्ये

### षष्ठीवाचिकेति। (भा)

समासे त्वाकाङ्क्षावशादेव तद्बोधे वाक्यतुल्याकाङ्क्षाया एवात्र सत्त्वाद्दिरुद्धविभक्तिराहित्येऽपि भेदसंबन्धबोध इति भावः। विशेषणविशेष्यभावांशे वाक्यन्यायेन समासस्यापि शक्तिर्न तु सा विशिष्टोपस्थितिनियामिकेति वा बोध्यम्। आकाङ्क्षयापि राजार्थपुरुषार्थयोः संबन्धे इदं शक्तमिति शक्तिग्रहाद् न विशिष्टोपस्थितिरत्र 'पक्षे। अयमपि वृत्तिवर्तनवाद्येकदेशिन एव पक्षो न तु नित्यशब्दवादिन इति बोध्यम्। वाक्ये त्वाकाङ्क्षितस्यास्य विभक्ति-

---

त्वेनादोषात् च। ओदनादिपदस्य लक्षणया संसर्गबोधकत्वमेव न अनभिधानाद् रूढिप्रयोजनयोरभावाच्च। पराङ्गवद्भावानुरोधाच्चात्रापि व्यपेक्षैव सामर्थ्यमन्यथा पराङ्गवद्भावे एतत् समासादावेकार्थीभाव इति वाक्यभेदः स्यात् तत्र परिभाषा प्रवृत्त्यभावे तु "ऋतेन मित्रावरुणावृतावृधावृतस्पृशे" त्यादौ ऋतेन इत्यादेः पराङ्गवत्त्वे "आमन्त्रितस्य च" (६। १। १९८)

शब्दवाच्यत्वम्। न च संबन्धसंबन्धो वाक्येऽप्याकाङ्क्षालभ्यो ऽनवस्थापत्तेरिति दिक्॥ भाष्ये

क्रियाकारकयोरभिसंबन्धस्येति। (भा)

शक्तिः संबन्धश्चोभयमपि विभक्तिशक्यं घटमित्येतन्मात्रादपि घटकर्मिकेति बोधात्संबन्धस्य वाक्यार्थत्वासंभवात्। अत एव घटमित्युक्ते क्रियाविशेषाकाङ्क्षेति भावः॥

शक्तिरेवाभिसंबन्ध इति। (कै)

इदं चिन्त्यम्। षष्ठ्यामिवात्रापि संबन्धबोधकताया एव भाष्याभिप्रेतत्वस्य तदक्षरस्वारस्येन लाभात् लक्षणायां मानाभावाच्च। भाष्यान्तरस्यैतद्विरुद्धस्यानुपलम्भाच्च॥

अथवेती- (कै)

त्यपि न कारकशब्देन शक्तेरुक्तौ क्रियाकारकशक्त्योरभिसंबन्धस्येत्यर्थलाभेऽपि भाष्यतः शक्तेर्वाच्यत्वालाभात्। नापि शक्तिसंबन्धस्य द्वितीया वाचिकेति यत्किंचिदेतत्॥ भाष्ये

---

इत्याद्युदात्ततापत्तिः। तत्प्रवृत्तौ तु "ऋतेन मित्रावरुणावित्यनयोरामशाथे" इत्यर्थकेनाशाथे इत्यनेनावयवेन परस्परमसामर्थ्यान्न दोषः। मित्रावरुणावित्येतच्च सम्बोधनप्रथमान्तम्। स्पष्टं चेदं भाष्ये। कर्मधारयेऽपि विशेष्यविशेषणभावेनान्वयो व्यपेक्षासाध्यः। उपकुम्भमित्यादावव्ययीभावे नञ्तत्पुरुषे च निपातानां वाचकत्वेन पूर्वोत्तरपदयोर्व्यपेक्षा निपातानां वाचकत्वस्याप्यङ्गीकाराद् निष्कौशाम्बिरित्यादौ क्रान्ताद्यर्थस्याकाङ्क्षावशादेव पदैकदेशन्यायेन भानं न ह्याकाङ्क्षावशात् संसर्गस्यैव भानं नान्यस्य इत्यत्र

अथ यद्येवेति । (भा)

ननु पूर्वं परार्थाभिधानमपि सामर्थ्यमुक्तं भेदसंसर्गादि च तत्कथमधुनैकार्थीभावव्यपेक्षयोरेवोल्लेख इति चेन्न । तेषामेकार्थीभावपदार्थत्वादिति तात्पर्यात् ॥

संचोपसर्ग इति । (भा)

यद्यप्यनुपसर्गा अपि प्रादयः सन्ति तथापि प्रसिद्धत्वादेवमुक्तम् ॥

क्रियाविशेषम् । (भा)

क्रियागतं विशेषम् ॥

येन सम इति । (भा)

यदर्थेन समोऽर्थस्य सामर्थ्यमित्यर्थस्तस्मात्तदर्थान्तर्भावो ऽत्रानुमीयते इति भावः । इयमेव[1] शाकपार्थिवादौ गतिः ॥ ननु प्रक्रान्तार्थद्वयागमकत्वे पृष्टे ऽर्थचतुष्टयकथनमनुपयोगीत्यत आह

१ समानाधिकरणाधिकारे शाकपार्थिवादीनामुपसंख्यानमुत्तरपदलोपश्च । वा । वर्णो वर्णेन ( २ । १ । ६९ ) इति सूत्रस्थवार्त्तिकमिदम् ॥

मानमस्ति । वाक्यदृष्टाकाङ्क्षातुल्याया आकाङ्क्षाया वृत्तौ जायमानत्वेन तदंशादाक्यैकदेशन्यायेनान्यत्रैवात्रापि बोधः । द्विदश इत्यादौ सुजर्थस्य सप्तपर्णे वीप्सयास्त्वेवमेव बोधः । बहुव्रीहावपि समुदायवाच्येनान्यपदार्थेन चित्रगोपदार्थयोराकाङ्क्षया परस्परान्वितयोरन्वयः । अन्यपदार्थस्य समुदायवाच्यता च "अनेकमन्यपदार्थे" (२ । २ । २४) इति शास्त्रबलात् द्वन्द्वेऽपि "चार्थे द्वन्द्वः" (२ । २ । २९) इति शास्त्रबलात् साहित्यं समु-

तुल्यार्थेति ॥ (कै)

ननु गमिसृज्योरिव हन्तिबध्नात्योस्तुल्यार्थत्वं न दृष्टमत आह

पर्यायेति । (कै)

पूर्वत्र तुल्यार्थधातुनिर्देशद्वारा पर्यायत्वमिह तु धात्वोस्तुल्यार्थलाभावेऽपि समुदाययोः पर्यायत्वमित्यर्थः। पर्यायोपादानं च तदर्थदार्ढ्याय परस्परसंसृष्टार्थोपस्थितिरेव न पृथगुपस्थितिरित्येकार्थीभावपदार्थः। स्पष्टमेवानेनोक्तः ॥ व्यतिषङ्गोऽत्र न कर्मव्यतिहार इत्याह

रज्ज्वादीति ॥ (कै)

भाष्ये

अहानाविति । (भा)

अहानिः परस्परं विना शाब्दबोधाजनकमेवेति बोध्यम्। अन्तरङ्गाकाङ्क्षावशादिति तात्पर्यम्। यथा च तयोस्तयोरन्यासंबन्धस्तथा ऽनयोर्विशेषणसंबन्धो विशेषणसजातीयविशेषणसंबन्धश्च नेति सूचितम् ॥ ननु संबद्धाविमावित्यत्रैकोपस्थितिविषयत्वमेव

---

दायशक्यमिति वदन्ति तन्न। उक्तानामेकार्थीभावकृतविशेषणानां विशेषणसंख्याविशेषानवगमविशेषणासम्बन्धाभाववादीनां वचनसाध्यत्वेन गौरवात्। दधीत्यादौ लुक्यपि संख्याविशेषावगमे तस्य तदनवगमप्रयोजकत्वाभावाद् द्वावित्यादावन्यतो बोधेऽपि लुगभावाच्च। किं च समानार्थकवाक्यस्यानिष्टत्वेऽपूर्वं वा वचनारम्भे तवगौरवम्। किं च यत्र युगपदुभयसम्बन्धविवक्षापरत्वादिना च क्रमेण वृत्तिद्वयं यथा चब्राह्मणत्वमित्यादौ नञर्थभावार्थयोर्युगपद्विवक्षायां परत्वात् त्वप्रत्यये ततः समासः तत्र विशेष्ये विशेषणं तत्र

संबद्धत्वं न चैवं प्रकृते । भिन्नोपस्थितिविषयत्वं हि व्यपेक्षा तत्र तु हानिरस्त्येवेत्यत आह

**अथ वा भवति चैवमिति ॥ (भा)**

तद्व्याचष्टे ।

**सत्यामपि ह्रानाविति । (कै)**

भिन्नोपस्थितिविषयत्वे इत्यर्थः ॥ एवमुभयोः सूत्रारूढत्वं कृत्वा व्यपेक्षापक्षं दूषयति । भाष्ये

**अथैतस्मिन्निति ॥ (भा)**

**संख्याविशेषेति । (भा)**

[1]अप्सुचर इत्यादौ ॥

**वचनेनेति । (कै)**

[2]सविशेषणानां वृत्तिर्नेत्यादिना ॥ ननु विभाषाधिकाराद्दाचार्यस्यायमेव पक्षो ऽभिप्रेतो लक्ष्यते ऽत आह

---

१ अप्सुचरः । गोषुचरः । वर्षासुज इति । अत्रैव भाष्ये ॥

२ "सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं न प्रयुज्यत इति वक्तव्यम्" अत्रैव भाष्ये ॥

---

च विशेषणान्तरमिति विषयशाल्येव बोधः । तत्रैव यदा पूर्वं नञर्थसन्दिग्धविवक्षा ततो भावार्थविवक्षा तदा विशिष्टस्य वैशिष्ट्यमिति विषयताशाल्येव बोधः । यदा तु पूर्वं भावार्थविवक्षा तदा विशिष्टे वैशिष्ट्यमिति विषयता शाल्येव बोधः । इत्येतत्सर्वं तादृश तादृशविषयताशालिबोधे विशिष्टशक्तिस्वीकाराद् एकार्थीभाववादेऽक्लेशेन निर्वहति न व्यपेक्षावादे । स्पष्टं चेदं

**तदेवमिति । (कै)**

क्रान्तादिलोपाविधाने नित्यताश्रयेण। विभाषाधिकारस्य कार्य-शब्दाश्रयेण तत्पक्षे ऽर्थस्यापि शास्त्रैकगम्यत्वेनैकार्थीभावस्य वैकल्पि-कत्वं बोधयितुं सूत्रमावश्यकमिति भावः ॥

**कार्यपक्षे तु बहवो वार्त्ता धर्मा इति । (कै)**

वाक्याद्वृत्तिर्निष्पद्यते इति वादिनां वाक्यश्रूयमाणक्रान्तादीनां शास्त्रं विना लोपासंभवो वीप्सादिबोधासंभवश्चेति भावः ॥

**नित्यदर्शने त्विति । (कै)**

एकार्थीभाववादिना ऽर्थानां स्वाभाविकत्वपक्षस्यैव प्रागुपपाद-नान्नित्यदर्शनैकार्थीभावदर्शनमभेदोच्यते इत्याहुः। वस्तुतस्तु निरादि-पूर्वपदानां क्रान्ताद्यर्थवृत्तितयैषामर्थानां नैकार्थीभावकृतविशेषत्वमत एव तत्कृतविशेषेषु भाष्ये नैतेषामुक्तिः। [1]"निरादयः क्रान्ताद्यर्थे" इत्यादीनां क्रान्ताद्यर्थे वर्त्तमाना निरादय इत्यर्थः। एवं चोक्ता-र्थानामिति न्यायेन तेषामन्यपदार्थबोधकपदवदप्रयोगः सिद्धः। अत एव [2]"संख्ययाव्ययेति" सूत्रे समासेनाभिहितत्वात्सुजर्थस्य सुचो-

---

[1] कुगतिप्रादयः ( २ । २ । १८ ) इति सूत्रस्य वार्त्तिकानि ॥
[2] अ २ । पा २ । सू २५ ॥

---

"तस्य भावः" ( ५ । १ । ११९ ) इति सूत्रे भाष्ये। किं चाकाङ्क्षितसम्ब-न्धस्य न समुदायशक्यत्वं मानाभावात् किन्तु "श्रियमाणं लुप्यमानार्थाभि-धायी"तिन्यायेन पूर्वपदशक्यत्वमेवोचितम्। एवं च वाप्यश्व इत्यादावपि प्रग्रह्यत्वापत्तिः सोमो गौरी अधिश्रित इत्यनेन समत्वात्। किं चैवं समुदायस्यार्थवत्त्वाभावाद् प्रातिपदिकत्वानापत्तिः। न चार्थवत्त्वमर्थबोध-

ऽभाव इति भाष्य उक्तं सुजर्थश्च जन्मेति तत्रैव वक्ष्यते । किं चैकार्थी-भावो नामैकोपस्थितिस्तत्कृतत्वं न क्वान्तादिलोपस्य संख्याविशेष-प्रतीतौ हि पृथगुपस्थापकपदज्ञानं कारणमिति तत्प्रतीत्यभाव-स्तत्कृतो भवत्येव । अन्यथा घटः घटपटावित्यादौ घटत्वादेरपि संख्यावत्त्वेनोपस्थित्यापत्तिः । एवं द्वन्द्वे चकाराप्रयोगोऽप्येतत्कृत एव । न च समासेन चार्थस्याभिहितत्वात्तदप्रयोगः समासेन सत्त्वभूतस्य विशेष्यतया ऽभिधानेऽप्यसत्त्वभूतस्य विशेषणतया बोधार्थं च प्रयो-गस्य दुर्वारत्वात् पृथगुपस्थितयोरेव समुच्चयस्य च द्योत्यत्वेन तद-प्रयोग इति तस्यापि तत्कृतत्वम् । लोकेऽपि पृथग्ज्ञातयोरेवैक-देशत्वे समूहादिव्यवहारात् । [1]"चार्थे द्वन्द्व" इति तु सादृश्याच्चार्थ-त्वारोपेण नेयमिति दिक् ॥ ननु व्यपेक्षावादे एकार्थीभावकृत-विशेषस्य वक्तव्यत्ववदेकार्थीभाववादेऽपि निघातयुष्मदस्मदाद्यादेशो-दाहरणविषय एकार्थीभावाभावेन समर्थपरिभाषानुपस्थितौ तिष्ठति देवदत्तो गच्छ त्वमित्यादौ भिन्नवाक्ये निघातादिप्रतिषेधो वक्तव्यः स्याद्, व्यपेक्षावादे तु न दोषस्तत्रापि समर्थपरिभाषोपस्थितौ भिन्नवाक्ये सामर्थ्याभावात् । एवं राज्ञो गोश्चाश्वश्च पुरुषस्येत्यर्थे

[1] अ २ । पा २ । सू २९ ॥

कत्वमित्र अवयवशक्त्यर्थबोधकत्वमपीति वाच्यम् । "अशब्दार्थत्वात्" । यत्तु समासे उत्तरपदे सर्वत्वलक्षणा प्रातिपदिकत्वम् अपि तस्यैव इति तन्न । तन्मात्रस्य प्रातिपदिकत्वे पूर्वपदस्य सुपो लुगनापत्तेः । उत्तरपदमात्रस्य प्रत्ययान्तत्वेन तदसम्भवाच्च । पराङ्गवद्भावे तु न समर्थपरिभाषोपस्थितिः । आमन्त्रितार्थस्य यन्निमित्तं तदेव पराङ्गवदित्यर्थकेन तन्निमित्तग्रहणेन

राज्ञो गवा गोऽश्वपुरुषाभ्यामेकार्थीभावस्य वक्तुं शक्यतया युगपत्षष्ठीतत्पुरुषौ प्राप्नुतस्तथा च स्वरद्वयं स्यादिति तत्प्रतिषेधो वाच्यः। व्यपेक्षावादे तु न राज्ञस्त्रिभिरेव व्यपेक्षा न गवेति वक्तुं शक्यत्वादिति पूर्वपक्षे व्यपेक्षावादेऽपीदमवश्यं वाच्यमित्याह। भाष्ये

तच्च नानाकारकादिति॥ (भा)

तच्च पक्षद्वयेऽपि इदमेवाभिप्रेत्य व्याचष्टे।

ये सर्वथादोषास्तानुदाहरतीति। (कै)

सर्वथा पक्षद्वयेऽपीत्यर्थः॥ भाष्ये "तच्च चेति" पाठे तच्चैकार्थीभावे चाप्यपेक्षायाम्॥

तच्चैतस्मिन् व्यपेक्षायामिति। (भा)

---

सत्रेणेत्यादेः पराङ्गवत्त्ववारणात्। अत एव भाष्ये* "सत्रेणाग्ने स्वायुः संरभस्व" इत्यादौ "सत्रेण" इत्यादेः पराङ्गवत्त्वं माभूदिति तन्निमित्तयत्नः कर्त्तव्यमित्युक्तम्। समर्थपरिभाषोपस्थाने हि असामर्थ्यादेवाप्राप्तौ भाष्यासङ्गतिः स्पष्टैव। क्रियाद्वारकमन्यव्यपेक्षणकृतसामर्थ्यमिति कैयटोक्तं तु न युक्तम्। परस्परव्यपेक्षाया एव भाष्ये सामर्थ्यपदार्थत्वेनोक्तत्वात्। किं

---

* सत्रेणाग्ने स्वायुः संरभस्व मित्रेणाग्ने मित्रधेये यतस्व। सजातानां मध्यमस्था एधि राज्ञामग्ने विहव्यो दीदिहीह॥

यजुर्वेदवाजसनेयसंहिता २७-५॥

हे अग्ने त्वं सत्रेण संरभस्व समारभस्व युक्तो बोध्यः। सत्रेण समारम्भं यज्ञमिति शेषः। सत्रियाम् यज्ञं कारय इत्यर्थः॥ कीदृशस्त्वं स्वायुः शोभनमायुः जीवनं यस्य सः। यद्वा। आयुः उकारान्तो मनुष्यवाची। शोभन आयुर्मनुष्यो यजमानो यस्य स स्वायुः। किं हे अग्ने मित्रेण सूर्येण

१"तत्रै"कार्थीभावे। "एतस्मिन्" व्यपेक्षासामर्थ्ये चेत्यर्थः॥

चरतेर्नानाप्रकारानेककारकात्परत्वाभावादाह

**नानाशब्द इति॥ (कै)**

**पृथग्भावेति। (कै)**

पृथक्क्रियावचन इत्यर्थः॥ भावशब्दः क्रियापरस्तदाह

**भिन्नायाः क्रियाया इति। (कै)**

निघातप्राप्तिविषयभिन्नाया इत्यर्थः॥

**अयं दण्डः (भा)**

इत्यत्र निघातविषया हरणक्रिया तद्भिन्नास्तिक्रिया तत्कारकं दण्डः॥ अत्र पक्षे "ओदनं पचे"त्यादेरनुदाहरणत्वमाशङ्क्याह

**तथा नानेति॥ (कै)**

---

१ क्वचिद्भाष्यपुस्तके "तत्रैतद् व्यपेक्षायाम्" इति पाठोऽस्ति॥

---

चैवं सति कृतः सर्वो मृत्तिकया इत्यादौ समासापत्तिः तादृशसामर्थ्यस्य तत्र ग्रहणे फलाभावश्च। वेदभाष्यं तु फणिभाष्यविरोधादनादेयमेवेति दिक्॥ यत्तु "समर्थः" इति सूत्रे इतरनैरपेक्ष्यमपि सामर्थ्यं पदविधिशब्देन पदत्वसम्पादको विधिः कर्तृकरणयोः इत्यादिश्च। तेन पदविधिविधेय इतरनिरपेक्षत्वार्थबोधक इत्यप्यर्थं व्याचख्यासूत्रस्य तेन "व्रीहिर्यज्ञ"इत्यादौ इतरनिरपेक्षैर्व्रीहिभिर्यजेत इत्याद्यर्थसिद्धिरितरच्च असजातीयमेव गृह्यते

---

सह वर्त्तमानः सम् मित्रधेये यतस्व। धातुं धारयितुं योग्यं धेयं मित्रस्य यजमानस्य धेयं कार्यं यागलक्षणं तत्र यत्नं कुरु। यजमानेन यज्ञं कारय। किं च स जातानां समानजन्मनां मध्यमेष्ठाः मध्यमे तिष्ठतीति क्विप् मध्यमस्थ एधि भव सजाता अपि यज्वानो भवन्त्वित्यर्थः। किं च हे अग्ने

अन्यद् (कै)

युष्मदस्मद्भिन्नं कारकं यस्य पचेत्यादेरित्यर्थः ॥ प्रतिषेधवचनारम्भे तत्रादेशाभावमुपपादयति ।

अत्र पचेरिति ॥ (कै)

क्वचित्त्विति । (कै)

युष्मदस्मत्साध्यभवनक्रियाभिन्नपच्यादिक्रियाकारकत्वादोदनादिनानाकारकमिति भावः ॥ ननु हरतेः करणमात्रापेक्षत्वेन न दण्डेन व्यपेक्षेत्यत्राह

अनेनेति ॥ (कै)

पदेनेति । (कै)

अत एवास्ति सर्पिष्पिबानेन पय इत्यादौ षत्वम् ॥ "पचौदनम्" इत्यत्र संबन्धाभावात्कथं व्यपेक्षेत्यत आह

---

तेन दण्डेन चक्रेण घटं करोतीत्यादीनां नासाधुता इति तन्न । भाष्यानुक्तेः । पश्य मृगो धावति पचति भवतीत्यादौ त्वदुक्तसामर्थ्यप्रत्यायकाभावेऽपि विशेषणस्यान्ययोगव्यवच्छेदफलकत्वेन न्यायत एवेतरनिरपेक्षकर्मत्वादिबोधस्येव व्रीहिभिरित्यादावपि तस्य सम्भवेन फलाभावाच्चेति दिक् ॥ नन्वेवं देवदत्तस्य गुरुकुलमित्यादावेकदेशे गुर्वादौ देवदत्ताद्यन्वयो न स्यादिति चेन्न । ससम्बन्धिकपदार्थस्थले चैत्रस्य नप्ता इत्यादाविवैकदेशान्वयस्या-

---

इह यङ्लुकि दीदिहि दीपस्व दीव्यतेर्यङ्लुगन्तस्य लोटि मध्यमपुरुषैकवचनम् "श्लौ" ( ६ । १ । १० ) इति द्वित्वम् "तुजादीनां दीर्घः" ( ६ । १ । ७ ) इति अभ्यास दीर्घः । कीदृशस्त्वम् राज्ञां विह्वयः कर्तरि षष्ठी राजभिर्विविधं ह्वयते आह्वयते विह्वयः राजभिर्यज्ञे आह्वातव्यः ॥

भाविन इति ॥ (कै)

"ओदनं पचेति" पाठेऽप्योदनद्वारिका पचिनापि व्यपेक्षेति बोध्यम् । अर्थयोराकाङ्क्षैव व्यपेक्षेति तात्पर्यम् ॥

एकस्तूर्ध्वं इति । (कै)

तिष्ठतेश्चोर्ध्वं देशसंयोगोऽप्यर्थ इति भावः ॥ भाष्ये

प्रचये इति । (भा)

व्यपेक्षावादेऽपि समुदायेन व्यपेक्षायामवयवातिरिक्तसमुदायस्या-वयवानालिङ्गितस्य निरूपयितुमशक्यत्वेनावयवैरपि व्यपेक्षास्त्येवेति तन्मते ऽप्ययं दोषस्तदवस्थ इति भावः ॥ ननु प्रचयशब्दस्य समा-हारपर्यायत्वेन समाहारे समासनिषेधेऽपीतरेतरयोगे स दुर्वार इत्यत आह

अनेकस्मिन्निति । (कै)

प्रचय आधिक्यमिति भावः ॥ ननु युगपदेकस्यानेकसंबन्धानु-पपत्तेः कथं युगपत्समासद्वयप्रसङ्गो ऽत आह

तत्रेति ॥ (कै)

---

प्यङ्गीकाराद् नप्तृत्वं हि स्वजन्यजन्यपुंस्त्वं तदेकदेशे जन्यत्वे चैत्रस्यान्वयात् । यद्वा तत्रापि स्वजन्यजन्यपुंस्त्वसम्बन्धेन नप्तर्य्येवान्वयः । एवं गुरुद्वारकेण स्वगुरुत्वाद्यत्वरूपेण सम्बन्धेन देवदत्तस्य कुले एवान्वयः । घटादन्य इत्या-दावपि स्वप्रतियोगिकभेदसम्बन्धेनान्यस्मिन् एवान्वयोऽन्यत्र तु नेदं प्रकार-द्वयमनभिधानाद्यत्र नेष्यते यत्र त्विष्यते तत्र शिवभागवतादौ भवत्येव । शिवो भगवन् भक्तिरस्य इति तदर्थः ॥ एवं च

गो राज्ञापीति । (कै)

समुदायव्यपेक्षायामवयवव्यपेक्षायाः समुदायैकार्थीभावे ऽवयवैकार्थीभावस्य च दुर्निवारत्वादिति भावः ॥ अश्वादिभिश्च साहित्यसत्त्वादेव स इति बोध्यम् ॥

पूर्वं वा तत्पुरुष इति । (कै)

प्रथमातिक्रमे कारणाभावादिति भावः ॥ ननु परत्वाद् द्वन्द्व एव भविष्यतीति न दोषो ऽत आह

विप्रतिषेधेति । (कै)

आकडारीयत्वेऽप्यविरोधमुपपादयति ।

भिन्नसमुदायेति ॥ (कै)

टजिति । (कै)

तथा च स्त्रीत्वे ङीप् स्यात् । किं च द्वन्द्वोत्तरतत्पुरुषे ऽवक्तो वैकल्पिकत्वेन राजगोऽश्वपुरुषा इत्यपीष्यते तच्च स्यादिति भावः ॥

समर्थतराणामिति । (कै)

भाष्यं नैकार्थीभावपरं तच्च तरतमायोगादत आह

---

"सम्बन्धिशब्दः सापेक्षो नित्यं सर्वः समस्यते ।
स्वार्थवत् सा व्यपेक्षा हि वृत्तावपि न हीयते" ।

इतरसापेक्षस्वार्थस्यैव तैः प्रतिपादनादित्यर्थः ।

"समुदायेन सम्बन्धो येषां गुरुकुलादिना ।
संस्पृश्यावयवास्ते तु युज्यन्ते तद्वता सह" ।

इति कारिकायां "सम्बन्धिशब्दः" इत्युपलक्षणम् । तस्माद् गमकत्वे

शक्तेति ॥ (कै)

समर्थतरत्वेति । (कै)

आशुतरत्वं हेतुत्वमन्तरङ्गत्वादिति व्युत्पादयति ॥

प्रथमे- (कै)

त्यादिना ॥

आशुतरग्रन्थः (कै)

इति बहुव्रीहिः । एवं चाशुतरं कार्यप्राप्तिसत्त्वमेव शक्ततरत्वं बोध्यम् ॥

तुल्येति । (कै)

तुल्यजातीयैः प्रथमं झटित्येकार्थीभावस्य व्यपेक्षाया वा कल्पनात्पूर्वं द्वन्द्वे ततः षष्ठीतत्पुरुष इत्यर्थः ॥

---

भवति विशेषणासम्बन्धोऽगमकत्वे तु नेति तत्त्वं गमकत्वं तथा बोधजनकत्वमित्यलम् । तत्र* **वृत्तिश्चतुर्धा । समासतद्धितकृत्सनाद्यन्ताधातुभेदात्** । तत्र समासत्वं सङ्केतविशेषसम्बन्धेन समासपदवत्त्वम् । यत्तु अर्थबोधायाननुसन्धीयमानविभक्तिकपूर्वपदकनामसमुदायत्वं तदिति तन्न । दधिमधुरम् इत्यादावतिव्याप्तेस्तत्र लुप्तविभक्त्यनुसन्धानेन बोध इति चेत् राजपुरुषादावपि तुल्यम् । लोपमजानतो बोधम् इत्यप्युभयत्र समं

---

* "कृत् तद्धितसमासैकशेषसनाद्यन्तधातुरूपाः पञ्चवृत्तयः ॥ इति दीक्षितादयः ॥ वस्तुतः वृत्तिश्चतुर्धा । एकशेषे परार्थान्वितस्वार्थोपस्थापकत्वाभावाद् वृत्तित्वे न मानम् । शिष्टपदेन स्वरूपस्यैव तत्तत् समूहरूपार्थोपस्थानस्य भाष्ये स्पष्टमुक्तत्वात् ॥

नावयवेनेति। (कै)

प्रत्येकमवयवैरनुमीयमानस्य सामर्थ्यस्य सत्त्वेऽपि साचान्नेत्यर्थः। एवं च तस्य समुदायेन 'सामर्थ्यात् पूर्वं तत्समुदायप्रयुक्तो द्वन्द्व इति भावः॥ ननु द्वन्द्वे समुदायेनैव तदवयवगोशब्देनापि राजपदार्थस्य सामर्थ्यसत्त्वात्समुदायस्यापि षष्ठीतत्पुरुषसंज्ञा स्यादिति टच्प्रसङ्ग इति चेन्न। नावयवेनेत्यस्याऽस्वपुरुषसापेक्षेणेति शेषेणादोषात्। तदेव स्फुटं व्याख्यान्तरव्याजेनाह

अपर आहेति। (भा)

राज्ञः समुदायेनैव सामर्थ्यात्तरपा वैयर्थ्यमाशङ्क्याह

समुदायेति॥ (कै)

इत्यस्यार्थस्येति। (कै)

विशेषणसापेक्षत्वे इव विशेष्यान्तरसापेक्षत्वमप्यसामर्थ्यप्रयोजकम्। एवं चेदं पक्षेऽप्यनावश्यकमिति भावः॥ भाष्ये

प्रधानमत्रेति। (कै)

---

श्रुतेरिवार्थमित्येतदघटके इवार्थमिति समुदायेति व्याप्तेश्च। पर्य्यभूषत् पचत भक्षतेतितिङन्तघटितसमासेऽव्याप्तेश्च। **समासो द्विधा। विशेषसंज्ञा विनिर्मुक्तः "सुप्सुपेति" विहितः। तद्‌युतश्च। अन्यश्चतुर्धा। अव्ययीभावतत्पुरुषबहुव्रीहिद्वन्द्वभेदात्।** तत्पुरुषादिसञ्ज्ञेत विशेषसम्बन्धेन तत्पुरुषादिपदवत्त्वम्। तत्र आद्योदाहरणम् "पूर्वं भूतो भूतपूर्वः" "सुप्सुपा" इति

अवयवसंख्यया तत्र समूहस्य संख्यावत्वाश्रयणात्तस्य प्राधान्यमिति भावः ॥ वाक्यलक्षणकरणस्यासंगतिमाशङ्क्याह

नानेति ॥ (कै)

क्वचिदिति । (कै)

यथास्तिष्ठति कूले इत्यादौ । अत्र ह्यसामर्थ्यान्न प्राप्नोति यथा कथं चित्सामर्थ्यग्रहणे ऽयं दण्डो हरानेनेत्यादावपि स्यादिति भावः ॥

लौकिकेति । (कै)

"सुप्तिङन्तचयो वाक्यमि"त्यादि ॥

लक्षणविधानेति । (कै)

निष्क्रियवाक्याभावस्य लोकव्युत्पत्तिसिद्धत्वादिति भावः ॥ अव्ययग्रहणवैयर्थ्यमाशङ्कते

यद्यप्यव्ययमिति । (कै)

स्वर्गच्छतीत्यादौ कारकम् । उच्चैः पठतीत्यत्र विशेषणं क्रियाविशेषणत्वादत्रापि कर्मत्वं वा । "सविशेषणमि"त्येव क्रियाविशेषणेऽपि सिध्यतीत्यत आह

प्रत्यासत्त्येति । (कै)

यद्यपि कारकत्वादप्यस्य सिध्यति तथाप्यव्ययग्रहणवदिदमपि प्रपञ्चार्थमिति तत्त्वमिति बोध्यम् ॥

---

समासः । पूर्वमिति क्रियाविशेषणपूर्वकालवृत्तिपरं भूधातोः सत्तोत्पत्तिवार्थः । पूर्वकालवृत्तिसत्ताश्रय इत्यादिर्बोधः । त्रिवंशमिति न्यायेन पूर्वशब्देनोक्तेऽपि अतीतत्वे क्तः । एवं विस्पष्टं पटुः विस्पष्टपटुः विस्पष्ट पटुत्ववान् इति बोधः । विस्पष्टमिति पटुत्वविशेषणतया नपुंसकम् ॥

**क्रियाप्रधानत्वमिति । (कै)**

*सङ्ख्यातावच्छेदकप्रदर्शनमिदं देवदत्तो गत इत्यादौ लक्षीत्य-* ध्याहार्यमिति भावः ॥ नन्वेकग्रहणात्पुनरप्यनुपपत्तिस्तदवस्थैवेत्यत आह

**एकशब्द इति । (कै)**

एकस्य पदस्य वाक्यसंज्ञायां प्रयोजनाभावादाह

**बहुव्रीहिरिति ॥ (कै)**

एकं तिङन्तं यत्र समुदाये इत्यर्थः ॥ परेतु

***आख्यातं सविशेषणं वाक्यम् (वा)**

---

* आख्यातशब्दः सङ्घातो जातिः सङ्घातवर्तिनी ।
एकोऽनवयवः शब्दः क्रमो बुद्ध्यनुसंहृतिः ॥ १ ॥
पदमाद्यं पृथक्सर्वपदं साकाङ्क्षमित्यपि ।
वाक्यं प्रतिमतिर्भिन्ना बहुधा न्यायवादिनाम् ॥ २ ॥
एते ऽष्टौ वाक्यविकल्पा आचार्याणाम् ।
निघातादिव्यवस्थार्थं शास्त्रे यत् परिभाषितम् ।
साकाङ्क्षावयवं तेन न सर्वं तुल्यलक्षणम् ॥

इह पदविधिः सामर्थ्ये सति परिभाषितः । तत्र सत्यपि पदानां सामर्थ्ये निघातादयः क्वचिन्नेष्यन्ते । यथा । "अयं दन्तो हरानेन । ओदनं पच मम भविष्यत । ओदनं पच तव भविष्यतीति" ( समर्थसूत्रे भाष्ये-२-१-१ ) । अत्रानेनेति सर्वनाम्ना दन्तस्य परामर्शाद्धरतिना सह तस्य सामर्थ्यम् । एवं च सति सामर्थ्ये "तिङ्ङतिङः" ( ८ । १ । २८ ) इति निघातः प्राप्नोति । "ते मया वेकवचनस्य" ( ८ । १ । २२ ) इति चादेशौ । न चेष्यन्ते ।

इति लक्षणं "तिङ्ङतिङः" (८।१।२८) इति सूत्रे अतिङ्ग्रहणं कुर्वतः सूत्रकारस्याभिमतं लौकिकमेव पचति भवतीत्येतत्साधारणम्। तत्र सविशेषणत्वेन विभागे साकाङ्क्षत्वं लब्धं तत्राख्यातपदेन क्रियाप्रधानं लक्ष्यते तेन त्वया शयितव्यमित्यादेः सङ्ग्रहः॥

**सविशेषणम्** (भा)

इत्यस्य साक्षात्परम्परया वा यद्विशेषणं तत्सहितमित्यर्थस्तेन नद्यास्तिष्ठति कूले इत्यादौ नद्या इत्यादेः समानवाक्यस्थत्वसिद्धिः। एतदेवाभिप्रेत्यामरकोशे कारकान्वितक्रियावाचकं सुबन्तचयतिङन्तचयसुप्तिङन्तचयान्यतमं वाक्यमित्युक्तम्।

---

वाक्यभेदात्। सामर्थ्याभावेऽपीष्यन्ते। यथा। "नद्यास्तिष्ठति कूले" "शालीनां ते ओदनं दास्यामि" ( समर्थसूत्रभाष्ये ददामि-[२-१-१] इति पाठोऽस्ति ) इति। अत्र "नद्यास्तिष्ठति" इत्यत्र च सम्बन्धानुपपत्तेः सामर्थ्यं नास्ति। इष्यते च निघातः। तथा शालीनां युष्मदप्यसामर्थ्याभावः। इष्यते च "ते मया वेकवचनस्य" ( ८। १। २२ ) इति युष्मदादेश इत्यालोच्य वार्त्तिककृतानिघातादिव्यवस्थार्थमारब्धम् "समानवाक्ये निघातयुष्मदस्मदादेशा वक्तव्याः" ( २। १। १ ) इति। एवं चायं दन्त इत्यत्र सत्यपि सामर्थ्ये नास्ति निघातस्य प्रसङ्गो ऽवध्यवधिमतोर्भिन्नवाक्यतयावस्थानात्। अस्तीत्यध्याहारेण ह्ययं दन्त इत्येकं वाक्यम्। हरानेन इति च द्वितीयं वाक्यम्। नद्यास्तिष्ठतीत्यादौ त्ववध्यवधिमतोः पदयोः सामर्थ्याभावेऽप्येकवाक्यव्यवस्थितौ प्रवर्त्तेत एव निघातादय इति नास्त्येषामव्यवस्था। समानवाक्ये निघातादयो वक्तव्या इत्युक्तम् ( २। १। १ )। तत्र वाक्ये विज्ञाते समानवाक्यत्वं ज्ञायत इति प्रसङ्गात्तत्र वार्त्तिककारेणादावेव वाक्यलक्षणमुक्तम्। आख्यातं साव्ययकारकविशेषणं वाक्यम्

"सुप्तिङन्तचयो वाक्यं क्रिया वा कारकान्वित"

इत्यनेन तत्र वा शब्दश्चेदर्थे कारकं च तिङन्तवाच्यं तदति-रिक्तपदवाच्यं वेत्यन्यत्। एकस्य तत्त्ववारणाय सुबन्तचयेत्यादि एतत्समानार्थकमेवाख्यातमित्यादीति स्पष्टमेव। एतदेवैकोद्देश्यकैकविधेयकत्वगर्भमेकवाक्यलक्षणं बोध्यम् ॥ तदुक्तं हरिणा

"साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम्।
क्रियाप्रधानं गुणवदेकार्थं वाक्यमुच्यते" इति ॥

वाक्यम् (भा)

इत्यस्य एकं वाक्यम् इत्यर्थः ॥ अर्थैकत्वादेकं वाक्यं साकाङ्क्षं चेद्विभागे स्याद् (मीमां-सू-२-१-४६) इति जैमिनिसूत्रात्।

---

(वा) एकतिङ् (वा) (२।१।१) इति च। एवं च मीमांसकोक्तेनास्य सर्वत्र समावेशोऽस्ति न चेति विचार्यते। शास्त्र वाक्यकारेण निघातादि-व्यवस्थार्थं या वाक्यलक्षणं परिभाषितं तेन मीमांसकोक्तं वाक्यलक्षणं सकलं न तुल्यलक्षणम्। "साकाङ्क्षावयवम्" (अत्रैव वक्ष्यते) इत्यनेन मीमांसकोक्तं वाक्यलक्षणं सूचितम्। तत्र क्वचिदेते समाविशतः। यथा। "नद्यास्तिष्ठति कूले" "शालीनां ते ओदनं दास्यामि" इति। अयं दन्तो हर अनेन ओदनं पच तव भविष्यति" इत्यादाय समावेशः। मीमांसकवाक्य-लक्षणसमाश्रयनेन अत्र प्राप्नुवन्ति निघातादय एकप्रयोजनत्वात्। न चैषान्ते। तस्माद् वार्त्तिककारीयमेव वाक्यलक्षणं न्यायः।

साकाङ्क्षावयवं भेदे परानाकाङ्क्षशब्दकम्।
कर्मप्रधानं गुणवदेकार्थं वाक्यमिष्यते ॥

भेदे विभागे विशेषजिज्ञासायां यत्साकाङ्क्षावयवम्। अविभागे तु परानाकाङ्क्षाः शब्दाः पदानि यस्मिन् तत्परानाकाङ्क्षशब्दकम्। कर्मप्रधानं

अत एवोद्देश्यानेकत्वे विधेयानेकत्वे च वाक्यभेद इति मीमांसकोक्तो दोषः । यत्तु[1] कैयटेनास्य पारिभाषिकत्वमुक्तं तत्प्रमादात् । यदपि "आख्यातम्" इत्यत्रैकत्वविवक्षां कृत्वा पचति भवतीत्यत्र वाक्यत्ववारणं तेन कृतं तदपि न आख्यातत्वपर्याप्त्यधिकरणमेकमेवेति प्रागुक्तभाष्यरीत्यैकत्वविवक्षायाः फलाभावात् । किं च व्यक्तिपक्षे "न ब्राह्मणं हन्याद्" इत्यादौ "एकं ब्राह्मणमहत्वा कृती स्याद्" इति भाष्योक्तन्यायेनात्रैकत्वविवक्षयानेकस्यैवाख्यातस्य वाक्यत्वं बोधितं स्यादाख्यातान्तरस्येति दोषात् । किं चानयैकत्वविवक्षया

१ "लौकिकवाक्यग्रहणनिमेधार्थं वाक्यं परिभाष्यते" इति अत्रैव कैयटः ॥

क्रिया पदप्रधानमित्यर्थः । तस्यैव प्रधानाभिधेयप्रयुक्तत्वादित्यभिप्रायः गुणवद्विशेषणपदयुक्तम् । **एकार्थम् एकप्रयोजनम् ॥**

सम्बोधनपदं यच्च तत्क्रियाया विशेषकम् ।
व्रजानि देवदत्तेति निघातोऽत्र तथा सति ॥

व्रजानि देवदत्तेत्यत्र देवदत्तेत्येतत्पदं नाव्ययं न च कारकं नापि तद्विशेषणमिति वाक्यलक्षणेनासंगृहीतत्वादाष्टमिक "आमन्त्रितस्य च" ( ८ । १ । १९ ) इति निघातो न प्राप्नोतीति चोद्यम् । "आख्यातं साव्ययं सकारकं सविशेषणम्" ( २ । १ । १ ) इति सामान्येनाभिधानात् सक्रिया विशेषणस्याप्याख्यातस्य वाक्यतेत्यदोषः । तथाहि । अत्र सम्बोध्यमानदेवदत्तविषया व्रजतिक्रिया । असम्बोध्यमानदेवदत्तविषयायाः सम्बोध्यमानयज्ञदत्तविषयाया वा पृथगेवेति विशिष्टैवात्र व्रजतिक्रिया । क्रियायाश्च विशेषणं कदाचित् सामानाधिकरण्येन भवति । यथा सुष्ठु करोति

समकचाख्यातद्वित्वे पचति करोति चेत्यादौ तद्वारणेऽपि विशेषणमादाय तद्द्वित्वे वारणमशक्यं सविशेषणे आख्याते एकत्वसत्त्वात्। अनेन च "ब्रूहिब्रूही"त्यस्यासङ्गृहः। विशेषणानुपादानेन सविशेषणत्वाभावात्। वाक्यत्वफलं तु "मया किञ्चिद्वक्तव्यमिति" प्रश्नोत्तरे ऽत्र "अनन्त्यस्यापि प्रश्नाख्यानं" इत्यनेन वाक्यस्य टेः प्लुतसिद्धिरतः स्वशास्त्रपरिभाषितं लक्षणमाह

## एकतिङिति। (वा)

यत्तु कैयटेन "ब्रूहिब्रूही"ति भाष्योदाहरणं देवदत्तेति शेषपूरणेन व्याख्यातं तन्न। पूर्वलक्षणेनैव सिद्धेः। द्विःप्रयोगस्य भाष्ये

---

शोभनं करोतीति अत्र करोत्यर्थस्य सुष्ठुत्वादिविशेषणविशिष्टस्यैव प्रतीतेः सुष्ठुत्वादीनां करोत्यादिक्रियया समानाधिकरणम्। एवं चासत्त्वभूतायाः क्रियाया विशेषणमित्यसत्त्वप्रधानत्वाल्लिङ्गसर्वनाम्ना नपुंसकेन योगः क्रियायाश्च निर्वर्त्त्यत्वात् कर्मत्वमिति न्यायसिद्धमेव कर्मत्वं नपुंसकताचेति "क्रियाविशेषणानां कर्मत्वं नपुंसकलिङ्गताच" इति नारम्भणीयं वचनम्। वैयधिकरण्येनापि विशेषणं भवति यथा "व्रजानि देवदत्त" इति। अत्र हि देवदत्त व्रजानि इति देवदत्तस्य व्रजनक्रियायाश्च सामानाधिकरण्यं नास्ति। केवलमामन्त्य "देवदत्तं व्रजत्यसौ" इति देवदत्तामन्त्रणविशेषिता केवलाया विलक्षणा व्रजन क्रिया इ"त्याख्यातं स विशेषणम्" (२।१।१) एवेति वाक्यलक्षणसद्भावात् प्रवर्त्तते एव निघातः। देवदत्त व्रजानीत्येवमुदाहरणं न प्रदर्शितम्। "आमन्त्रितं पूर्वमविद्यमानवद्" (८।१।७२) इति न निघातः स्यादिति॥

"यथानेकमपि क्तान्तं तिङन्तस्य विशेषकम्।
तथा तिङन्तं तत्राहुस्तिङन्तस्य विशेषकम्"॥

र्थ्यर्थत्वापत्तेश्च । एतेन पूर्वलक्षणे एकत्वाविवक्षाशङ्कावारणेनैकत्ववि-वक्षाबोधनार्थमिदं लक्षणान्तरमुक्तमित्यपास्ते कैयटोक्तमपास्तम् । यद्यपि "अग्रेऽग्रे" इत्यादौ पूर्वरूपाय द्वित्वे ऽवान्तरपदत्वमप्यस्ति एवं च "ब्रूहि ब्रूही"त्यत्र कथमेकतिङ्त्वं तथाप्येकानुपूर्वीकतिङन्त-समुदायो वाक्यमित्यर्थः । बहुव्रीहिसमासात् । तेन पचतीत्येत-न्मात्रस्य न वाक्यत्वम् । एतल्लक्षणानुसारेणैव "अतिङः" इति प्रत्याख्यातमित्यन्यत् । अत एव भगवता "एकतिङ्वाक्यम्" इत्यत्र च शब्दो वा शब्दो वा नोक्तः भिन्नविषयत्वात् । एकविषयत्वे हि सो ऽवश्यं वक्तव्यः स्यात् । दृश्यते हि भगवतस्तथाशैली तस्मादाद्य-लक्षणं[1] "वाक्यस्य टेः" इत्येतच्छास्त्रलोकसाधारणम् । अत एव पच

---

१ अ ८ । पा २ । सू ८२ ॥

---

इह पूर्वं स्नाति ततः पचति ततो व्रजति इत्यत्र तत इत्येत-दुत्तरस्य व्रजतीत्यस्य निघातो न प्राप्नोति वाक्यभेदात् । इष्यते च । अत्र तिङन्तादुत्तरस्य तु तिङन्तस्य "अतिङ्" इति ( ८ । १ । २८ ) प्रतिषेधान्निघातनिवृत्तिः सिद्धेति नात्र स्नातीत्यस्मादुत्तरस्य पचति शब्दस्य निघातः प्राप्नोतीति 'चोद्यमुद्भावनीयम् । इष्टस्य निघातस्याप्राप्तिरेवा-त्रोद्भावनीया । अत्रोच्यते । अस्त्यत्र वाक्यभेदः व्रजतीत्येतत् प्राधान्येन । एवं क्रियापदम् अत्र स्थितम् अन्यानि क्रियान्तराणि तद्विशेषणान्येव । यथा स्नानभोजनपानैः कृदन्तैर्विशिष्यते , व्रजतिक्रिया तथात्र तिङन्तैः स्नातिप्रभृतिभिः प्रधानं व्रजति क्रियैव विशिष्यत इत्येकैवात्र सविशेषणा व्रजति क्रिया । केवलायास्तस्याः पृथगेवेत्येतत्सविशेषणमेकमेव वाक्यमिति वाक्यभेदाभावान्नास्ति निघातासिद्धिदोषः । एकवाक्यत्वे च तिङन्तादुत्तरस्य तिङन्तस्य "अतिङ्" इति' प्रतिषेधान्निघाताभावः । यथा वक्ष्यति ।

पश्य च देवदत्तेत्यादौ प्लुतो भवत्येव। "एकतिङि"त्येतस्याचोक्तौ तत्रापीदमेवेति भ्रमः स्यात्तदर्थमिदं "समानवाक्ये" इत्येतद्विषयं क्वचित् प्लुतविषयं च "एकतिङि"ति। अत एव "ब्रूहिब्रूही"त्युदाहरणसङ्गतिरत एव॥ "तिङ्ङतिङः" (८।१।२८) इति सूत्रे भाष्ये समानवाक्याधिकाराद्[1] "अतिङ्ग्रहणानर्थक्यमिति" वार्त्तिकव्याख्यावसरे[2] "न च समानवाक्ये द्वे तिङन्ते स्तः" इति उक्तं तेनैव "एकतिङिति" बहुव्रीहिरिति च सूचितं स्पष्टश्चायमर्थोऽत्र भाष्येऽपीत्यनुपदमेव स्फुटीभविष्यतीत्याहुः॥

---

१ उपलब्धभाष्यपुस्तके "अतिङ् वचनमनर्थकं समानवाक्याधिकारात्" इत्यस्ति ( ८ । १ । २८ )॥

२ तिङतिङः ( ८ । १ । २८ ) इति सूत्रव्याख्यावसरे॥

---

"बहुष्वपि तिङन्तेषु साकाङ्क्षेष्वेकवाक्यता। तिङां तिङ्भ्यो निघातस्य पर्युदासस्तथार्थवान्" एवं चातिङ्ग्रहणे स प्रयोजने स्थिते वार्त्तिककारेण यदुक्तमतिङ्ग्रहणमनर्थकं समानवाक्याधिकारादिति तत्राभिप्रायो वाच्यः। एवं वादिनस्तस्य वाक्यभेदोऽत्राभिमत इत्यभिप्राय "आख्यातं साव्ययकारकविशेषणम्" ( २ । १ । १ ) इत्यत्रैकवचनस्य विवक्षितत्वादिति। तथा च **टीकाकारः** प्रदर्शयिष्यति।

"एकतिङ् यस्य वाक्यं तु शास्त्रे नियतलक्षणम्।
तस्यातिङ्ग्रहणे नार्थो वाक्यभेदान्न विद्यत" इति॥

सूत्रकारस्य त्वतिङ् ग्रहणादेकमेवाखण्डं वाक्यम् अर्थैकत्वादाख्यातभेदेऽप्यभिप्रेतमिति गम्यते। तदभिप्रायानुसारेणैव निरूपयिष्यति।

"अनेकाख्यातयोगेऽपि वाक्यं न्यायपथानुगैः।
एकमेवेष्यते कैश्चिद्भिन्नरूपमिव स्थितम्" इति॥

## समानवाक्ये इति । (भा)

समानशब्द एकपर्यायः । एवं विधलक्षणलक्षिते एकवाक्ये इत्यर्थः ॥

## चादिभिर्योग इति । (भा)

"न च वाहेति" (८ । १ । २४) सूत्रे "समानवाक्ये" इत्यस्य सम्बन्धो नेत्यर्थ इति कश्चित्तन्न । यथान्यास एव चादिभिरित्युत्तर-भाष्यासङ्गतेः । किं च तव मते भिन्नवाक्येऽपि निषेधप्रवृत्तिरस्य फलं वाच्यं तत्रादेशप्राप्त्यभावेन निषेधस्यैव वैयर्थ्यात् तस्माद्युष्मदा-द्यादेशप्रतिषेध इत्येवार्थः ॥

---

**टीकाकारः** चामुमेव पक्षं सूत्रकाराभिप्रायसमाश्रयणेन युक्तियुक्तं मन्यमानो बहीरूप आन्तरो वा निर्विभागः शब्दार्थमयो बोधस्वभावः शब्दः स्फोटलक्षणः एव वाक्यमिति क्रमेण व्याजिहीर्षुश्चित्रज्ञानचित्ररूपदृष्टान्त-प्रदर्शनं पूर्वमुपक्रमते । तत्र चित्रबुद्धिदृष्टान्तप्रदर्शनार्थमाह ।

"यथैक एव सर्वार्थप्रत्ययः प्रविभज्यते ।
दृश्यभेदानुकारेण वाक्यार्थानुगमस्तथा" ॥

चित्रज्ञानं सर्वाकारमेकमेव । प्रविभागस्तस्य दृश्यभेदसमाश्रयेण क्रियते । नीलपीताद्यनेकाकारमेव विज्ञानमुपजातमिति । वस्तुस्थित्या तत्र ज्ञाने आकारभेदो नास्ति । तथा वाक्यवाक्यार्थयोः स्वरूपं बोद्धव्यम् । "वाक्यार्थानुगमस्तथा" इत्यनेन हि वाक्यवाक्यार्थयोरखण्डत्वं पानकरसम-यूरान्तरसचित्ररूपनरसिंहगवयचित्रज्ञानवत् समानमेव इत्युच्यते यथा वाक्यं निर्विभागं स्फोटलक्षणं वाचकं तथा वाक्यार्थोऽपि तथाविध एवे-त्यनयोरेकयोगक्षेमत्वमुक्तम् ॥

**किमर्थमिदमिति ।** (भा)

इदं प्रतिषेधवचनम् "आख्यातं साव्ययं"त्यादिवाक्यलक्षणं च किमर्थमिति प्रश्नः। अत एवोत्तरग्रन्थे वाक्यसंज्ञेत्युक्तिः सङ्गच्छते ॥

**वाक्यसंज्ञेति ।** (भा)

एकतिङित्येषा ॥

**तद्वेष्यमिति ।** (भा)

इदमसमर्थे ऽप्राप्तावपूर्वविधायकमिव चादियोगेऽपि तदपवाद-तयाऽपूर्वविधायकं न त्वधिकार इति भाष्येत्तद्भ्रमनिवारणायेदम-

---

"चित्रस्यैकस्वरूपस्य यथा भेद निदर्शनैः ।
नीलादिभिः समाख्यानं क्रियते भिन्नलक्षणैः" ॥

चित्रं हि रूपमवयविगतमनंशमेकमेव । तस्यैवावयवगतैर्यथा नीलादिभिः भेदेन निदर्शनं प्रदर्शनं येषां तैः पृथग्रूपैरेव समाख्यानं क्रियते ॥

"तथैवैकस्य वाक्यस्य निराकाङ्क्षस्य सर्वतः ।
शब्दान्तरैः समाख्यानं साकाङ्क्षैरनुगम्यते" ॥

एकस्य निर्विभागस्य वाक्यस्य सर्वतः परिपूर्णस्य वाक्यान्तरगतैः शब्दान्तरैरन्वाख्यानं तथैव क्रियते इति ॥ न वा पदस्यार्थे प्रयोगादित्यस्मिन् दर्शने यथाखण्डमेव पदं प्रकृतिप्रत्ययादिभिः कल्पितैरेव विभज्यते। तथा वाक्येऽप्यसत्यभूतानामेवाबुधबोधनाय पदानां विभागो दृष्टव्य इति प्रदर्शयितुमाह ।

"यथा पदे विभज्यन्ते प्रकृतिप्रत्ययादयः ।
अपोद्धारस्तथा वाक्ये पदानामुपवर्ण्यते" ॥

पदे हि यथा प्रकृतिप्रत्ययविभागोऽसत्य एव बालव्युत्पादनाय क्रियते। तथा वाक्ये वाक्यार्थप्रतिपादनायापोद्धारः पदानामुपवर्ण्यत इति बोद्ध-

व्याख्यातमित्यर्थः । "न च वाहे"त्यारभ्य सामर्थ्यात्तैवमित्यन्व्याख्यानतात्पर्यम् । एवमेकतिङिति वाक्यलक्षणस्यैवोक्तौ शास्त्रे सर्वत्र वाक्यस्य टेरित्यादावपीदमेव वाक्यलक्षणमिति भ्राम्येत्तं प्रतीदमपि वाक्यलक्षणं शास्त्र आश्रीयत इत्यन्वाख्यानायाद्यं लक्षणं समानवाक्ये इत्यत्र "एकतिङि"त्येव उदाहरणेन चान्यत्राप्यस्याश्रयणं सूचितम् । चादिभिर्योगे इत्याद्यप्युपलक्षणम् । एतच्च

**इदमद्यापूर्वं क्रियते वाक्यसंज्ञा समानवाक्याधिकारश्च तद्वक्तव्यम्** (भा)

---

र्थम् ॥ तत्र वाक्यादपोद्धृतानां पदानां केवलमितरपदसारूप्यमात्रं दृश्यत इति प्रतिपादयितुमाह ।

"वर्णान्तरसरूपश्च वर्णभागेषु दृश्यते ।
पदान्तरसरूपाश्च पदभागा अवस्थिताः" ॥

यथा सन्ध्यक्षरेषु भागा वर्णान्तरसरूपा दृश्यन्ते परमार्थतस्तु अवयवएकत्वान्निर्विभागा एव । एवं वाक्ये पदान्तरसरूपाः पदरूपाः भागा पदभागाः । पदे वा निरंशे ये भागाः प्रकृतिप्रत्ययरूपास्तेऽवस्थिता इति ॥

"भागैरनर्थकैर्युक्ता वृषभोदकयावकाः ।
अन्वयव्यतिरेकौ तु व्यवहारनिबन्धनम्" ॥

न हि वृषभे ऋषभस्योदकयावकयोर्वोदयावशब्दयोरर्थानुगमः कश्चिदस्ति । अपि तु शास्त्रे पदस्य प्रकृतिप्रत्यययोरन्वयव्यतिरेकाभ्यां विना कथमसौ व्युत्पाद्यते । एवं च निरंशमेव वाक्यं वाचकमित्येव युक्तम् ॥

"शब्दस्य न विभागोऽस्ति कुतोऽर्थस्य भविष्यति ।
विभागैः प्रक्रियाभेदमविद्वान् प्रतिपद्यते" ॥

शब्दस्य स्फोटलक्षणस्य विभागो नास्ति । तद्वाच्यस्य प्रतिभारूपस्यार्थस्य कुतो भविष्यति । यथा,विदर्भं यिष्यति ।

इत्यनेन सूचितम्। इदं यद् द्वयं क्रियते तद्द्वैध्यमित्यर्थस्य स्वरसतः प्रतीतेरित्यलम्॥

विकल्पते (भा)

इत्यस्य व्याप्नोतीत्यर्थः। एवं च समानवाक्ये इत्यधिकारपरमेतिङिव्येव चाच वाक्यपदार्थः। आद्यलक्षणेनायं दण्डो हरानेनेत्यस्यापि वाक्यत्वात्तत्र निघातापत्तिः। अयं दण्डो ऽस्तीत्यस्यापि। अनेनेत्येतदर्थपरिच्छेदद्वारा हरतिक्रियाविशेषणत्वात् पचौदनं तव भविष्यतीत्यत्र हेतुहेतुमद्भावेनान्वयाद् भवनक्रियां प्रति तस्य

---

"विच्छेदग्रहणेऽर्थानां प्रतिभान्यैव जायते।
वाक्यार्थ इति तामाहुः" इति।

तस्य पदानुरोधेन पदार्थस्यापि प्रकृतिप्रत्ययानुरोधेन भागकल्पना। मूढस्य विभागेन प्रक्रियाभेदं प्रक्रियाभेदे चार्थभेदमसत्यपि प्रतिपद्यत इति॥

"ब्राह्मणार्थो यथा नास्ति कश्चिद्ब्राह्मणकम्बले।
देवदत्तादयो वाक्ये तथैव स्युरनर्थकाः"॥

यथा ब्राह्मणकम्बलशब्दे ब्राह्मणशब्दस्य न कश्चिदर्थो विद्यते। तथैव देवदत्तगामभ्याज इत्यादौ वाक्ये देवदत्तादीनां पृथगर्थो नास्तीत्यनर्थकान्येव पदानि। अतश्च स्थितमेतत्। पदलक्ष्यं निराकाङ्क्षमेकं पदव्यतिरिक्तं वाक्यं पदार्थव्यतिरिक्तो वाक्यार्थश्च तथैवेति॥ यत्तु नमीमांसकैरुच्यते। यथा पदसङ्घात एवाकाङ्क्षायोग्यतासन्निधानवशाद् परस्परसमन्वितो वाक्यं संसर्गश्च वाक्यार्थ इति तद्दूषयितुमाह।

"सामान्यार्थस्तिरोभूतो न विशेषेऽवतिष्ठते।
उपात्तस्य कुतोऽत्यागो निवृत्तः क्वावतिष्ठताम्"॥

विशेषणत्वादाकाङ्क्षत्वमिति भावः ॥ स चावश्यमिति वाक्यसंज्ञाफलमयं दण्डो हरानेनेत्युक्तम् ॥ समानवाक्याधिकारफलमाह भाष्ये

समर्थनिघाते हीति ॥ (भा)

निघाते इत्युक्त्वा पटवे ते इत्युदाहरणमनुपपन्नमत आह

उपलक्षणमिति ॥ (कै)

कार्यं न स्यादिति । (कै)

"तिष्ठति लभते" इत्यादौ निघातो न स्यात् "ग्रामीणां ते" इत्यादौ युष्मदाद्यादेशश्च न स्यादित्यर्थः ॥ ननु "आख्यातं सवि-

---

इह देवदत्त गामभ्याज शुक्लां दण्डेनेति देवदत्तादीन्येव पदानि वाक्यम् । तत्र देवदत्तपदं तावद् यदि सामान्यमात्रे प्रथमं वर्त्तते तत्तस्य गवादिपदकाले वाचः क्रमवर्त्तित्वात्तिरोधानादसत्त्वमेवेति कुतः पदान्तरश्रवणकाले तदर्थप्रतीतिरसत्त्वादेव च न पदान्तरसन्निधाने तस्य विशेषेऽवस्थानम् । अभ्युपगम्यापि स्वार्थमात्रपदान्तरसन्निधाने विद्यमानत्वं पदस्य न विशेषेऽवस्थानं युज्यत इत्याह । उपात्तस्येति । सामान्यलक्षणस्य सकलपदार्थसाधारणस्यार्थस्य पूर्वमुपात्तस्य वाच्यत्वेन परिग्रहीतस्येदानीं पदान्तरसन्निधाने त्यागः कुतो युज्यते शब्दार्थसम्बन्धस्यानित्यताप्राप्तेः । न च तथा मीमांसकस्याभ्युपगम इति । तदप्यभ्युपगम्योच्यते । निवृत्त इति । स्वार्थान्निवृत्तोऽसौ पदान्तरसन्निधाने शब्दः केदानीमवतिष्ठताम् । शब्दान्तरबोध्येऽर्थे तस्य वाचकभावविरहात् स्थितिः कथं युज्यते ॥ अथोच्यते अर्थप्रतिपत्तिर्दृष्टा देवदत्तेत्यादिकात् समुदायात् सा कथमपह्नूयते तत्राह

"अशब्दो यदि वाक्यार्थः पदार्थोऽपि तथा भवेत् ।
एवं च सति सम्बन्धः शब्दस्यार्थेन हीयते" ।

उक्तनीत्या शब्दा न युज्यन्ते वाचकाः । तदभावादशब्दो वाक्यार्थो

ग्रेषणमिति" वाक्यलक्षणं "नद्यास्तिष्ठति कूले" इत्यादौ नास्तीति कथमत्र निघात इत्यत आह

नद्यां इत्यादीति। (कै)

तथा च सकारकविशेषणमाख्यातमिति लक्षणेन न दोष इति भावः। वस्तुत[1] "एकतिङिति" लक्षणेनात्र न दोष इति बोध्यम्। एवं च तत्प्रकरणे समर्थपरिभाषोपस्थितेः फलाभावेनैकार्थीभावसामर्थ्यग्रहणे न कश्चिद्दोष इति तात्पर्यम् ॥ अर्थभेदेन समासद्वयस्येष्टत्वात्कथमापत्तिरत आह

१ एकतिङ्। वा। २।१।१॥

यदाभ्युपगम्यते। तदयमपरस्ते दोषः। पदार्थोऽपि पदप्रतिपाद्यो न कश्चिदनेकवर्णवर्त्तित्वाद्याच उच्चरितप्रध्वंसित्वाच्च वर्णानामिति पदमप्येकं नास्ति तदभावात् कः पदार्थः स्यात्। इत्यमशब्दोऽवाचको वाक्यार्थ इति वाच्यवाचकभावलक्षणः सम्बन्धः शब्दार्थयोस्त्यक्तः स्यान्मीमांसकेनेत्याह "एवं चेति"।

"विशेषशब्दाः केषाञ्चित् सामान्यप्रतिरूपकाः।
शब्दान्तराभिसम्बन्धाद्व्यज्यन्ते प्रतिपत्तृषु"।

इह देवदत्त गामभ्याजेत्यत्र देवदत्तपदं गां बधान इत्यस्मादिविशिष्टमेव वक्त्रा समुदीरितं भ्रमात् तु सकलसाधारणप्रतिभाति। उत्तरकालं गवादिपदसम्बन्धादिविशिष्टा प्रतिपत्तिरभिव्यज्यते इति तदेव वाक्यम्। सकलविशेषखचितस्य प्रथमतरमेवोपक्रान्तः संसृष्ट एवार्थो वाक्यार्थ इति। यथा वक्ष्यति

"पूर्वैरर्थैरनुगतो यथार्थात्मा परः परः।

राज्ञो येति । (कै)

अर्थविशेषे आपत्तिरिति भावः । इयमथापत्तिः सर्वपक्षेष्विति बोध्यम् ॥ द्वौ समासावित्यर्थात्प्रश्नानुपपत्तिरत आह

द्वयोरिति । (कै)

उक्तार्थे स्त्रीत्वापत्तेरयमेवार्थ इति भावः ॥ ननु सङ्ख्याविवक्षायामपि समुदायस्यैकत्वादस्येव प्रसङ्गो ऽत आह

समुदायस्येति । (कै)

प्रत्ययग्रहणपरिभाषयेत्यर्थः ॥

---

संसर्ग एव प्रक्रान्तस्तथाद्येष्वर्थवस्तुषु" ।

"तेषां तु कृत्स्नो वाक्यार्थः प्रतिभेदं समाप्यते"

उपक्रम एव विवक्षितार्थप्रत्यायनाय विशिष्टपदोदीरणमारभत इत्याद्य एव पदे प्रत्येकं वा सकलस्य वाक्यार्थस्य समाप्तिरवगन्तव्या ॥ यद्येकस्मादेव पदात् सकलवाक्यार्थप्रतीतिः तर्हि इतरपदवैयर्थ्यम् इत्याशङ्क्याह

"यक्तोपव्यञ्जना सिद्धिरर्थस्य प्रतिपत्तृषु"

प्रतिपत्तृषु वाक्यार्थस्य सिद्धिरवगतिर्व्यक्तोपव्यञ्जना । व्यक्ता उदीरिता उपव्यञ्जना अभिव्यञ्जकाः पदविशेषा यस्याः सा तथोक्ता । अभिव्यक्ताभिव्यञ्जका वाक्यार्थावगतिरिति पदान्तराणां वाक्ये नास्त्येव वैयर्थ्यमित्यन्विताभिधानप्रदर्शनम् । दूषणमस्याग्रे तत्र तत्राभिधास्यति । यथा "नियमार्था श्रुतिर्भवेत्" इत्यादि । तथाहि यद्येकेन पदेन सकलवाक्यार्थस्याशेषविशेषखचितस्यावगतिस्तदोत्तरेषां पदानां नियमायानुवादाय वोच्चारणं स्यात् । न चैतद् युक्तमिति वक्ष्यामः । एकस्मादेव पदात् समस्तविशेषखचितस्य वाक्यार्थस्य प्रतीतिरुत्तरेषामानर्थक्यं स्यादेव । न च तस्मादेव

**अमुमेवेति । (कै)**

केचित्तु द्विप्रकारः समासो द्विसमास इति शाकपार्थिवादित्वान्मध्यमपदलोपिसमासे भाष्यतात्पर्यम् । एवं च पाचादित्वं न कल्प्यमित्याहुः ॥ अर्थान्तरे तत्रापीष्टत्वादित्यपि प्राप्नोतीत्यसङ्गतमित्यत आह

**एकस्मिन्निति ॥ (कै)**

**गोः पूर्वमिति । (कै)**

येन क्रमेण सम्बन्धस्तत्क्रमेणैव समासशास्त्रप्रवृत्तिरिति भावः ॥ युगपत्सम्बन्धमङ्गीकृत्यापि भाष्येणैव वेति परिहारान्तरमित्याह

---

वाक्यार्थप्रतीतिर्दृश्यते । व्यक्तोपव्यञ्जना इत्यसमाधानमेव । यतः किमेकस्माद्वाक्यार्थावसायोऽन्येषामुपव्यञ्जकत्वम् । अथ समस्तेभ्य एव तेभ्यः सर्वथोत्तराणि पदानि वाक्यार्थप्रतीतये उपादीयन्त एव इत्यन्विताभिधानमसमञ्जसमेव । एकस्य वा परपदोच्चारणकाले तिरोधानादभिहितान्वयस्याप्यसम्भव इत्यर्थभागे दूषणं शब्दभागसमाश्रयणेन द्वयोरपि पक्षयोर्दूषणं पदानि वाक्ये तान्येव इत्यादि श्लोकद्वयेनाभिधास्यति ॥

"वाक्ये त्वर्थान्तरगतेः सादृश्ये परिकल्पने ।
केषाञ्चिद् रूढिशब्दत्वं शास्त्र एवानुगम्यते" ॥

वृत्तिवाक्ययोः सादृश्यपरिकल्पने केषाञ्चिच्छब्दानां वाक्ये विग्रहरूपेऽर्थान्तरप्रतीतेः रूढिशब्दत्वमुच्यते यथा तैलपायिकेति । अत्र तैलं पिबतीति वाक्यवेलायामर्थप्रादुर्भावः । वृत्त्यवस्थायां तैलपायिकेति जात्यन्तरयुक्तार्थस्य कस्य चित् प्रतीतिः । न च तस्य तैलपानक्रिया लक्ष्यत इति रूढिरूपतास्य उच्यते । केषाञ्चित्तु वृत्तिवाक्ययोरर्थस्य सादृश्यात् यौगिकत्वम् । यथा राजपुरुष इति । परिकल्पन इत्यनेन सर्वमेतदवयवविभागादिकं

सत्यपीति ॥ (कै)

सापेक्षमुपसर्जनमसमर्थमित्यङ्गीकृत्य परिहारश्चेत् पुनरुक्तमित्यत आह

एतदुक्तमिति ॥ (कै)

महत्कष्टं श्रित इत्यत्रेति । (कै)

राजगवाश्वपुरुषा इत्यत्र चेत्यपि बोध्यम् ॥ न च "येन विधिः" इत्यत्र परमगार्ग्यायण इत्यादौ परमगार्ग्येति समासैकदेशगार्ग्य-

---

१ अ१ । पा१ । सू७२ ॥

---

शास्त्रसमय एव कल्पनामात्रम् । परमार्थतस्तु व्यवहारकाले निर्विभागमेवोपलभ्यत इति प्रतिपाद्यते । एतदेव "शास्त्र एवानुगम्यते" इत्यनेन व्यक्तीकृतम् ॥

"उपादायापि ये हेयास्तानुपायान् प्रचक्षते" ।

शास्त्रमुपायः शब्दपरिज्ञाने । ज्ञातेषु च तेषु प्रयोजनसम्पत्तेरनुपयोग इति तस्य परित्यागः ॥

"उपायानां च नियमो नावश्यमवतिष्ठते ।

अर्थं कथञ्चित्पुरुषः कश्चित् सम्प्रतिपद्यते" ॥

कश्चिदाचार्यः पाणिनिविरचितेन लक्षणशास्त्रेण शब्दानधिगच्छति कश्चिदन्येनेति न नियमः । एतदेव स्पष्टीकृतमर्थं "कथञ्चिद्" इत्यादिना ॥ तस्मात् संसृष्टस्य विभक्तस्य वार्थविशेषस्य वाक्यमेकमनंशमेव प्रतीतिनिबन्धनमिति पदपदार्थप्रविभागकल्पनमसमञ्जसमेवेति प्रतिपादयितुमाह

"सोऽयमित्यभिसम्बन्धो बुद्ध्या प्रक्रम्यते यदा ।

वाक्यार्थस्य तदेकोऽपि वर्णः प्रत्यायकः क्वचित्" ॥

शब्दात् प्रागुक्तिर्भाष्योक्ता ऽसङ्गता स्यात् गार्ग्यस्य परमसापेक्षत्वा-दिति वाच्यम् । तत्रैकोपस्थितिविषयत्वेनेतरथाकाङ्क्षारूपसापेक्षत्वा-भावात् ।

'सविशेषणानां वृत्तिर्न । (भा)

इत्यत्र सविशेषणत्वमप्याकाङ्क्षालभ्यविशेषणवत्त्वमेवेति न दोषः ॥

विनियोगः । (कै)

शास्त्रान्तरे उपस्थितिः ॥

---

१ "सविशेषणानां वृत्तिर्न वृत्तस्य वा विशेषणं न प्रयुज्यते इति वक्त-व्यम्" अत्रैव भाष्ये ।

---

सोऽयमित्यभिसम्बन्धोऽध्यासरूपो वाक्यार्थस्य वाक्येन सह यदा वक्त्रा प्रक्रम्यते । तदेकोऽपि वर्णो वाक्यार्थस्य वाचको भवत्येव । किं पुनरनेक-मशेषविशेषाभिधानविवक्षयोदीरितं पदमिति । एवमध्यासवशाद् वाक्य-वाक्यार्थयोरभिन्नस्वरूपत्वादाक्यार्थाभिव्यक्तौ वाक्यमपि स्फोटात्मकमभि-व्यक्तमेवेत्युक्तं वाक्यार्थस्य "तदेकोऽपि" इत्यादि ॥ इदानीमभिहितान्वय-पक्षसमाश्रयणेन सङ्घातपक्षस्य प्रदर्शनायाह

"केवलेन पदेनार्थो यावानेवाभिधीयते ।
वाक्यस्थं तावतोऽर्थस्य तदाहुरभिधायकम् ॥
सम्बन्धे सति यत्त्वन्यदाधिक्यमुपजायते ।
वाक्यार्थमेव तं प्राहुरनेकपदसंश्रयम्" ॥

केवलं पदं यस्यैवार्थस्य वाचकम् । वाक्यस्थमपि तमेवाभिदधाति ततः समुदाये पदानां परस्परान्वये पदार्थवशाद्यदाधिक्यं संसर्गः स वाक्यार्थः । उक्तं च । यदत्राधिक्यं वाक्यार्थः स इति । अनेकपदसंश्रयमित्यनेन सङ्घातो

नित्यस्तुगिति। (कै)

भवति पदग्रहणे ऽत्रापि समर्थपरिभाषोपस्थितौ प्रकृते तुग्न स्यादिति भावः ॥

इत्याहुरिति। (कै)

अत्राऽपिबीजं त्वेकार्थीभावस्यैवात्र सामर्थ्यस्य ग्रहणमिति पक्षे कुमारी छादयतीत्यत्रासमासे न स्यादिति ॥

अन्ये त्विति। (कै)

तुग्विधावन्तग्रहणं साक्षात्पदोद्देश्यकविधावेव समर्थपरिभाषा-

---

वाक्यमिति दर्शितम् ॥ वाक्यार्थस्य जातिवत् प्रत्येकपरिसमाप्तिः केषाञ्चि-न्मते संख्यावत् समुदायपरिसमाप्तिरिति पक्षद्वयं दर्शयितुमाह।

"स त्वनेकपदस्थोऽपि प्रतिभेदं समाप्यते।
जातिवत् समुदायेऽपि संख्यावत् कथ्यते परैः" ॥

अथात्र सङ्घातपक्ष एव प्रकारान्तरेणान्विताभिधानप्रदर्शनात् पदार्थ एव वाक्यार्थ इति प्रक्रमितुमाह।

"सर्वभेदानुगुण्यं तु सामान्यमपरे विदुः।
तदर्थान्तरसंसर्गाद् भजते भेदरूपताम्" ॥

सर्वेषां भेदानामनुगुणं यस्मिन् तत्तथाविधं सामान्यं संसर्गलक्षण-माकाङ्क्षायोग्यतासन्निधानवशेन पदान्तरसंसर्गान्नियतस्वरूपं वाक्यार्थः ॥ सङ्घातपक्षे संसर्गो वाक्यार्थ इत्युक्तं स च पूर्वत्र जातिवत् संख्यावद् वा पदार्थव्यतिरेकेण वाक्यार्थत्वेन कल्पित इदानीं पदार्थव्यतिरेकेणासत्त्वैवै-कान्तानुमेयो न समुदायो वाच्यः किं तर्हि सर्वभेदानुगुण्यसामान्यरूपो-विशेषान्तरसंनिधानादिशेषविश्रान्तः पदार्थ एव वाक्यार्थः इति दर्शयितु-माह।

प्रवृत्तिरित्यर्थबोधनद्वारा प्रकृते तत्प्रवृत्तिबाधनार्थमिति भावः। एवमन्यत्रापि पदान्तरग्रहणेषूह्यम् ॥

कर्मसाधन इति। (कै)

भावसाधने तु समासाद्यसङ्ग्रहः स्यात् तद्विधिभिः पदकर्मक-विधानाभावादित्याङः ॥ नन्वसमर्थानां समासनिवृत्तिरेव तत्फल-मत आह

तत्रेति। (कै)

---

"कार्यानुमेयः सम्बन्धो रूपं तस्य न दृश्यते।
असत्त्वभूतमत्यन्तमतस्तं प्रति जानते" ॥

कार्येण पदार्थानां विशेषविश्रान्तिलक्षणेनानुमीयत इति कार्यानु-मेयः। इदं तदिति तु रूपं तस्य न दृश्यते। अत एवासत्त्वभूतं पदार्थव्यति-रेकेण सत्त्वं नास्ति यस्य तमेवं भूतमाचार्याः प्रतिजानते ॥

"नियतं साधने साध्यं क्रिया नियतसाधना।
स सन्निधानमात्रेण नियमः सन् प्रकाशते" ॥

साध्यं साधनं च परस्परं नियतमेव केवलसाकाङ्क्षावशादितरपदार्थ-संनिधाने सति नियमः सन्नेव प्रकाशत इत्यच्छिन्नपदान्तराणि पदान्येव वाक्यम्। पदार्थाश्च वाक्यार्थ इत्यव्यतिरिक्तः संघातपक्षोऽयम् ॥

"गुणभावेन साकाङ्क्षं तत्र नाम प्रवर्त्तते।
साध्यत्वेन निमित्तानि क्रियापदमपेक्षते" ॥

नाम कारकपदं क्रियायां गुणभूतं सत्पदान्तरमाकाङ्क्षति। क्रियापदं तु प्रधानभावेनावस्थितं कारकपदान्यपेक्षते इति ॥ क्रमो वाक्यमित्युद्दिष्टं क्रमपक्षं व्याख्यातुमाह

"सन्त एव विशेषा ये पदार्थेषु व्यवस्थिताः।

न हि समासनिष्ठसामर्थ्यबोधकेन स निवर्त्तयितुं शक्य इति भावः ॥ ननु तस्य साधुत्वनिवृत्तिरेव तत्फलमत आह

लक्षणान्तरेणेति । (कै)

न च तल्लक्षणैः प्राप्तसाधुत्वस्य समासादेर्लौकिकसिद्धसामर्थ्याभाववतो ऽसाधुत्वमनेन बोध्यत इति न दोष इति वाच्यम् । प्रकारान्तरेणैव सार्थक्यसम्भवेन ज्ञातस्यासाधुत्वसम्पादनापेक्षया समासाद्यप्राप्त्युपपादनस्यैवोचितत्वादिति भावः ॥

उपचारादिति । (कै)

---

ते क्रमादनुगम्यन्ते न वाक्यमभिधायकम्" ॥

पदार्थेषु देवदत्तादिपदवाच्येषु गोकर्मिकायामभ्याजक्रियायां देवदत्तपदार्थस्य कर्त्तृत्वं गोपदार्थस्य देवदत्तकर्त्तृकायां कर्मत्वमित्यादयो विशेषाः सन्त एव पदेभ्यः क्रमेण प्रतितेभ्योऽवगम्यन्त इति क्रम एव वाक्यं न वाक्यमभिधायकमित्यनेन क्रमव्यतिरेकेण शब्दात्मकं न वाक्यमभिधायकमस्तीत्युच्यते ॥

"क्रमो हि धर्मःकालस्य तेन वाक्यं न विद्यते"

"ये च सम्भविनो भेदाः पदार्थेष्वविभाविताः ।

ते सन्निधाने व्यज्यन्ते न तु वर्णेष्वयं क्रमः" ॥

पदार्थेषु ये भेदाः पूर्वोक्ताः सन्ति ते केवलेष्वविभाविताः सन्तः क्रमवत् पदार्थान्तरसंनिधानेऽभिव्यज्यन्त इति दर्शनात् क्रम एव वाक्यमिति पदक्रमो वाक्यमुक्तम् । वर्णक्रमस्तु न तथा इत्युक्तम् न तु वर्णेष्वयं क्रम इति ॥

"वर्णानां च पदानां च क्रममात्रनिवेशिनी ।

पदाख्या वाक्यसंज्ञा च" ॥

लोके गौणानामपि साधुत्वदर्शनादिति भावः॥

## गुणेष्विति।

ननु पदोद्देशेन विधीयमानस्य समर्थेषु नियमनार्थं इदं शास्त्रमिति "ग्रहं संमार्ष्टी"तिवदुद्देश्यगततया सङ्ख्याया अविवक्षैव स्यादिति चेन्न। यूपांश्छिनत्ति अग्नीनादधीतेति वदुद्देश्यत्वेऽपि एकवचनेनैव प्रयोगोपपत्तौ बहुवचनकरणेन बहुत्वसङ्ख्याविवक्षेति तात्पर्यम्। मूले तु सङ्ख्याविवक्षाभावे दृष्टान्त उक्त इति ध्येयम्[1] "एवमपि द्व्येकयोर्न प्राप्नोती" त्युत्तरं भाष्ये शब्दसंस्कारार्थमेव बहुत्वविवक्षया कृतं बहुवचनं तच्च कार्यानन्वयितयाऽविवक्षितमिति समाधानं त्रुटितम्। अन्यथा

---

१ अत्रैव भाष्ये॥

---

वर्णक्रमः पदमुच्यतां नाम। वाक्यसंज्ञापदक्रम एव यस्मात् तथार्थप्रतीति दर्शनात्॥ क्रम एव शब्दो न वर्णपदे इत्युक्तमुपसंहर्तुमाह

"शब्दत्वं नेष्यते तयोः"।

तयोर्वर्णपदयोः शब्दत्वं श्रोत्रेन्द्रियग्राह्यत्वेऽपि वाचकत्वलक्षणं नेष्यते अपि तु क्रमस्यैव॥ पदक्रमस्य शब्दत्वं वाक्यार्थेनार्थवत्तायाम्। वाक्यार्थभागैस्तु पदानामर्थवत्त्वम्। एवं वर्णक्रमस्यापि शब्दत्वं पदार्थेनार्थवतः तदर्थवतां वर्णानां किं नाङ्गीक्रियत इत्याह।

"समानेऽपि तु शब्दत्वे दृष्टः संप्रत्ययः पदात्।
प्रतिवर्णं त्वसौ नास्ति पदस्यार्थमतो विदुः"॥

इदानीं सङ्घातः क्रमस्तथैकोऽनवयवश्च शब्दः स्फोटात्मेति व्याख्यातानि त्रीणि वाक्यलक्षणानि श्लोकत्रयेणोपसंहरति। तत्र सङ्घातपक्षमुपसंहर्तुं तावदाह।

"एकशेषनिर्देशाद्वा" (वा)

इति वा शब्दासङ्गतिः ॥

षट्प्रभृतीनामिति । (कै)

[1]कपिञ्जलाधिकरणन्यायानाश्रयणात् ॥

आश्रितसंख्येति । (कै)

अन्यथैकवचनान्तानामेव षणां पदानामेकशेषः कृतः स्यादिति भावः । एवं चैकमेवेदमेकत्वद्वित्वबहुत्वविशिष्टानर्थानुपस्थापयतीति तात्पर्यम् ॥ ननु पदविधिरिति समासः । तच्च विशेषानवगमात्पदात्पदे इति असङ्गतमत आह

सर्वमिति । (कै)

---

१ पूर्वमीमांसा—अ११ । पा १ । सू ५१ ॥

---

"यथा सावयवा वर्णा विना वाच्येन केन चित् ।
अर्थवन्तः समुदिता वाक्यमप्येवमिष्यते" ॥

वर्णानां समुदायार्थवत्त्वे केवलानामनर्थकत्वं यथा तथा पदानां केवलानामर्थासम्भवात्, तत् समुदाय एव वाक्यमिति ॥ व्याख्यातक्रमपक्षमप्युपसंहर्तुमाह ।

"अनर्थकान्युपायत्वात् पदार्थेनार्थवन्ति वा ।
क्रमेणोच्चरितान्याहुर्वाक्यार्थं भिन्नलक्षणम्" ॥

पदानि केवलान्यनर्थकानि केषां चिन्मते स्वार्थेनार्थवन्ति क्रमेणोच्चारितानि वाक्यम् । तथाविधाद्वाक्याद्वाक्यार्थं भिन्नलक्षणं व्यतिरिक्तस्वरूपं संसर्गात्मकं विशिष्टमेव वा सं सकलान्निराकाङ्क्षविशेषावस्थितपदार्थस्वरूपमेव व्यतिरिक्तमवगम्यत इति ॥

अन्यथा राजपुरुषादिवत्सञ्ज्ञाविशेषस्याप्यनवगतिः स्यादिति पूर्वोक्तमप्यनुपपन्नं स्यादिति पदविधिरिति त्यक्ता पदानामित्यपि वाचनिकमिति भावः ॥[१] "तिङ्ङतिङ" इति निघातादिप्रकरणेऽपि समर्थपरिभाषोपतिष्ठत इति मतेनेदम्। तद्धितविधौ प्रातिपदिकादित्यस्योपलक्षणमेतत्सप्तमीसमासफलं[२] "तद्धितार्थोत्तरपदेति" समर्थविधयस्येति। सूत्रे आत्यभिप्रायेणैकवचनं सूत्रे समर्थ इत्यस्य भिन्नपदत्वात् [३]शाकपार्थिवादिवदुत्तरपदलोपासम्भवादाह

---

१ अ८। पा१। सू२८। २ अ२। पा१। सू५१॥
३ वर्णोवर्णेन (२।१।६९) एतत् सूत्रस्यवार्त्तिकम्॥

---

"नित्यत्वे समुदायानां जातेर्वा परिकल्पने।
एकस्यैवार्थतामाहुर्वाक्यस्याव्यभिचारिणीम्" ॥

तदेवं सङ्घातादीनि षोढा वाक्यलक्षणानि व्याख्यातानि आख्यातं वाक्यम् इति व्याख्यास्यति। एषां च मध्यादिति सूत्रकाराभिप्रायमनुसृत्याखण्डपक्ष एव वाक्यवाक्यार्थयोरभ्युपगम्यत इति प्रदर्शितम्। इदानीं भाष्यकाराभिप्रायेणापि स एवाभ्युपगन्तव्य इत्युपक्रम्यते। तथा च भाष्यं "न लक्षणेन पदकारा अनुवर्त्याः पदकारैर्नाम लक्षणमनुवर्त्यम्"। तथा। "यथा लक्षणमप्रयुक्ते" इति। अत्र यदि पदानां सत्यता स्यात् तदा तेषां स्वत एव सिद्धत्वात् पदानि कुर्वन्तीति पदकारा इत्येतदसङ्गतं स्यात्। लक्षणेन च तदननुवर्त्तनं वस्तुसत्त्वात्तेषां पदकारैर्नाम लक्षणमनुवर्त्यमित्यप्यसङ्गतम्। तथाऽप्रयुक्तपदविषये पदानां सत्यत्वात् तत्प्रविभागोऽयं न सिद्ध इति। यथा लक्षणं लक्षणानुसारेण प्रदकरणमप्रयुक्तमित्येतदनुप-

**गतार्थेति ॥** (कै)

**सम्बन्धेति ।** (कै)

*विधिशब्दस्य कर्मसाधनत्वाद् शेषषष्ठ्यन्तेन समास इति भावः ॥*

**अन्तर्भवतीति ।** (कै)

सर्वस्यापि विभक्त्यर्थस्य सम्बन्धत्वानपायादित्यर्थः ॥ नन्वेवमपि लक्षणामनङ्गीकृत्य स्पष्टप्रतिपत्तये षष्ठ्येवोचितेत्यतो भाष्ये उक्तम् ।

**याद्दच्छिकीति ॥** (भा)

तदभिप्रायमाह

---

पन्नमेव । आह चैवं भाष्यकारः । तस्मान्मन्यामहे पदान्यसत्यानि एकमभिन्नस्वभावकं वाक्यम् । तदबुधबोधनाय पदविभागः कल्पित इति ॥

"अभेदपूर्वका भेदाः कल्पिता वाक्यवादिभिः" ।

यत एवं सूत्रकारस्य भाष्यकारस्य चाखण्डपक्षोऽभिमतः । तस्माद् वाक्यवादिभिः स्फोटवादिभिः अभेदकल्पनमाश्रितम् । काल्पनिकः पदवादो अभ्युपगत इत्यर्थः ॥

"भेदपूर्वानभेदांस्तु मन्यन्ते पददर्शिनः" ।

भेदप्रतिभासपूर्वकानभेदान् स्वाभिमतान् पददर्शिनः पदमेव सत्यं ये मन्यन्ते तेऽप्येकमखण्डं वाक्यं नाम काल्पनिकमाहुः ॥

"विज्ञातार्थपदं यत्र तदर्थे प्रतिपादिते ।
पिकादि यदविज्ञातं तत् किमित्यनुयुज्यते" ॥

वनात् पिक आनीयतामित्युक्ते वनादानीयतामिति पदद्वयं विज्ञातार्थं तदर्थे चावगते कः पिक इति कस्य चिन्नागरिकस्य प्रश्नो नोपपद्यते किल । वनादित्याद्यखण्डमेव निरस्तपदविभागं वाक्यमनंशमेव वाचकं वैयाकरणस्य मतम् । अतः किम् पिकपदार्थः पृथगविज्ञातः कश्चिदस्ति । तद-

भेदेति । (कै)

लक्षणया ऽभेदविवक्षा अन्यथा भेदविवक्षेत्यर्थः । सर्वविभक्तीनां यौगपद्येन प्रयोगासम्भवादिति भावः ॥

प्रतिपन्नाः । (कै)

सर्वशब्दवाच्यत्वेन गृहीतवन्तः । अत्र द्रव्यशब्देन प्रवृत्तिनिमित्तार्थ उच्यते । अत एव रूपादिशब्दसंग्रहः ॥

आकृतिमिति । (कै)

आकृतिशब्देन प्रवृत्तिनिमित्तमुच्यते ॥ नन्वेवं भाष्ये कथमपि गुण इत्युक्तमत आह

गुणशब्देनेति ॥ (कै)

---

विज्ञातविशेषपदार्थानुयोगो नोपपद्यते । अस्ति च तदर्थे कस्य चित् सन्देह इति पृथगेवार्थवन्ति पदानि विज्ञातानि वाक्यम् इत्येव वक्तुं युक्तम् इति ।

"वाक्यं तदपि मन्यन्ते यत्पदं चरितक्रियम्" ।

सन्ति वाक्येषु वाक्यैकदेशाः प्रसिद्धादिना वाक्यार्थप्रत्यायका इति तदप्येकपदं वाक्यमेव । यस्मात् तत् चरितक्रियमिति चरिता गर्भीकृता आख्यातक्रिया यस्य तद्गर्भीकृतक्रियापदं नामपदं वाक्यं प्रयुज्यते चरितक्रियापदादस्मादर्थावगतिर्निराकाङ्क्षोपजायमाना दृश्यत इति पदमात्रस्यैवात्र वाक्यत्वम् ॥

"आख्यातशब्दे नियतं साधनं यत्र गम्यते ।
तदप्येकं समासार्थं वाक्यमित्यभिधीयते" ॥

यथा वर्षतीत्युक्ते देवो जलमिति कर्तृकर्माक्षेपात् परिपूर्णार्थत्वे

संसर्गिभेदक इति । (कै)

संसर्गिण इतरभेदानुमापकमित्यर्थः ॥

सव्यापारमिति । (कै)

स्वविषयग्रहिग्रहेण स्वाश्रयोपस्थापकत्वरूपव्यापारवदित्यर्थः । स्वावच्छिन्नत्वेन सकलव्यक्त्युपस्थापकत्वव्यापारवदित्यर्थो वा ॥

इत्येताभ्यामिति । (कै)

पदद्वयेन शुद्धद्रव्यविशेषस्योपस्थितिरित्यर्थः ॥

भेदाधिष्ठानस्येति । (कै)

अन्यथा घटोघट इत्यपि स्यादिति भावः ॥ पदार्थानां परस्परं विशेष्यविशेषणभावरूपसंसर्ग एव हि सामर्थ्यमिति तात्पर्यम् ॥

---

वर्षति देवो जलमिति यथा वाक्यम् एवं तदप्येकं पदं समासार्थं परिपूर्णार्थं वाक्यमेवाभिधीयते । इत्यलम् । एतत्सर्वं वाक्यपदीये विस्तरेण प्रपञ्चितम् ॥

यावता क्रियाया उपकारः प्रकाश्यते तावत् वक्तव्यत्वात् वाक्यम् इत्युच्यते । तेनाभिधीयते "अर्थैकत्वात् एकं वाक्यम्" (२ । १ । ४६ । मीमांसा)। तस्माद् एकार्थः पदसमूहो वाक्यम् ॥

"अन्यतोऽवगतेऽर्थे हि लोके वाक्यं प्रवर्त्तते ।
तत्रैकार्थत्वविज्ञानात् सुखबोधैकवाक्यता" ॥

लौकिकानां हि वाक्यानां प्रमाणान्तरेणार्थस्तदेकत्वं चावधार्य्यते । तत्र प्रसिद्धेन हेतुना शक्यमेकवाक्यत्वमवगन्तुम् । वैदिकानां पुनरप्यन्यप्रमाणागम्यत्वात् प्रागवाक्यत्वात् तदेकत्वाज्ञानादज्ञातेऽर्थे तदेकत्वसिद्धिर्न्नालोच्यतेतल्लक्षणानुपपत्तेरर्थापत्त्या विपरीतं लक्षणं द्रष्टव्यम् । वाक्यैकत्वा-

**एकव्यक्तिगतमिति । (कै)**

तत्तद्विशेषणवैशिष्ट्येन भेदात्तयोर्विशेष्यविशेषणभावलक्षणसंसर्गोऽस्तीति भावः । विशेषणत्वादिसम्बन्धनियतमेवेत्यत्र तु न मानमिति तात्पर्यम् ॥

**उपकारेति । (कै)**

*विशेष्यविशेषणभावेनान्वयरूपोपकारेत्यर्थः । अन्यथा देवदत्ता-*श्वयोरपि कर्मधारयप्रयोजकं सामर्थ्यं स्यादिति भावः ॥

**भेदकार्यम् । (कै)**

परस्परं विशेषणविशेष्यभावरूपम् ॥

**द्रव्यस्येति । (कै)**

---

दर्थैकत्वमिति । यथैव हि धर्मिणा वाक्येन धर्म्यन्तरमर्थः प्रतिपाद्यते । तथैकवाक्यधर्मैणैकत्वेनार्थैकत्वम् । आह च ।

"नित्यवाक्याधिगम्यत्वाद्यया वाक्यं प्रवर्त्तते ।
वेदार्थस्तदसिद्धेस्त न वाक्यस्यार्थवश्यता" ॥

अत्राभिधीयते । वेदव्याख्याने प्रवृत्तस्य जैमिनेः कः प्रसङ्गो लौकिकवाक्यलक्षणाभिधाने । वैदिकवाक्यलक्षणस्यापि भेदलक्षणे कः प्रस्तावः । किमर्थं प्रमाणलक्षण एव नोक्तम् । एकशब्दस्य न वक्तव्योऽर्थैकत्वाद्वाक्यमित्येतावतैव सिद्धत्वात् ( "अर्थैकत्वादेकं वाक्यम्" इत्यत्र ) । कथं मन्त्राधिकारे तदसम्बद्धोऽर्थोऽभिधीयते । भाष्यकृतश्च ( शबरस्वामी ) प्रश्लिष्टपठितेषु यजुःषु इत्युपन्यासः प्रमाणानामपि विनाकारणेन अतिक्रान्तः । किं च ।

एवं च स्मर्यमाणगुणकृतभेदमादाय विशेषणविशेष्यभाव इत्य-भिमानः ॥ नन्वभ्यन्तरत्वेभिधीयमानोऽपि स्यादत आह

**अनभिधीयेति । (कै)**

सन्निधिना स्मृतिमात्रेण ॥

**शब्देनेति । (कै)**

इत्यभावादभ्यन्तरस्यापि तस्य विशेष्यविशेषणभावेन प्रतीति-प्रयोजकता नेत्यर्थः । अयं भावः । द्रव्येण नित्यसम्बन्धिनो बहवो गुणाः नहि सर्वेषां सर्वदा स्मरणमनुभूयते इति शब्दजन्यो-पस्थितिं विना भेदकत्वं वक्तुमशक्यमिति भावः ॥

**यद्यवाच्यस्येति । (कै)**

---

"यजुर्भेदस्य मुक्तैतद्वाक्यैकत्वस्य लक्षणम् ।
मन्त्रब्राह्मणलोकेषु वक्तव्यं क्वोपयुज्यते" ॥

ऋक्सामयोस्तावत् परिमाणं प्रयोगसमर्थं प्रसिद्धमिति न कश्चि-द्वाक्यलक्षणादेकवाक्यतालक्षणाद्वोपकारो भवति । तथा ब्राह्मणे अग्नि-होत्रादिवाक्यैः साध्यसाधनेति कर्तव्यतावत्यां भावनायां नियुक्तेषु पुरुषेषु एकानेकवाक्यज्ञानं क्वोपयुज्यते ॥ नन्वयमुपयोग एकवाक्यतालक्षणाद्धो वाक्यभेदं परिहरिष्यति । नायमुपयोगः । कुतः ।

"वाक्यभेदो ह्यसामर्थ्यं शब्दावृत्त्यादिदोषतः ।
एकनानात्वविज्ञाननिरपेक्षोऽवधार्यते" ॥

पदतदेकदेशतत्समूहावृत्तिप्रसङ्गात्मकस्तद्विभागलक्षणो वा वाक्यैक-त्वनानात्वज्ञाननिरपेक्षैरेव दोषत्वेनावधार्यते । विभागलक्षणे गम्यमान-सम्बन्धपरित्यागोऽनेकापूर्वकल्पना च दोषः इतरथाऽऽवृत्तेरवेदत्वादप्रामाण्यम्

गुणवादेऽपि द्रव्यस्यावाच्यत्वेन तद्द्वारकं सामर्थ्यं वक्तुं न शक्यमिति भावः ॥

अथावाच्यस्येति । (कै)

एवं रीत्या द्रव्यवादिनः प्रवृत्तिनिमित्तमपि उपकारकं भविष्यतीति भावः ॥ द्रव्यवादे गुणस्यावाच्यत्वं नाम शक्यविषयत्वम् । शक्यतावच्छेदके शक्यभावात् गुणवादे द्रव्यमप्येवमिति तात्पर्यम् ।

भाष्ये

प्रतिजानीते इति (भा)

समानाधिकरणयोः समासमिति शेषः ॥

न प्रतिजानीत इति । (भा)

---

इति नैकवाक्यलक्षणेनार्थः । पौरुषेयवाक्ये तु लक्षणनिरपेक्षस्य लोकस्य व्यवहारसिद्धेरत्यन्तानौपयिकत्वम् । यदि चार्थैकत्वेन वाक्यैकत्वमवधार्यते वाक्यस्यार्थप्रत्यायनार्थत्वात् तत् स्वरूपैकत्वज्ञानोत्तर कालभाविना किं वाक्यैकत्वज्ञानेन । वक्तॄणां च परप्रत्यायनार्थो वाक्यप्रयोगा इति नात्मार्थं लक्षणज्ञानापेक्षा । श्रोतॄणां पुनरत्यन्तानवगतेऽर्थे प्रवर्तमानं पुरुषवाक्यमपि न वेदवाक्याद् भिद्यते । अवगतार्थं त्वनुवादत्वादनादृत्यमेवेति नैकानेकज्ञानमपेक्ष्यते । किमर्थं च वैदिकानां लक्षणं नोक्तम् । यदि त्वर्थापत्त्योक्तमेवेति तन्न । श्रुत्यातल्लक्षणमभिधायार्थापत्त्या लौकिकवाक्यसिद्धिराश्रयितव्या । न चार्थापत्तिः सम्भवति । न ह्येतल्लौकिकवाक्यलक्षणज्ञानमौत्सृष्टेन वैदिकवाक्यलक्षणेन विना नोपपद्यते । न चैतस्यापि वाक्यलक्षणतासिद्धा । वाक्यैकत्ववशेनार्थैकत्वलक्षणार्थापत्त्युपन्यासात् । अपि च कदाचिद् वैदिकानामप्येतल्लक्षणम् । अत्यन्तविप्रकृष्टं वा किञ्चिद्वेदितव्याश्रितत्वान्न नियो-

प्रतिजानीत एवेत्यर्थः ॥ इतर एवमाशयमजानानः प्रतिद्वन्द्वी-
मात्रात्मार्थसिद्धिरित्याह

एवमनयोरिति ॥ (भा)

असामर्थ्यात्समासाभावनिश्चय एवेत्याशयेनाह

क्व चेति ॥ (कै)

समानाधिकरणेनेति ॥ (भा)

विशेषणं विशेष्येण समानाधिकरणेनेतीत्यर्थः । सर्वसाम्ये भेद-
निबन्धनविशेषणविशेष्यभावः ॥ सामानाधिकरण्यं च सर्वथा दुरुप-
पादमित्यत आह

अभिधेयं यस्येति । (कै)

वाच्यपर्यायोऽधिकरणशब्द इत्यर्थः ॥

---

गतोऽर्थापत्तिः । न च परिसङ्ख्या । सामान्यविशेषभेदानुपादानात् । यदि
हि सामान्येनेदं लक्षणं क्वचिदभिधाय पुनः केवलपौरुषेय सम्बन्धमुच्यते
ततः परिसङ्ख्यावशेन वैदिकानामिदं तावन्न भवतीत्येतावन्मात्रं गम्येत ।
न तु लक्षणविशेषोऽनेकोपप्लवात् । एवमपि हि विपर्ययकल्पनं सम्भवति ।
अर्थानेकत्वाद् एकं वाक्यं निराकाङ्क्षं चेद्विभागे स्यादिति । अथवा अर्थैक-
त्वान्नानावाक्यत्वम् इति । तस्मादकल्पनेयम् । किं च ।

"कथं चार्थानपेक्षत्वे वाक्यैकत्वं प्रसिद्ध्यति ।
न हि वर्णस्वरूपेण वाक्यमेतन्निरूप्यते" ॥

वाक्यैकत्वाच्चार्थैकत्वेऽवधार्यमाणेऽवश्यमर्थनिरपेक्षं वाक्यैकत्वमवगन्त-
व्यम् । न च तस्यावधित्वेन किञ्चित् पश्यामः वर्णगतं वर्णसङ्ख्यं वा ॥
तथा हि

**वाच्यं चेति। (कै)**

*प्रवृत्तिनिमित्ताश्रयभूतमित्यर्थः। विशेषणत्वमिति। परिच्छेदकत्वमित्यर्थः।* [1]"विशेषणं विशेष्येणे"ति सूत्रे परिच्छेद्यपरिच्छेदकभाव एव विशेषणविशेष्यभाव इत्यभिमानः॥ "एवं जातीयकानामिति" भाष्यस्य पर्यायाणामित्यर्थस्तदाह

**युगपदिति॥ (कै)**

**सामर्थ्याभावाच्चेति। (कै)**

भेदनिबन्धनविशेषणविशेष्यभावरूपस्य तन्मूलैकार्थीभावरूपस्य च सामर्थ्यस्याभावादित्यर्थः। विषयतारूपविशेषणत्वाद्येव तत्र निविष्टमिति भावः॥ भाष्ये

**प्रत्ययेन वोत्पत्तव्यमिति। (भा)**

पर्यायाणां सहयोगे आकाङ्क्षाविरहात् बोधेन न भवितव्यमित्यर्थः। प्रत्ययशब्दो ज्ञानपर इति बोध्यम्॥

---

१ अ २। पा १। सू ५७॥

---

"अज्ञातार्थेषु वर्णेषु बहुवाक्यैकवर्त्तिषु।
न कदाचिन्मतिर्दृष्टा वाक्येयत्तावधारणे॥
तस्मात् पदेषु यावत्सु श्रूयमाणेषु दृश्यते।
विस्पष्टमैक्यमर्थस्य तावतामेकवाक्यता"॥

लोकमन्त्रब्राह्मणेष्वभ्यभिचार्य्येतदेव वाक्यलक्षणमिति स्थितम्। यत्तु न प्राग्वाक्यादर्थतदेकत्वावधारणमस्तीति। अत्र ब्रूमः

"पदार्थैः पदविज्ञातैर्वाक्यार्थः प्रतिपाद्यते।
लोकसिद्धैर्न तत्रास्ति वाक्यैकत्वनिमित्तता"॥

शिष्टेति। (कै)

तथा चाविगीतं साधुत्वं भाष्यस्थतर्हिशब्देन सूचितम् ॥

उपाधीति। (कै)

कर्मरूपार्थसाम्येऽपि शक्यत्वार्हत्वरूपोपाधिभेदादित्यर्थः। भृत्य-भरणीयवदेव वीरपुरुषादिरप्युदाहरणमिति भावः ॥

यदि सति भेदे इति। (कै)

अयं पूर्वपक्षोऽधिकरणशब्दस्य पदार्थपरत्वमाश्रित्य तत्पक्षेऽपि-शब्दो नान्यपदार्थः। किं तदर्थ एव तथा च समानमधिकरणं पदार्थो यस्याश्रयत्वेनाधेयत्वेन वा ससमानाधिकरणस्तत्तद्वाचके लक्षणेत्याशयेन अत एव न वक्ष्यमाणतृतीयसमाधानासङ्गतिरि-त्याहुः ॥

---

यदि हि वाक्यं पदवद् वाचकं भवेत्। ततस्तदेकत्वानेकत्वानुवर्त्तिता वाक्यार्थस्याभ्युपगम्येत कदाचित्। यदा तु पृथग्भूतैरेव पदैरितरेतरमिर-पेक्षैः स्वेषु पदार्थेषूक्तेषु तत्संसर्गादेव पदव्यापारानपेक्षो वाक्यार्थप्रत्ययो भवति। तद्वशेन च तावन्तिपदानि एकं वाक्यमित्यवधार्य्यते। न तदा वाक्यतदेकत्वयोर्व्यापारं पश्यामः। तस्मादविरोधः ॥

"भावनैव च वाक्यार्थः स्वकारकविशेषिता।
तस्याश्च ज्ञायते नित्यं भेदः शब्दान्तरादिभिः" ॥

यस्मिन् पदसमूहे शब्दान्तरादिभिर्न भावनान्तरं प्रतिपद्यते तस्यै-कवाक्यत्वं भावनान्तरापेक्षया तु नानात्वम्। तच्चैतदुभयमप्यन्यत एव ज्ञायत इति अनिमित्तं वाक्यैकत्वमर्थैकत्वस्य। तस्माद्यथा भाष्यमेव व्याख्यातव्यम्। भेदलक्षणे मन्त्रप्रस्तावे च तद्भेदस्तावद् ऋग्यजुः सामात्मकोऽभिहितस्त-

अनभिधीयमानमपीति। (कै)

आक्षिप्तमित्यर्थः ॥ प्रक्रियाविषय इत्यर्थो वा ॥

समासः प्राप्नोतीति। (कै)

कर्मधारय इत्यर्थः ॥ भाष्ये

कश्चिच्चविशेष इति। (भा)

दर्शनीयत्वं माढ्यत्वं चेत्यर्थः ॥

सत्तान्यत्वे इति। (कै)

पदार्थवाचिभावशब्देन न कर्मधारयः किं त्वार्थवाचकेन भावशब्देन षष्ठीतत्पुरुष इति भावः ॥ भाष्ये

न क्वचिदिति। (भा)

तयोः केवलान्वयित्वादिति भावः ॥

व्यभिचाराभावादिति। (कै)

एवं समानाधिकरणपदव्यावर्त्यालाभ इति भावः ॥

नासौ समानत्वेनेति। (कै)

समानव्यवहारनिमित्तत्वेनेत्यर्थः ॥

---

इवान्तरभेदाकाङ्क्षायामष्टकसामानामध्येऽसिद्धे भेदे लक्षणं न क्रियते। यजुषां तु प्रश्लिष्टपठितत्वान्न लक्षणादिना भेदज्ञानमित्यारभ्यते। ननु भिन्नप्रतीकविनियोगात् तद्भेदः सेत्स्यतीति। न तावत् सर्वेषामेव ब्राह्मणे विनियोगोऽस्ति। न चोत्तरादिः पूर्वान्तलक्षणमित्येतद्वेदवचनम्। न्यायेन तु सूत्रकारैरेवात्मीयब्राह्मणविनियोगेष्वेतदुक्तमिति न्यायस्य लक्षण-

समानत्वमिति। (कै)

समानव्यवहारनिमित्तत्वमभ्युपगम्येत्यर्थः॥

अभिधेयवाचीति। (कै)

अभिधेयत्ववद्वाच्याभिधेयशब्देन पदार्थमात्रमुच्यते॥

द्रव्यवाचीति। (कै)

समानशब्दस्यैकत्ववद्वाची सूत्रे

अभिधेयस्य त्विति। (कै)

वाच्यस्य त्वित्यर्थः। तच्च धर्मो वा द्रव्यं वेत्यन्यत्। तस्य च सत्तया समानत्वमस्त्येव तत्पक्षे समानशब्दो नैकपर्याय इति भावः॥ पुनः पूर्वपक्षयति प्रकारान्तरेण। भाष्ये

एवमपीदमिति॥ (कै)

कर्मादेर्धात्वभिहितत्वाभावादाह

धातुसहचरित इति। (कै)

[1]"लक्रमोरिति" सूत्रस्थभाष्यरीत्या तिङां कर्मादिद्योतकत्वे तु यथाश्रुतमेव भाष्यं सम्यक् एवं च "वीरः पचनि"त्यादौ वक्ष्यमा-

१ अ ७। पा २। सू ३६॥

मुच्यते। तत्रावयवव्युत्पत्तिवलेनाह यावतेज्यते इति। सर्वमन्वायामनेन यजेतेति हि प्रथमं प्रकरणाम्नानानुमितवाक्यविनियोगो भवति। ततः साद्याद्यागसम्बन्धासम्भवात् तदुपकारिप्रकाशनेन तैरिष्टं भवतीति कथ्यते। केनोच्यते।

तद्दोषशङ्कैव नेति बोध्यम्॥ ननु वीरपुरुषादन्यत्र कथमित्यत आह

वचनेति। (कै)

समानाधिकरणसमासप्रकरणे एतद्वचनाप्रवृत्तिर्ज्ञाप्यत इत्यर्थः॥ ननु "वीरः पचति"त्यादौ धात्वविहिते चारितार्थ्यात्कथं ज्ञापकत्वमत आह

वीर इति। (कै)

बहुलग्रहणस्याप्यनभिधानमूलकत्वादनभिधानादित्येव सारम्॥ वार्त्तिकपाठे एकस्यैव वाक्यस्य दर्शनेन कथमुपसंख्याने तन्निषेधे च तात्पर्यमत आह

भाष्यकारस्त्विति॥ (कै)

वाक्यभेदेनेति। (कै)

आवृत्त्येत्यर्थः॥ आख्यातपदस्य तिङन्ते प्रसिद्धेराह

आख्यातेति। (कै)

क्रियाबोधकत्वसाम्येन गौण्या वृत्त्येत्यर्थः॥

---

"यावता पदसङ्घेन स्मर्यते यागसाधनम्।
तावद्यजुश्च वाक्यञ्च वक्तृत्वत्वनिरूप्यते"।

वचनार्हं हि वाक्यम्। कार्य्ये समर्थं च तदर्हं भवति न न्यूनमधिकं वा तावतैव चेष्यते। तत्तु कीदृशम् इति "एकार्थं साकाङ्क्षावयवं च" इति कल्प्यम्। ईदृशं चेद् एकं यजुर्यत् ततोऽधिकं तद् वाक्यान्तरं यजु-

असामर्थ्यं मन्यते इति । (कै)

साक्षादन्वयाभावेनेत्यर्थः ॥ भाष्ये

सुराजातिराजेति । (भा)

दुष्कुलं आकडार इत्यादेरप्युपलक्षणम् एतेन "प्रादय" इति बहुवचनं ज्ञापकमित्यपास्तम् ॥

[1]वृत्तिसूत्रेति । (भा)

वार्त्तिकेष्वपि सूत्रलक्षणत्वेनार्षत्वेन च सूत्रत्वमभ्युपगम्य पाणिनिसूत्राणां वृत्तिसद्भावाद्वार्त्तिकानां तदभावाच्च तयोर्वैषम्यबोधनायेदम् । वृत्तियुक्तं सूत्रं वृत्तिसूत्रमित्यर्थः । क्वचित्तु वृत्तिः सूत्रेति पाठः । तदा सूत्रप्रामाण्याद्वृत्तिरिति न ब्रूमः किं तर्हि वार्त्तिकप्रामाण्यादितीत्यर्थः । यथा [2]"अनेकमन्यपदार्थे" इति शास्त्रबलाद्बहुव्रीहावन्यपदार्थान्तर्भावस्तथा "प्रकृते कार्ये" इति वार्त्तिकबलात्तदर्थान्तर्भाव इति भावः ॥

१ उपलब्धभाष्यपुस्तके "वृत्तिः सूत्र" इति पाठोऽस्ति ॥

२ अ २ । पा २ । सू २४ ॥

रन्तरं च इत्युक्तं भवति । एवं सर्वत्र पुरस्तात् परस्ताद्वा एकार्थत्वसमर्थपदपरिग्रहणादसमर्थविमोकेन च भिन्नानि यजूंषि कल्प्यन्ते । तेनैकवाक्यलक्षणोक्तौ चार्थाद् यजुर्भेदवाक्यभेदलक्षणयोः सिद्धिरित्येतस्माच्चेत् कारणादित्याह किमुदाहरणमिति । अभिधेयवाचिनमर्थशब्दं गृहीत्वा लक्षणद्वयसमावेशासम्भावनाय पृच्छति । तथा हि

स्मृतिशास्त्रत्वादिति। (कै)

अन्यशास्त्रीयवार्त्तिकवत् नास्मदीयवार्त्तिकं व्याख्यानमेवेति भावः ॥ न च "वचने"त्यस्यापि वार्त्तिकत्वाद्वार्त्तिककृता स्वीयवचसः कथं प्रमाणत्वेनाश्रयणमिति भाष्ये वार्त्तिकेत्याद्यनुपपन्नमिति वाच्यम्। अन्योऽयं वार्त्तिककारो वार्त्तिककारान्तरीयतद्वचनं प्रमाणान्तरत्वेनाश्रयतीत्यदोषात् ॥ नन्वन्यशब्दस्यार्थोऽन्येन कथं वक्तव्यम् इति निवोच्यत इत्यसङ्गतमत आह

संप्रतीयते इति। (कै)

एवं च निवोच्यत इत्यस्य क्रियाविषयनिदर्शनाचिख्यत इत्यर्थ इति भावः ॥ तदाह

निःशब्देनेति ॥ (कै)

ननु शब्दाभावे कथं प्रतीतिरत आह

आक्षिप्तत्वादिति ॥ (कै)

भाष्ये

तस्यार्थ इति। (भा)

कान्तशब्दस्यार्थ इत्यर्थः ॥ तत्रान्यशब्दार्थस्यान्येन शब्दा बोधना-

"एकार्थत्वं पदस्य स्यात् साकाङ्क्षावयवं न तत्।
साकाङ्क्षावयवः सङ्घस्तस्यैकोऽर्थो न विद्यते"।

पदस्य व्याकृतिर्नामैकोऽर्थो भवेन्न तु तदवयवानां वर्णानां प्रकृतिप्रत्यययोर्वा विभागे साकाङ्क्षत्वमर्थप्रत्ययेन शब्दाभावात् समूहावयवास्तु पदानि विभागे परस्परमाकाङ्क्षन्ति। तन्त्रेषामेकार्थत्वं प्रतिपदमर्थभेदात्

संभवात् उच्यत इत्यस्याचिप्यत इत्यर्थ इति भावः। आचिप्तस्यापि शाब्दे ऽन्वयबोधे भानं भवतीति भावः॥ तदसहमान आह

अथ वा सोऽर्थ इति॥ (कै)

तदाह

नित्य एवेति॥ (कै)

तत्र संशयविषयं दर्शयति

यत्रेति॥ (कै)

विवक्षितत्वादिति। (भा)

सुबन्तत्वस्य प्रत्येकमेव समाप्तेरित्यपि बोध्यम्॥ अनेकस्योपसर्जनत्वे पूर्वनिपातो न फलमित्यत आह।

चित्रगुरिति॥ (कै)

सुप्सुपेत्यस्येति। (कै)

तृतीयान्तनिवृत्तौ तात्पर्यं प्रथमान्तं तु वर्त्तत एवेति बोध्यम्॥

तेन बहूनामिति। (कै)

भाष्ये त्वनेकग्रहणाभावं मत्वा ह्रत्वा चिन्तया प्रवृत्तमिति बोध्यम्॥ भाष्ये

---

समूहस्य च पृथगर्थान्तराप्रसिद्धेः। अतो लक्ष्याभावादलक्षणमेतदिति। प्रयोजनवाक्याभिप्रायेण "देवस्य त्वा" इत्युदाहृतम्। नन्विति परः स्वाभिप्रायं प्रकटयति। यदा पदार्थव्यतिरिक्तः कश्चिदेको निर्भागो वाक्यार्थो नास्ति तदा तत्तत्पदार्थधर्मावेव सामीप्यवशात् तेषां गम्यमानौ भेदसंसर्गौ स्याताम्। अत आह। "तथाप्येकार्थता न स्यात्" कथम्

**द्वन्द्वे ऽनेकग्रहणमित्युपलक्षणं बहुव्रीहेरपि॥** (भा)

**बहुषु द्वित्वाभावादिति।** (भा)

बहुषु बुद्धिस्थेषु तदवयवयोर्द्वित्वाभावादित्यर्थः॥ त्रिपुत्रे द्विपुत्रत्वव्यवहाराभावात्। एवं च

**"द्वयोः समास"** (भा)

इति तदुक्तिरसङ्गतेति भावः॥ ननु मास्तु तयोर्द्वित्वमन्यास-विधाने यौ वस्तुतो द्वित्ववन्तौ तयोः समास इति तदर्थः। एवमेव शते पञ्चाशदित्युक्तिः। अन्यासविधाने ये पञ्चाशत्त्ववन्तस्ते शते सन्तीति तदर्थ इति शङ्कते।

**नन्विति॥** (कै)

समाधत्ते।

**यद्यपीति॥** कै

**[1]एकैकस्य चत्वार इति।** (कै)

अनेकस्य चार्थवृत्तित्वे समासविधानात् एकैकस्य चतुरवयवः

१ "एकैकस्य शब्दस्य चत्वार" इति उपलब्धकैयटेऽस्ति॥

"भेदो नाम पदार्थानामवच्छेदः परस्परम्।
स च प्रतिपदार्थत्वान्नैकत्वं प्रतिपद्यते"॥

व्यक्तिपदार्थपक्षे सर्वव्यक्तीनां गवादिपदेनैवोपात्तत्वाद्विषयशब्दैः शुक्ला-दिभिः कृष्णादिभ्यवच्छेदमात्रं वक्तव्यम्। तत् संसर्गपदार्थान्तर्गतत्वान्न वाक्यार्थो भवति इति तदुपसर्जनत्वेषां भेदो गृह्यते। स च यथा शुक्ला-

समूहोऽर्थः । तत्र द्वयोः सत्त्वेऽपि तयोरितरद्वयसापेक्षतया ऽसामर्थ्यान्न तयोः समास इति भावः । बहुषु द्वित्वाभावात्तदन्तर्गतद्वयोस्तत्समनियतसामर्थ्याभावादिति भाष्यार्थः ॥

द्वयोर्द्वयोः सहेति । (कै)

अन्येषामबुद्धिस्थत्वान्न तयोः सापेक्षतेति भावः ॥

सर्वान्त इति । (कै)

तत्समासीयसर्वान्त इत्यर्थः ॥ तत्र चोत्तरपदशब्दस्य रूढेरिति भावः ॥

नियमार्थत्वादिति (कै)

तृज्ग्रहणेनैव सिद्धे नप्त्रादिग्रहणमुणादिव्युत्पन्नानां चेन्नप्त्रादीनामेवेति नियमार्थमिति भावः । अयमनौणादिकतृन्तृजन्यतरान्त इति भाष्याशयः । इदं ण्वुल्तृचौ(३।१।१३३)तृन्निति (३।२।१३५) सूत्रस्थभाष्यविरुद्धम् ॥ भाष्ये

इति प्राप्नोतीत्यस्य (भा)

इत्येव प्राप्नोतीत्यर्थः ॥

समासान्तेन भाव्यमिति ।

तथा च तस्येष्टतया तत्प्रतिषेधारम्भोऽनर्थक इति भावः ॥

---

शब्देन गोशब्दस्य कृष्णादिभ्यो भिद्यमानत्वाद् भवति । एवं शुक्लशब्दस्यापि गोशब्देनाश्वादिभ्यो निवर्त्तितस्य भवति । व्यवच्छेद्यमानत्वाच्च नास्त्येकत्वे प्रमाणम् । भेदसामान्यग्रहणे वा सर्ववाक्यार्थैकत्वप्रसङ्गः । यदा तु भेदवन्तः पदार्था एव वाक्यार्थस्तदा सिद्धमेव नानात्वम् । तथा ।

सुष्ठु सूक्ष्मा इति। (कै)

भाष्यप्रामाण्याज्जटशब्दो ऽदन्तः पुंल्लिङ्गो धनपर्यायो जटापर्यायो वा संज्ञाच्छन्दसोरभावेऽपि सूक्ष्मशब्दस्योत्तरपदपरत्वाभावे बहुलग्रहणादुभयत्रापि ह्रस्व इति कश्चित्। तन्न। ल्वेच (६।३।६४) इत्यस्य वैयर्थ्यापत्तेः। एतेन पत्नयो गर्भिण्य इत्यादावनुत्तरपदेऽपि बहुलग्रहणादनेन ह्रस्व इति हरदत्तोक्तमपास्तम्। [१]अस्वार्थेति सूत्रेऽवश्यं छन्दसि ह्रस्वत्वं वक्तव्यं पत्नयो गर्भिण्य इत्यर्थमिति भाष्यमुपादाय व्यत्ययो बहुलमिति दीर्घस्य ह्रस्व इति कैयटोक्तेश्च। यद्यपि पूर्वपूर्वकर्मधारयं कृत्वा बहुव्रीहिः क्रियते तथापि सुशब्दस्वरो न सिध्यतीत्यर्थः। यद्यपि सूक्ष्मा जटाः सूक्ष्मजटाः तादृशाश्च ते केशाश्च सूक्ष्मजटकेशाः सुष्ठुसूक्ष्मजटकेशा यस्येति बहुव्रीहौ द्विपदसमासेऽपि सिध्यति स्वरश्च तथापि अत्र पक्षे सौष्ठवस्य शब्दमर्यादया सूक्ष्मविशेषणता न लभ्येतेति अनेकपद एव स एष्टव्यः नञ्सुभ्यामित्युत्तरपदान्तोदात्तत्वापत्त्या स्वरासिद्धेश्च। इष्यते तु पूर्वपदप्रकृतिस्वरेण सुशब्दस्वर इति दिक्॥ भाष्ये

अस्तुतर्हीति। (भा)

१ अ ७। पा ३। सू १०७॥

---

"संसर्गोऽपि पदार्थानामन्योऽन्येनानुरञ्जनम्।
एकैकत्र तदप्यस्तीत्येकत्वं न प्रतीयते"।

आकृतिपदार्थपक्षे शुक्लत्वगोत्वयोः स्वरूपेणाभिहितयोः सन्निधानादितरेतरानुरञ्जनमर्थसिद्धमेवं वाक्यार्थः। स च गोत्वे शुक्लत्वसंसर्गः शुक्लत्वे गोत्वसंसर्गः सामस्त्येनैकैकत्राप्युपसंहारादुपलभ्यते इति नाना। यद्यपि

द्वन्द्वादिविधायकयोरनेकग्रहणसामर्थ्यात् । सुबित्येव वर्त्तते सुपेति निवृत्तमिति भावः ॥

अनेकपदप्रसङ्ग इति । (भा)

अनेकपदसमासत्वप्रयुक्तदोषप्रसङ्ग इत्यर्थः ॥

समासान्त इति । (भा)

[१]गोरतद्धितेति टच् ॥

पञ्चगवमिति । (कै)

टचः समासभक्तत्वेनाकारान्तोत्तरपदत्वाभावात् स्त्रीत्वाभावः ॥

तदेतराश्रय्येति (कै)

पूर्वं कर्मधारयगर्भस्तु न कृतः इतरशब्दस्य पूर्वनिपातापत्तेः । एवं च भाष्ये पुंवद्भाव इति दोषोपलक्षणमितराशब्दस्य पूर्वनिपातापत्तिरपि दोषो बोध्यः । शब्यापेक्षया द्वयोर्विशेषणत्वेऽपि प्रथमानिर्दिष्टत्वेऽपि इतरा इत्यस्य सर्वनामत्वादिति वदन्ति । क्वचित् बहुव्रीहौ कृते तत्पुरुषः क्वचित्तत्पुरुषे बहुव्रीहिरिति विषयविवेकं दर्शयति ।

क्वचिदिति ॥ (कै)

---

१ अ ५ । पा ४ । सू ९२ ॥

---

च कथञ्चिद् द्विपदे स एव उभयत्रापि. संसर्ग इत्येकत्वं गम्येत । तथापि बहुपदे येन येन प्रदेशेन पदद्वयं संबध्यते तेन तेन संसर्गरूपेणोपलक्ष्येऽनेकत्वम् । किञ्च ।

"अप्राधान्यात् पदार्थानां धर्मावेतावुभावपि ।
धर्मिभेदेन भिद्येते न त्वेकत्वमुपाश्रितम्" ॥

आकडारीयत्वात् बहुव्रीहितत्पुरुषयोः कथं समावेश इत्यत आह ।

**भिन्नेति । (कै)**

एका समुदायस्था परावयवस्थेति भिन्नविषयत्वमिति भावः ॥

भाष्ये

**अन्तरङ्गविप्रतिषेधमिति । (भा)**

अन्तरङ्गत्वलक्षणविरोधमित्यर्थः ॥ ननु द्वयोरपि संभवे कथं विरोधोऽत आह

**अनुदात्तं पदमिति ॥ (पा)**

नन्वन्तोदात्तं प्रति बहुव्रीहिस्वरस्यापवादत्वात् कथमन्तरङ्गत्वं तत्राह

**कक्षान्तरेति । (कै)**

बहुव्रीह्यनन्तरभाविलात्तत्पुरुषस्य तत्स्वरस्य समासान्तरप्राप्तत्वरूपं कक्षान्तरप्राप्तत्वम् । एवं च बहुव्रीहिगतसमासत्वप्रयुक्तान्तोदात्तत्वस्यैवापवादोऽयम् । न तु पश्चात्प्राप्ततत्पुरुषप्रयुक्तस्येत्यर्थः । अपवादोऽपि यद्यन्यत्रेतिन्यायादिति भावः ॥

**अन्तरङ्गत्वमिति । (कै)**

समासद्वये कृते तदनन्तरं स्वरद्वयप्रवृत्तिरित्यभिमानः । वास्त-

---

यावद्धि प्रयोजनैकत्वं नाश्रीयते तावत् स्वतन्त्राः पदार्थाः नैकत्वमापादयितुं शक्यन्ते इति पृथगेव भेदसंसर्गावनुभवन्ति । तस्मादपि नाना । यद्यपि चास्माकमाकृतिपदार्थकत्वान्नैव भेदो वाक्यार्थत्वेनाभिप्रेतस्तथापि पूर्वपक्षवादिना विकल्पमात्रेणोपन्यस्तः । सिद्धान्ताभिप्रायविवरणं प्रयो-

वसमाधानं तु प्रतिशिष्टस्वरबलीयस्त्वमेव तदेव शब्दान्तरेण पठितं निमित्तस्वरेति ॥

अनेकान्तिकमिति । (कै)

पूर्वमेव बहुव्रीहिस्वरप्रवृत्त्या युगपत्प्राप्त्यभावेनान्तरङ्गपरिभाषाविषयाभाव इत्यत्र तात्पर्यमस्य बोध्यम् ॥

स्वाङ्गशिटामिति । (कै)

इदमव्युत्पत्तिपक्षे बोध्यम् ॥

द्वयोस्तत्पुरुषे इति । (कै)

तद्धितार्थोत्तरपदेत्यनेनेत्यर्थः ॥ आचार्येण पठिते कथं पाठाभाव उक्त इत्यतस्तात्पर्यमाह

सर्वथेति । (कै)

विग्रहद्वयेऽपीत्यर्थः ॥ भाष्ये

एवं किलनामेति । (भा)

तत्पुरुषपूर्वपदकबहुव्रीहौ तिकारस्योदात्तत्वं प्राप्तं तद्बाधेनैकारोदात्तत्वाय सशब्दः पठ्यतेत्यर्थः । तच्च न युक्तम् । विग्रहान्तरकरणात्तत्पुरुषपूर्वपदकबहुव्रीहावपि 'तद्धितार्थेति तत्पुरुषसमाससंज्ञायां द्विगुत्वमित्याशयेन भाष्ये आह

१ अ २ । पा १ । सू ५१ ॥

---

अनवाचित्वादर्थशब्दस्योपपन्नम् । एवं सत्येक एव कश्चित् पदार्थः प्रधानभूतस्तद्विशेषणत्वेनेतरोपादानमिति सर्वेषां च तद्भेदात् तत्संसर्गत्वाच्चैको भेदः संसर्गो वेत्यपि शक्यं वदितुम् । तस्मात् कर्मसमवायित्वेन दृष्टार्थत्वात् अशेषसविनादिपदार्थविशिष्टनिर्वापप्रकाशनं समस्तस्य पदसमूहस्यैकं

इगन्ते द्विगाविति। (भा)

पूर्वपदप्रकृतिस्वरविधायकमेतत्। अवयवस्य तत्पुरुषसंज्ञा वाच-निकत्वनेन कृतेति मत्वाह'

अस्य तर्हीत्यादि॥ (भा)

भाष्ये

नेदमिति। (भा)

न चावयवतत्पुरुषत्वादिति एतत्॥

बहुलवचनादिति। (भा)

क्वचिदन्यदेवेत्यर्थकादित्यर्थः॥ अनेन चैतत्प्रपञ्चभूतानां पूर्व-निपातनियमार्थानां च बहुलग्रहणेन निवृत्तिरिति सूच्यते। अन्यथा तेषां तत्त्वं भज्येत एतेन महत्कष्टं श्रित इति प्रतीकस्यत्र-याणां तत्पुरुषे 'सन्महदिति द्वयोः समासपरः कैयटः परास्तः। न च त्रयाणामेकार्थीभावेऽपि द्वयोर्निष्कृष्यैकार्थीभावाभावात्कथं विशेषणमित्यस्य प्राप्तिः। "तद्धितार्थेति" तु सामर्थ्यात् प्रवर्त्तत इति वाच्यम्। निष्कृष्यैकार्थीभाव एव शास्त्रप्रवृत्तिरित्यर्थे माना-भावादिति दिक्॥ •

१ अ २। पा १। सू ६१॥

---

प्रयोजनमिति सिद्धमुदाहरणम्। परन्तु निर्वापप्राधान्यमज्ञात्वा पृच्छति। नन्वत्र देवस्येति। सिद्धान्तवाद्याह यदि निर्वपामीत्यनुषक्तस्तत एवं स च अनुषक्तस्तद्गुणभावेन भवेत्। न चास्य गुणभावः प्रयोजनवत्त्वात्। सवित्रादीनां चाकर्मसमवायादित्वेकार्थत्वम्। अथ किमर्थमुभयं सूत्रित-मिति। येषां संहतानामेकप्रयोजनत्वं तेषां तदग्राक्तेर्थत्वानामेकान्तेनैव

[1]विशेषणलक्षणं विनेति। (कै)

तत्र "तद्धितार्थे"त्यादि विशेषलक्षणाभावोऽत्रापि तुल्य इत्यत आह।

अधिकग्रहणं चेति॥ (कै)

अधिकषष्टिवर्षेऽपीति। (कै)

अधिकशतवर्षेऽपि डचः प्राप्त्या स्वरे विशेष इति भावः॥

संख्येयपरेण बहुव्रीहौ दोषः स्यादेवेत्यत आह।

अधीति॥ (कै)

षष्टिशब्दस्याजहल्लिङ्गत्वमेकवचनान्तत्वं च मत्वाह

अधिकाषष्टिर्वर्षाण्यस्येति॥ (भा)

अधिकाषष्टिर्वर्षाणामिति। (भा)

यद्यपि अधिकाषष्टिर्येषां वर्षाणामिति विग्रहे स्थितेऽपि [2]संख्येयेति सूत्रे पूर्वेण बहुव्रीहिः प्राप्नोतीति वक्तुं शक्यते तथापि संख्येये संख्याया अवृत्त्या डचोऽप्राप्त्या प्रयोजनाभाव इति वक्तुं शक्यमित्याशयेन भाष्ये "यथा तर्हि स योगः प्रत्याख्यायते तथा पूर्वेणेत्युक्तम्" यदा तुदेति क्वचित् पाठः। स योगः [3]संख्याव्ययेति-योगः॥

---

१ उपलभ्यकैयटे "विशेषणलक्षणेन विना" इति पाठोऽस्ति।

२ अ २। पा २। सू २५॥ ३ अ ४। पा १। सू २६॥

---

साकाङ्क्षत्वं भवति। इत्यवाच्यं तत्। अथवा विभज्यमानसाकाङ्क्षत्वं संहतैकप्रयोजनत्वेन विना न भवति। प्रत्येककार्येषु निरपेक्षप्रवृत्तिसिद्धेः। अतः साकाङ्क्षविभागेनैव इतराक्षेपात् तस्मात्तमेवाभिधातव्यमिति प्रत्युदा-

**उजपीति । (कै)**

तत्प्रत्याख्याने संख्येये वर्त्तमानबहुव्रीहेरित्यर्थात्तस्यादेव डजिति भावः ॥ तर्हि वर्षोत्तरपदत्वं कथं तत्राह

**बहुव्रीहिगर्भं इति । (कै)**

एवं चाधिकषष्ठवर्ष इति प्रयोगो दुर्वार एवाधिकषष्टिर्वर्षाण्यस्येति विग्रहे वाक्याङ्गीकारेऽपीति भावः ॥ तत्खण्डयति भाष्ये

**प्रत्याख्याते तस्मिन्निति ॥ (भा)**

**अधिका षष्टिर्वर्षाण्यस्येति । (भा)**

अत्रावान्तरबहुव्रीहिस्तु न संख्येयरूपान्यपदार्थाभावादिति भावः ॥ नन्वधिकाषष्टिर्येषां वर्षाणामित्यस्यापि विद्यमानत्वात्कथं दोषपरिहार इत्यत आह

**अव्यविकेति ॥ (कै)**

यथाश्रुतग्राहिणश्चोद्यमित्याह

**अव्यविकन्यायममत्वाहेति । (कै)**

भाष्ये "अधिकषष्ठवर्षास्म मुष्यामह" इति पाठः । ईदृशानिष्टरूपादित्यर्थः । क्वचित्तु "अधिकषष्टिवर्षास्म मुष्यामहे" इति पाठः । तदाऽधिकषष्टिवर्षविषयादनिष्टरूपास्म मुष्यामह इति अर्थः ॥

---

हरणं दर्शयति । उच्यते इति । पुरोडाशविभागप्रकाशनमेकं प्रयोजनं निरपेक्षायां वृत्तम् । निर्वापे दत्तोत्तरापि विभागनानात्वपरिचोदना संहृत्य विशेषणानुपादानात् पुनः पुनः प्रयुक्तस्यानुषङ्गदोषाभावादुपन्यस्यते । तथो-

अधिका षष्टिर्वर्षाणामस्येति । (भा)

अधिका षष्टिर्येषां वर्षाणां तानि अस्येत्यर्थः ॥ "आदृशभ्यः संख्याः संख्येये" इति नियमात्तद्विषये सूत्रस्यावश्यकत्वात्कथं प्रत्याख्यानं तत्राह

वृत्तिविषय इति । (कै)

अधिका षष्टिर्वर्षाण्यस्येति विग्रहेऽवान्तरान्यपदार्थाभावादनेकमित्यस्याप्राप्तौ तद्योगप्रत्याख्याने ऽधिकषष्टिवर्षः सिद्धः । विग्रहान्तरे तु वाक्यमेव । एवं सूत्रारम्भे अधिका षष्टिर्वर्षाणामस्येति बहुव्रीहिगर्भे बहुव्रीहौ संख्येये वर्त्तमानसंख्यान्तबहुव्रीहेरित्यर्थान्न डच् विग्रहान्तरे तु वाक्यमेवेत्यधिकषष्टिवर्षः सिद्ध इति भाष्याशयः । एवं च द्वन्द्वबहुव्रीहिविषये ऽविशेषेणेति पक्षः स्थितः ॥

इति शिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते व्याकरणमहाभाष्यप्रदीपोद्योते द्वितीयाध्यायस्य प्रथमे पादे प्रथममाह्निकम् ॥



परं न तावन्निरपेक्षसाधनभेदादपि क्रियानानात्वमिति वक्ष्यामः । साधनप्राधान्यं तु प्रयुक्तमेव । एतत् कृतो विशेषः कर्मानङ्गत्वादनादरणीय इति सामान्यप्रकाशनादेकार्थत्वम् । तस्मिन् सौदेत्यस्य पूर्वापेक्षित्वे सत्यपि प्रयोजनभेदाद्वाक्यान्तरत्वम् । तस्मात् संहतयोरेव लक्षणम् ॥

# महाभाष्यप्रदीपोद्योतः।

पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ॥



कृते ऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ॥

## सुबामन्त्रिते पराङ्गवत्स्वरे। २।१।२॥

व्यधिकरणस्येति। (कै)

उपात्तामन्त्रितानन्वयिन इत्यर्थः। यथा हे पीड्यमान त्वं शृणु अहं पीडये इत्यर्थकपीडेपीड्यमानेत्यादाविति भावः ॥

---

सुबामन्त्रिते पराङ्गवत्स्वरे। सुबन्तमामन्त्रिते परे पराङ्गवत्स्यात्स्वरे कर्त्तव्ये। तन्निमित्तग्रहणं कर्त्तव्यम्। तस्यामन्त्रितार्थस्य यन्निमित्तं तत्प्रतिपादकं यत्तदेव पराङ्गवत्स्यान्नान्यदित्यर्थः। "यत्ते दिवो दुहितर्मर्तभोज-

---

"सुबामन्त्रिते पराङ्गवत्स्वरे"॥ 'परस्याङ्गवदिति'। तस्यैव परस्यामन्त्रितस्याङ्गवदेकदेशवद्भवति तद्ग्रहणेन गृह्यत इत्यर्थः। 'तादात्म्यातिदेशोऽयमिति'। अङ्गशब्दस्यावयववचनत्वात् तस्यामन्त्रितस्यात्मा तदात्मा तस्य भावस्तादात्म्यं तत्स्वभावत्वमित्यर्थः, एतदेव स्पष्टयति। 'सुब-

**वाचनिकमिति । (कै)**

समानाधिकरणमसमर्थवदिति ॥ युक्त्यन्तरमप्याह

**अतिव्याप्नोतीति । (कै)**

"स्रुचेणाग्ने" (यजुः-वे-वाज-सं-१७-५) इत्यादाविति भावः ॥ भाष्यात्ताय एव प्रश्नाशय उपलभ्यते ।

**सुबन्तसमुदायस्येति । (कै)**

तस्यासुबन्तत्वादिति भावः ॥ भाष्ये

**नैतदस्तीति (भा)**

शङ्किता "नैष दोषो ऽधात्वभिहितमिति" च सिद्धान्त्येकदेशीति तत्त्वम् । एकार्थीभावसामर्थ्यस्यैव तत्र सूत्रे ग्रहणेन तस्याना-

---

नम्" । इह दिवः शब्दस्य पराङ्गवद्भावादाष्टमिको निघातः । तन्निमित्तग्रहणान्नेह । एतेन "अग्ने श्रद्धया वा इधस्व" । "अयमग्ने जरिता" । अनेन "मित्रावरुणावृतावृधावृतस्पृशाक्रतुं बृहन्तमाशाथे" इति । स्यादेतत् । ऋतशब्दस्तावद् घृतादित्वादन्तोदात्तः । तस्य तन्निमित्तग्रहणात्पराङ्गवद्भावो मा भूत् । किन्तु मित्रावरुणावित्यस्यापि न स्यात् ।

---

न्तमिति' । अनुप्रविशति अन्तर्भवति सुबन्तामन्त्रितसमुदाय एकस्मिन्नामन्त्रिते संपन्नैः यः स्वरः प्राप्नुवते कर्त्तुं स कर्त्तव्य इत्यर्थः, कः पुनरसौ आद्युदात्तत्वं समुदायस्य च पदात्परत्वे निघातः । 'कुण्डेनाटन्निति' । नन्वत्र सति तावत्पराङ्गवद्भावे समुदायस्याद्युदात्तत्वं शेषनिघातश्च असत्यपि कुण्डशब्दो 'नब्विषयस्यानिसन्तस्ये'त्याद्युदात्तः पदात्परमामन्त्रितं निहन्यते यदा तदा टन्नित्येतत्पादादौ वर्त्तते तदा नास्ति निघात इति द्वयोराद्युदात्तत्वं स्यात् । किं च पुंल्लिङ्गोऽपि कुण्डशब्दोऽस्ति

नुपस्थितेरित्याहुः ॥ तिङन्तामन्त्रितयोः परस्परसम्बन्धाभावादसा-
मर्थ्यमित्यत आह

त्वदीययेति । (कै)

पीड्यमानपदार्थविशेषणीभूतपीडाकरणत्वेन तद्द्वारा सामर्थ्य-
मिति भावः ॥ साक्षादपि सामर्थ्यं दर्शयितुमाह

अथवेति ॥ (कै)

तथा च व्रजानीति । (कै)

वस्तुतः साक्षात्परस्परान्वयाभावेऽपि यद्यासिष्ठति कूले इत्या-
दाविव निघातसिद्धिरक्षतैवेति बोध्यम् ॥

---

ऋतस्य बर्द्धयितारावित्यर्थे ऽन्तर्भावितण्यर्थाद्वृधेः क्विपि "अन्येषामपि
दृश्यत" इति पूर्वपदस्य दीर्घे सति हि ऋतावृधाविति युत्पादितम् ।
न च तत्र मित्रावरुणौ निमित्तम् । न च मा भूत्पराङ्गवद्भाव इति
वाच्यम् । ऋतावृधावित्यस्य निघातानापत्तेः । द्वितीयपादादिस्थत्वेनापादा-
दाविति निषेधात् । अत एव हि "इमं मे गङ्गे" इत्यत्र पूर्वामन्त्रित-

---

पत्यौ जीवति कुण्डः स्यान्मृते भर्तरि गोलकः ।

इति, कुण्डीति च जानपदादिसूत्रेण ङीपि भवति । 'परशुना
वृश्चन्निति' । आङ्परयोः खनिशृभ्यां डिच्चेति कुप्रत्ययान्तत्वादन्तोदात्तः
परशुशब्दः, मद्रशब्दो मदेश्चेतिरक्प्रत्ययान्तः, कश्मीरशब्दो घृतादित्वाद-
न्तोदात्तः, 'सुबन्तस्य पराङ्गवद्भावे तन्निमित्तग्रहणं' तस्यामन्त्रितवाच्यस्या-
र्थस्य यन्निमित्तं तदभिधाय्येव सुबन्तं पराङ्गवदित्यर्थः, उदाहरणेषु
तृतीयान्तस्य तावन्निमित्तत्वमस्त्येव षष्ठ्यन्तस्याप्यस्ति, भृत्यनिमित्ता हि
राजता देशनिमित्ता वा, एवं गोषु स्वामिन्नित्यत्रापि भवति, तन्निमित्तत्वा-

एकार उदात्त इति । (कै)

पराङ्गवद्भावे तु पीड्ये इति पीकारेकार उदात्तः स्यादिति भावः ॥

स्फुटा चेति । (कै)

क्रियाप्रवृत्तिनिमित्तकत्वे हि सा स्फुटा भवतीति बोध्यम् ॥

मन्यते इति ।

अग्रे वार्त्तिकस्य वक्ष्यमाणतयाच पूर्वपक्षिसिद्धान्त्येकदेशिनोस्तद्व्याख्यानाचेत्यपि बोध्यम् । एतेन वार्त्तिकानामपि वाक्यैकदेशन्यायेन सूत्रतात्पर्यविषयतायाः पस्पशायां भाष्ये ध्वनितत्वेनेदं चिन्त्यमित्यपास्तम् ॥

---

स्याविद्यमानवद्भावात्सर्वेषां मेघ्वद्वात्परतामुपजीव्य क्रियमाणोऽपि निघातो गच्छ इत्यादिविषयस्यैव क्रियते न तु स्तुहीत्यस्यापि । अत्राहुर्वेदभाष्यकाराः । तन्निमित्तग्रहणं मास्तु । सूत्रेणैव सकलेष्टसिद्धेरिति । युक्तं चैतत् । तथाहि । व्यपेक्षा सामर्थ्यमेक इति समर्थसूत्रस्थभाष्यरीत्येह सामर्थ्यमुपस्थितम् । एकार्थीभावपक्षे तु सामर्थ्यस्येहानुवृत्तिः । प्रब्दा-

---

भावे तु न भवति मरुत्त्वां इन्द्र वृषभो रणाय, मरुद्भिरिन्द्र सख्यं ते अस्तु, मायाभिरिन्द्रमायिनम्, एतेनाग्ने ब्रह्मणा वावृधस्व, त्वमेनाग्ने स्वायुसम्भरस्व, मित्रेणाग्ने मित्रधेये यतस्व, 'सुपिति किमिति' । तन्निमित्तग्रहणादेव तिङन्तस्य सिद्धो निरास इति प्रश्नः । 'पीड्ये पीड्यमानेति' । नहि सूत्रकारो वार्त्तिककारवचनेनातिव्याप्तिनिवारणं मन्यत इति भावः । पीड अवगाहने चुरादिर्णिच् उभयत्र कर्मणि लट्, एकत्वौत्तमैकवचनमिट्, सुपूरन्न प्रागच्, यकि णिलोपः, तास्यनुदात्तेदिति इटोऽनुदात्तत्वं, यकः

आमन्त्रितस्येति। (भा)

षष्ठ्यनुपपत्तेराह

आमन्त्रिते इति॥ (कै)

कुण्डशब्द इति। (कै)

न च यदाऽटनिति पादादौ वर्त्तते यदा वा जीवति पत्यौ जारजवाची कुण्डशब्दः पुंल्लिङ्गस्तदा स्वरभेदोऽस्त्येवेति वाच्यम्। पादादावेवं विधप्रयोगाभावात् वृषादित्वेन कुण्डशब्दमाद्युदात्तत्वाच्चेति भाष्याशयः॥

तस्यामन्त्रितस्येति। (कै)

आमन्त्रितार्थस्येत्यर्थः। तत्प्रवृत्तिनिमित्तस्येति यावत्॥

---

धिकारश्च बोध्यः। एतदर्थ एव चास्मिन्प्रदेशे एतत्सूत्रारम्भः। तथा च अतेन मित्रावरुणावित्येतयोरानशाथे इत्यर्थकेनाशाथे इत्याख्यातेनान्वयात्परस्परमसामर्थ्येन पराङ्गवद्भावान्न माष्ठ आद्युदात्तः। किन्त्वाष्टमिको निघातः। मित्रावरुणावित्यस्य तु पराङ्गवद्भावादृतावृधाविति न पादादितो निहन्यत एव। न च सर्पिःकालकादिसिद्धये "इसुसोः सामर्थ्ये" इत्यत्र

---

प्रत्ययस्वरः, 'एकादेश उदात्तेनोदात्त' इत्येकार उदात्तः, पीष्यमानेत्यत्रामन्त्रितनिघातः, ननु च समर्थग्रहणानुवृत्त्यैवात्र न भविष्यति, अस्त्यत्रापि सामर्थ्यं, कथं सम्बोधनपदं क्रियाया एव विशेषकं तथा च अजानि देवदत्तेत्यत्रामन्त्रितनिघातो भवति। उक्तं च।

सम्बोधनपदं यद्यत्तत्क्रियाया विशेषकम्।
अजानि देवदत्तेति निघातोऽत्र तथा सति॥

इति। अथवा हेतुहेतुमद्भावलक्षणोऽत्र सम्बन्धः, हे पीष्यमान

क्रियाद्वारकं त्विति । (कै)

व्यपेक्षावादे अतः सर्वो म्न्तिकयेत्यादौ समासापत्तिरिदं चिन्त्यम् । भाष्यस्य तु समर्थपरिभाषानुपस्थितौ तदननुवृत्तौ च तात्पर्यम् । समर्थसूत्रे एकार्थीभावस्यैव सिद्धान्तितत्वेन तस्या अत्रायोगात् । अत एव भो देवदत्त भगो देवदत्तेत्यादौ पराङ्गवत्त्वं नेति बोध्यम् ॥ षष्ठ्यामन्त्रितकारकत्वस्य तन्निमित्तस्य चाभावात् "ऋतेनमित्रावरुणावृतावृधावि"त्यत्र "ऋतेने"त्यस्यानप्राथ इति क्रियान्वयेनामन्त्रित "ऋतावृधावि"त्यर्थनिमित्तत्वाभावान्न पराङ्गवत्त्वम् । "मित्रावरुणावि"त्यस्य तु ऋतस्य वर्द्धयितारावित्यर्थक "ऋतावृधावि"त्येतत्प्रवृत्तिनिमित्तभूतवर्धनं प्रति कर्त्तृतया मित्रावरुणयोर्निमित्तत्वात्सिद्ध इष्टः पराङ्गवद्भावः छान्दसत्वादेति बोध्यम् । उपक्रमस्थभाष्यं तु पूर्वपक्षत्वात्नार्थसाधकम् । नन्वेकार्थीभावसामर्थ्यस्यैव समर्थसूत्रे सिद्धान्तितया कथमत्र पराङ्गवद्भावे तदुपस्थितिरित्यत आह

---

पठितं समानाधिकरणमसमर्थवद्भवतीत्येतदिह प्रवर्त्तते । सर्पिष्पीयत इत्यादिसिद्धये अधात्वभिहितमिति विशेषितत्वात् । इह च धात्वभिहितत्वात् । नन्वेवं शुतुद्रिपदमपि निहन्येत पूर्वस्य सरस्वतिपदस्य पराङ्गवद्भावेनापादादित्वादिति चेन्न । सचतेत्यनेन सर्वेषामन्वयेऽपि परस्परमसामर्थ्यात् ।

---

त्वत्पीडयाहमपि पीड्य इति । 'गेहे गार्ग्य इति' । गेहशब्द उञ्छादित्वादन्तोदात्तः, एकस्यामासनादिकायां क्रियायां द्वयोरपि कारकत्वात्तद्द्वारेणास्ति सामर्थ्यम् । 'परशब्दग्रहणं किमिति' । सन्निधानादामन्त्रितस्यैव भविष्यतीति प्रश्नः, पूर्वस्य मा भूदिति' । निमित्तभाव एवामन्त्रितस्योपश्लेषतया पूर्वस्यापि स्यादिति भावः, एवं च पूर्वस्यामन्त्रितसमतन्त्रः

इहेति। (कै)

एवं च सुप्ग्रहणं व्यर्थमिति तत्त्वम् ॥

गुरुलाघवमिति। (कै)

गुरुपदेन गुरुत्वपरेण लाघवपदस्य द्वन्द्वः सुप्ग्रहणे कृते दोषवारणाय यत्नः कार्य इति गौरवमित्येतत्परं वार्त्तिकमित्याह

क्रियमाण इति॥ (कै)

सुबन्तसमुदायस्यासुबन्तत्वादिति। (कै)

अनेन सुप्सुपेत्यादौ दर्शितैकत्वविवक्षाया अतिस्थूलमतिविषयत्वं दर्शयति भाष्ये

स्वरेऽवधारणाच्चेति॥ (भा)

वार्त्तिकखण्डमवतारयति

ननु चेति॥ (कै)

---

उक्तं हि। सम्बोधनपदं यच्च तत्क्रियाया विशेषणमिति॥ न च गर्ग्गा इत्यादीनामेकवचनान्तानां सचतेति बहुवचनान्तेन सामानाधिकरण्याभावात्कथमेकवाक्यता। तथा च कथं निघातोऽपि। तत्र वार्तिककृता समानवाक्याधिकारस्य कृतत्वादिति वाच्यम्। युष्मद्युपपद इति त्रिसूत्र्यां भाष्यवार्त्तिकयोरेव वचनभेदेऽपि सामानाधिकरण्यस्य समर्थितत्त्वात्। प्रत्येकपर्यवसन्ने-

---

गार्ग्यः कुण्डेनाटन्नित्यादावपि भवति संनिधानादामन्त्रितत्वमपि तत्त्वमिति चेत् यद्येवं परमेव संनिहितमिति न पूर्वं प्रत्यङ्गत्वप्रसङ्गः देवदत्तः कुण्डेनाटन्नित्यत्र पूर्वं प्रत्यङ्गत्वे सति समुदायस्याद्युदात्तत्वं शेषनिघातः, अटन्नित्यामन्त्रितनिघात इति स्वरः, परग्रहणे तु सति देवदत्तशब्दस्यामन्त्रिताद्युदात्तत्वं तथा कुण्डेनाटन्नित्यस्यापि निघातश्च न भवति 'आमन्त्रितं

प्रसिद्ध इति। (कै)

सिद्ध इत्यर्थः॥

ग्रहणादिति। (कै)

[1]अणुदिदितिग्रहणकशास्त्रीयाण्ग्रहणे ग्रहणकशास्त्राभाव इत्यर्थः। यथा तत्र वाक्यार्थबोधात् प्राक् तस्य सज्ञ्यसंस्कारकताया वक्तुमशक्यत्वेनाप्रवृत्तिस्तथात्र स्वरे ग्रहणात्स्वात्मन्यप्रवृत्तिरिति भावः॥

विषयभेदादिति। (कै)

अत एव त्वप्रत्ययात्तत्वप्रत्ययसिद्धिः॥

गौणार्थेति। (कै)

एतेन परम्परया स्वरस्यकर्त्तव्यत्वमस्त्येवेत्यपास्तम्। साक्षात्स्वरे कर्त्तव्ये शास्त्रस्य चरितार्थत्वात्॥

आदेशविधावेवेति। (कै)

---

१ अ१। पा१। सू६९॥

---

कत्वप्रकारकबोधविशेष्येष्वपि मिलितेषु संख्यान्तरान्वये बाधकाभिवाच्च। "अहं च त्वं च वृत्रहन्त्संयुज्याव सनिभ्य आ, समौ हि श्रिष्टैराशातौ वर्त्मन्तावामयः सच" इति वेदलोकयोः प्रचुरप्रयोगाच्च। एतेन "चन्द्रे कलङ्कः सुजने दरिद्रता" इत्यत्र यशो विधातुः कथयन्ति खण्डितम्" इत्य-

---

पूर्वमविद्यमानवदि'ति देवदत्तशब्दस्याविद्यमानत्वात्। छन्दसि तु परमपि पूर्वस्याङ्गवदिष्यते। आ ते पितर्मरुतां सुम्नमेतु, पितरित्यनेन सह मरुता-मित्यस्यापि निघातः। 'यथा मृत्पिण्डीभूत इति'। यथा त्वमेतेत्यन्वयः। अमृत्पिण्डो मृत्पिण्डः संपन्नो मृत्पिण्डीभूतः, तत्र सुबन्तस्य मृत्पिण्डात्मना परिणामासम्भवादेकीभावप्रतिपादनपरमेतत्, मृत्पिण्ड इवैकतामापन्न

[1]षष्ठीस्थाने इत्यस्य प्रवृत्तिरित्यभिमानः । एवं च तन्निमित्तग्रहणेन तिङन्तव्यावृत्तिसिद्धेः । सुप्ग्रहणे समानाधिकरणे प्रसिद्धा च सुप्ग्रहणं न कार्यमिति भाष्याशयः । उत्तरार्थं तु सुबित्यधिकारसूत्रं कर्त्तव्यमिति बोध्यम् ॥

## स्वरादिष्विति । (कै)

एवं चानेनैव स्वरेणानयोरव्स्थितेराभ्यां परस्याष्टमिकनिघातश्चेति भावः । फिट्स्वरेण प्रत्ययस्वरेण वान्तोदात्तत्वसिद्धेः स्वरादिष्वन्तोदात्तपाठः किमर्थ इति चिन्त्यम् ॥

## पराङ्गवद्भावविषयत्वादिति । (कै)

अन्यथा सुबन्तैकान्त इत्यनेनानन्वयापत्तिरिति भावः । पराङ्गवत् भावो यस्य स पूर्वशब्दस्तेनोच्यत इति कश्चित् ॥

---

१ अ १ । पा १ । सू ४९ ॥

---

स्यान्वयाय एते इत्यध्याहरन्तः प्रत्युक्ताः । एवं च सत्यध्याहृतेन एतच्छब्देनापि समं कलङ्गादेरन्वयापत्तेः । गङ्ग इत्यादौ निघातानापत्तेश्चेति दिक् ॥ नन्वेवमपि मित्रावरुणावित्यस्य कथं पराङ्गवद्भावः । "आमन्त्रितं पूर्वमविद्यमानवदि"त्यविद्यमानवद्भावादिति चेत्, मैवम् । परस्य हि कार्ये कर्त्तव्येऽस्यातिदेशो न तु स्वस्य कार्येऽपि । पूर्वग्रहणवैयर्थ्यापत्तेः । न च पराङ्ग-

---

इत्यर्थः । यद्वा पिण्डीशब्दोऽप्यस्ति प्रविश पिण्डीमिति तस्यायं प्रयोगः, भूतशब्द उपमार्थः पितृभूत इति यथा, किमर्थं पुनरेवभूतस्य स्वरप्राप्तये यत्न इयत आह । 'उभयोरपीति' । असत्यङ्गग्रहणे कार्यव्यपदेशशास्त्राणामन्यतमातिदेशः स्याद् यथा परस्य कार्यमामन्त्रितस्य स्वरः आमन्त्रितव्यपदेशः स्वरशास्त्रं वा तथा सुबन्तस्यापि तद्भवतीति, एवं चोभयोरा-

अन्तरङ्गत्वादिति । (कै)

सूत्रस्थपरशब्देन वाच्यवत्त्योपस्थानादित्यर्थः ॥

प्रातिपदिकमेवेति ।' (कै)

एवोऽप्यर्थे परस्मिन् प्रातिपदिकत्वस्यापि सत्त्वेन तदवयवत्वस्याप्यापत्तिरिति भावः ॥ प्रत्ययलक्षणेन सुबन्तत्वे स्वतः प्रातिपदिकत्वेन तदवयवत्वमपि स्यादत आह

प्रत्ययो निमित्तमिति ॥ (कै)

तेन सुबन्तैकान्तत्वमिति । (कै)

अत्र प्रातिपदिकत्वस्य वस्तुगत्यासत्त्वेऽपि सूत्रेऽनुद्देश्यत्वान्न तदतिदेशेन तदवयवत्वव्यवहार इति भावः ॥

---

वद्भावः परस्य कार्यं किन्तु स्वस्य। अत एव वायो याहि, अग्ने नय, इन्द्र देवाधिरथमित्यादौ आमन्त्रिताद्युदात्तत्वं भवत्येव। तिङ्ङतिङ इति निघातः परं न भवति। अभ्युपेत्यापि ब्रूमः, प्रकृते मित्रावरुणावित्यामन्त्रितं सामान्यवचनं तद्विशेषणतया विशेषवचनमृतावृधाविति। अतो "नामन्त्रिते समानाधिकरणे सामान्यवचनमि"ति अविद्यमानवद्भावो निषिध्यत इति ॥ नन्वेवमपि मित्रावरुणपदस्य पराङ्गवद्भावात्पादादित्वेनापादादाविति पर्यु-

---

दासुदात्तत्वं स्यात्। ननु च पदात्परस्य निघातादुभयोरनुदात्तत्वं माभूदिति वाच्यं, सत्यम्। आमन्त्रितस्यापादादित्वे सति, पादादित्वे तदुक्तम्। 'वचनं किमिति'। परत्र परशब्दप्रयोगादेव वत्यर्थोऽवसीयत इति प्रश्नः। 'स्वाश्रयमपि यथा स्यादिति'। नानेन क्वाचित्कत्वमस्योच्यते, एवं हि विषयविभागो न ज्ञायते क्वाङ्गवद्भवति क्व नेति, नापि कदाचित्कत्वं कदाचिदङ्गवत्कदा चिन्नेति, एवं हि सर्वत्र विकल्पः स्यात् तस्मादयमत्रार्थः

विशेषणत्वेनापीति। (कै)

पराङ्गवद्भावस्येत्यर्थः॥

संबध्यत इति। (कै)

वाच्यतया गृह्यत इत्यर्थः॥ न च सुट्तिथोरित्यादौ तथयोर्विहितस्य सुटः प्रत्ययावयवत्ववत्प्रकृतेऽपि प्रातिपदिकावयवत्वमिति वाच्यम्। अवयवावयवाङ्गुल्यादौ शरीरावयवत्वस्य लोकसिद्धत्वादुपपत्तेः। प्रकृते तु प्रातिपदिकावयवकसुबन्तावयवो न तदवयवो भवति नहि हस्तावयवकशरीरावयवोऽङ्घ्रिर्हस्तावयव इति भावः॥

भाष्यकारेति। (कै)

सुप इत्यस्य विभक्तिर्यदा विशेष्यः तदान्यायत एव स्त्रीत्वमिति

---

दासः स्यादिति चेन्न। न ह्ययं कार्यस्यातिदेशः किन्तु तादात्म्यस्य तस्मिंश्चातिदिष्टे विशिष्टमामन्त्रितमिति बुद्ध्या यद्यत्कर्तुं शक्यं तत्क्रियते। किं च कार्यातिदेशेऽप्यशास्त्रीयस्य दौर्लभ्यं किमुत तादात्म्यातिदेशे। सुबिति किम्। पीब्येपीब्यमाना। नन्विह एकार्थीभावविरहात् समर्थपरिभाषानुपस्थितावपि समर्थग्रहणानुवृत्त्या पराङ्गवद्भावो न भविष्यति। एवं च धातुपदेशात्परत्वेनानुदात्तस्येटा उदात्तेनैकादेशे पीब्ये इत्यन्तोदात्तं सिद्धम्।

---

असति वद्ग्रहणे आम् कुण्डेनाटन्निति स्थिते अटन्नित्यस्य निघाते प्राप्ते कुण्डेनेत्यस्यानुप्रवेशात्कुण्डेनाटन्नित्येकमामन्त्रितं संपन्नं न च तदेकान्तरमिति प्रतिषेधाभावान्निघात एव स्यात्, वत्करणे तु सति अटन्नित्यस्य तावदेकान्तरत्वान्निघातप्रतिषेधे आद्युदात्तत्वं प्राप्तः तस्यां दशायां कुण्डेनेत्यस्यानुप्रवेशात्समुदायस्याद्युदात्तत्वं भवति, तदेवं समुदायस्यानैकान्तरत्वेऽपि अटन्नित्यस्य यदेकान्तरत्वं वत्करणेन लब्धं तेनैव समुदायस्य निघातनिवृत्ति-

कश्चित्। तत्र [1]"औङः श्यामि"त्यादौ नित्यस्त्रीत्वेन नदीत्वाय स्वतः स्त्रीलिङ्गत्वस्यैव न्याय्यत्वात् ॥

समानपदत्वादिति। (कै)

अतिदेशेन परावयवतया विशिष्टस्याखण्डत्वे बोधिते स्वाश्रयस्य सखण्डत्वस्यातिदिश्यमानधर्मविरुद्धतया तत्प्रयुक्तणत्वप्रतिबन्धाभाव इति भावः ॥ नन्वस्य उक्तरीत्या विरोधोऽस्त्येवेत्यत आह।

यच्चेहेति। (कै)

पूर्वस्य पराङ्गवद्भावेऽस्मिंस्तेन पूर्वस्मिन् परप्रयुक्तकार्यप्रवृत्त्या पूर्व-

---

१ अ ६। पा ४। सू १४८॥

---

नैवम्। सामर्थ्यस्येहापि सत्त्वात्। पीड्यमानसम्बोध्यका पीडेति हि वाक्यार्थः। आह च। "सम्बोधनपदं यच्च तत्क्रियाया विशेषणम्। व्रजानि देवदत्तेति निघातोऽत्र तथा सती"ति॥ समानवाक्ये निघातयुष्मदस्मदादेशाः। "आख्यातं सविशेषणं वाक्यम्" इति वार्त्तिककारवचनादिति भावः। अङ्गग्रहणं किम्। उभयोः पृथगाद्युदात्तता मा भूत्। वद्ग्रहणं किम्। स्वाश्रयमपि यथा स्यात्। आम् कुण्डेनाटन्। आम एकान्तरमामन्त्रित-

---

राद्युदात्तत्वं च भवति। 'कूपे सिञ्चन्निति'। अत्र पराङ्गवद्भावे सति एकपद्यात्षत्वप्रसङ्गः स्वाश्रयं पदादित्वं भविष्यति सर्वातिदेशेषु ह्यविरुद्धं स्वाश्रयं भवति, किं च नात्रातिदेशिकं सकारस्य किञ्चिच्छास्त्रीयं कार्यमस्ति अतोऽपि स्वाश्रयं भवत्येव, यथा नमते दण्डः स्वयमेवेत्यत्र यक्प्रतिषेधे प्राप्, इदं तर्हि चर्म नमन् अत्र पराङ्गवद्भावे सति समानपदस्थत्वात् णत्वं स्यात् सत्यपि समानपदत्वे। 'पूर्वपदात्संज्ञायामग' इति

निष्ठस्वाश्रयनिवृत्तावपि परस्मिन् पूर्वनिष्ठकार्यप्रवृत्तौ परनिष्ठस्वाश्रयनिवृत्तौ च मानाभावादिति भावः। किं चामन्त्रिते परे पूर्वप्रत्यासत्त्या आमन्त्रितरूपपराङ्गवत् कार्यभागिति उक्ते आमन्त्रितत्वे वैकल्पप्रयुक्ताप्राप्तकार्यातिदेश एव लभ्यते न षत्वणत्वयोस्तद्भानयत्वाच्च

## शब्देनेति। (कै)

आमन्त्रितशब्देनेत्यर्थः॥

## यथा नमत इति। (कै)

अन्तर्भावितण्यर्थोऽत्र नमिः। न दुहेति कर्मवत्त्वाश्रययकि प्रतिषिद्धे कर्त्राश्रयः शप् तत्र निषेधादित्यतिदेशाश्रयाप्रवृत्तिः। इह तु

---

मनन्तिक इत्येकान्तरता भवति। स्वर इति किम्। कूपे सिञ्चन् चर्मनमन् षत्वणत्वे प्रति पराङ्गवद्भावो न भवति। समानाधिकरणस्योपसंख्यानमनन्तरत्वात्। तीक्ष्णया सूच्या सीव्यन्। न च परस्याङ्गवद्भावे कृते पूर्वस्यापि सूत्रेणैव सिद्धमिति वाच्यम्। स्वरे इत्यवधारणात्। पराङ्गवद्भावे कर्तव्ये तस्य दुर्लभत्वात्। वस्तुतस्तु स्वरे इति न कर्तव्यम्। कूपे सिञ्चन्नित्यत्र स्वाश्रयपदादित्वसत्वात् "सात्पदाद्योरि"ति निषेधसम्भवात्।

---

नियमादसंज्ञायां न भविष्यति, नायं नियमस्य विषयः पूर्वपदशब्दो हि समासावयवे रूढः, तेन समास एव नियमः, अथ तु पूर्वं पदं पूर्वपदादित्वविशेषेण नियमो 'व्याख्यायेत ततः स्वरग्रहणमशक्यमकर्तुम् अक्रियमाणे तस्मिन्समानाधिकरणस्योपसंख्यानमित्येतदपि शक्यमकर्तुम्, कथं परस्याङ्गवद्भावे कृते चिणो लुङ्न्यायेन विषयभेदाल्लक्षणस्यावृत्तौ पूर्वस्यापि पराङ्गवद्भावो भविष्यति, सति तु स्वरग्रहणे स्वरादन्यत्र

अतिदेशस्याप्रवृत्तिरेवेति यथा कथञ्चित् दृष्टान्ततेति बोध्यम् ॥ यद्यप्यनेन फलमपि परिहृतं तथापि प्रकारान्तरेणापि समाधातुरेकदेश्याह भाष्ये

चर्मनमनिति ॥ (भा)

तध्वनयन्नाह

सत्यपि निमित्तेत्यादि ॥ (कै)

नियमादेवेति । (कै)

यद्यपि विध्यर्थत्वमेवाग्रे स्थापयिष्यति तथापि योगविभागेनाच नियमोपपत्तिरित्यभिमानः ॥

[1]समासावयव एवेति । (कै)

एवं च नियमेन वाक्यव्यावृत्तिः कर्तुमशक्येति भावः ॥ भाष्ये

---

१ उपलब्धकैयटपुस्तके "समासाद्यवयव एव" इति पाठोऽस्ति ॥

---

यत्वं तु "पूर्वपदात्संज्ञायामे"वेति नियमान्न भविष्यति । समासाभावेऽपि पूर्वं पदमिति यौगिकार्थमात्रस्य लक्ष्यानुरोधेन ग्रहीतुं शक्यत्वादिति भाष्यम् । यद्वा । आमन्त्रिते इत्यस्योपस्थितत्वादामन्त्रितत्वयुक्तकार्ये प्रत्येव सन्निधानात् पराङ्गवद्भावः । तथा च पराङ्गवद्भावे सामानाधिकरण्यस्योप-

---

पराङ्गवद्भावे पराङ्गवद्भावो न सिद्ध्यतीति कर्त्तव्यं, नन्वसति स्वरग्रहणे परशुना वृश्चन्नित्यत्र वृश्चन्निति प्रातिपदिकं,न च प्रत्ययलक्षणेनाप्रत्यय इति प्रतिषेधः, "न ङिसंबुद्ध्योरि"ति निषेधाल्लिङ्गात्, तत्र पराङ्गवद्भावेन प्रातिपदिकानुप्रवेशात् "सुपो धातुप्रातिपदिकयोरि"ति सुब्लुक् प्रसज्येत स्वरग्रहणे तु सति सुब्लुकि कर्त्तव्ये पराङ्गवद्भावाभावः । नैतदस्ति । पारद-

### अविशेषेणेति

एकदेश्युक्तिः। अष्टमे रूढ़योरेवानयोर्ग्रहणस्य सिद्धान्तयिष्यमाणत्वात् अखण्डपदस्यैव तत्र समानपदेन ग्रहणाच्च। उक्तयुक्त्यैव तु णत्ववारणं बोध्यम्। एवं च स्वरग्रहणमपि व्यर्थमिति बोध्यम्॥

---

## प्राक्कडारात्समासः। २। १। ३॥

---

### [1]अवधित्वद्योतनेति॥

अत्र करणे ल्युट् कर्त्तुः करणत्वविवक्षया बोध्यः। द्योतकत्वेन इत्यर्थः॥

---

१ उपलभ्यकैयटे "अवधित्वद्योतन" इति ल्युडन्तपाठो नास्ति। "द्योतक" इत्यस्ति॥

---

संख्यानं, स्वरग्रहणं चेत्युभयमपि न कर्त्तव्यमिति स्थितम्। परमपि छन्दसि पूर्वस्याङ्गवद्भवतीति वक्तव्यम्। आ ते पितर्मरुतां सुम्नमेतु। प्रतित्वा दुहितर्दिवः। दृशीव दुहितर्दिवः। अव्ययप्रतिषेधश्च। उच्चैरधीयान। अव्ययीभावस्य तु नायं निषेध इत्युक्तम्॥

---

ङ्गवदित्यामन्त्रितं संनिधानात्परशब्देन गृह्यते तस्य रूपस्य सुबन्तैकान्तत्वात्सुबन्तकार्य एव पराङ्गवद्भावो न प्रातिपदिककार्ये। 'उच्चैरधीयानेति'। उच्चैर्नीचैः शब्दौ स्वरादिष्वन्तोदात्तौ पठितौ अधिकारबलादुत्क्तिप्राधान्याच्च तस्मिन्निमित्तं च॥

पर्यायः स्यादिति। (कै)

अधिकारत्वेऽप्यसमाससंज्ञाया अनवकाशत्वादित्याशयः। अनेन अग्रिमग्रन्थ एकदेशिनोक्तिरिति सूचितम्॥ भाष्ये

सत्यां समाससंज्ञायामिति। (भा)

प्राक्पदोपादाने ऽस्याधिकारताया एव तत्सामर्थ्येन वक्तव्यतया तत्साहित्येनासां विधानाद्वचनात्समावेशः॥ नन्वेवमपि पर्यायः प्राप्नोति कथं समावेश इति चेत्तत्राह

स्वरितत्वादेवेति। (कै)

प्रत्यय इत्यादिवत्। अन्यथा समासः "सहसुपे"त्येकमेव भवेदिति भावः॥ अधुनाधिकारत्वाभावेऽपि समावेशं शङ्कते। भाष्ये

समाससंज्ञापीति। (भा)

प्राग्ग्रहणाभावे समासः। "सह सुपे"त्येव सर्वत्र समाससंज्ञाविधिः। सहसुपेत्यंशस्य च स्वरितत्वप्रतिज्ञानादुत्तरत्र सम्बन्धोऽपि अव्ययीभावादिसंज्ञाविनिर्मुक्तसमासस्य चाभाव इत्यभिमानः। अत एव विस्पष्टादयो ऽवकाशा इत्यग्रिमभाष्यं सङ्गच्छते। सह्यव्ययीभावादिसंज्ञाविनिर्मुक्तो विषय इति भावः। मुख्यं सामानाधिकरण्यं नास्तीति[१] "विशेषणं विशेष्येणे"त्यत्रोभयोपादानसामर्थ्येन शब्दजन्यबोधविशेष्ययोर्यत्र विशेषणविशेष्यभावस्तत्रैव तत्प्रवृत्तेरिति भावः। क्वचिदेकदेशान्वयोऽपि व्युत्पत्तिवैचित्र्यादिति तात्पर्यम्॥

---

१ अ २। पा १। सू ५७॥

अवयवकार्यमिति । (कै)

समासविशेषप्रयुक्तः स्वर इत्यर्थः ॥

अन्तरेणापीति । (कै)

समासाधिकारे स्वरविधानादिति भावः ॥

भूतसमासेति ॥ (कै)

सिद्धसमासेत्यर्थः ॥

इवार्थस्येति । (कै)

इवद्योत्योपमानत्वनिरूपकोपमेयरूपार्थस्य समासवाच्यस्येत्यर्थः ॥

तत्रच्युति

उपमानशब्दस्योपमेयवृत्तित्वादिति ॥ (कै)

भाष्ये

येनैवावयवकार्यमिति । (भा)

कर्मधारयः ॥

काकतालीयम् । (भा)

इत्यत्रावयवरूपछप्रत्ययाख्यं कार्यमित्यर्थः । नच काकतालेत्या-
दिपक्षे व्याख्यास्यते ॥

क्लीबर्थ इति । (कै)

पुनाराज इत्यत्रापि योगविभागस्य भाष्यानुक्तत्वेनाप्रमाणतया
टजेष्टव्य इति बोध्यम् । पुनर्नवः पुनाराज इत्युपात्तोदाहरण-
मादायैव भाष्यप्रवृत्तेरिदं चिन्त्यम् ॥

## एकार उदात्त इति । (कै)

तदुत्तरपदप्रकृतिस्वरेणेत्यर्थः ॥

## निघातं परत्वाद्बाधित्वेति ।

एवं च भाष्यस्य निर्दलतापत्तिः शेषनिघातेनैव तत्फलसिद्धेरिति चिन्त्यम् ।

## [1]गतिर्गताविति निघातो यथा स्यादिति (भा)

भाष्ये । यद्यप्युच्छब्दस्य प्रकृतिस्वरे [2]प्रवृद्धादित्वादन्तोदात्तत्वे वा शेषनिघातेनापि [3]गतिश्चेति सूत्रस्थकैयटोक्तरीत्या अत्रत्यकैयटरीत्या च पुनःशब्दे ऽनुदात्तत्वं सिद्धमिति तत्फलसिद्ध्येऽवश्यं गतिसंज्ञा वक्तव्येति वक्तुमनुचितम् । "गतिश्चेति" (१।४।६०) सूत्रे पुनरुत्स्यूतशब्दः प्रवृद्धादित्वादन्तोदात्त इत्युक्तम् । इहोच्छब्दस्य प्रकृतिस्वर इत्युक्तम् । तथापि पुनरुत्स्यूतमित्यादौ असमासे पुनःशब्दस्य निघातरूपफलाय सावश्यं बाध्या । समस्तपुनरुत्स्यूतशब्दस्तु "सुपे"ति सूत्रेण समासादन्तोदात्त एवेति भाष्याभिप्रायः । न च नित्यसमासत्वात्कथं वाक्यसम्भव इति वाच्यम् । एतद्भाष्यप्रामाण्येन छान्दसत्वादेव समासे गतित्वाभावेन गतिसमासस्याचाप्रवृत्तेः । अत एवोत्तरसूत्रे "सुपे"त्यस्य लक्षणस्येदमुदाहरणं वक्ष्यति भगवान् । अत एव समासार्थां गतीतिस्वरार्था वा गतिसंज्ञेति भाष्ये नोक्तम् । छन्दसि पुनःशब्दस्य गतित्वेनैव सिद्धत्वेऽपि लोके पुनराधेयादौ

---

१ अ८ । पा१ । सू७० ॥ २ प्रवृद्धादीनां च । ६ । २ । १४७ ॥
३ अ१ । पा४ । सू६० ॥

समाससंज्ञा सावकाशा तत्र गतिसंज्ञाभावेन गतिसमासाप्राप्तेरत आह

भाषायां त्विति। (कै)

चिन्त्यमेतत्। [1]"पुनश्चनसौ छन्दसीति" गतिसंज्ञाविधायकवार्त्तिकविरोधात् लोके समस्तपुनराधेयशब्दानभिधानेन समासान्तोदात्तस्यैव तत्र स्वीकारेण वा भाष्योपपत्तेश्च। सति हि तस्मिंस्तेनैव सिद्धमित्यत्रत्यभाष्यस्वरसोऽप्येवमेवेति दिक्॥ एवं सहसुपेत्यस्य निरवकाशत्वे पूर्वपक्षिणा प्रतिपादिते तावतापि पर्याय एव प्राप्नोति न समावेश इत्याह भाष्ये

एवमप्येकासंज्ञेतीति। (भा)

तस्मात्प्राग्वचनं कर्त्तव्यमिति (भा)

सिद्धान्ताशयस्तु उक्त एव। एवं च किमित्यवकाशनिराक्रियेति शङ्का तत्समाधानं च कैयटोक्तमसङ्गतमेव पूर्वपक्षिणो ऽज्ञानस्यावश्यकत्वात्। तेनावकाशनिराकरणेऽपि सिद्धान्तिनोचतेः। अवकाशप्रदर्शनेन तत्खण्डनं तु समाधानान्तरसम्भवादनादरेण। किञ्च ज्ञापकेन "विस्पष्टपटुः। काकतालीयमि"त्यादौ समासे परेणोक्ते तस्मादेव ज्ञापकादेतस्य सामान्येन विधायकतायामवकाश उक्तप्राय इति सुधियो विभावयन्तु॥

एवं मन्यते संयुक्ते विधानादिति। (कै)

विपूर्वकधाञः करणे शब्दः "सहसुपे"त्यनेन समास इत्यस्या-

---

१ अ१।पा४।सू६०॥

संयुक्तकरणात्तत्संज्ञायाः सर्वार्थत्वं न तु "सहसुपे"त्येतस्याचोदाहरण-विषयत्वमित्यर्थः। एवं च तत्तद्विग्रयसमाससंज्ञाया अनवकाशत्वा-त्ताभिः समावेश इत्यभिमानः॥ नन्वेवंविधनिर्देशविचारकरणं भाष्ये अनुचितमत आह

नायेति॥ (कै)

---

# सहसुपा।२।१।४॥

सहग्रहणोत्विति। (कै)

तत्सामर्थ्यात्समास इत्येकत्वस्य विवक्षणाच सहभूतस्यैका संज्ञेति भावः॥ ननु यद्यपि प्रत्येकं समासत्वे प्रत्ययान्तत्वात्प्रत्येकं न प्राति-पदिकत्वं तथापि समासस्य समुदायात्मकतया समासग्रहणस्य वाक्यनिवर्त्तकनियमार्थत्वं नोपपद्यते किन्तु विध्यर्थत्वमेव स्यादत आह

---

सहसुपा॥ इह सहेति योगो विभज्यते। सुबन्तं समर्थेन सह समस्यते। कतिपयतिङन्तमात्रविषयोऽयं योगः। सुप्सुपेति पुनरारम्भात्। अतोऽति-प्रसङ्गो नोद्भावनीयः। यो जात एव पर्यभूषत्। यः पूर्व्यं अन्वनिन्दत्। योगविभागसिद्धस्यासार्वत्रिकत्वान्नेह। सम्प्रयच्छद्भ्याग इन्द्राय भागम्। अत एव नित्यं क्रीडेत्यधिकारे उदात्तवता गतिमता च तिङा गतेः समास

---

"सहसुपा"॥ सहवचनं किमर्थं यावता तृतीयैव सहार्थमाचेष्यति यथा वृद्धो यूनेति, सहभूतयोः समाससंज्ञा यथा स्याद् एकैकस्य मा भूद्,

**छन्दसीतेति ॥ (कै)**

**एकशेषेत्विति । (कै)**

समुदायस्यैकार्थीभावेनार्थवत्त्वात्प्राप्तौ नियमार्थं तदिति भावः ॥

"काकतालीयमि"त्यादौ प्रत्येकं छप्रत्ययोत्पत्तिरपि दोषो नेत्याह

**समासाश्चेति ॥ (कै)**

ननु समुदाये समासत्वाभावोऽत आह

**प्रातिपदिकत्वादिति । (कै)**

तत्सामर्थ्यात्समासपदं तत्समूहपरमिति भावः ॥

**[1]एकत्वन्न विवक्ष्यत इति । (कै)**

१ "एकवचनं न विवक्ष्यते" इत्युपलब्धकैयटेऽस्ति ॥

इति वार्तिककृता यदुक्तं तदिहैव योगं विभज्य साधितं भाष्ये । एवमिवेन समास इत्यपि सुप्सुपेत्यनेन सिद्धमित्युक्तम् । युक्तं चैतत् । अन्यथा वार्तिकरीत्या नित्यसमासतापत्तौ च आनयत् आयोनयत् सम्मयच्छेत्यादेरसङ्गतत्वापत्तेः । जीमूतस्येवेत्यादौ तैत्तिरीयाणां पदद्वयत्वेन पाठासङ्गतिप्रसङ्गाच्च । अत एवोद्वाहुरिवेत्यादौ व्यस्तव्यवहितप्रयोगोऽपि सङ्गच्छते । यथोत्तरम्मुनीनां प्रामाण्यात् । तिङ्समासस्तु छन्दस्येव । अत एव कर्मणा यमभिप्रैतोत्यत्रैकपद्यं नेति हरदत्तः । एतदपि असार्वत्रिकत्वादेव सिद्धम् । युक्तं

अन्यथा पुत्रेण सहागतः पितेत्यत्र यथा द्वयोरप्यागमनेन सम्बन्ध एवं समाससंज्ञापि प्रत्येकमेव स्यात्, सहग्रहणे तु सहभूतयोरेका संज्ञा भवति । किं च स्याद् यद्येकैकस्य संज्ञा स्यात्, इह अकपाद इति समा-

प्रातिपदिकादित्यनेनान्वयादिति भावः ॥ ननु तद्विरोधात् प्रातिपदिकादित्यस्यासम्बन्ध एव स्यादत आह ।

**अनभिधानाद्वेति । (कै)**

एवं च लक्ष्यानुरोधादेव समासपदं तत्समूहपरमिति भावः ॥

**समुदायस्यैवेति । (कै)**

अवयवेभ्यः समुदायोऽतिरिक्तोऽपीति भावः । इदं चिन्त्यम् । सुबन्तं समर्थं समर्थेन सुबन्तेन सह समस्यत इत्यर्थेन प्रत्येकं तस्य तस्य च संज्ञालाभात्समुदाये संस्कार्यत्वस्य दुर्लभत्वात् । किं च समुदायद्विर्वचनदृष्टान्तो ऽयुक्तः वैषम्यात् समुदायसंज्ञत्वावयवाना-मननुग्रहात् ॥

**अन्वर्थसंज्ञाविज्ञानाद्वेतीति । (कै)**

---

चेदम् । छान्दसत्वेनैव तत्र सुब्लुको वक्तव्यत्वात् । अन्यथा एकवचनमुत्स-र्गतः करिष्यते इति भाष्यात्समासादुत्पन्नस्य सोः पर्यभूषदित्यादौ हल्ङ्या-दिलोपसम्भवेऽपि यत्प्रकरोतीत्यादौ अवणापत्तेः । न च नपुंसकताभ्युपगमेन निर्वाहः । यत्प्रकुरुते इत्यादौ ह्रस्वापत्तेः । प्रकुर्वीरन्नित्यत्र नलोपापत्तेश्च । तस्मात्काव्यादौ प्रभवतीत्यादिप्रयोगेषूपसर्गः पृथक् पदमेव । वागर्थाविवे-त्यादाविवशब्दस्तु समस्तः पृथग्वा । उद्बाहुरिव वामनः कचाचितौ विष्व-गिवागजौ गजावित्यादौ पृथगेवेति तत्त्वम् । यत्तु कश्चिदिवेन समासस्त्वा-

---

सान्तः प्रसज्येत द्वौ च स्वरौ स्यातां 'कृत्तद्धितसमासाश्चे' त्यत्र तु समासस्य समासस्तेनैकपदोपि गृह्यते तेन समाससमूहस्य संज्ञाविधिर्नियमार्थ इति वाक्यस्य न भविष्यति, अन्यथा त्वेकैकस्य समासस्य प्रत्ययान्तत्वादि-

वस्तुतः समसनं संक्षेप इत्यन्वर्थः। नचासावनेकस्यैव। एकस्यापि विस्तृतस्य संक्षेपदर्शनादतोऽन्वर्थत्वेन कथमेतदर्थलाभ इति चिन्त्यम्। तस्माद् गर्गदण्डनन्यायसत्वात्कथमेकैकस्य प्राप्तिः। लक्ष्यानुसाराच्च तस्यैव न्यायस्याश्रयणमिति सिद्धान्तिन एव प्रश्नः। इतरो लक्ष्यानुसारमज्ञात्वा न्यायमात्राश्रयणेन सहग्रहणमित्याह

प्रत्येकमिति॥ (कै)

लक्ष्यदर्शनादीति। (कै)

आदिना [१]"मालादीनां चेति" ज्ञापकसंग्रहः। अत्रापि गर्गदण्डनन्यायाश्रयणेन लक्ष्यदर्शनमेव हेतुरिति तत्त्वम्॥

योगावयव इति। (कै)

१ अ ६। पा २। सू ८८॥

---

न्दस इत्याह। तन्निर्मूलम्। तैत्तिरीयपृथक्पाठविरुद्धं च। इवसमासे समासगां श्रौतीमुपमामुदाहरतां आलङ्कारिकाणां प्रतिकूलं च। किञ्च। "हरीतकीं भुङ्क्ष्व राजन्मातेव हितकारिणीम्" "अद्वैतमप्यनुभवामि करस्थ बिल्वतुल्यं शरीरमहिनिर्ल्वयनीव वीक्ष्य" इत्यादयः समस्तप्रयोगा न ह्यस्ति प्रथमान्तेनैवेत्यन्यपदार्थसूत्रस्थभाष्यसम्मताः। अत एव अग्निरिव राजो वायुरिव पाप्म इत्यादि परिशिष्टोदाहरणमपि सङ्गच्छते इत्यास्तां तावत्। इदं स्ववर्णिष्यते। तिङ्समासे कृते परमपि तिङ्ग तिङ इति

---

ध्यर्थं समासग्रहणं स्यात्, 'समासाच्च तद्विषयादि'त्यत्रापि प्रातिपदिकादित्यनुवर्त्तते समूहस्य च प्रातिपदिकत्वं न त्वेकैकस्य समासस्येति समासावित्येकत्वाविवक्षया समूहादेव सिद्धः प्रत्ययः, तदेवं समुदायस्य यथा

योगोऽत्राष्टाध्यायी । यद्यपि योगविभागाभावेऽपि अवयवाव-यवस्य समुदायावयवत्वन्यायेनाष्टाध्याय्यवयवत्वमस्त्येव तथापि साक्षा-दवयवत्वमेवात्र विवक्षितं तच्च योगविभागमन्तरेण न सम्भवतीति बोध्यम् ॥

## संख्याया विवक्षितत्वादिति । (कै)

सुबन्तत्वादेः प्रत्येकसमाप्तत्वाचेत्यपि बोध्यम् ॥ "अनुपपत्तिरि"-त्यत्र समाससंज्ञायाः फलं दर्शयति ।

## णत्वेति । (कै)

अन्यथा पक्षे णत्वोऽश्रवणमपि स्यात् इत्यर्थः ॥ स्वरस्तु न फलमित्याह

## समासान्तोदात्तत्वमिति ॥ (कै)

केचिन्मतसिद्धस्वरं दर्शयति

---

निघातं बाधित्वा सति शिष्टत्वात्समासान्तोदात्तता प्राप्नोति । न चेष्टापत्तिः । पर्यभूषत् तदेवानुप्राविशदित्यादौ क्वापि अन्तोदात्तपाठदर्शनात् । अत्रेदं तत्त्वम् । तिङि चोदात्तवतीति गतेर्निघातविधानं ज्ञापकं तिङ्समासे अन्तोदात्ताभावस्येति । भाष्यमते तु गतिकारकोपपदात्कृदिति सूत्रे कृद्ग्रहणस्य प्रत्याख्याततत्वान्न कश्चिद्दोष इति । इहेदमवधेयम् । सहेति तिङ्समासे सुप्सुपेति विहिते च वागर्थाविव पूर्वं भूतो भूतपूर्वं इत्यादौ अव्ययी भावादिविशेषसंज्ञाः संत्येव न । तत्तदधिकारेष्वस्यापाठात् । एवं विस्प-

---

ष्टादेकैकस्य मा भूदिति सहग्रहणं, नैतदस्ति प्रयोजनं, समास इति महती संज्ञा क्रियते ऽन्वर्थसंज्ञा यथा विज्ञायेत यस्मिन्समुदाये पदद्वयं परस्परं समस्यते स समासः इत्यस्येत्यधिकारो यत्र, तस्मादनर्थकं सहग्र-

तत्रानेरिति ॥ (कै)

केचिन्मतदूषणमाह

एवं चेति ॥ (कै)

अवक्तव्यमिति। (कै)

समासासमासयोः स्वरे रूपे चाविशेषादित्यर्थः ॥ एकादेशस्य सर्वथोदात्तत्वादिति भावः॥ "अनुव्यचलदि"त्यत्र यणश्रवणं विशेषः। अयञ्च नित्यसमास इति तात्पर्यम् ॥

सतिशिष्टत्वादिति। (कै)

वाक्येऽपि निघातप्रवृत्तेस्तदुत्तरकालिकतया समासस्वरस्य सतिशिष्टत्वमित्यर्थः ॥

तिङैकत्वस्येति। (कै)

---

स्पष्टः काकतालीय इत्यादावपि तत्रापि सुप्सुपेत्यस्य प्रवृत्तेः। विस्पष्टादीनि गुणवचनेषु समासाच्च तद्धितार्थादित्यादयः स्वरक्प्रत्ययार्थमारभ्यमाणा अपि वृद्धकुमारीवरन्यायेन समाससाधका इत्यस्मिन्नपि पक्षे विशेषसंज्ञाविरह-तुल्य एव। समासस्यतुर्द्धेति तु प्रायोवादमात्रम्। अत एव पठन्ति।

"कः समास इति प्रश्ने विस्पष्टपटुगोचरे।
समासमात्रं ये ब्रूयुर्विस्पष्टपटवो हि ते" ॥

इह विस्पष्टमिति पाटवस्य विशेषणम्। एकदेशान्वयस्याप्यत्र स्वीकारः एवं पूर्वपदार्थप्रधानोऽव्ययीभाव इत्यादि पूर्वाचार्यपरिभाषितम्। यद्यपीह

---

ह्यां तत्राह। 'सहग्रहणं योगविभागार्थमिति'। सहेत्येको योगः, सुपि-त्येन, सुप्सह समस्यते केन पदविधित्वात्समर्थेन। 'अनुव्यचलदिति'। तत्र सुबित्येकत्वस्य विवक्षितत्वादेः पूर्वं समासः पश्चादनोः, तत्र नित्यसमास-

सुपां यद्यपि स्वप्रकृत्यर्थः विशेष्यगतसंख्याभिधायित्वमुत्सर्गस्त-थापि १"स्वाप्प्रातिपदिकादि"ति सूत्रस्थभाष्यप्रामाण्येन तिङापि क्रियागतायाः कर्त्रादिसंबन्धाहारोऽपि तत्संख्याया एव भानमिति सिद्धान्त इदम् ॥

**वचनग्रहणादिति । (कै)**

प्रातिपदिकार्थसूत्रस्थात्संख्यार्थकादित्यर्थः ॥

**केवलायाश्चेति । (कै)**

प्रातिपदिकसंज्ञासत्त्वेनास्यापि प्रकृतित्वमिति भावः ॥

**हलुङ्यादिलोप इति । (कै)**

योगविभागस्येष्टसिध्यर्थतया छन्दसि तद्विषये एवैतत्समासप्रवृ-

---

१ अ४ । पा१ । सू१ ॥

---

तदीयमहासंज्ञाव्यवहारसामर्थ्यात्स्वीक्रियते । तथापि तत्सर्वमौत्सर्गिकमेव । अर्द्धपीप्पल्यादेस्तत्पुरुषस्य पूर्वपदार्थप्राधान्यात् । उन्मत्तगङ्गमित्यव्ययीभावे-ऽन्यपदार्थप्राधान्याच्चेति दिक् । यद्यपि जहत्स्वार्थायां वृत्तौ वर्तिपदयोरान-र्थक्यम् । अजहत्स्वार्थायां तूभयोरपि विशिष्टार्थता तथापि एकार्थीभा-वात्पूर्वस्यामवस्थायां यौ पृथक्पदार्थौ तयोर्वृत्तौ प्राधान्याप्राधान्याभ्यां प्रवे-शमाश्रित्योक्तानामौत्सर्गिकव्यवहाराणां निर्वाहो बोध्यः । षोढा चायं समासः । तथाहि ।

---

त्वादेः प्राकृताभावः, समासान्तोदात्तत्वं तु न भवति 'तिङ्ङतिङ' इति निघातात्, अतो 'गतिर्गता' विति निघातः, वेर्यणादेशे उदात्तस्वरितयो-र्यणः स्वरितत्वम् । अन्ये तु सति शिष्टं समासान्तोदात्तत्वं भवतीत्याहुः।

प्तिरिति भावः । एतेन प्रकुर्वीरन्नित्यादौ समासे नलोपः स्यादित्यपास्तम् ॥ सुबुत्पत्तिस्वीकारे संमतिमाह

अत एवेति । (कै)

अन्ये लित्यरुचिबीजं तु पचतिकल्पमित्यादावेवं सति बहुवचनादेरापत्तिः । तस्माद्वचनग्रहणेन संख्याप्रवृत्तिनिमित्तकानामेव ग्रहणं नत्वेवं विधानां किंचैषामेकपद्ये प्रागुक्ते निघातप्रतिषेधे च न मानमिति ॥

अतिङित्यादाविति । (कै)

तत्राङित्यस्य "[1]अनवक्लृप्त्यमर्षयोरि"ति सूत्रस्थभाष्यप्रामाण्येन समासविधिविषयतया समर्थनेत्यनेनैवोत्तरपदोपस्थित्या तत्र सुपेत्यस्या-

---

१ अनवक्लृप्त्यमर्षयोरकिं वृत्तेऽपि । ३ । ३ । १४५ ॥

---

"सुपां सुपा तिङा नाम्ना धातुनाथ तिङां तिङा ।
सुबन्तेनेति च प्रोक्तः समासः षड्विधो बुधैः" ॥

सुपां सुपा । राजपुरुषः । तिङा । पर्यभूषत् । नाम्ना । कुम्भकारः । धातुना । कटप्रूः । अजस्रम् । तिङां तिङा । पिबतखादता । तिङां सुपा । जहिजोडः । इह समासे पूर्वपदोत्तरपदपुरस्कारेणायं विभागः । तेन मध्यमानामव्यवस्थितत्वेऽपि अदोषः। एहि रे याहि रे इत्यस्य सुबन्तपूर्वोत्तरपदत्वात् । सर्वेष्वपीषु पूर्वपदस्य पदत्वमव्यभिचारि । अत

---

विभक्तिस्तु सत्यपि समासत्वेन प्रातिपदिकत्वे न भवति तिङैकत्वस्योक्तत्वात्, यद्वा वचनग्रहणमुक्तेष्वप्येकत्वादिषु यथा स्यादिति प्रथमैकवचनं तस्याप्यादिलोपः, एवं चैकपद्यादामनुप्यचलहे वदत्तेया 'म एकान्तरमामन्त्रितमन-

न्वयेन च चिन्त्यमेतत् ॥ ननु पुनः शब्दस्य गतित्वात्कुगतीत्येव सिद्धं सद्भावे तु अनेन समासेऽपि तत्पुरुषत्वाभावात् [१]"गतिरनन्तर" इति उच्छब्दस्य स्वरानापत्तिरत आह ।

पुनः शब्दस्येति । (कै)

छन्दसि सर्वविधीनां वैकल्पिकत्वादिति भावः ॥ अन्यत इति सूचितामरुचिमाह

काठकेऽन्तोदात्त इति ॥ (कै)

अव्ययादिति लुगिति । (कै)

तदन्तस्याप्यव्ययत्वादिति भावः ॥

---

१ अ६ । पा२ । सू४९ ॥

---

एव समासग्रहणं नियमार्थमित्ययं ग्रन्थो यत्र पूर्वो भागः पदं तद्विषयकः । तेन बहुपटव इत्यत्र टकाराकारस्योदात्तता सिध्यतीत्यर्थवत्सूत्रे व्युत्पादितम् । इवेन समासो विभक्त्यलोपः पूर्वपदप्रकृतिस्वरत्वं च ॥ इह उक्तयोगाभ्यां सिद्धं समासमनूद्य विभक्तिलोपाभावस्वरौ विधीयेते । तिङन्तापेक्षया इवशब्दस्य परनिपातस्तु राजदन्तादेराकृतिगणत्वात् । वाससीव वेधसः । जीमूतस्येव भवति । येषां विग्रिह्य लक्षणं नास्ति ते समासाः सहसुपेत्याभ्यां सिध्यन्तीति स्थितम् ॥

---

न्तिक' इति णिघातप्रतिषेधो भवति । योगविभागस्वेष्टसिद्ध्यर्थं इत्यतिप्रसङ्गो नोद्भावनीयः ॥

# अव्ययीभावः। २। १। ५॥

च्विप्रत्ययेन क्वचिदेवकार्येऽव्ययत्वारोपबोधनान्यत्कार्यलाभः।

**नतदन्वर्थेति।** (कै)

शब्दतो ऽलाभादिति भावः॥ प्रापिकत्वमेव दर्शयति "सुपे"त्यादि॥

---

अव्ययीभावः॥ अधिकारोऽयम्॥

---

"अव्ययीभावः"॥ इह लघ्वर्थं संज्ञाकरणमित्येकाक्षरा सञ्ज्ञाकार्या किमर्थं महती क्रियत इत्याह। 'अन्वर्थसञ्ज्ञा चेयमिति'। अनव्ययमव्ययं भवतीत्यव्ययीभावः, भवतेर्णा उपसंख्यानमिति णप्रत्ययः, अन्वर्थत्वे किं सिध्यतीत्यत आह। 'तेनेति'। पूर्वपदग्रहणमव्ययस्योपलक्षणार्थं सूपप्रतिशलाकप्रतीत्यादावुत्तरपदार्थप्राधान्यान्न स्यात्तस्मादव्ययीभावेऽव्ययार्थः प्रधानमिति सूच्यते, एवं ह्यव्ययानव्ययसमुदायो ऽव्ययधर्मलाभादव्ययं भवतीति, किं सिद्धं भवति, समृद्धा मद्राः सुमद्रा इत्यादावुत्तरपदार्थ प्राधान्येऽव्ययीभावस्यातिप्रसङ्गः परिहृतो भवति, पारेगङ्गं द्विमुनि उन्मत्तगङ्गमित्यादौ च वचनादव्ययीभावः, एवं चानव्ययमव्ययं भवतीत्यन्वर्थतयैवाव्ययकार्यस्यापि लाभादव्ययीभावश्चेत्येतदपि न वक्तव्यं, लुङ्मुखस्वरोपचाराः प्रयोजनमिति परिगणनं वक्ष्यामीत्येवमर्थं तदिति चेन्न, अचैव परिगणय्यान्वर्थत्वेन वा विशिष्टकार्यविषयमव्ययत्वमनुमीयताम्॥

( अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु । २ । १ । ६ ।)

( अ. २ । पा. १ । आ. २ )

# अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु । २ । १ । ६ ॥

समुदायस्येति । (कै)

गर्गदण्डनन्यायेन सुपाश्रितमव्ययं विभक्त्यर्थादिषु वर्त्तमानमव्ययीभावसंज्ञकमिति वचनव्यक्तेत्यर्थः ॥

---

हरौ इति अधिहरि भक्तिः । हर्य्यधिकरणिका भक्तिरिति बोधः । अधिसप्तम्यर्थवाचकः । उपकृष्णमित्यादावुपः समीपवाचकः

---

अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु ॥ अव्ययमिति योगो विभज्यते इति गम्भीराञ्ञः (४ । ३ । ५८) अव्ययीभावाच्च (४ । ३ । ५९) इति सूत्रे न्यासकारः । तेन दिशोर्मध्यमपदिशमिति सिद्धम् । शरदादित्वाट्टच् । "क्लीबेऽव्ययं त्वपदिशं दिशोर्मध्ये विदिक् स्त्रियामि"त्य-

---

"अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासम्प्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसम्पत्तिसाकल्यान्तवचनेषु" ॥ श्रुतत्वादव्ययस्यैव

(अ. २। पा. १। आ. २) (अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु। २। १। ६।)

## अन्वर्थसंज्ञाविज्ञानादिति। (कै)

प्राचीनोक्तमहासंज्ञाकरणेन तत्संमतोऽर्थोऽप्यस्य संमत इति भावः॥

---

ब्रह्मसमीपमित्यर्थः॥ अत्राव्ययानां वाचकत्वादेव पूर्वपदार्थप्रधानाव्ययीभाव इत्युत्सर्गस्य निर्वाहः। द्योतकत्वे हि द्योत्यार्थस्य विशेषणतया

---

मरः॥ वस्तुतस्तु योगविभागं विनापीष्टसिद्धिरिति सूत्रशेषे वक्ष्यामः। विभक्तिरिह कारकशक्तिः। विभज्यतेऽनया प्रातिपदिकार्थ इति व्युत्पत्तेः। वचनशब्दः कर्मसाधनः। स च प्रत्येकं विभक्त्यादिभिः सामानाधिकरण्येन संबध्यते। पूर्वनिपाताभावः सौत्रः। एष्वर्थेषु द्योतकतया वर्तमानं सुबन्तमव्ययं सुबन्तेन सह एकार्थभूतं सत् समाससंज्ञं प्राक्स्यात्ततोऽव्ययीभावसंज्ञमित्यर्थः। यद्यपि सुप्सुपेत्येव समासः सिद्धस्तथापि तस्यासार्वत्रिकता पुनः समासविधिभिर्ज्ञाप्यते। अत एव महाविभाषातः प्राक्पाठेऽपि अव्ययीभाववन्न तस्य नित्यसमासता। तथा च स्वपदविग्रह एव तत्र भवति। तथा च भूतपूर्वेचरडिति (५। ३। ५३) सूत्रे वृत्तिः। पूर्वं भूतो भूतपूर्वः। सुप्सुपेति समास इति। तथा शाकलसूत्रे (इकोऽसवर्णे शाकल्यस्य ह्रस्वश्च

---

विभक्त्यादयो विशेषणानि न समासस्येत्याह। 'विभक्त्यादिष्विति'। 'समस्यत इति'। यद्यपि समास इति सञ्ज्ञामात्रं विधीयते तथाप्ययमबुधबोधनाय भिन्नयोः शब्दयोः संश्लेषः प्रक्रियायां क्रियत इति समस्यत इत्युक्तम्। 'वचनग्रहणं प्रत्येकमभिसम्बध्यत इति'। तच्च कर्मसाधनं विभक्त्यादिभिः समानाधिकरणं, विभक्त्यादिषु वाच्येषु यदव्ययं वर्तते विभक्त्यादीनर्थान्यदव्ययं वक्ति द्योतयतीत्यर्थः, विभक्तिशब्देन कारकशक्तिरभि-

*(अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु। २। १। ६।)*

(अ. २। पा. १। आ. २)

## अव्ययस्य श्रुतत्वादिति। (कै)

श्रुतत्वरूपान्तरङ्गादित्यर्थः॥ सूत्रे श्रुतयोरेव प्रथमं संबन्धः पश्चात्प्रकरणलब्धेनेत्येव युक्तमिति भावः॥

---

एव न्याय्यत्वात्तद्बाधः स्पष्ट एव। स्पष्टं चेदमत्रैव भाष्ये। एतेन कुम्भादिपदानां तत्समीपे लक्षणोपादितात्पर्यग्राहकमित्यपास्तम्।

---

[६। १। १२७] इति सूत्रे) "सिन्नित्यसमासयोः शाकलप्रतिषेधः" (वा) इति नित्यग्रहणेन नार्थः। "इदमपि सिद्धं भवति। वाप्यामश्वो वाप्यश्वः नद्यामातिर्नद्यातिरिति" (६। १। १२७ सूत्रस्थभाष्यम्) भाष्यं कैयटो व्याख्यत्। सुप्सुपेति समासः। संज्ञायामिति हि समासस्य नित्यत्वात्सिद्धः प्रतिषेध इति। तथा "अनुदात्तं पदमेकवर्जम्" (६। १। १५८) इति सूत्रे असिद्धवदत्रेति (६। ४। २२) च सूत्रे कैयटेन स्वपदविग्रहो दर्शितः। ननूक्तरीत्या संज्ञायामितिवत्पङ्कजादिष्वपि अविग्रहत्वं स्यादिति चेत्। सत्यम्। यौगिकार्थमात्रेण साम्यमाश्रित्य विग्रहकथनेऽपि पङ्कत्वस्य समासैकगम्यतया वस्तुतस्तस्येष्टत्वात्। एतेन कृष्णसर्पलोहितशाल्यादयो व्याख्याताः। प्रकृतमनुसरामः विभक्तौ, हरौ इत्यधिहरि। येन सुबन्तेन

---

धीयते विभज्यते ऽनया प्रातिपदिकार्थ इति कृत्वा। 'स्त्रीष्वधिकृत्येति'। स्त्रीषु कथा प्रवर्त्यत इत्यन्वयः॥ अधिकृत्येति, प्रस्तुत्येत्यर्थः। संनिधानाच्च स्त्रिय एव प्रस्तुत्येति गम्यते स्त्रीविषया कथा प्रवर्त्यत इत्यर्थः। प्रायेण तु प्रवर्त्तत इति पाठः। तत्र भिन्नकर्तृकत्वात्क्त्वाप्रत्ययस्यानुपपत्तिः, पुरुषाः प्रस्तुवन्ति कथा प्रवर्त्तत इति। अत्राहुः। अधिकृत्य या कथा सा स्त्रीषु प्रवर्त्तत इत्यर्थः, तत्र प्रस्तावने कथने च कर्तुरेकत्वात्सिद्धः क्त्वाप्रत्यय इति।

प्रतिपिपादयिषिता इति। (कै)

विशेष्यतयेति शेषः॥ तदुक्तम्

---

द्योतकस्य प्रणयतीत्यादौ द्योत्यार्थविशेषणकबोधे प्रहते च तद्विशेष्यक-
बोधे कारणत्वेन कार्यकारणभावद्वयकल्पने गौरवात्। भिन्ना सम्प्रति
न युज्यते इत्यतिनिन्दम्। युजसमाधाविति दिवादेरकर्मकस्य युज्यत

---

समासत्वद्घटकीभूतैव विभक्तिर्गृह्यते सन्निधानात्। तदर्थद्योतकस्येह
अधिशब्दः। न चैवमलौकिके सप्तम्येव दुर्लभा। निपातेनाधिकरणस्याभि-
हितत्वात्। तिङ्कृत्तद्धितसमासैरिति परिगणनस्य प्रत्याख्यास्यमानत्वादिति
वाच्यम्। अर्थेन चतुर्थीसमासस्थले यथा वचनसामर्थ्यादुक्तार्थस्यापि प्रयोगः
तथेह वचनसामर्थ्यादभिहितेऽपि सप्तमीत्यभ्युपगमात्। अभक्तन्यायेन
वचनग्रहणसामर्थ्येन च विभक्त्यर्थमात्रवृत्तेरव्ययस्य ग्रहणान्नेह। ग्रहस्योपरि
ग्रामस्य पुरः। उपर्यादयो हि दिग्देशकालेष्वपि वर्त्तन्ते। न तु विभक्त्यर्थ-
मात्रे। अत एव "क्रमादमुं नारद इत्यबोधि" स इत्यादौ नातिप्रसङ्गः।
इति शब्दस्य सर्वनामवत् प्रकृतपरामर्शकत्वेन कर्मत्वमात्रानभिधायक-
त्वात्। एवञ्च विभक्तिशब्दः सप्तम्यां पर्यवस्यति। अत एव परिशिष्टे

---

अन्ये त्वाहुः। ह्रृत्यस्य कथा कर्त्तव्यकथेत्यर्थः, सा स्त्रीषु अधिप्रवर्त्तते
स्त्रीष्वधीति च प्रक्रियावाक्यं न लेतत्प्रयोगार्हं समासस्य नित्यत्वात्।
'अधिस्त्रीति'। 'अव्ययीभावश्चे'ति नपुंसकत्वाद्ध्रस्वो नपुंसक इति ह्रस्वः।
'सप्तम्यर्थेऽव्ययमिति,'। विभक्तिवचनतां दर्शयति। 'उपकुम्भमिति'। कुम्भ-
स्योपेति प्रक्रियावाक्यं षष्ठ्यन्तेन समासः। 'दुःशकं दुर्यवनमिति'। मनुष्य-
जातिवचनौ शकयवनशब्दौ, किमर्थं पुनर्वृद्धिग्रहणमर्थाभाव इत्येव सिद्धं.

( अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु । २। १। ६। )

( अ. २ । पा. १ । आ. २ )

उत्तरपदार्थावच्छिन्ना इति । (कै)

द्योतकत्वपक्षे तु द्योत्यार्थस्य समभिव्याहृतार्थविशेषणत्वमेवेति भावः ॥ तदाह

---

इति रूपम् । अत्र निद्राकर्तृकवर्तमानयुक्तत्वाभाव इति बोधः । अतः सम्प्रति न युज्यते इत्यर्थः । अतिनिद्रमासीदित्यादौ तथा

---

"अधिकरणे" इत्येव सूचितम् । पाणिनिस्तु मात्रालाघवमभिप्रेत्य विभक्तिशब्दं प्रायुङ्क्त । निपातेनाभिहितत्वात् प्रथमान्तेनैवायं समासः षष्ठ्यन्तेन वेत्यपि मतद्वयं परिशिष्टे स्थितम् । तदपि विभक्तिग्रहणे अधिकरणग्रहणे चाविशिष्टम् । समीपे, कृष्णस्य समीपमुपकृष्णम् । अव्ययीभाव इत्यन्वर्थसंज्ञाश्रयणादसत्त्वरूपाव्ययार्थप्राधान्य एवायं समासः । समीपवर्तिप्राधान्ये तु बहुव्रीहिं वक्ष्यति "संख्ययाव्ययासन्नेति" (२ । २ । २५ )। उपदशा इति यथा । ननु समया ग्रामं निकषा लङ्कां आराद्वनादित्यादावपि प्रसङ्ग इति चेत् । अत्राहुः हरिदत्तः । अभितः परितः समयानिकषान्यारादिति द्वितीयापञ्चम्योर्विधानसामर्थ्यान्नाव्ययीभाव इति । यत्तूक्तं दुर्घटवृत्तौ । चित्रस्य ग्रामं सम-

---

न सिद्ध्यति, येन समस्यते तदर्थस्याभावोर्थाभावः, न चात्र शकानामभावः किं तर्हि तदीयाया ऋद्धेः, अर्थाभाव इत्यर्थग्रहणं यत्र धर्मिस्वरूपस्यैवाभावस्तत्र यथा स्यात् धर्ममात्रप्रतिषेधे मा भूत्, तद्यथा ब्राह्मणेन ब्राह्मण्यामुत्पादितत्वेन कस्य चिद्ब्राह्मणत्वं प्रसज्य प्रतिषेधति नायं ब्राह्मणो यत्किञ्चित्सूचयति, इतरेतराभावे च मा भूत् गौरश्वो न भवतीति अत्रापि

(अ. २ । पा. १ । आ. २) (अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्था-भावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाक-ल्यान्तवचनेषु । २ । १ । ६ । )

## समृध्यादीनां वाचकमिति । (कै)

निपातानां द्योतकत्वं वाचकत्वं च लक्ष्यानुरोधाद्व्यवस्थेति भावः ॥

---

व्यवहारविषये लक्षणा । इति हरि । हरिशब्दः शब्दस्वरूपपरः । इतिः प्रकाशवाची । हरिशब्दप्रकाश इति बोधः । रूपस्य योग्यमनु-

---

येत्यादौ सापेक्षत्वादसमासे चारितार्थ्याद्विभक्तिविधानस्य सामर्थ्यं नास्तीति । तन्न । समासस्य नित्यतया वृत्तस्य विशेषणायोगो नेत्यस्यैव प्रवृत्त्यापत्तेः । अन्यथा स्थूलस्य कुम्भस्य कार इत्याद्यपि स्यात् । समृद्धौ तु मद्राणां समृद्धिः सुमद्रम् । उत्तरपदार्थप्राधान्ये तु कुमतीति तत्पुषः । समृद्धा मद्राः सुमद्रा इति यथा । वृद्धौ दुर्यवनम् । न चार्थाभावेनेह सिद्धिः । येन समस्यते तदीयार्थाभावे हि समासः । इह तु यवनानां नाभावः किं तु तदीयाया वृद्धेः । अर्थाभावे, निर्मक्षिकं अविघ्नम् । संसर्गाभावेऽयं समासः न त्वन्योऽन्याभावेऽपि । अर्थग्रहणसामर्थ्येन समस्यमानपदजन्यप्र-तीतिविशेष्यविरोधिन एवाभावस्य ग्रहणात् । अन्योऽन्याभास्य प्रातियो-गिता वच्छेदकेनैव सह विरोधात् । तस्य च प्रकारत्वेऽप्यविशेष्यत्वात् ।

---

वस्त्वन्तरं प्रतिषिध्यते न धर्मिस्वरूपम्, अतिशीतमित्यर्थाभावः कालान-वच्छिन्नोऽभाव आश्रीयते इह तु संप्रत्यभाव इत्यव्ययस्य भेदेनोपादानम् । 'अतितैसृकमिति' । तिसृका नाम ग्रामः । तिसृभावे संज्ञायां कन्युप-सङ्ख्यानं, तत्र भवं तैसृकमाच्छादनं तच्च कालविशेष उपभोग्यम्, उष्णे शीते वा इतिशब्दो नेदानीमित्यस्यार्थे वर्त्तते, उपभोगक्रिया च इत्तौ

( अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु । २ । १ । ६ । )

( अ. २ । पा. १ । आ. २ )

**वाचक इति । (कै)**

**पुष्पवहित इति । सहार्थविशेष्यकबोधादिति भावः ॥**

---

रूपम् । सहत्वमस्ति । साहित्यं समभिव्याहृतक्रियाकारकवृत्तिसाकल्यं च सहार्थः । तृणसहितं सकलं भोज्यमत्तीति बोधः । तृणसाहित्यं तु समारोपितं प्रतीयते न वास्तवं शब्दशक्तिस्वभावात् । सकलं भोज्य-

---

ये तु वदन्ति । घटः पटो नेत्यत्रापि पटत्वात्यन्ताभाव एवार्थः । आकृत्यधिकरणन्यायेन जातेः पदार्थत्वादिति तेषामपि मते ऽर्थग्रहणसामर्थ्यादेवाच्छिन्नधर्म्यभावेऽयं समासो न तु धर्माभाव इति फलं तुल्यमेव । एष एवाचत्यहरदत्तग्रन्थस्याप्याशयः । एतेन भूतले घटो नेत्यत्र घटाभावं व्याचक्षाणाः परास्ताः । नित्यसमासप्रसक्त्या ऽसाधुतापत्तेः । कारकविभक्तेरयोगाच्च । अत एव सिद्धान्ते क्रियाध्याहारेण कारकविशिष्टक्रियाप्रतीतौ तस्या एव निषेधः शब्दः भूतलाधारकघटाद्यभाव एवार्थः । गौरवं च प्रामाणिकं व्यधिकरणधर्मावच्छिन्नप्रतियोगिकाभावस्यायम् । अत एव शशशृङ्गं नास्तीत्यत्रापि शब्दसाधुतार्थसाधुता चेष्यत एव । शशशृङ्गास्तित्वस्य शब्दबलात्प्रतीतं निषिध्यते । अत्यन्तासत्यपि ज्ञानमर्थे

---

स्वभावादेवान्तर्भवति यथा दध्युपसिक्त ओदनो दध्योदन इति तद्द्वारेण पूर्वोत्तरपदयोः सामर्थ्यं नेदानीमुपभोगार्हं तैसृकमाच्छादनमित्यर्थः । आच्छादनापेक्षस्यापि तैसृकशब्दस्य गमकत्वात्समासः, नात्र तैसृकस्य कालानवच्छिन्नोभावो नापि संप्रति तस्याभावः किं तर्हि तदुपभोगस्येत्यर्था-भावादत्ययाच्चासंप्रति भिद्यते । 'तत्पाणिनीति' । तच्छब्दो निपातोप्यस्ति ।

( अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु । २ । १ । ६ । )

## न तु साकल्यस्येति । (कै)

“सतृणमत्ती”त्यादौ तु तुल्ययोगस्य बाधेन झटिति प्रथममेव सकलमत्तीति बोधात् साकल्यबोधकता सहशब्दस्येति भावः ॥

---

भोजनप्रतिपादने एव तात्पर्याच्च । सूत्रे साकल्येति प्रवृत्तिनिमित्तनिर्देशः । एवं सादृश्य पदेऽपि । सामि अधीते । अभिप्रायसहितं

---

शब्दः करोति हीत्यभ्युपगमात् । अयोग्यतानिश्चयस्तु न प्रतिबन्धकः । अन्यथा वह्न्यमति शब्दो मूक एव स्यात्प्रतिवादिनः शब्दाद्वाक्यार्थाप्रतीतौ तत्खण्डनकथाप्युच्छिद्येत । आहार्यः शब्दो बोध इति वास्तु । एतेन “नैनं छिन्दन्ति शस्त्राणि नैनं दहति पावकः । न चैनं क्लेदयन्त्यापो न शोषयति मारुत” ( भगवद्गी ) इत्यादि व्याख्यातम् । अन्यथा आत्मकर्मकच्छेददाहक्लेदशोषाप्रसिद्ध्यापार्थतापत्तेरिति दिक् । अत्ययो, हिमस्यात्ययः अतिहिमम् । अत्ययो ध्वंसः । ध्वंसत्वं चाभावत्वव्याप्यमखण्डमेवेत्यर्थाभावात्पृथगुपादानम् । संप्रतीत्यव्ययं अधिकरणशक्तिप्रधानम् । तथा चोक्तममरेण, “एतर्हिसंप्रतीदानीमधुना साम्प्रतं तथेति” ॥ न तु अधिकरणकारकाच्छिन्ना युज्यत इत्येषा क्रिया निषिध्यते निद्रा इदानीं न युज्यते इत्यति-

---

'प्रत्यर्थमिति' । अर्थमर्थं प्रतीति वाक्यमप्यत्र भवति भाष्यप्रयोगात्, यदि वा नाव्ययं वीप्सायामस्ति किं तर्हि कर्मप्रवचनीयत्वात्सम्बन्धमवच्छिनत्ति वीप्सा तु द्विर्वचनद्योत्या, अनुपूर्वस्य भाव आनुपूर्व्यं ब्राह्मणादित्वात्ष्यञ्, ष्यञः षित्करणात्स्त्रियामपि भवति तस्य प्रयोगः, एवं ज्येष्ठानुपूर्व्येति । 'सचक्रमिति' । सहशब्दस्य समासः, 'अव्ययीभावे चाकाले' इति सभावः, एव-

( अव्ययं विभक्तिसमीपसमृद्धिव्यृद्ध्यर्थाभावात्ययासंप्रतिशब्दप्रादुर्भावपश्चाद्यथानुपूर्व्ययौगपद्यसादृश्यसंपत्तिसाकल्यान्तवचनेषु । २ । १ । ६ । )

( अ. २ । पा. १ । आ. २ )

"अपदिशमि"त्यादीन्यखण्डान्येवाव्ययानि दिशोर्मध्यादिवाचकानीत्याशयेन भगवता योगविभागो नाकारि ॥

---

तदन्तग्रन्थकर्मकमध्ययनमितिबोधः । यावत् श्लोकमच्युतप्रणामाः । परिमाणपरिच्छिन्नत्वं यावदर्थः श्लोकपरिमाणसंख्या परिच्छिन्नाःप्रणामा

---

निदम् । वृत्तौ तु अतितैलकमाच्छादनमित्युदाहृतम् । तिलका नाम ग्रामः । "तिलभवि संज्ञायां कन्युपसंख्यानम्" (वा) । तत्र भवं तैलकमाच्छादनम् । तच्च विशिष्टकाले उपभोग्यम् । उष्णे शीते वा । तथा च नेदानीमुपभोगार्थे तैलकमाच्छादनमित्यर्थः । इह वृत्तावुपभोगक्रिया अन्तर्भूता दध्युपसिक्त ओदनो दध्योदन इत्यत्रोपसेको यथा । आच्छादनापेक्षयापि तैलकशब्दस्य गमकत्वात्समास इति हरदत्तः । शब्दप्रादुर्भावे इति हरि । इति शब्दः स्वरूपपरः । तस्य प्रकाश इति षष्ठ्यन्तेन विग्रहः । पश्चादर्थे अनुरथम् । रथानां पश्चादित्यर्थः । वृद्धिशब्दस्याच्चाचतरस्यापूर्वनिपातेनास्यानित्यत्वज्ञापनादिह वाक्यस्य साधुतेत्याहुः । समीपादिवृत्तिभिरतद्धितान्तैः साहचर्यात्तथाविधस्यैवेह ग्रहणम् । ततः पश्चात्संस्यते

---

मुत्तरेष्वप्युदाहरणेषु । 'गुणभूतेपीत्यादि' । यदि सादृश्य इति नोच्येत पूर्वपदार्थप्रधानोव्ययीभाव इति यदा सादृश्यं विशेष्यत्वात्प्रधानं तदैव स्यात् सादृश्यं किख्येति, गुणभूते न स्यात् । 'सदृशः किख्येति' सादृश्यवतः प्राधान्यदर्शनेन सादृश्यस्य गुणभावं दर्शयति । 'सकिखीति' । पूर्ववद्धस्वः, अपचितपरिमाणः श्रगालः किखी, अप्रसिद्धोदाहरणं चिरन्तनप्रयोगात् । सम्पत्ति-

---

इति बोधः । एकपरि । 'विपरीतकर्त्तनं परेरर्थः । एकहेतुकं विपरीतकर्त्तनं पराजय इति यावत् । सप्तगङ्गमुन्मत्तगङ्गमित्यादौ सप्तगङ्गा समाहार उन्मत्तगङ्गासमानाधिकरणमित्यादिक्रमेण वा बोधः । एतेन पूर्वपदार्थ-

---

ध्वंस्यतेचेति भाष्याच्च । अनेकमन्यपदार्थे (२ । २ । २४) इति सूत्रे सर्वपश्चादितिभाष्यप्रयोगाच्चेति तु तत्त्वम् । योग्यतावीप्सापदार्थानतिवृत्तिसादृश्यानि यथार्थाः । अनुरूपम् । रूपस्य योग्यमित्यर्थः । वीप्सायां, प्रत्यर्थम् । अर्थमर्थं प्रतीत्यर्थः । इह वाक्यमपि साधु । न ह्यत्राव्ययं वीप्सावृत्ति । किंतु कर्मप्रवचनीयत्वात्सम्बन्धमवच्छिनत्ति वीप्सा तु द्विर्वचनेन प्रोक्ता । यद्वा । प्रतिशब्दस्य वीप्सार्थे कर्मप्रवचनीयसंज्ञाविधानसामर्थ्यात्तद्योगे द्वितीयागर्भं वाक्यमपि भविष्यति । यथाशक्ति । शक्तिमनतिक्रम्येत्यर्थः । हरेः सादृश्यं सहरि । अनुपूर्वस्याभाव आनुपूर्व्यम् । ब्राह्मणादित्वात् ष्यञ् । ष्यञः षित्करणात् स्त्रियामपि प्रयुज्यते । अनुज्येष्ठं ज्येष्ठानुपूर्व्येणेत्यर्थः । यौगपद्ये सचक्रम् । सहशब्दस्य समासः । अव्ययीभावे चाकाले (६ । ३ । ८१) इति सभावः । एवमग्रेऽपि । सादृश्ये, सदृशः सख्या ससखि । वृत्तौ तु सकिखीत्युदाहृतम् । अपचितपरिमाणा शृगाली किखी । यथार्थत्वेनैव सिद्धे पुनः सादृश्यग्रहणं गुणभूतेऽपि सादृश्ये यथा स्यादित्येवमर्थम् ।

---

शब्दस्य समृद्धौ रूढत्वात्पुनरुपादानं व्यर्थमित्याशङ्क्याह । 'सम्पत्तिरनुरूप आत्मभाव इति' । 'सब्रह्म बाभ्रवाणामिति' । तेषामनुरूपो ब्रह्मभाव इत्यर्थः । 'सतृणमिति' । न चात्र तृणभक्षणं वास्तवमित्याह । 'न किंचिदिति' । तृणभक्षणमधिकोऽर्थस्तद्वचनेन किंचिदभ्यवहार्यं न परित्यजतीत्ययमर्थः प्रतिपाद्यते तृणानि भक्षयन्कथमन्यत्परित्यजेदिति । 'परिग्रहा-

# यथाऽसादृश्ये। २। १। ७॥

यथाशब्दः सुबन्तेन समस्यते सादृश्ये द्योत्ये नेति सूत्रार्थः। यथाशक्तीत्याद्युदाहरणं यथार्थत्वेन तु न सिद्धिः सूत्रगृहीताव्ययेन तेन समासाभावात्। अतः पृच्छति

प्रधानत्वाव्ययीभावलक्षणमित्यपास्तम्। उन्मत्तगङ्गमित्यादावव्याप्तेः। औत्सर्गिकत्वङ्गीक्रियत एव॥

सदृशः सख्या ससखीत्यत्र हि सादृश्यवतः प्राधान्यम्। तेनाव्ययार्थप्राधान्याभावात्सम्द्रा मद्राः सुमद्रा इत्यत्रेवाव्ययीभावो न स्यात्। संपत्तिरनुरूप आत्मभावः। स ब्रह्मगर्गाणां तेषामनुरूपो ब्रह्मभाव इत्यर्थः। साकल्ये, सतृणमभ्यवहरति। न किञ्चित्परित्यजतीत्यर्थः। न त्वत्र तृणभक्षणे तात्पर्यम्। अन्तवचने, साग्न्यधीते। अग्न्यादयः शब्दास्तदर्थे ग्रन्थे वर्तन्ते। तदानीं परिगृहीतस्य प्रदेशस्याग्न्यादिरन्तो न तु ततः परेणाध्ययनं नास्तीति। अतः साकल्यात्पृथगन्तग्रहणम्। अग्नेरन्तत्वमिति षष्ठ्यन्तेनासपदविग्रहः। इह वचनशब्दोतिरिच्यते। तेन द्वन्द्वसाकल्यात्पृथगन्तग्रहणमाश्रित्य योगविभागफलीभूतमपदिशमित्यादि सुसाधमिति तु निष्कर्षः॥

पेक्षयेति'। इदानीमेतावान्प्रदेशोध्येतव्य इति यावतः प्रदेशस्य परिग्रहस्तदपेक्षया समाप्तिरन्तः स चासकलेप्यध्ययने भवतीति भावः। 'साग्नीति'। अग्न्यादयः शब्दास्तदर्थे ग्रन्था वर्त्तन्ते तदानीं परिगृहीतस्य प्रदेशस्याग्न्यादिरन्तो न तु ततः परेणाध्ययनं नास्ति ततश्च न साकल्यमित्याह। 'इयमिति'॥

असादृश्य इति किमर्थमिति। (भा)

अत एव सूत्रं किमर्थमिति न प्रश्नः। पूर्वसूत्रे यथाग्रहणं तदर्थार्थकान्वादिभिः समासार्थम्॥

सापेक्षत्वादिति। (कै)

उपमानत्वेन बुद्धस्योपमेये साकाङ्क्षत्वादिति भावः॥

वृत्तिरिति। (कै)

शक्तिरित्यर्थः। एवं च उदाहरणाप्रसिद्धिरिति भावः॥

पूर्वप्राप्नोति। (कै)

अनन्तरत्वात्। एवं च पूर्वेण तत्र समासो दुर्वार इति व्यावर्त्याप्रसिद्धिरिति भावः॥

समुदायस्य चेति। (कै)

यद्धर्मवान्देवदत्त इत्यर्थकस्य यथा देवदत्त इति समुदायस्येत्यर्थः। ये तु देवदत्तसादृश्यवान्यज्ञदत्त इति बोधं वदन्ति तेषां प्रधानस्य सदृशस्य सापेक्षत्वादित्येवालं समुदायस्येत्युक्तं वैयर्थ्यं मम तु केवलप्रधानार्थस्यासापेक्षत्वात्तथोक्तिः॥

नित्यसापेक्षत्वादिति। (कै)

प्रधानस्योपमानस्य सापेक्षत्वान्नित्यसापेक्षत्वाच्चेत्यर्थः। नित्यसापेक्षं सर्वं समस्यत इति भाष्ये क्वास्तीति चिन्त्यम्। देवदत्तस्य गुरुकुलमित्यादिषु गमकत्वाद्वृत्तिः किमोदनः शालीनामित्यादीनामिवेत्येव समर्थसूत्रे भाष्ये उक्तं तत्र यथाशब्द उपमानत्वं-

द्योतयतीत्यभियुक्तोक्तेस्तस्य विशेषणत्वेन पूर्वपदार्थप्राधान्याभावेऽपि दिशुनीत्यादिवत्समासप्राप्तिः तदभावे प्रसिद्धत्वादस्यैव ग्रहणं स्यादिति तात्पर्यम् ॥

## सादृश्यार्थकत्वादिति । (कै)

सादृश्यप्रयोजकभेदकधर्मार्थकत्वादिति भावः ॥ अत एव थाल्विधायके वृत्तावुक्तं सामान्यस्य भेदको विशेषः प्रकार इति वचनपदस्वारस्यात्तु तद्वाचकता । एवं च यथा देवदत्त इत्यादौ यद्धर्मवान्देवदत्तस्तद्धर्मवान्यज्ञदत्त इति बोधे यत्तद्भ्यान्तस्य धर्मस्यैक्येऽवगते उपमानोपमेयत्वस्यावगतिरिति सादृश्ये वर्त्तत इत्यस्य उपमानोपमेयत्वद्योतक इत्यर्थः । ईदृशसादृश्यद्योतकस्यापि ग्रहणेऽसादृश्ये इति प्रतिषेध एव मानमिति बोध्यम् । सादृश्यस्य थाप्रत्ययवाच्यत्वे तु यत्सदृशो देवदत्तस्तत्सदृशो यज्ञदत्त इत्येव बोधः स्यात् न तु देवदत्तयज्ञदत्तयोः सादृश्य बोध इति दिक् ॥

## सादृश्ये वृत्तिरिति । (कै)

सादृश्ये एव वृत्तिरित्यर्थः । एवं च सूत्रं व्यर्थमिति भावः ॥

## अर्थवत्सूत्रारम्भादिति । (कै)

बहुपटव इत्याद्यर्थं बहुच्पूर्व इत्येव कर्त्तव्यमिति भावः ॥ कृद्ग्रहणे गतिकारकपूर्वस्य ग्रहणमिति तु ज्ञापकसिद्धस्यासार्वत्रिकत्वाभेत्याशयः ॥ भाष्ये

## इदम् (भा)

इत्यस्य एतत्सूत्रीयमिति वाच्योऽर्थः ॥ तद् ध्वनयन् व्याचष्टे ।

सूत्रेऽस्मिन्निति। (भा)

इदमुपलक्षणं यथाशक्तीति प्रयोगे चेत्यप्यर्थः ॥ तत्र यथाश-क्तीति प्रयोगे सादृश्यवाचिन एव ग्रहणं कुतो नेति शङ्कते ।

अथ य इति। (कै)

तस्य तदन्तस्य सादृश्यं तस्य वाच्यमेवास्तु शक्तिसादृश्यमित्या-दिरेवार्थोऽस्तु एतत्सूत्रं च मास्तु इति भावः । अव्युत्पन्नशब्दसत्वे मानमपश्यतोऽर्थघटितं साधुत्वमित्यजानतश्च शङ्केयम् । प्रकृतसूत्रे प्रकारवचनथालं तस्य ग्रहणमिति न शङ्कार्थः । असादृश्य इत्यस्य सूत्रे श्रवणात् पूर्वेण प्राप्नोति सामर्थ्यमित्यस्यासङ्गतेश्च ॥ नन्वेवं समासो न स्यादत आह

पूर्वेणेति॥ (वा)

सादृश्यसम्पत्तीति। (कै)

यथार्थत्वेन तु न प्राप्तिरुक्ता सूत्रगृहीतार्थ्येन तेन समासा-भावात् । अत एव पश्चाच्छब्देन न तेन सूत्रेण समासः ॥ उत्तर-माह

प्रतिषेधेति। (कै)

प्रतिषेधयुक्तसूत्रारम्भेत्यर्थः। एतदर्थमेव सूत्रमावश्यकं यथार्थे यदव्ययमिति कैयटस्तु चिन्त्यः । तेनात्राप्राप्तेरुक्तत्वात् । उपक्रमभा-ष्यतस्तथैव लाभात् ॥

---

# सप्प्रतिना मात्रार्थे ।२।१।९॥

नन्वव्ययग्रहणं यावदवधारणे इत्यत्रैव निवृत्तमयोग्यत्वादिति चेदेत्याह

यावदिति । (कै)

यावदमत्रं ब्राह्मणानामन्त्रयस्वेत्युदाहरणम् ॥ ननु प्रतिना समासयोग्यमात्रावदर्थाव्ययाभावादेव तन्निवृत्तिर्भविष्यतीत्यत आह

स्वरादीनां चेति ॥ (कै)

मात्रावतीति । (कै)

तथा च दिवादोषादिभिरव्ययैरेव प्रतिना समासः स्यादित्यर्थः ॥

---

# अक्षशलाकासंख्याः परिणा ।२।१।१०॥

विभक्त्यन्तरनिरासार्थमिति । (कै)

विभक्त्यन्तरभ्रमनिरासार्थमित्यर्थः ॥

कर्तृत्वादिति । (कै)

वर्तनक्रिया च वृत्तावन्तर्भूता गुडधाना इत्यादौ मिश्रणक्रियावदिति भावः ॥

पूर्ववृत्तस्येत्यर्थ इति । (कै)

पूर्ववृत्तस्य जयस्य सम्बन्धि यथा वर्त्तनमभूत् सम्प्रति चेत्तद्वर्तनं तथा न भवति तदा समास इत्यर्थः ॥

पूर्वोक्तस्य । (कै)

यथेति भाष्यस्येति भावः ।

पचिरिहेति । (भा)

एतद्भाष्यप्रयोगे इत्यर्थः ॥

तदेव । (भा)

वर्त्तनमेव ॥ तस्यैव फलितार्थमाह भाष्ये

अयथाद्योतनेति । (भा)

अयथाशब्दो वैपरीत्ये विपरीतत्वद्योतने इत्यर्थः ॥ पराजयद्योतने इति यावत् ॥

पराजय इति । (कै)

पञ्चानां मध्ये एकेन विपरीतवर्तने ऽयं प्रयोगः । तदा च पराजय एव भवतीत्याशयः ॥ तदेतद् ध्वनयन्नच्यति ।

पञ्चिकानामद्यूतमिति । (कै)

तद्विषय एव चायं प्रयोग इष्यते । यद्यपि द्वयोस्त्रयाणामन्यथापातेऽपि पराजय एव तथापि तत्र नेष्यतेऽत आह भाष्ये

१एकवचनान्तयोरिति ॥ (भा)

---

१ अक्षादयस्तृतीयान्ताः पूर्वोक्तस्य यथा न तत् ।
कितवव्यवहारे च एकत्वे ऽक्षशलाकयोः ॥

**न्यायप्राप्तमेतदिति । (कै)**

वस्तुतस्तु भवद्भिरामवसरप्रदानाय वचांसि नः । वध्वोरगारं वध्वगारमित्यादाविव प्रकरणादिनाचलेनैवानेकार्थावगमे समासवारणाय अचलेनैकार्थबोधे एव च साधुत्वाय वचनमावश्यकम् ।

**अभेदैकत्वेति । (कै)**

अस्यार्थः प्रागुक्तः ॥

---

# विभाषापपरिबहिरञ्चवः पञ्चम्या ।
## २ । १ । ११-१२ ॥

---

कर्मप्रवचनीययोरपि अपपर्योः सम्भवाल्लक्षणादौ कर्मप्रवचनीययोरपञ्चम्यन्तेनापि समासप्रसङ्गाच्चाह

**वर्जनार्थाविति ॥ (कै)**

**उपसंख्यानमिति । (कै)**

तच्च बहिर्ग्रामादित्यादिसिद्धये तवाप्यावश्यकमिति भावः ॥

**विहितेति । (कै)**

कर्त्तव्येति शेषः । अन्यथास्योपसंख्यानस्य खपुष्पायमाणत्वादेवं सिद्धवदुक्तिरसङ्गता स्यात् । अत एव भाष्यकारोऽपि

[1]बहिः शब्देन पञ्चमी न विधीयते (कै)

इत्याह ॥ नन्वंचूत्तरपदाद्यदा प्रथमान्तादस्ताति विधायास्ते-र्लुगिति लुक् तदा प्रथमान्तेनापि समानाधिकरणेन तस्य समासः प्राप्नोतीत्यत आह

प्राग्ग्राम इति ॥ (कै)

अपपर्योरेव कर्मप्रवचनीयत्वाद्बहुवचनानुपपत्तेराह

वक्ष्यमाणेति ॥ (कै)

भाष्ये "एतैश्च कर्मप्रवचनीयैरि"त्यत्र छत्रिणो यान्तीतिवल्लक्ष-णया अञ्चुरपि गृह्यते । अत एव बहुवचनोपपत्तिरित्येके ॥

बहिर्गतो ग्रामादिति । (कै)

ग्रामाद्यो गतः स बहिर्वर्त्तत इत्यर्थः ॥

उपसंख्यानं न कर्त्तव्यमिति । (कै)

अपूर्वं न कर्त्तव्यमित्यर्थः ॥

---

# आङ्मर्य्यादाभिविध्योः ।२।१।१३॥

एतयोश्चैवार्थयोरिति । (कै)

"अपपरीति" सूत्रे एव चाङ् पठनीय इति भावः ॥

---

१ बहिः शब्देन योगे पञ्चमी न विधीयते । भा । क ॥

# यस्य चायामः । २ । १ । १६ ॥

भाष्ये

न पुनर्वाराणस्येति (भा)

"न पुनर्हास्ति न पुरेणेति" पाठान्तरम् । यत्सम्बन्ध्यायामबोधको ऽनुः स तेन सुबन्तेनोपस्थितत्वात् षष्ठ्यन्तेन समस्यत इत्यर्थे गङ्गाया आयाम इत्यर्थे ऽयं समासः स्यात् । वाराणसीशब्देन च तदायामो लक्ष्यः । मुख्यार्थेनान्वयबाधात् । एवं च गङ्गायामसदृशो वाराणस्यायाम इति बोध इति वाच्यम् । एवं च वाराणसीशब्देन मुख्यार्थेनानुना समासोऽस्तु गङ्गाशब्द एव लक्षणयायामे वर्ततां एवं च प्रागुक्त एवार्थे ऽनुवाराणसि गङ्गेति स्यादिति भावः ॥ भाष्ये

तत्र प्रकर्षगतिरिति । (भा)

शब्दशक्तिस्वाभाव्यात् उपमानवाचकेनैवायं समास इति भावः ॥

# तिष्ठद्गुप्रभृतीनि च।२।१।१७॥

**शब्दान्तरेणैकार्थीभावमिति।** (कै)

*प्रकरणादेकार्थीभावविषयं समासमित्यर्थः॥ तद्ध्वनयन्नाह भाष्ये*

**परमन्तिष्ठद्गिविति।** (भा)

**ध्वनितं चेदं वृत्तौ। "आतिष्ठद्गुजपत्सन्ध्यामिति" तु भिन्नपदमेव पञ्चम्याश्च "अव्ययाद्" (२।४।८२) इति लुगिति बोध्यम्॥**

---

तिष्ठद्गुप्रभृतीनि च॥ एतानि निपात्यन्ते। तिष्ठन्ति गावो यस्मिन् कालविशेषे स तिष्ठद्गु दोहनकालः। चकार एवकारार्थे। तेनैषां वृत्यन्तरं न भवति। परमतिष्ठद्गु इत्यादि न भवतीत्यर्थः। कथं तर्हि "आतिष्ठद्गुजपन् सन्ध्यां पश्चिमामायतीगवमिति" भट्टिरिति चेत्, अव्ययीभावविलक्षणं समासान्तरं व्यावर्त्यते। 'आङ्मर्यादाभिविध्योरि'तीहाव्ययीभावस्तु भवत्येवेति जयमङ्गला। इदं चायतीगवमित्येतदनुरोधेनावश्यं वाच्यम्। अतिष्ठद्गु इत्यत्र तु पृथक्पदत्वं पञ्चम्याश्च लुगित्यपि सुवचम्।

---

"तिष्ठद्गुप्रभृतीनि च"॥ 'समुदाया एव निपात्यन्त इति'। गणे तथा पाठ एव तेषां निपातनं, तेन प्रत्ययानन्तरादपि भवति "सुपो धातुप्रातिपदिकयोरि"ति च प्रक्रियाकार्यं न कर्त्तव्यमिति भावः। 'अव्ययीभावसंज्ञानि भवन्तीति'। समाससंज्ञापि विधेया अन्तोदात्तत्वं च। 'प्रातिपदिकसंज्ञा च यथा स्यादिति'। 'तिष्ठद्गु कालविशेष इति'। कालविशेष इत्येतदुत्तरैरपि सम्बध्यते, अत एवान्ते वक्ष्यति एते कालशब्दा इति, एतावान्कालविशेष इत्यस्याधिकार इत्यर्थः। 'विभक्त्यन्तरेण न सम्बध्यन्त इति'। अव्यतिरिक्त एव प्रातिपदिकार्थे प्रयोग एषां कर्त्तव्यो नान्यत्रेत्यर्थः।

तिष्ठद्गुकालविशेषे (वा)

इत्युक्तत्वादव्ययत्वमत आह

अस्य कालविशेषे इति । (कै)

वार्त्तिकमुपलक्षणमिति भावः । कालेऽन्यपदार्थे समासः ॥ ननु व्यतिरिक्ते प्रातिपदिकार्थे कथं प्रथमान्तान्येव प्रयोक्ष्यामीत्यत आह

---

"नाव्ययीभावादत" इति निषेधादमूलपञ्चम्या इत्युक्तेस्थायतीगवादिति केचित्तेठुः । खलेपवादीनि प्रथमान्तानि । प्रातिपदिकार्थमात्रे एषां प्रयोगो नान्यत्रेत्यर्थः । तिष्ठद्गु वहद्गु । एत्वादेशो निपातनात् । "गोस्त्रियोरि"ति ह्रस्वः । आयतीगवम् । इह एत्वादेशः पुंवद्भावाभावः समासान्तश्च निपात्यते । खलेयवं खलेबुसम् । सप्तम्या अलुक् । लूनं यवम् ॥ लूयमानयवम् । लूयमानबुसम् । संक्रियमाणबुसम् । एते कालशब्दाः । समभूमि समपदाति । समत्वं भूमेरिति पूर्वपदार्थप्राधान्ये ऽव्ययीभावः । समम्भूमि सम-म्पदातीति पाठान्तरम् । तत्र पूर्वपदस्य मुमागमः । सम्भूमि संपदातीत्यपरः पाठः । तत्र समस्यान्तलोपः । संशब्देन वा समासः । सुषमं विषमं

---

'अन्यपदार्थे च वर्त्तन्त इति' । तिष्ठद्गु वहद्गु आयतीगवमित्येतैरप्यस्य सम्बन्धः, अन्यथा कालशब्दत्वायोगात् । 'चकारोऽवधारणार्थ इति' । अनेकार्थत्वान्निपातानाम् । 'अपरः समासो न भवतीति' । वृत्त्यन्तरं न भवतीत्यर्थ इति' । आतिष्ठद्गु जपन्सन्ध्यामिति तु पञ्चम्या "अव्ययादिति" लुङ् न समासः । 'तिष्ठद्गु वहद्गुविति' । कटः एत्वादेशो निपातनात् "गोस्त्रियोरिति" ह्रस्वः, आयतीगवमित्यत्र तु पुंवद्भावाभावः एत्वादेशः समासान्तश्च, खलेयवं खलेबुसमिति सप्तम्या अलुक् लूयमानयवादिषु शानजादेशः । 'समभूमि समपदातीति' । समत्वं भूमेरिति पूर्वपदार्थप्राधान्येऽव्ययीभावः । क्वचित्समं भूमि समं पदातीति पाठः तत्र पूर्वपदस्य मुमागमः । अन्ये तु

**अव्यतिरिक्त एवेति। (कै)**

भेदान्यथायोग्य इत्यर्थः॥ खलेयवादीन्यन्यपदार्थे समस्यन्ते तानि च समस्तानि प्रथमान्तान्येव प्रयोक्तव्यानीत्यर्थो वार्त्तिकस्येति बोध्यम्॥ ननु तिष्ठद्ग्वादीनामपि कालरूपान्यपदार्थ एव वृत्तेः किं विशेषोऽस्त्यत आह

**न काल एवापित्विति। (कै)**

स्वाम्यादावपीत्यर्थः॥

---

दुःसमं निःसमम्। अपसमम्। इह समस्य शोभनत्वं विगतत्वं निर्गतत्वमपगतत्वं चेति विग्रहः। आयतीसमा आयतीसमम्। प्रत्यादेशः पूर्ववत्। पुंवद्भावाभावश्च। समा संवत्सरः। एवं पापसमम्। पुण्यसमम्। प्राह्णम्। प्रथम्। प्रमृगम्। प्रदक्षिणम्। एषु चतुर्षु प्रगतत्वमह्न इत्यादिविग्रहः। सङ्गतत्वं प्रति गतस्य सम्प्रति विपरीतमसम्प्रति। इच् कर्मव्यतिहारे। दण्डादण्डि। अयमेव द्विदण्ड्यादिष्वपि विधीयत इति तत्राप्यव्ययीभावत्वं बोध्यम्॥

---

संभूमि सम्पदातीति पठन्ति तत्र समस्यान्तलोपः संशब्दस्य वा समासः। सुषमादौ शोभनत्वं समस्य विगतत्वं दुष्टत्वं निर्गतत्वमपगतत्वं समस्येति विग्रहः, आयतीसमा आयतीसमं, प्रत्यादेशः पूर्ववत् पुंवद्भावश्च, समा संवत्सरः। एवं पापसमं पुण्यसममिति, प्राह्णादिषु चतुर्षु प्रगतत्वमह्न इत्यादिविग्रहः, तद्गतं प्रतिगतस्य सम्प्रति विपरीतमसम्प्रति। 'इच् कर्मव्यतिहारे इति'। अयमेव द्विदण्ड्यादिष्वपि विधीयत इति तत्राप्यव्ययीभावः। 'दण्डादण्डीति'। दण्डैश्च दण्डैश्च प्रहृत्येदं युद्धं प्रवृत्तं 'तत्र तेनेदमिति सरूपे' इति बहुव्रीहिः। 'अन्येषामपि दृश्यते' इति पूर्वपदस्य दीर्घः। इच् अव्ययीभावत्वेनाव्ययत्वात्सुपो लुक्॥

# पारे मध्ये षष्ठ्या वा । २ । १ । १८ ॥

स्ववाचेति । (कै)

अल्पनापेक्षया करणे तृतीया सिद्धांती उभयत्रापि स्वपदार्थः पुनर्यदि मां पृच्छति तदा स्वाशयं वक्ष्यामीत्याशयेनेति भावः ॥

विकल्पेन बाधक इति । (कै)

वृत्तिवर्त्तनवादिनां विधेयसंज्ञाविशेषणं विभाषाधिकारः । तत्र यत्र संज्ञान्तरप्राप्तिस्तत्र साप्यनुज्ञायते यत्र न तत्र वाक्यमेवेत्यभिप्रायः ॥

एतस्मादिति । (कै)

एतस्माद् "वा वचनं किमर्थमि"ति पूर्वपक्षादुपरि तदुत्तरकाले तत्समाधानभूतं वार्त्तिकं पठतीत्यर्थः ॥ सूत्रकारेण वाग्रहणस्य कृतत्वाद्भाष्यमित्यसंगतमित्यत आह

---

पारे मध्ये षष्ठ्या वा ॥ पारमध्यशब्दौ षष्ठ्यन्तेन सह वा समस्येते सोऽव्ययीभावः । एदन्तत्वं चानयोर्निपात्यते । पक्षे षष्ठीतत्पुरुषः । महाविभाषया लेकार्थीभावस्य पाक्षिकतामात्रं लभ्यते सति लेकार्थीभावे ऽव्ययी-

---

"पारे मध्ये षष्ठ्या वा" ॥ 'वावचनादिति' । ननु महाविभाषयैवापवादेऽव्ययीभावे विकल्पिते पक्षे षष्ठीसमासोऽपि भविष्यति सोऽपि विकल्पित इति वाक्यमपि भविष्यति । उच्यते, इह वाक्येनाभिधाने प्राप्ते वृत्तिरार-

आवश्यके कृत्य इति ॥ (कै)

समास उच्यते इति। (कै)

एकदेशिनः प्रधाने विधीयमाने एकदेशिघटितसमुदायस्य विधीयमाने समास इत्यर्थ इति भावः ॥ भाष्ये

वृत्तिर्विभाषेति। (भा)

वृत्तिरेकार्थी भावः। अयं भावः। अपपरीत्यादौ समास इति अनुवृत्तं समर्थ इति च परिभाषयोपस्थितं तत्र लोकसिद्धैकार्थीभावः क्वास्ति क्व नेति ज्ञातुमसमर्थानां बालानां स्फुटबोधनाय तत्र तत्र सूत्रे समासादिसंज्ञादिवदेकार्थीभावरूपसामर्थ्यमपि विधेयम्। विभाषाग्रहणं च सामर्थ्येनैव संबध्यते व्याख्यानात्। सामर्थ्ये समासविकल्पानिष्टेस्तु सुबन्तं श्रितादिभिः सहोच्चार्यमाणं वा समर्थं भवति समर्थं च समाससंज्ञं भवतीत्यर्थः। निषेधसूत्रैरपि समासनिषेधे सन्नियोगशिष्टन्यायेन सामर्थ्यनिषेधोऽपि सामर्थ्यस्यैव वा निषेधः। इह पुनर्वावचनं तु सामर्थ्यादेकार्थीभाव एव संज्ञाया विकल्पबोधकमिति ध्वनयन्नाह

---

भावस्तत्पुरुषं बाधेत॥ अतः पाक्षिकं तत्पुरुषं लब्धुमिह पुनर्वाग्रहणम्। व्यपेक्षां सामर्थ्यमेक इति पक्षे तु यत्रोत्सर्गापवादं महाविभाषया विकल्प्यते तत्रापवादेन मुक्ते उत्सर्गो न प्रवर्त्तत इति ज्ञापनायेदम्। एवं उद-

---

भमाया वाक्यस्य बाधिका प्राप्नोतीति विकल्पेन वाक्यमेव पक्षेऽभ्यनुज्ञायते तत्रापवादविकल्पो वाक्यस्यैव प्रापक इत्युत्सर्गस्य नित्यो बाधकः स्याद् वावचनात्सोपि पक्षे ऽभ्यनुज्ञायत इति त्रैरूप्यसिद्धिः, एतदेव वाव-

वृत्तिरारभ्यमाणेति ॥ (कै)

वाक्यस्य । (कै)

वाक्यविषयव्यपेक्षायाः ॥

वृत्तिषु । (कै)

एकार्थीभावविषयेषु ॥

विभाषेति । (कै)

महाविभाषया विकल्पिताविव्यर्थः ॥

न भवतीति । (कै)

महाविभाषाविशेषणीभूतसामर्थ्येनैव संबध्यत इति ज्ञाप्यत इति तात्पर्यम् ॥

सप्तम्यर्थाभावादिति । (कै)

गङ्गायाः पारादिति हि तत्रार्थः ॥

---

ष्वितोन्यतरस्यामित्यपि । तेन पूर्वं कायस्येत्येकदेशिसमासेन युक्ते षष्ठीसमासो न भवति । दक्षस्यापत्यं दाक्षिरितीञा युक्ते ऽण् न भवति किं तूभयत्र वाक्यमेव । एकारान्तत्वनिपातनं तु यत्र सप्तम्यर्थो न सम्भवति तदर्थम् पारेगङ्गान्मध्येगङ्गादानयेति यथा । सप्तम्यर्थसम्भवे तु तत्पुरुषे कृति बहुलमिति बहुलग्रहणादलुक्यपि सिद्धम् ॥

---

एवं ज्ञापकं यत्रोत्सर्गापवादौ महाविभाषया विकल्पितौ तत्रापवादेन मुक्ते उत्सर्गो न भवतीति, तेन पूर्वं कायस्येत्यत्रैकदेशिसमासेन मुक्ते षष्ठीसमासो न भवति, दक्षस्यापत्यं दाक्षिरित्यत्र इञा मुक्तेऽण्न भवति एकारान्तत्वनिपातनं यत्र सप्तम्यर्थो न सम्भवति पारेगङ्गादानयेति तदर्थं सम्भवे तु 'तत्पुरुषे कृति बहुल' मिति बहुलवचनादलुका सिद्धम् ।

# नदीभिश्च ।२।१।२०॥



भाष्ये

अन्यपदार्थे इति। (भा)

समाहारातिरिक्ते इत्यर्थः। तद्ध्वनयन्नाह

द्विगोरिवेति। (कै)

समाहारद्विगोरिवेत्यर्थः। परस्यापि बहुव्रीहेरनवकाशत्वाद्बाध्य-सामान्यचिन्तापक्षे बाधकः स्यादिति भावः॥ ननु पूर्वपदार्थ-प्राधान्ये एवाव्ययीभाव इत्यत्र न मानमत आह

पूर्वाचार्येति॥ (कै)

गुरुसंज्ञया प्रकृतार्थलाभं दर्शयति

---

नदीभिश्च॥ नदीभिः संख्या प्राग्वत्॥ समाहारे चायमिष्यते। सप्तगङ्गम्। द्वियमुनम्। स्वरूपस्य संज्ञा। नद्याश्च नेह ग्रहणम्। बहुवचननिर्देशात्॥

---

"नदीभिश्च"॥ 'नदीवचनैः शब्दैरिति'। नदीभिरिति बहुवचननिर्द-शात्स्वरूपस्य संज्ञा नद्याश्चाग्रहणमिति भावः। 'समाहारे चायमिष्यत इति'। अन्यथा पुरस्तादपवादन्यायेन पूर्वकालैकेत्यस्यायं बाधकः स्यात् समाहारे तु परत्वाद् द्विगुरेव स्यात् ततश्चैकनदीत्वमाव्ययीभावे सति तन्निबन्धनो 'नदीपौर्णमास्याग्रहायणीभ्य' इति टच् प्राप्नोति नपुंसकत्वं च, नद्यश्च विशेषवाचिनामेव ग्रहणमिति प्रमाणमस्ति, यत्तु गोदावर्याश्च

## यदुपाधीनामिति । (कै)

उपाधिश्चात्र तत्तदर्थप्रधानत्वमेव । एवं च तत्कृतमहासंज्ञया-चार्येण व्यवहारात्तदुक्तार्थोऽस्यानुमत इति ज्ञायत इति भावः ॥ समाह्रियमाणार्थः समाहार इति समाहारशब्दः कर्मव्युत्पन्न एवेत्यर्थः ॥

## तदोत्तरपदार्थस्येति ॥ (कै)

ननु परिच्छेदकत्वरूपं विशेषणत्वं परिच्छेद्यत्वरूपं विशेष्यत्वं यद्यपि तत्रायाति तथापि विषयताविशेषरूपं तत्पूर्वपदार्थस्य दुर्लभं गुणद्रव्ययोर्द्रव्यस्यैव विशेष्यत्वात् पूर्वपदार्थप्रधानमित्यादौ च प्राधान्यं विषयताविशेषरूपविशेष्यत्वमेव विवक्षितमन्यत्र सर्वत्र तस्यैव संभवादित्यरुचेराह

## अथवेति । (कै)

इदमपि प्रौढिवादः । पंचनदीसमूहस्य पंचतीर्थ्यंतभेदाभावात्पूर्वपदार्थप्रधानत्वमपि वक्तुं शक्यमत्र तु न तत्संभवोऽपीति भाष्याशय इति तत्त्वम् ॥

---

नद्यास्त्वेतच् समासान्तः स पञ्चनदमित्यादावव्ययीभाव एव भवति, एक-नदीत्यत्र तत्पुरुषे न भवति समाहारविवक्षायां च एकापूपीवदेकनदमित्यपि भवति, तथान्यपदार्थेऽप्यव्ययीभावः स्याद् द्वारावतीको देश इति, । अत्र परत्वाद्बहुव्रीहिः, अशेषत्वात्, नह्यसति समाहारग्रहणेयं शेषं भवति तस्मात्सुष्ठूक्तं समाहारे चायमिष्यत इति, एतच्चाभिधानस्वाभाव्याल्लभ्यते ।

**द्वाभ्यामप्यसाविति।** (कै)

इयमपि रीतिर्द्वियमुनमित्यादौ वक्तुं युक्ता ॥ भाष्ये

**एतद्देवेति।** (भा)

"यद्येतन्नोच्यते" इत्यादिन्यायेन यत्पूर्वपदार्थप्राधान्यमुक्तम् एतद्देव न जानीमः। अत्र न पश्याम इत्यक्षरार्थः ॥ तदेवाह

**समासेनेति॥** (कै)

**दोषवानिति।** (कै)

त्वद्रीत्या चित्रग्वादावपि समस्यमानपदाभ्यामेवार्थप्रतीतेर्वास्तव-बहुव्रीहावप्यन्यपदार्थप्राधान्यं भज्येतेत्यर्थः ॥ भाष्ये

**अन्यपदार्थोऽपि त्विति।** (भा)

विग्रहवाक्येऽन्यपदेन प्रतीयमानस्येह समासेन प्रतीयमानत्वा-दित्यर्थः ॥ सिद्धांत्युक्तिसंभवात्।

**इहापि तर्हीति** (भा)

भाष्ये तर्हिशब्द एवमर्थे। तद् ध्वनयन्नाह

**स एव परस्येति।** (कै)

केचित्तु देशस्यान्यपदार्थत्वेऽपि तद्देशस्वरूपे चीरावतीरूप-स्वपदार्थस्याप्यन्तर्भावात् तत्र च चिपदार्थातिरेकेणान्यपदार्थघटक-तया पूर्वपदार्थस्य समाहारे इव यथाकथंचित्प्रधानत्वमस्त्वात्तदुर्वारो-ऽव्ययीभाव इति भाष्यार्थमाहुः ॥

**शेषग्रहणं चेति।** (कै)

अन्यथा तयोः पदयोरुक्तसमासत्वाद्द्वन्द्वनिर्दिष्टस्यादिति भावः ॥

भाष्ये

भवेदेकसंज्ञाधिकार इति । (भा)

बाध्यविशेषचिन्तायामिति शेषः ॥

परं कार्यत्वे तु न सिध्यतीति । (भा)

तत्र हि पाठे पूर्वयानवकाशतया बोधे प्राप्ते परविधानार्थमिदम् एवं च समाहारेऽपि द्विगुः सामर्थ्याऽव्ययीभावस्येत्येष्टव्यम् । एवं च पुरस्तादपवादन्यायाभावेन द्विगव्ययीभाववदन्यपदार्थविषये बहुव्रीह्यव्ययीभावावपि स्यातामिति भावः ॥ भाष्ये सिद्धान्त्याह

नदीभिः संख्यायाः समाहारे इति । (भा)

“परं कार्यमिति” पाठे द्विगोः परत्वाव्ययीभावप्रकरणं कार्यमित्यर्थः ॥ एवं च द्विगुविषये न दोषः। अन्यपदार्थे तु प्राप्तिरेव नेति भावः ॥

स चावश्यमिति । (भा)

एका संज्ञेति पाठेऽपि समाहार इत्यवश्यं वाच्यमित्यर्थः ॥

भाष्ये तत्फलमाह

सर्वमेकनदीतरे इति । (भा)

तदभावे “पुरस्तादि”तिन्यायेन '“[1]पूर्वकालैकेति बाधित्वाऽव्ययीभावः स्यात् । तथा च तत्प्रयुक्तं सर्वं टच् नपुंसकत्वं चाप

---

[1] अ २ । पा १ । सू ४९ ॥

स्यादिति भावः ॥ "सर्वमेकनदीतरे" इति कस्य चित्पाठस्य शेष इति बोध्यः । तृधातोस्तर इति रूपं तीर इति क्वचित्पाठः ॥

इत्यत्र भवत्येवेति । (कै)

१"नदीपौर्णमासीति" टजिति शेषः ॥

एकापूपीवत् समाहारेति । (कै)

प्रत्यवयवमपूपत्वारोपेणेत्यर्थः ॥

भवतीत्याहुरिति । (कै)

अत्राहुरित्यस्वरसबीजं तदर्थ समाहारविवक्षाया मानाभाव इति ॥

---

इत्यव्ययीभावः ॥

---

# तत्पुरुषः । २ । १ । २२ ॥

---

अधिकारोऽयम् । प्राग्बहुव्रीहेः ॥

---

१ अ २ । पा ७ । सू ११० ॥

तत्पुरुषः ॥ अधिकारोऽयम् । प्राग्बहुव्रीहेः ॥

"तत्पुरुषः" ॥ 'उत्तरपदार्थप्रधान इति' । पूर्वकायोऽर्द्धपिप्पलीत्यादौ त्वधिकारवशात्तत्पुरुष इति संज्ञा ।

# द्विगुश्च । २ । १ । २३ ॥

पाचादित्वादिति । (कै)

वस्तुत उत्तरपदावयवत्वपचो नास्त्येव । "अत" इति सूत्रस्थभाष्यविरोधादिति । समासांत इति शब्देन्दुशेखरे स्पष्टं निरूपितमस्माभिः ॥

---

द्विगुश्च ॥ द्विगुरपि तत्पुरुषसंज्ञः स्यात् । संख्यापूर्वो द्विगुश्चेति चकारपाठमात्रेण संज्ञासमावेशसिद्धेरिदं सूत्रं व्यर्थम् । द्विगोस्तत्पुरुषत्वे टजचौ प्रयोजनम् । पञ्चराजम् । राजाहः सखिभ्य इति टच् । उत्तरपदस्यानकारान्तत्वात् ङीत्वाभावः । समासार्थोत्तरपदान्ताः समासान्ता इति पक्षे तु पाचादित्वं बोध्यम् । वृत्तौ तु पञ्चराजीति क्वाचित्कोऽपपाठः । द्व्यह्नः । अह्नष्टखोरेवेति टिलोपः । रात्राह्नाहाः पुंसि । पञ्चगवम् । गोरतद्धितलुकीति टच् । प्रागवत् ङीत्वाभावः । द्व्यङ्गुलम् । तत्पुरुषस्याङ्गुलेः संख्याव्ययादेरित्यच् ॥

---

"द्विगुश्च" ॥ 'समासान्ता इति' । यद्यपि 'राजाहः सखिभ्यष्टच्' तत्पुरुषस्याङ्गुलेः संख्याव्ययादे'रिति टजचौ तत्पुरुषनिबन्धनौ तथापि प्रकृतिभेदाद्वेरविवक्षायां बहुवचनम् । 'पञ्चराजमिति' । उत्तरपदस्यानकारान्तत्वात्ङीत्वाभावः । समासार्थोत्तरपदस्यान्ताः समासान्ता इति तु पक्षे पाचादित्वात्, क्वचित्पञ्चराजीति ङीविशिष्टस्य पाठः स भाष्यविरोधादपपाठः । 'द्व्यह्न इति' । 'अह्नष्टखोरेवे'ति टिलोपः, 'रात्राह्नाहाः पुंसि' । 'पञ्चगवमिति' । 'गोरतद्धितलुकी'ति टच्, पूर्ववत्ङीत्वाभावः ॥

# द्वितीया श्रितातीतपतितगतात्यस्त-प्राप्तापन्नैः। २। १। २४॥

[1]गमिशब्दो गमेरिनिरित्यौणादिकः॥ [2]गामीति वृद्धिर्बाहु-लकात्॥

अन्येषां चेति। (कै)

[1]समाशंसेत्युप्रत्ययादीनामित्यर्थः॥ ओदनं बुभुक्षुः। ओदन-बुभुक्षुरित्युदाहरणम्॥

---

१ श्रितादिषु गमिगाम्यादीनामुपसंख्यानम्। इति वार्त्तिकस्थो गमिशब्दः॥
२ वार्त्तिकस्थो गामिशब्दः॥ ३ अ ३। पा २। सू १६८॥

---

द्वितीयाश्रितातीतपतितगतात्यस्तप्राप्तापन्नैः॥ द्वितीयान्तं श्रितादि-प्रकृतिकैः सुबन्तैः सह समस्यते स तत्पुरुषः। कष्टं श्रितः कष्टश्रितः। दुःखमतीतो दुःखातीतः। कूपपतितः। अत एव निपातनादिट्। अन्यथा तनिपतीतिविकल्पितेट्कत्वात्तस्य विभाषेति निषेधः स्यात्। यद्वा कृती-प्रभृतीनां सेसिचीत्यादिनेड्विकल्पान्निष्ठायामनिट्कत्वे सिद्धे इदित्करणं

---

"द्वितीया श्रितातीतपतितगतात्यस्तप्राप्तापन्नैः"। श्रितादिषु गत्यर्थ-त्वात्कर्त्तरि क्तः, पतिरपि सकर्मकः, नेञ्जिष्ठायन्तो नरकं पतामेति यथा,

## उभयोरपि । (कै)

उणादिप्रत्ययांतत्वेन कथमुभयोपादानेनान्येषां चेत्यर्थलाभ इति चिंत्यम् । तस्मादादिग्रहणस्य प्रकारार्थत्वेन व्याख्यानादेतदर्थलाभो बोध्यः । उभयोपादानं तु स्पष्टार्थमेवेति परे ॥

## पूर्वापरेति । (कै)

[1]गत्यर्थकर्मणीति सूत्रस्थैतत्सूत्रयोरित्यर्थः । नास्तीत्यंतो गत्यर्थसूत्रस्थः । [2]अकेनोरिति प्रतिषेध इत्यत्रत्यः प्राप्तिरेव नास्तीति वदन्तो येऽत्र सूत्रे तस्याः प्रतिषेधं वर्णयंति ते इत्यन्वयः ॥

## सौत्र इति । (कै)

१ अ २ । पा ३ । सू १२ ॥ २ अ २ । पा ३ । सू ७० ॥

यस्य विभाषेत्यस्यानित्यतां ज्ञापयति । अत एव धावितमिभराजधियेत्यादि सिध्यति । ग्रामगतः । दुःखिनात्यस्तः । सुखप्राप्तः । सुखापन्नः । इह श्रितादिषु गत्यर्थत्वात्कर्तरि क्तः । अत्यासो व्यतिक्रमो गतिविशेष एव । प्राप्तिरपीह गतिरेव न तु फलम् । एवमापत्तिरपि । यद्वा ।

अत्यासो व्यतिक्रमो गतिविशेष एव प्राप्तिरप्यत्र गतिरेव न फलमेवमापत्तिरपि, इह श्रितपतितगतैरयं समासो न विधेयः, कथं. यः कष्टं श्रितः कष्टं तेन श्रितं भवति तत्र बहुव्रीहिणा सिद्धं नार्थभेदो न रूपभेदो न स्वरभेदः, तत्पुरुषेप्यहीने द्वितीयेति श्रितपतितगतेभ्यः पूर्वपदप्रकृतिस्वर एव भवति, अतीतादिभिस्तु स्वरसिद्धये विधेयः । तथाहि । तैस्तत्पुरुषे

"अकेनोरि"ति सूत्रविहित इत्यर्थः । एवं च "गत्यर्थकर्मणी"ति सूत्रस्थो ग्रन्थो वृत्तिकृतो भाष्यविरुद्धोऽपीति तात्पर्यम् ॥

भाष्ये

[1]अहीने द्वितीयेति । (भा)

अहीनवाचकद्वितीयान्तस्येत्यर्थः ॥

विवक्षितार्थावगमादिति । (कै)

कष्टकर्मकश्रयणकर्तृविशिष्टोऽर्थ उभाभ्यामपि प्रतिपाद्यत इत्यर्थः । बहुव्रीहौ श्रितादीनां पूर्वनिपातः स्यादिति तु न ग्राह्यं तत्प्रकरणानित्यत्वादिति बोध्यम् ॥

---

१ अहीने द्वितीयास्वरवचनानर्थक्यं च ॥

---

श्रित इत्यादावादिकर्मणि क्तः । स्यादेतत् । कर्मणि क्तान्तेन सह तृतीयार्थे बहुव्रीहिणापि कष्टश्रितादिरूपसिद्धौ किमनेन सूत्रेण कष्टकर्मकश्रयणकर्तेति बोधस्योभयत्राविशेषात् । ननु कर्मणि क्त इति पक्षे प्रत्ययार्थः कर्म श्रयणं प्रति विशेष्यं स्यादिति चेन्न । विशेषणविशेष्यभावव्यत्यासेनैव बहुव्रीहिस्थले एकार्थीभावोऽवश्याभ्युपेय इत्यकथितसूत्र एवोक्तत्वात् । एतत्सूत्रे भाष्ये तथैवोक्तत्वाच्च । न च स्वरे भेदः । तत्पुरुषेपि थि

---

थाथादिस्वरेण भाव्यं नाहीनस्वरेण अतीतात्यस्तयोरहीन इति निषेधात्, प्राप्तापन्नयोस्त्वहीने द्वितीयानुपसर्ग इति वचनात्, बहुव्रीहौ तु पूर्वपदप्रकृतिस्वरेण भाव्यं तस्माच्छ्रितादिभिरयं न समासो विधेयः, तत्रायमप्यर्थो ऽहीने द्वितीयेत्येतदपि न वक्तव्यं भवति, जातिस्वरप्रसङ्गस्तु, यदा

तेन नहीनमिति । (कै)

न त्यक्तमित्यर्थः । यथा कान्तारमतीतेन कान्तारः ॥

अतीतात्यस्तयोरिति । (कै)

यो हि कान्तारमतीतोऽत्यस्तो वा तेन कान्तारो हीनो भवतीति द्वितीयां तस्य हीनवाचित्वादित्यर्थः ॥

यद्यप्यत्राप्यनुपसर्ग इति । (कै)

निषेधोऽप्यस्ति तथाप्ययमप्यस्तीति अयमेवोक्तः ॥

यदा त्विति । (कै)

[1]वा जातादिष्विति वक्ष्यमाणत्वादिति भावः ॥ ननु समासवचनपञ्चकानर्थकत्वानुमानेन बहुव्रीहिकृतत्वहेतुर्व्यधिकरणोऽत आह

१ वा जाते ( ६ । २ । १७१ ) इत्यत्र वा जातादिषु ॥

श्रितपतितगतेभ्यः पूर्वपदं प्रकृतिस्वरं भवति । अहीने द्वितीयेति वचनात् । अतीतादिभिस्तु स्वरसिद्धये विधीयतां तत्पुरुषः । तथाहि । तैस्तत्पुरुषे थाथादिस्वरेण भाव्यम् । न त्वहीनस्वरेण । अतीतात्यस्तयोरहीन इति निषेधात् । प्राप्तापन्नयोस्त्वहीने द्वितीयानुपसर्ग इति वचनात् । बहुव्रीहौ तु पूर्वपदप्रकृतिस्वरेण भाव्यमिति । तस्माच्छ्रितपतितगतैः समासो

जातिकालसुखादिभ्यः परे श्रितादयो भवन्ति तदा पूर्वपदप्रकृतिस्वरं बाधित्वा 'जातिकालसुखादिभ्योऽनाच्छादनात्' इत्यन्तोदात्तत्वप्रसङ्गः । ननु च तत्पुरुषारम्भेऽपि बहुव्रीह्यर्थविवक्षायां न दृष्टवारितो बहुव्रीहिरिति जातिस्वरः स्यादेव, एवमप्यस्ति भेदस्तत्पुरुषेऽहीने द्वितीयेति पूर्वपद-

बहुव्रीहिर्यथेति । (भा)

एवं च बहुव्रीहिसिद्धस्वसाध्यरूपकत्वादिति हेतुरिति भावः ॥

भाष्ये

इत्येतत्स्वरवचनमिति । (भा)

एतदर्थप्रतिपादकं स्वरस्य वचनम् [1]"अहीने द्वितीये"ति सूत्रमित्यर्थः ॥

अन्तोदात्तत्वमिति । (कै)

तदेवेत्यर्थः । दृश्यते तु समासभेदेन स्वरद्वयमिति भावः ॥

पूर्वपदाद्युदात्तत्वमिति । (कै)

तदेवेत्यर्थः ॥

---

१ अ ६ । पा २ । सू ४७ ॥

---

न विधेयः । एवं चाहीने द्वितीयेति सूत्रमपि माऽस्त्विति महदेव लाघवम् । नन्वेवं जात्यादिभ्यः परेषु श्रितादिषु स्वरे दोषः स्यादेव । जातिकालसुखादिभ्योऽनाच्छादनात्, क्तोऽकृतमितप्रतिपन्ना इत्यन्तोदात्तप्रसङ्गात् । तत्पुरुषारम्भपक्षे हि बहुव्रीहेरन्तोदात्तता तत्पुरुषस्य पूर्वपदप्रकृतिस्वरश्चेति द्वैस्वर्यं सिद्ध्यति । प्रत्याख्यानपक्षे त्वन्तोदात्त एवेति वैषम्यादिति

---

प्रकृतिस्वरो बहुव्रीहौ जातिकालेत्यन्तोदात्तत्वमिति द्वौ स्वरौ भवतोऽनारम्भे तु जातिस्वर एव स्यादिति, एवं तर्हि यदेतद्वा जात इति तद्वा जातश्रितपतितगतेष्विति वक्तव्यम्, एवमप्यहीने द्वितीयेत्येतदपि न वक्तव्यमित्यस्त्येव लाघवम्, एतावांस्तु विशेषः, तत्पुरुषारम्भे तत्र पूर्वपद-

अन्तोदात्तत्वमिति । (कै)

तदपीत्यर्थः ॥

अव्ययविकेति । (कै)

अवेर्मांसमिति विग्रह एव । अविकादेव च प्रत्ययोत्पत्तिराविकमिति तथा कष्टं श्रितमनेनेति वाक्यमेव । कष्टं श्रित इति विग्रहे एव समास इत्यर्थः ॥ ननु राज्ञः सखेत्यस्य राजनिरूपितसखित्ववानर्थः । बहुव्रीहौ राजाभिन्नसखिसम्बन्धीति बोधे ऽन्यनिरूपितं सखित्वं राजनि प्रतीयते इति समानार्थकत्वाभावात् कथं पूर्वोक्तज्ञापकेनात्र समासाभाव इत्यत आह

सख्युरस्योभयेति ॥ (कै)

कश्चिदुत्सर्गापवादभावं मन्यमानो ज्ञापकं दूषयति ।

---

चेन्न । बहुव्रीहावेव द्वैस्वर्यस्य सुसाधत्वात् । तथाहि । वाजात इत्यत्र वाजातश्रितपतितगतेष्विति वक्तव्यम् । न चैवं लाघवे विशेषो नेति वाच्यम् । षष्ठीने द्वितीयेत्यस्यानारम्भेण लाघवस्य स्पष्टत्वात् । एतावांस्तु विशेषः । तव समासद्वये द्वैस्वर्यं मम तु बहुव्रीहिणैव द्वैस्वर्यमिति । अत्राहुः । बहुव्रीहिणा कृष्णाश्रित इत्यादि न सिध्यति निष्ठेति पूर्वनिपातप्रसङ्गात् ।

---

प्रकृतिस्वरत्वं बहुव्रीहौ तु जातिस्वर इति द्वयोः समासयोर्द्वैस्वर्यं, तदनारम्भे तु बहुव्रीहावेव द्वैस्वर्यमिति । अत्रोच्यते । जातिकालसुखादिव्यतिरिक्तैः सह बहुव्रीहौ श्रितादीनां निष्ठेति पूर्वनिपातप्रसङ्गाद्रूपभेदः, तथा सर्वत्र स्वरमपि प्राप्नोति । नन्वसौ 'शेषाद्विभाषे'ति विकल्पितः स च तत्पुरुषारम्भेऽपि

## नैतज्ज्ञापकेति । (भा)

उक्तं वस्तु ज्ञापकसाध्यं न ज्ञापकत्वस्यैवासम्भवादित्यर्थः । एवं च श्रितादिविषयतत्पुरुषेणानवकाशतया बहुव्रीहिबाधे कष्टश्रितादौ पूर्वपदाद्युदात्तत्वमेव भवति । एवं च राजा सखास्येति विग्रहे बहुव्रीहिः स्यादेव [1]"षष्ठीति" शास्त्रस्य राजपुरुषादौ सावकाशत्वेन बहुव्रीहिबाधकत्वाभावादिति भावः । किं च उभयोश्चरितार्थयोः परत्वाद् बहुव्रीहिरेव स्यात् षष्ठीतत्पुरुषो न स्यादेव । टज्विधानं तु सुन्दरसख इत्यादौ कर्मधारये चरितार्थमित्याशयः । एवं च ज्ञापकवाद्यपवादवादिनोरत्राहोपुरुषिकैव तत्पुरुषारम्भे बहुव्रीहिबाधलक्षणं तु फलं न भिद्यते इति कैयटाशयस्त्विन्त्यः ॥

## स्वपदार्थे तत्पुरुषेति । (कै)

---

१ अ २ । पा २ । सू ८ ॥

---

जातिकालसुखादिभ्यो हि निष्ठायाः परनिपात उपसंख्यातो न तु जात्यादिभ्योऽन्यत्रापि । किञ्च जात्यादावपि रूपं भिद्येत् । पूर्वपदप्रकृतिस्वरपक्षेऽपि पाक्षिककपो विकल्पप्रसङ्गात् । त्वया बहुव्रीहावेव द्वैस्वर्यस्य सूचितत्वात् । सिद्धान्ते तु तत्पुरुषे ऽहीने द्वितीयेति स्वरोक्ति न तु कप् । बहुव्रीहौ

---

भवत्येव बहुव्रीहेरप्यभ्युपगमात्, एवमपि बहुव्रीहावपि द्वैस्वर्याभ्युपगमात्पूर्वपदप्रकृतिस्वरपक्षेऽपि बहुव्रीहित्वानपायात्पक्षे कपः प्रसङ्गः तत्पुरुषारम्भे तु तत्रैवाहीने द्वितीयेति पूर्वपदप्रकृतिस्वरः, बहुव्रीहौ तु जातिस्वर एव नित्यमित्यन्तोदात्तादेव कप् पूर्वपदप्रकृतिस्वरादित्यस्यैव विशेषः,

स्वपदार्थप्रधानविग्रह इत्यर्थः । बहुव्रीहिस्तु नैवम्विधे विग्रहे किन्तु कष्टं श्रितमनेनेति विग्रहे । एवं च विषयभेदान्न सामान्यविहितत्वं बहुव्रीहेरिति भावः ॥ ननु कष्टं श्रित इत्यत्र बहुव्रीहिविग्रहार्थोऽन्तर्भूत इत्यत आह

अन्तर्भूतस्वार्थ इति ॥ (कै)

अर्थभेदादिति । (कै)

एवं च सूत्रमार्थक्यात् त्वदीयज्ञापकत्वमप्यसङ्गतमिति भावः ॥

लोके विग्रहेति । (कै)

समासप्रयोगे कर्त्तव्ये लोके विग्रहवाक्यस्याप्रयोगात्तत्पुरुषत्वबहुव्रीहित्वानवगमादिति भावः ॥ अर्थद्वयबोधेऽप्याह

तात्पर्येत्यादि । (कै)

---

तु कबस्ति न तु पूर्वपदस्वरः । तथा चोक्तस्वरकपौ न क्वपि समाविष्टतः । तस्मात्यथान्यासमेवास्तु । गौरवं च प्रामाणिकमिति स्थितम् । गमिगाम्यादीनामुपसंख्यानम् । ग्रामं गमी ग्रामगमी गमेरिनिरित्यौणादिक इनिः स च भविष्यत्कालो भविष्यति गम्यादय इत्युक्तेः । यस्तु आङिचणिदितीनिः

---

तथा ऽर्थभेदोपि गत्यर्थाकर्मकेति कर्त्तरि क्तो धात्वर्थस्य सर्वात्मनाऽनिष्ठितत्वेपि भवति आरूढो वृक्षं देवदत्त इति, वृक्षस्य एवोच्यते, कर्मणि तु भवन्सर्वात्मना निष्ठितत्वे भवति आरूढो वृक्षो देवदत्तेनेति, तथेहापि कष्टं श्रित इति कष्टमनुभवन्नेवमुच्यते कष्टं श्रितमनेनेत्यनुभूतकष्टः श्रित-

एवं च ज्ञापकत्ववादिनोऽपवादत्ववादिनश्च खण्डनाय [1]"अस्ति खल्वपी"त्यादिसिद्धान्तिनो ग्रन्थ इति भावः ॥ भाष्ये

[2]बहुव्रीहौ सतीति । (भा)

तस्मिन्नेव सतीत्यर्थः ॥

तत्पुरुषे सतीति । (भा)

तस्मिन्नपि सतीत्यर्थः ॥

न भवितव्यमिति । (भा)

---

१ अस्ति खल्वपि विशेषो बहुव्रीहेस्तत्पुरुषस्य च । किं शब्दकृतोऽथार्थकृतः । शब्दकृतस्त्वार्थकृतश्च । अत्रैव भाष्ये ॥

२ शब्दकृतस्तावत् । बहुव्रीहौ सति कपा भवितव्यम् । तत्पुरुषे सति न भवितव्यम् । अत्रैव भाष्ये ॥

---

सोपि गम्यादिपाठाद्भविष्यति । णित्वाद्वृद्धिः । आगामी । बाहुलकात्केवलादपि । तेन गामीति माधवः । ग्रामं गामी । ग्रामगामी । अनेर्भविष्यदाधमर्ण्ययोरिति क्तयोगलक्षणषष्ठीनिषेधात् कर्मणि द्वितीया । केचित्तु आवश्यके णिनिः । अभविष्यदर्थत्वेपि गत्यर्थकर्मणीत्यत्र द्वितीयाग्रहणमपवादविषयेपि विधानार्थमिति क्तप्रयोगेपि द्वितीयैवेत्याहुः ।

---

शब्दविवक्षितस्यार्थस्य साक्षादवगतिर्भवति तत्पुरुषे, बहुव्रीहौ त्वर्थात्तद्यथा राज्ञः सखेत्युक्ते नूनं राजाप्यस्य सखेति स एष शब्दकृतामेव विषयः । 'गमिगाम्यादीनामिति' । उणादीनामन्येषां च संग्रहार्थमुभयोरुपादानम् । ग्रामं गमीति' । गमेरिनिरित्यौणादिक इति' इति प्रत्ययः

पूर्वपदप्रकृतिस्वरसन्नियोगेन न भवितव्यमित्यर्थः ॥ तत्पुरुषारम्भे वा जातादिष्वित्यस्याभावाद् ग्रामगत इत्यादावन्तोदात्तत्वमेवेति बहुव्रीहाविति पूर्वपदप्रकृतिस्वरसन्नियोगेन न कदापि कप्। तदनारम्भे तु [1]"वा जातादिष्वि"त्यारम्भात्पक्षे बहुव्रीहावपि पूर्वपदप्रकृतिस्वरसत्त्वात्तत्सन्नियोगेनापि कबापत्तिरिति भावः। कैयटोक्तोदाहरणे समासद्वयेऽपि पूर्वपदप्रकृतिस्वरसत्त्वात् कपो वैकल्पिकत्वाच्च न विशेष इति चिन्त्यम् ॥ भाष्ये

अर्थकृत इति । (भा)

अर्थभेदे सत्येकेनापरस्य न गतार्थतेति भावः ॥

धात्वर्थस्यानपवर्गे इति । (कै)

सर्वधात्वर्थासमाप्तौ धात्वर्थाविष्ट एव कर्त्तरि एकदेशस्य भूतत्वाश्रयेण क्तो भवति तत्पुरुषे। बहुव्रीहौ तु सर्वधात्वर्थसमाप्तौ धात्वर्थानाविष्टे कर्मण्येव क्त इति विशेष इत्यर्थः ॥

---

१ वा जाते । ६ । २ । १७१ ॥

---

तन्तु भाष्यविरुद्धम् । भाष्ये गत्यर्थसूत्रस्य प्रत्याख्याततया तद्योगे षष्ठ्या एव स्वीकारात् । एतेन तथाविदूराद्गिरदूरताङ्गमी । यथा स गामी तव केचिच्छ्रेणतामिति श्रीहर्षप्रयोगो व्याख्यातः । अन्नं बुभुक्षुरन्नबुभुक्षुरित्यादि ॥

---

'भविष्यति गम्यादय' इति भविष्यतिकाले'। 'ग्रामं ग्रामीति'। आवश्यके णिनिः। गत्यर्थकर्मणीत्यत्र द्वितीयाग्रहणमपवादविषयेपि विधानार्थमिति तत्प्रयोगे द्वितीयैव भवति। 'ओदनं बुभुक्षुरिति'। भुजेः सन् 'सनाशंसभिक्ष उः'। न लोकाव्ययेति षष्ठीनिषेधः ॥

[1]अन्यथाजातीय इति । (भा)

प्राक्तनाकाल इत्यर्थः ॥

अन्यथाजातीयकः सम्बन्धादिति । (भा)

आनुमानिक इत्यर्थः ॥ नन्वेवं राज्ञः सखा ऽस्येति विग्रहे बहुव्रीहिः स्यादत आह

उभयं खल्वपीति ॥ (भा)

---

# खट्वाक्षेपे । २ । १ । २६ ॥

---

[2]अधीत्यस्नात्वेति । (भा)

अधीत्यस्नात्वा वेत्यर्थः ॥

---

१ उपलब्धभाष्यपुस्तके अन्यथा जातीयक इति पाठोऽस्ति ॥

२ किमुदाहरणम् । खट्वारूढो जाल्मः । क्षेप इत्युच्यते कः क्षेपो नाम । अधीत्य स्नात्वा गुरुभिरनुज्ञातेन खट्वारोढव्या । य इदानीमतोऽन्यथा करोति स उच्यते खट्वारूढोऽयं जाल्मः । नातिव्रतवान् इति ॥

---

"खट्वाक्षेपे"। 'खट्वारोहणं चेत्यादि'। विनिन्दितो मार्गो विमार्गः। भूमिशयनार्हो ब्रह्मचारी वेदाध्ययनकाले तेनाधीत्य स्नात्वा गुरुभिरनुज्ञातेन खट्वा रोढव्या यत्त्वन्यथा खट्वारोहणं तद्विमार्गप्रस्थानं तस्योदाहरणमन्यस्याप्येवंविधस्योपलक्षणं, तेन खट्वामारोहतु मा वा-ऽयमद्विमार्गप्रस्थितः खट्वारूढ इत्युच्यत इत्यर्थः।

# अत्यन्तसंयोगे च। २। १। २९॥

ननु "क्ताः" इत्यस्याभावे ऽत्र तल्लाभो न स्यादत आह

काला इति ( २। १। २८ )॥ (भा)

ननु क्तान्तेन समासार्थं तत् अक्तान्तार्थं चेदमपीत्यत आह

तच्च चेति। (कै)

अनत्यन्तसंयोगे क्तान्तार्थं "कालाः" (२।१।२८) इति अत्यन्तसंयोगे ऽक्तान्तार्थमिदमित्युत्तरम्॥

[1]षण् मुहूर्त्ता इति। (भा)

तावत्पर्यन्तं हि दिनरात्रवृद्धिह्रासौ देशविशेषे॥

---

१ षण्मुहूर्त्ताश्चराचराः इति भाष्यप्रयोगात् षण्मुहूर्त्तपर्यन्तं वृद्धिह्रासौ भवत इति प्रतीयेते॥

# तृतीया तत्कृतार्थेन गुणवचनेन।
## २।१।३०॥

---

केवलदध्नः पाटवजनकत्वं वैद्यकविरुद्धमत आह

विशिष्टद्रव्य इति। (कै)

गुडिलवणादिरूपेत्यर्थः॥

सर्वत्रक्रियेति। (कै)

उत्तरसूत्रे मद्गुरनिपुणादिग्रहणेन साक्षात्परम्परान्वये एतद्-प्रवृत्तिरिति भावः॥

क्रियाद्वारकसम्बन्ध इति। (कै)

भुजिक्रियाद्वारक इत्यर्थः॥

यत्रेति। (कै)

अन्नेन व्यञ्जनमित्यादिविषये॥

---

तृतीया तत्कृतार्थेन गुणवचनेन। तत्कृतेति पृथक् लुप्ततृतीयाकम्। तृतीयान्तं तृतीयान्तार्थकृतगुणवचनेन अर्थशब्देन च सह समस्यते स

---

"तृतीया तत्कृतार्थेन गुणवचनेन"। तृतीयायाश्छान्दसे लुकि गुणवचनेनेत्यनेन सामानाधिकरण्यम्, अर्थेनेति पृथक् पदम्, अत एव 'गुणवचनेनार्थशब्देन चेति'। 'कीदृशेन गुणवचनेन तत्कृतेनेति'। तदिति

साक्षात्सामर्थ्येति। (कै)

"खडि भेदने" इत्यस्मात् घञि निष्पन्नखण्डशब्दार्थक्रियायां करणत्वेनान्वयः। सदृशादिग्रहणं च प्रपञ्चार्थमित्यभिमानः॥

गुणोपसर्जनद्रव्येति। (कै)

खण्डशब्दो हि तत्र रूढः। न तु साध्यावस्थापन्नकारकान्वययोग्यक्रियोपसर्जनद्रव्यवाची तादृशखण्डशब्देन तु कर्तृकरणे कृता (२।१।३२) इत्येव समासः सिद्ध इति भावः॥ भाष्ये

किरिकाण इति। (भा)

किरिः शूकरो रोगविशेषो वा॥

व्यतिरिक्तेति। (कै)

पूर्वपदोत्तरपदार्थव्यतिरिक्तेत्यर्थः॥

तदपेक्षेति। (कै)

भुजिद्वारकेत्यर्थः। कारकतृतीयातिरिक्ततृतीयान्ते तु नेदं प्रवर्तते। उत्तरसूत्रे निपुणादिग्रहणाज्ज्ञापकादिति भावः॥ भाष्ये

---

तत्पुरुषः। तच्छब्देन तृतीयान्तपरामर्शिना तदर्थो लक्ष्यते। तदर्थकृतत्वं च गुणवचनस्यार्थद्वारकं विशेषणम्। तथा च तृतीयान्तार्थकृतो यो

---

सर्वनाम्ना प्रकृतस्य तृतीयान्तस्य प्रत्यवमर्शः, स च शब्दः, न च शब्देन गुणवचनस्य करणं सम्भवतीत्यतः सामर्थ्यात्तदर्थकृतेनेति विज्ञायत इत्याह। 'तृतीयान्तार्थकृतेनेति'। 'यावदिति'। यावच्छब्दो निपातस्तात्पर्यपर्यायतां

तत्कृतार्थग्रहणं कर्त्तव्यमिति। (भा)

कृधात्वर्थद्वारके सामर्थ्ये एव यथा स्यान्न तु भुज्यादिद्वारके इत्येतदर्थमित्यर्थः॥

स्वभावसिद्धमिति। (कै)

शब्दशक्तिस्वभावेन सिद्धत्वेनैव घटादिपदाद् द्रव्यभानमिति तत्कृतत्वाभाव इति भावः॥

क्रियत इति (कै)

पदान्तरसमभिव्याहारेण तु तत्र साध्यत्वप्रतीतिरित्यन्यत्। एवं च दण्डेन घट इत्यादौ दण्डहेतुको घट इत्येव बोधो न तु तत्कृतत्वप्रतीतिरिति तात्पर्यम्॥ भाष्ये

धान्येन धनवानिति। (भा)

धान्येन हेतुना धनवत्त्वात्तत्कृतत्वमप्राप्तीति भावः॥

शङ्कुलाखण्डो देवदत्त इति। (भा)

शङ्कुलाकृतखण्डगुणको देवदत्त इत्यर्थः॥

---

गुणस्तद्वचनेनेति फलितोऽर्थः शंकुलया खंडः शंकुलाखंडः। किरिणा काणः किरिकाणः। खडिभेदने, कणनिमीलने। आभ्यां घञि धत्रादि-

---

दर्शयति, अर्थद्वारकं चेदं गुणवचनस्य विशेषणम्, अयं एव हि तृतीयार्थेन क्रियते न गुणवचनः शब्दः। वचनग्रहणं किम्। यावतार्थेन समासासम्भवाद्गुणवचनेनैव भविष्यति एवं यथा विज्ञायेत, गुणमुक्तवान्

भूतकालेति। (कै)

बाहुलकाद्भूते कर्त्तरि ल्युडिति भावः॥ "गुणमुक्तवते"ति व्याचष्टे।

सम्प्रतीति। (कै)

तत्त्वं च केवलगुणवाचकत्वेनापि प्रसिद्धस्य यथा शुक्लादेः पार्थ-क्येन गुणवाचिनो विशिष्टद्रव्यवचनस्यापि यथा पट्वादेः॥ भाष्ये

[1]'गुणवचनेभ्यो मतुप इति। (भा)

तत्रापि धर्ममात्रं गुण इति भावः। यद्देदम् "अर्श आद्य च (५।२।१२७) उपलक्षणम्॥ नन्वर्थभेदेन शब्दैक्ये मतुपो लोपो व्यर्थोऽत आह

अर्थभेदेनेति॥ (कै)

नन्वेवं [2]"गुणमुक्तवते"त्युक्तं गुणवचनत्वमनुपपन्नमत आह

१ गुणवचनेभ्यो मतुपो लुग् इति (५।२।९४)॥
२ अत्रैव भाष्ये॥

---

तावेतौ क्रियारूपापन्ने गुणे वर्त्तित्वा पश्चान्मतुब्लोपादभेदोपचाराद्वा तद्वति द्रव्ये वर्त्तेते इति गुणवचनौ भवतः। धान्येनार्थो धान्यार्थः।

---

गुणवचनः, 'कृत्यल्युटो बहुलमि'ति भूते कर्त्तरि ल्युट, गुणमुक्तवता संप्रति गुणोपसर्जनद्रव्यवचनेनेत्यर्थः। तेन घृतेन पाटवमिति गुणमात्रनिष्ठेन भवति। गुणश्चात्र "सत्त्वे निविशतेऽपैती"ति लक्षितो गृह्यते न तु यस्य

साहश्येति॥ (कै)

अनेकशक्तीति। (कै)

प्रकरणादितस्य तत्तच्छक्त्युद्बोध इति भावः॥ भाष्ये

यद्येवं नार्थस्तत्कृतार्थग्रहणेनेति। (भा)

एवं गुणवचनेनेत्यस्य प्रकरणे। अयं भावः। तृतीयान्तं गुणवचनेन समस्यत इत्युक्ते गुणस्य जन्यतानियमेन तृतीयान्तार्थस्य तदुत्पत्तिप्रयोजनकत्वेन च प्रत्यासत्त्या तृतीयांतार्थकृतगुणवचनेनैव तृतीयान्तस्य समासो भविष्यतीति। दध्ना भुङ्क्ते पटुः। अक्ष्णाकाण इत्यादौ न भविष्यतीति॥ ननु तृतीयाच सूत्रे न हेतौ उत्तरसूत्रे निपुणश्लक्ष्णग्रहणात्। एवं च तृतीयान्तगुणवचनयोः साक्षात्सामर्थ्यासम्भवेन क्रियाद्वारकं तद् ग्राह्यम्॥ एवं च यतो दध्ना भुङ्क्ते अतः पटुरित्यर्थके दध्ना पटुरित्यादावपि स्यादत आह

---

अर्थ्यत इत्यर्थः, प्रयोजनम्। अर्थनं वा अर्थः, प्रार्थना। अभिलाषः। सर्वत्र करणे तृतीयायाः समासः। तत्कृतेनेति किम्। अक्ष्णा काणः।

---

गुणस्य हि भावाद् द्रव्ये शब्दनिवेश इति तच्छब्दप्रवृत्तिनिमित्तं, तृतीयान्तार्थकृते सर्वत्रैव तस्य भावात्। 'शङ्कुलाखण्डः, किरिकाण इति'। खडि भेदने, कण निमीलने, इत्याभ्यां घञि अत्यादिताविती क्रियारूपापन्ने गुणे वर्तितात्मतुवत्तोपादमेदोपचाराद्वा तद्वति द्रव्ये वर्तेते इति गुणवचनौ भवतः। 'धान्येनार्थ इति'। अर्थ्यत इत्यर्थः प्रयोजनम्। अर्थनं वार्थः। प्रार्थना। अभिलाषः, सर्वत्र करणे तृतीयायाः समासः। 'अक्ष्णा काण इति'।

अव्यतिरिक्तकल्पेति । (कै)

गुणवचनतृतीयान्तयोः समभिव्याहारे उक्तरीत्या तत्प्रतीतिरिति भावः ॥ अन्तरङ्गत्वेऽयमेव हेतुः । अत एव समासार्थान्तर्भूतत्वं राजसख इत्यादावन्तर्भूतस्याप्रतीयमानत्वात्प्रतीयमानेति उक्तन्यायसिद्धमपि तत्कृतार्थग्रहणं स्पष्टप्रतिपत्तये अभ्युपगम्य तत्रार्थग्रहणं व्यर्थमाह वार्त्तिककारः ।

[1]तृतीयासमास इति ॥ (वा)

नायमर्थनिर्देश इति । (भा)

उभयत्राप्यर्थपरत्वस्य व्याख्यानेनैव सिद्धेरिति भावः ॥

१ तृतीयासमासेऽर्थग्रहणमनर्थकमर्थगतिर्ह्यवचनात् । वा ॥

किञ्च यत्र शङ्कुलाखण्डादौ पूर्वोत्तरपदार्थयोः क्रियाकारकभावः सम्बन्धस्तत्र चरितार्थं वचनं यथा दध्ना भुङ्क्ते पटुरित्यादौ न भवति । असामर्थ्यात् । तथेहापि न स्यात् । दध्ना पटुः कुङ्कुमेन लोहितं मुखमिति । इह हि गम्यमानया करोतिक्रियया करणस्य सम्बन्धः ।

मात्राद्व्या कृतं काणत्वं किं तर्ह्यन्येनैव केनापि कियादिना, अद्व्या तु केवलं काणो लक्ष्यत इति तत्कृतत्वाभावः, किं च दध्ना पटुरित्यत्र मा भूदित्येवमर्थमपि तत्कृतग्रहणं कर्तव्यम् । ननु यदि दधि कृतं पाटवं विवक्षितं दध्ना कृतः पटुरिति ततो भवितव्यमेव समासेन, अथ भोजनाद्यपेक्षो दध्नः कारणभवः । दध्ना भुङ्क्ते पटुरिति ततो ऽसामर्थ्यादेव न भविष्यति, इहापि तर्हि न स्यात् कुङ्कुमेन लोहितं कोपेन लोहितं मुखमिति, अत्रापि हि करोति क्रियया करणस्य सम्बन्धः कुङ्कुमेन कृतं लोहितमिति, क्व तर्हि स्यात्

योगविभाग इति। (भा)

योगविभागफलक इत्यर्थः॥ तदाह

वाक्यभेदः संपद्यत इति॥ (कै)

भाष्ये

धान्यार्थ इति। (भा)

अत्रार्थ्यत इत्यर्थः प्रयोजनम्। अर्थनमर्थः प्रार्थना। वा करण-तृतीयया समास इति हरदत्तादयः। तन्न। [1]कर्तृकरणे इत्येव सिद्धत्वात्। तस्माद्धनपर्यायार्थशब्देन सह [2]प्रकृत्यादित्वप्रयुक्ततृतीयान्तस्य समासः। प्रथमार्थे च तृतीया। यद्वा धान्येन कृतोऽर्थ इति विग्रह इति नव्याः॥

१ अ २। पा १। सू ३२॥

२ धान्यार्थः इत्यत्र प्रकृत्यादित्वात् प्रथमार्थे तृतीया तेन समासोऽत्र स्वीकृतः नागेशेन। परं मञ्जूषायां धान्यार्थः इत्यस्य धान्येनार्थः धान्यार्थ इति लौकिकविग्रहवाक्यप्रदर्शनानन्तरं "हेतौ तृतीया। अर्थशब्दो धनवाची। धान्यहेतुकं धनमिति बोधः" इत्युक्तम्॥

तस्माद्यत्रोत्तरपदे क्रिया न गम्यते तत्रापि तत्कृतत्वे सति यथा स्यात् भोजनादिद्वारके सामर्थ्ये मा भूदिति तत्कृतग्रहणम्। गुण-वचनेनेति किम्। गोभिर्वपावान्। गोसम्बन्धिदध्यादिभोजनाद्वेदस्य

---

शङ्कुलया खण्ड इत्यादावेव तु स्यात्, यत्र पूर्वोत्तरपदयोः क्रियाकारकसम्बन्धस्तस्मात्तत्रोत्तरपदे क्रिया न गम्यते तत्रापि तत्कृतत्वे सति यथा स्याद्भोजनादिद्वारके सामर्थ्ये मा भूदिति तत्कृतग्रहणम्। 'गुणवचनेनेति किमिति'। जातिवचनेषु जातेर्नित्यत्वात्तत्कृतस्यासम्भवः, क्रियावचने त्विष्यत

अर्थशब्देन समासार्थमिति। (कै)

फलान्तरार्थमर्थग्रहणमावश्यकमित्यग्रिमसूत्रे वक्ष्यति कैयटः॥

'सत्त्वे इत्यादि। (कै)

इदं गुणवचनशब्दस्यैव लक्षणमिति गुणपदेन धर्ममात्रं तदुपसर्जनद्रव्यवाचिनायं समास इति बोध्यम्। खण्डस्य तत्कृतत्वाभावाच्च॥

नोक्तमिति। (कै)

स्वार्थस्यैव ततः प्रतीतिरिति भावः॥

---

१ सत्त्वे निविशतेऽपैति पृथग्जातिषु दृश्यते।
आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः॥
उपैत्यन्यज्जहात्यन्यद्दृष्टो द्रव्यान्तरेष्वपि।
वाचकः सर्वलिङ्गानां द्रव्यादन्यो गुणः स्मृतः॥

---

वपावत्त्वं पीवरत्वमित्यस्ति तत्कृतत्वं न त्वसौ गुणवचनः। वचनग्रहणं किम्। यावता अर्थेन समासासम्भवात्तद्वाची ग्रहीष्यते। अत्राहुः। गुणमुक्तवान् गुणवचनः। कृत्यल्युटो बहुलमिति भूते कर्तरि ल्युट्। गुणमुक्तवता सम्प्रति गुणोपसर्जनद्रव्यवाचिनेत्यर्थः। तेन एतेन पाटवमिति गुणमात्रनिष्ठेन न भवतीति। गुणश्चात्र "सत्त्वे निविशतेऽपैती"ति वक्ष्यमाणो गृह्यते।

---

एव, 'कर्तृकरणे कृता बहुलमि'ति द्रव्यवाचिष्वपि तत्कृतस्यासम्भव एव, नह्याकाशस्य तत्त्वं केन चित् क्रियते ऽतो गुणवचनेनैव भविष्यतीति प्रश्नः। 'गोभिर्वपावानिति'। गोसम्बन्धिदध्याद्युपयोगादेव तस्य वपावत्त्वं पीवरत्वमित्यस्ति तत्कृतत्वं न त्वसौ गुणवचनः॥

# पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः। २। १। ३१॥

अर्थग्रहणभूतेनेति। (कै)

अत एव [1]ऊनार्थकलहमिति स्वरविधायकसूत्रेऽर्थग्रहणं चरितार्थम्। तत्र हि लक्षणप्रतिपदोक्तपरिभाषयैतत्सूत्रविहितसमासस्यैव ग्रहणम्। समसदृशयोः पृथगुपादानाच्चानेनैव सम्बन्ध इति बोध्यम्॥

---

१ ऊनार्थकलहं तृतीयायाः। ६। २। १५३॥

---

मासेन पूर्वो मासपूर्वः। अवध्युत्पत्तिकालावधिमदुत्पत्तिकालयोर्मासस्य व्यवधायकत्वेऽयं प्रयोगः। पूर्वसदृशेति समासविधानादूनार्थकलहमिश्रप्रयोग इव पूर्वयोगेऽपि तृतीया। माषोनम्। ऊन शब्दार्थः पूर्णत्वसंपादकवस्त्वभाववान्॥ कलहः। क्रोधपूर्वको व्यापारः। वाक्कलहः। वाग्रूपः स इति बोधः॥

---

पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः। एतैः सह तृतीयान्तं प्राग्वत्। अस्मादेव वचनात्पूर्वादियोगे तृतीया। हेतौ वा तृतीया।

---

"पूर्वसदृशसमोनार्थकलहनिपुणमिश्रश्लक्ष्णैः"॥ पूर्वसूत्रेऽर्थशब्देन समासस्य साधितत्वादिहार्थग्रहणमर्थनिर्देशार्थं, तच्चानन्तरेणोनशब्देनैव

## अर्थप्रधानत्वान्निर्देशस्येति । (कै)

ऊनशब्दोऽर्थपरः । अर्थेन समासासंभवाच्च तद्वाचिनां ग्रहणं तच्चाविशेषात्सर्वेषामिति भावः । केचित्तु माषेण कृतो विकल इत्यर्थे माषविकल इति पूर्वेणैव सिद्धम् "ऊनार्थेति" (६।२।१५३) सूत्रेऽर्थग्रहणं तु धान्यार्थं इत्यादावन्तोदात्तत्वायेति स्पष्टमेव । वृत्त्यादौ तत्र समासोऽपि पूर्वसूत्रस्यार्थग्रहणात् सिद्धः । एवं च माषविकलादौ पूर्वपदप्रकृतिस्वरत्वमेवेत्येव भाष्याशयः । अत एव समर्थसूत्रभाष्ये (२।१।१) तृतीया तत्कृतेति (२।१।३२) सूत्रस्थोपादानविकल इत्युदाहरणं दत्तमित्याहुः ॥

---

मासेन पूर्वः मासपूर्वः । मात्रा सदृशः । मातृसदृशः । मातृसमः । इह समसदृशाभ्यां योगे तुल्यार्थैरिति तृतीया । स्यादेतत् । तुल्यार्थयोगे पक्षे षष्ठ्यप्यस्ति । ततः षष्ठीसमासेनैव सिद्धे किमिह सदृशग्रहणेन । न च तत्पुरुषे तुल्यार्थतृतीयेतिपूर्वपदप्रकृतिस्वरार्थं तत् । सदृशप्रतिरूपयोः सादृश्य इति तत्सिद्धेः । न च तत्र सदृशग्रहणमेव मास्त्विति वाच्यम् । षष्ठीसमासपक्षे अन्तोदात्तत्वं वारयितुं तत्स्वीकारावश्यम्भावात् । न चानभिधानात्षष्ठीसमास एव मास्त्विति वाच्यम् । दास्याः

---

सम्बध्यते न पूर्वादिभिः, समसदृशशब्दयोः पृथगुपादानात् । 'एतदेवेत्यादि' । समसदृशशब्दाभ्यामन्यत्रेदं यद्योगे तुल्यार्थैरिति तृतीयास्ति, इहो तुल्यार्थयोगे षष्ठ्यपि पक्षे विधीयते ततस्तस्याः समासे मातुः सदृशः । मातृसदृश इति सिद्धं, किमर्थमिह सदृशग्रहणं, तत्पुरुषे तुल्यार्थतृतीयेति पूर्वपदप्रकृतिस्वरो यथा स्यात्, सिद्धोऽत्र प्रकृतिस्वरः, 'सदृशप्रतिरूपयोः

## अवरस्येति। (भा)

न च कैयटरीत्योनार्थत्वादेव सिद्धिरिति वाच्यम्। चैत्रादवरः फाल्गुन इत्यादौ पूर्वशब्दसमानार्थताया अपि अवरशब्दस्य दर्शनात्। "सदृशग्रहणे उक्तमिति" (अत्र सूत्रस्थवार्त्तिकम्) भाष्यकारवचनमित्यभिप्रेत्याह

## हेतुकालसंप्रेक्षितत्वादेति। (कै)

हेतुर्वार्त्तिककारोच्चारणं तस्य यः कालस्तस्य संप्रेक्षितत्वात्मनसि स्थापितत्वादित्यर्थः। कारणकालः कार्ये उपचर्य प्रयोग इति तात्पर्यम्। वार्त्तिककारवचन इत्यभिप्रेत्य त्वाद्यम्। तदेव युक्तमिति भावः॥

---

सदृश इति रूपासिद्धिप्रसङ्गात्। इह हि यथा आक्रोश इत्यलुक्समासः स्वीकृतो भाष्ये। नन्वेवमपि हेतुतृतीयान्तेन समासार्थं प्रकृते सदृशग्रहणमस्तु। विद्यया हेतुना सदृशो विद्यासदृश इति नह्यत्र तुल्यार्थैरिति षष्ठी लभ्यते। प्रतियोगिन्यत्र तद्विधानादिति चेत्। न तत्कृतत्वात्पूर्वेणैव सिद्धेः। यो हि विद्यया सदृशः तस्य विद्याकृतं

---

सादृश्य' इति, तत्र तत्र सदृशग्रहणमवश्यं कर्तव्यं यदा षष्ठीसमासस्तदान्तोदात्तत्वं मा भूदिति, ननु चेदानीमनभिधानात् षष्ठीसमासो न भविष्यति, नैवं शक्यम्, अलुक्समासे हि दोषः स्यात्, 'यथा आक्रोशे' दास्याः सदृशो वृषल्याः सदृश इति, तस्मात्तत्कर्त्तव्यम्, इदं तु न कर्त्तव्यम् इदमपि कर्त्तव्यं,

( पूर्वसदृशसमोनार्थकलहनिपुण- (अ. २ । पा. १ । आ. २)
मिश्रश्लक्ष्णैः । २ । १ । ३१ )

तदा पूर्वपदप्रकृतिस्वरार्थमिति । (कै)

अन्यथान्तोदात्तं स्यादित्यर्थः ॥ नन्वत्रानभिधानात् षष्ठीसमास एव मास्त्वित्यत आह

तथा च दास्या इति ॥ (कै)

सिद्धत्वादिति । (कै)

न च [1]"मनसः संज्ञायामि"त्यलुकि मनसा सदृश इति सिध्यर्थमिदमप्यावश्यकमिति वाच्यम् । तत्कृतत्वेनैव सिद्धत्वात् । अनभिधानेन तत्र समासाभावाच्च । ईदृशसंज्ञायां मानाभावाच्चेति दिक् ॥

---

१ अ ६ । पा ३ । सू ४ ॥

---

सादृश्यमस्तीति । सत्यम् । प्रत्याख्यातमेवेदं षष्ठे वार्त्तिककृता । ऊनार्थे मांषोनं कार्षापणम् । माषविकलम् । पूर्वसूत्रे अर्थशब्देन समासस्य साधितत्वादिह अर्थग्रहणमभिधेयनिर्देशार्थम् । तच्च ऊनशब्देनैव सम्बध्यते न तु पूर्वादिभिः । अत एव समसदृशौ पृथगुपात्तौ ।

---

हेतु तृतीयायं विद्यया हेतुना सदृशो विद्यासदृश इति, नह्यत्र तुल्यार्थै-रितिषष्ठी भवति प्रतियोगिन्येव हि सा विधीयते, एवमपि न कर्त्तव्यं तत्कृतत्वात्पूर्वेणैव सिद्धं यो हि विद्यया सदृशः । विद्याकृतं हि तत्सादृश्यं तत्र पूर्वेणैव सिद्धं, 'मिश्रग्रहणे सोपसर्गस्यापि ग्रहणं' गुडसंमिश्रा धानाः ।

सम्बन्धमात्रविवक्षायामिति। (कै)

अनेनावश्यं तृतीयासमासो वक्तव्यो यत्र षष्ठ्यर्थो नास्ति भोजनसदृशः। इदमप्यवश्यं वक्तव्यं यत्र षष्ठी श्रूयते दास्याः सदृश इत्याद्यर्थमिति "[1]सदृशप्रतिरूपयोरिति" सूत्रशेषस्थं भाष्यमेकदेश्युक्तिरिति सूचयति। तत्रापि षष्ठ्यर्थस्य संभवात्। प्रतिपदोक्तपरिभाषया तुल्यार्थैरिति तृतीयान्तेनैव तत्समासप्रवृत्तेश्च॥

पूर्वसूत्रेण वेति। (कै)

उपादानविकल्प इति वदिति भावः॥

---

१ सदृशप्रतिरूपयोः सादृश्ये। ६। २। ११।

---

वाक्कलहः। आचारनिपुणः। गुडमिश्रः। आचारश्लक्ष्णः। मिश्रग्रहणे सोपसर्गस्यापि ग्रहणम्। गुडसंमिश्रा धानाः। मिश्रं चानुपसर्गमसन्धावित्यत्र अनुपसर्गग्रहणात् ज्ञापकादेतत् सिद्धम्। अवरस्योपसंख्यानम्॥ मासेनावरो मासावरः॥

---

इत्येवमर्थं, ज्ञापकात्सिद्धं यदयं 'मिश्रं चानुपसर्गमसन्धावि'त्यनुपसर्गग्रहणं करोति तज्ज्ञापयति मिश्रग्रहणे सोपसर्गस्यापि ग्रहणमिति। 'पूर्वादिष्विति'। अवरशब्दोऽपि सूत्रे पठितव्य इत्यर्थः॥

# कर्तृकरणे कृता बहुलम्।२।१।३२॥

कृता क्तेनेति। (वा)

भाष्ये

कृतेति (भा)

कर्तृकरणे कृता बहुलम्॥ कर्तरि करणे च तृतीया कृदन्तेन सह बहुलं प्राग्वत्। हरिणा त्रातो हरित्रातः। नखैर्भिन्नो नखभिन्नः। कृद्ग्रहणे गतिपूर्वस्यापि ग्रहणान्नखनिर्भिन्नः। कर्तृकरणे किम्। भिक्षाभिरुषितः। हेतावियं तृतीया। बहुलग्रहणाच्छस्त्रपाणिप्रभृतिभिर्न। हस्तेन कुर्वन् भुञ्जानः कृतवान्वा। क्वचिद्विभक्त्यन्तरमपि समस्यते बहुलग्रहणादेव। पादहारकः। ह्रियत इति हारकः। बाहुलकात्कर्मणि ण्वुल्। पादाभ्यामित्यपादानपञ्चम्यन्तस्य समासः। गले चोपकः। चुप मन्दायां गतौ। हेतुमण्णिजन्तात्कर्तरि ण्वुल्। गले चोपकः। अमूर्धमस्तकादित्यलुक्। कृतेति किम्। काष्ठैः पचतितराम्॥

"कर्तृकरणे कृता बहुलम्"॥ कर्तृकरणे इति प्रथमाद्विवचनं वृत्तौ वस्तुव्याख्यानं कृतं कर्तरि करणे च या तृतीयेति, तथा चोत्तरत्र वक्ष्यति कर्तृकरणे कृत्यैः सहाधिकार्थवचने समस्येते इति, 'सर्वोपाधिव्यभिचारार्थमिति'। आव्याप्तिव्याप्तिपरिहारार्थमित्यर्थः। 'पादहारक इति'। ह्रियत इति हारक इति 'कृत्यल्युटो बहुलमि'ति कर्मणि ण्वुल, पादाभ्यामित्यपादानपञ्चम्यन्तस्य समासः। 'गले चोपक इति'। चुपमन्दायां गतौ, हेतुमण्णिजन्तात्कर्मणि ण्वुल, अमूर्द्धमस्तकादित्यलुक्, कृद्ग्रहणमनर्थकमन्यस्याभावात्, इह कर्तृकरणे क्रियाया एव भवतः, क्रिया च धातुवाच्या धातोश्च द्वये प्रत्ययाः कृतस्तिङश्च तत्र सुपेत्यधिकारात्तिङन्ते न प्रसङ्गः, तद्धितनिवृत्त्यर्थं तु, इह काष्ठैः पचतितरां काष्ठैः पचतिरूपं काष्ठैः पचतिदेश्यं हस्तेन कृतपूर्वी दध्ना भुक्तपूर्वी घृतेनेष्टीति।

कस्योपरञ्जकं विशेषणमिति बोध्यम्। कृतेत्यस्य स्थाने केनेति वक्तव्यं कृतेति व्यर्थमिति वार्थः॥ ननु लाघवात् केनेति युक्तमत आह

अयं भाव इति॥ (कै)

---

# कृत्यैरधिकार्थवचने।२।१।३३॥

स्तुतिनिन्देति। (कै)

काकपेयेत्यादौ काककर्तृकपानकर्म नदीति बोधे अल्पाम्बुत्व-पूर्णाम्बुत्वादिना निन्दास्तुतिमात्रे तात्पर्यात् क्रियाया निष्प्रयोजनत्वेन गौणत्वात्कर्तृकरणयोरपि गौणत्वमिति भावः॥

कृत्यैरधिकार्थवचने॥ स्तुतिनिन्दाफलकमर्थवादवचनमधिकार्थवचनम्। तत्र कर्तरि करणे च तृतीया कृत्यैः सह प्राग्वत्।

"कृत्यैरधिकार्थवचने"॥ 'स्तुतिनिन्दाप्रयुक्तमिति'। स्तुत्या निन्दया च प्रवर्तितं स्तोतुं निन्दितुं च कृतमित्यर्थः। 'अध्यारोपितार्थवचनमिति'। असन्नेवारोपोपितोऽध्यारोपितः। 'काकपेयेति'। एवं नाम पूर्णतोया नदी यत्तटस्थैः काकैरपि शक्या पातुमिति स्तुतिः। एवं नामाल्पतोया यत्काकैरपि

केचिदाहुरिति। (कै)

कर्तृत्वादेस्तृतीयाप्रयोजकत्ववत्समासप्रयोजकत्वस्यापि संभवादित्यरुचिस्तदाह।

अन्येत्विति॥ (कै)

ननु कृत्यैरेवाधिकार्थवचन इति नियमार्थं स्यादत आह

काकपेतेति॥ (कै)

नेदं नियमार्थमिति। (कै)

"कृत्यैरधिकार्थवचन" एवेत्येवं नियमार्थं नेदमित्यर्थः॥ भाष्ये

अन्यत्रापि। (भा)

स्तुतिनिन्दाफलकत्वरूपाधिकार्थवचनलाभावेऽपि॥

सूत्रसन्दर्भेति। (कै)

---

पूर्वसूत्रस्यैव प्रपञ्चोऽयम्। काकपेया नदी। शक्यार्थे कृत्यः। पूर्णतोय-

---

शक्या पातुमिति निन्दा, उभयत्र शक्यार्थे कृत्यः। 'श्वलेह्य इति'। एवं नामासन्नतोयः कूपस्तटस्थैरपि श्वभिः शक्यो लेढुमिति स्तुतिः, एवं नामाशुचिः कूपो यज्जलं श्वान एव लेढुमर्हन्तीति निन्दा, अर्हार्थे कृत्यः। 'बाष्पच्छेद्यानीति'। एवं नाम कोमलानि तृणानि यद्बाष्पेणापि छेत्तुं शक्यानीति स्तुतिः, एवं नाम कथितानि तृणानि यद्बाष्पेणापि छेत्तुं शक्यानीति निन्दा। 'कण्टकसंचेय इति'। एवं नाम क्लिन्न ओदनो

कर्तृकरणे कृत्यैरित्येतत्सूत्रद्वयरूपेत्यर्थः। बहुलग्रहणसहितमिदं वा कर्तव्यं तत्सहितसूत्रसन्दर्भो वेति तात्पर्यं बहुलग्रहणं तत्रापि कर्तव्यमेव परशुना छिन्नवानित्याद्यर्थम्॥ पादाभ्यामित्यस्य कर्तृकरणतृतीयान्तत्वे यथान्यासेऽपि सिध्यतीत्यत आह

अपादाने पञ्चमीति। (कै)

पादयोर्ध्रियमाणमञ्जीराद्यपेक्षयावधित्वेनापादानत्वम्। गले चोपक इति [1]हलदन्तादिति [2]तत्पुरुषे कृतीति [3]अमूर्धमस्तकादिति वा लुक् गले मन्दं प्रायणीय इत्यर्थः॥

---

१ अ ६। पा ३। सू ८॥ २ अ ६। पा ३। सू १४॥
३ अ ६। पा ३। सू १२॥

---

लाक्षटस्थैरपि पातुं शक्येति स्तुतिः। काकैरप्येषा पातुं शक्याऽल्पतोयत्वादिति निन्दा वा॥

---

यत्कराटकैः शक्यः संचेतुमिति स्तुतिः, एवं नामाल्प ओदनो यत्कराटकैः संचीयत इति निन्दा। 'पूर्वस्यैवायं प्रपञ्च इति'। यद्यपि स्तुतिनिन्दापरत्वात्क्रियोपादानस्य कर्तृकरणयोर्गौणत्वं तथापि बहुलवचनात्पूर्वेणैव सिद्धं, तथा च काकपेया नदीत्यत्राकृत्यैरप्यधिकार्थवचनैः समासो दृश्यतेऽतः प्रपञ्च एवायं नाप्राप्तविधिर्नापि नियम इत्यर्थः॥

# अन्नेन व्यञ्जनम्। २। १। ३४॥



अनेनापि करणतृतीययैव समासः शब्दशक्तिस्वभावात् करणेत्यनुवृत्तेर्वा इत्यभिप्रायेणासामर्थ्याशङ्का।

द्रव्याणामिति। (कै)

कारकविभक्त्यन्तवाच्यत्वे इति भावः॥

फलकानीति। (कै)

आरोहणावरोहणोपयोगितिर्यक्काष्ठानीत्यर्थः॥ भाष्ये

निश्रयण्या इति। (भा)

जातावेकवचनन्त्वञ्चेति सहयोगतृतीयायामुक्तरीत्या करणतृतीयाभावात् समासाप्राप्तेराह

---

अन्नेन व्यञ्जनम्। संस्कारद्रव्यं संस्कार्येण सह प्राग्वत्। दध्ना उपसिक्त ओदनो दध्योदनः। इह वृत्तावुपसेकक्रियान्तर्भवति स्वभावात्

---

"अन्नेन व्यञ्जनम्"। 'दध्योदन इति"। ननु च नेह क्रियाश्रूयते न चान्तरेण क्रियां द्रव्याणां परस्परेण सम्बन्ध इत्यसामर्थ्यादत्र समासो न

जीवत्विति ॥ (भा)

सिद्धन्त्विति । (कै)

वार्त्तिकारम्भेऽपि दासीभारादित्वात्पूर्वपदप्रकृतिस्वरो बोध्यः। एवं च सूत्रारम्भेण समफलता तत्र वार्त्तिकं विशेषणमित्येव सिद्धे समासे पूर्वपदावयवोत्तरपदलोपार्थं कर्त्तव्यम् ॥

सम्बन्धविवक्षायामिति । (कै)

कर्त्तुः करणस्य वा सम्बन्धित्वेन विवक्षायामित्यर्थः ॥

युक्ताद्यर्थानामाक्षेपादिति । (कै)

सम्बन्धित्वेन सम्बन्धस्यैवात्र भानादिति भावः। तदर्थघटितस्य सम्बन्धित्वे तत्कारकत्वात् तृतीयैव स्यादिति भावः ॥ भाष्ये

दध्ना युक्तार्थता सम्प्रतीयत इति । (भा)

दध्नेति पदे वाच्येन युक्तो योऽर्थ उपसेकक्रियादिरूपस्तदर्थता तस्य प्रतीयत इत्यर्थः। वाक्येऽपि वाक्यैकदेशन्यायेन दध्नेत्यस्यैव-सोऽर्थ इति बोध्यम् ॥ नन्वध्यवसानं संप्रत्यय इति पर्यायस्तथा च हेतुसाध्ययोरविशेष इत्यत आह

---

यतो नासामर्थ्यम्। न च कारकाणां परस्परमसम्बन्धेऽपि वचनसाम-

---

प्राप्नोति, अथासत्यपि सामर्थ्ये वचनात्समासः, इहापि तर्हि स्यात् किं दध्नौदनो भुज्यतामिति, तत्राह। 'वृत्तौ क्रियाया अन्तर्भावादिति'।

सर्वलोकव्यवहारेति। (कै)

अर्थविशिष्टं ज्ञानं प्रतिज्ञातोऽर्थस्तदेकदेशो ज्ञानं हेतुरित्यर्थः॥

निश्चयः (कै)

इत्यस्यैव विवरणं

संदेहरहित इति॥ (कै)

दधीत्युक्ते संप्रत्यय इति। (कै)

अयं च प्रत्यय आनुमानिको वाक्यैकदेशन्यायेन वा प्रकारान्तरेणेति चेष्टयेत्यर्थः॥

चरितार्थत्वादिति। (कै)

शब्दप्रयोगकार्यस्य बोधस्य प्रकारान्तरेण संपन्नत्वादिति भावः॥

---

थ्यादसमर्थसमास एवाश्रयस्तु इति वाच्यम्। किन्दध्ना ओदनो भुज्यतामित्यादावतिप्रसङ्गात्।

---

स्वभावादेव वृत्तावन्तर्भूता क्रियेति तद्द्वारकस्य संबन्धस्य सद्भावात्सामर्थ्यमित्यर्थः॥

# चतुर्थी तदर्थार्थबलिहितसुख-रक्षितैः । २ । १ । ३६ ॥

## समासादाशिषोऽनवगमादिति । (कै)

एवं चानभिधानात्समासो नेति भावः ॥ यत्तु आशिषि आशीर्विषयस्य विधेयत्वं तदाश्रयस्योद्देश्यत्वं च प्रतीयते न च वृत्तावुद्देश्यविधेयभावेनान्वयो व्युत्पत्तिसिद्ध इति । तन्न । समासतोऽपि अभ्यासलोप इत्यादावुद्देश्यत्वादिप्रतीतेर्वस्तुतस्तु आशीर्विषय-

---

चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः ॥ चतुर्थ्यंतार्थाय यत्तद्वाचिना अर्थशब्दादिभिश्च चतुर्थ्यन्तं समस्यते स तत्पुरुषः । तदर्थेन प्रकृति-विकृतिभाव एव समास इष्यते बलिरक्षितग्रहणाज्ज्ञापकात् । हितसुखग्रहणं तु न ज्ञापकं हितयोगे चतुर्थी वक्तव्या । चतुर्थी-चाशिषीति अतादर्थ्येऽपि चतुर्थीसम्भवात् । यूपाय दारु यूपदारु । कुण्डलाय हिरण्यम् । नेह रन्धनाय स्थाली । कथं तर्हि अश्वघासः ।

---

"चतुर्थी तदर्थार्थबलिहितसुखरक्षितैः" ॥ 'अर्थः परामृश्यत इति' । यद्यपि चतुर्थीति चतुर्थ्यन्तः शब्दः सन्निहितस्तथापि शब्दं प्रति तादर्थ्या-सम्भवात्तदर्थ एव परामृश्यत इत्यर्थः । 'इत्येतैः शब्दैः सहेति' । तत्र तदर्थेन सुबन्तेनेत्यर्थद्वारकं विशेषणं स्वरूपेण सुबन्तस्य तादर्थ्यासम्भवात्, द्वितीय-

क्रियान्वय्यर्थकात्प्रातिपदिकात्तद् द्वारके आयुष्यादियोगे चतुर्थीति तदर्थात् उभयोरपि क्रियान्वयेन परस्परमसामर्थ्यात्समासस्तेन न । एवं चैतज्ज्ञापकसिद्धैव हितयोगे चतुर्थीति तात्पर्यम् । अति-व्याप्तिः । रन्धनाय स्थालीत्यादौ ॥ पुनरुक्तिः । बलिरक्षितग्रहणस्य ॥ अव्याप्तिः । अश्वघासे ॥

## स्ववचनेनैवेति । (कै)

स्वशब्देनात्र पूर्वपदी । सर्वनाम्नां बुद्धिस्थपरामर्शकत्वादिति भावः ॥ "तद्वचनेनैवेति" युक्तः पाठः ॥

---

हृत्तिविधे त्रिविधा अत्र विग्रहः । अत्र भाष्यं अश्वघासादयः षष्ठी-समासा इति । स्यादेतत् । चतुर्थीसमास एव तर्ह्यस्तु । न चैवं पूर्व-पदप्रकृतिस्वरप्रसङ्गः । प्रकृतिविकार भावे एतत्प्रवृत्तेः । अन्यथा गोर-क्षितमित्यत्र चतुर्थीतदर्थ इत्येव सिद्धे कृ चेति व्यर्थं स्यात् । न च क्तीनार्थे तत् । गोहितमित्यत्र तादर्थ्याभावादिति वाच्यम् । हिते चेति वक्तव्ये कृ चेतिसामान्यवचनस्य ज्ञापकत्वात् । अत एव कुबेरबलिरित्यादौ प्रकृतिविकृतिभावाभावात् न पूर्वपदप्रकृतिस्वरः किं तु समासान्तो-

---

दात्तः स्वर्थशब्दः पृथगेव निमित्तम् । 'प्रकृतिविकारभावे समास इष्यत इति' । ज्ञापकात् । यदयं बलिरक्षितग्रहणं करोति तज्ज्ञापयति विकृतिश्चतु-र्थ्यन्ता प्रकृत्या समस्यत इति, अन्यथा कुबेरबलिः । गोरक्षितमित्यत्रापि तादर्थ्यसम्भवादनर्थकं तत् स्यात्, हितसुखग्रहणं तु हितयोगे चतुर्थी वक्तव्या, चतुर्थी चाशिषीत्यतादर्थ्येऽपि चतुर्थीसम्भवाच्च ज्ञापकं, यदि विकृतिः प्रकृत्या समस्यते ऽश्वेभ्यो घासो ऽश्वेभ्यः सुरा ऽश्वसुरं विभाषा-

आनन्तर्यमिति । (कै)

सर्वन्यासेषु वचनारम्भस्यावश्यकत्वरूपसामर्थ्ये सति तत्र कारण-मित्यर्थः । "सामर्थ्याभावे" इति क्वचित्पाठः । तदा न्यासान्तरे-ऽकर्त्तव्यतायोग्यत्वाभावे इत्यर्थो बोध्यः ॥

[1]परवल्लिङ्गमिति पुंस्त्वमिति । (कै)

परस्योत्तरपदार्थस्य प्रधानत्वात्तद्देवलिङ्गं समासेऽपि प्राप्तो-

दात्तत्वमेवेति सिद्धान्तः । रन्धनाय स्थाल्यादौ तु यदि षष्ठीसमास इष्टः तर्हि चतुर्थीसमास एवेष्यतां यथा गोग्रासः लीलाम्बुजं क्रीडासरः वासभवनं नाट्यशालेति । यदि तु रन्धनस्थाल्यादौ षष्ठी-समासस्यानभिधानं तर्हि चतुर्थीसमासस्यापि तदस्तु । एवं च बलि-रक्षितग्रहणमपि व्यर्थं ज्ञाप्याभावात् । किं च यूपदार्वादावपि षष्ठी-समाससम्भवात्सूत्रमेवेदं मास्तु । चतुर्थीतदर्थ इत्येतत्तु षष्ठीतदर्थ इति क्रियतां ज्ञापकाच्च स्वरस्य व्यवस्था भविष्यति । अत्राहुः । हितशब्देन

सेनेति नपुंसकत्वं, हस्तिभ्यो विधा हस्तिविधा, विधा अन्नविशेषः, अत्र न प्राप्नोति, अश्वघासादयः षष्ठीसमासा भविष्यन्ति । ननु स्वरे विशेषो भवति चतुर्थीसमासे हि सति चतुर्थीतदर्थ इति पूर्वपदप्रकृतिस्वरेण भाव्यं षष्ठी-समासे तु समासान्तोदात्तत्वेन, नैषोऽस्ति विशेषः । चतुर्थीसमासेऽपि नैवपूर्वपदप्रकृतिस्वरेण भाव्यं ज्ञापकात्, यदयं 'क्ते चे' ति चतुर्थ्यन्तं पूर्वपदं प्रकृतिस्वरं भवतीत्याह तज्ज्ञापयति प्रकृतिविकारभावाभाव एव स्वरो न

---

1 अ २ । पा ४ । सू २६ ॥

तीत्यर्थः । न तु सूत्रस्यात्र विषय इति बोध्यम् । तस्य पूर्वपदार्थ-प्रधानैकदेशिसमासविषयकत्वात् । तद्ध्वनयति भगवान्

**अर्थशब्दोऽयं पुंलिङ्ग** (भा)

इत्यादि ॥

**अभिधेयवशेनेति ।** (कै)

समुदायार्थनिरूपितविशेष्यतावदर्थवशेनेत्यर्थः ॥ भाष्ये

**समासस्याभिधानमिति ।** (भा)

समासार्थस्येत्यर्थः ॥

---

तावत् षष्ठीसमासो न सम्भवति । तद्योगे चतुर्थ्या नित्यत्वादिति चतुर्थीसमास एव वक्तव्यः । ततश्च क्ते चेत्यत्रापि चतुर्थीग्रहणं कर्तव्यं गोहितमित्याद्यर्थं एवं च गोरक्षितमित्यत्र न स्यात् । चतुर्थ्या असम्भवात् षष्ठीतदर्थ इत्यस्य चाप्रसङ्गः । प्रकृतिविकृतिभावात् । अतो रक्षितेनापि चतुर्थीसमास एव विधेयः । अर्थशब्देनापि योगे तादर्थ्य-सम्बन्धस्य नियमेन प्रतीयमानत्वाच्चतुर्थ्या भवितव्यमिति तेनापि

---

भवतीति, अन्यथा गोरक्षितमित्यत्रापि चतुर्थी तदर्थ इत्येवसिद्धेरनर्थकं तत्स्यात् । नैतदस्ति ज्ञापकं, हितार्थमेतत्स्यात्, गोहितमित्यत्र हि तादर्थ्यं नास्ति, एवमपि हिते चेति वक्तव्ये क्ते चेति सामान्यवचनं ज्ञापकमेव, सर्वथा कुबेरबलिरित्यादौ माभूदित्येवमर्थं प्रकृतिविकारभावे स्वर एषितव्यः । अथ रन्धनाय स्थालीत्यत्र षष्ठीसमासः कस्मान्न भवति । कश्चिदाह भवत्येव तद्यथा गोग्रासः, लीलाम्बुजं, क्रीडासरः, वासभवनं,

तन्मात्रेति। (कै)

संबन्धत्वमात्रेत्यर्थः॥ इदमेव युक्तम्। गुरोरिदं गुर्वर्थमित्यत्रास्यैव प्रकारस्य संभवात्। भाष्ये

गुरोरिदं गुर्वर्थमिति। (भा)

षष्ठीसमासोऽप्येतद्विषये नित्य एव भाष्यप्रामाण्यादिति बोध्यम्॥

अर्थे क्तो चेति। (भा)

न च क्तग्रहणं हितार्थं तत्राताद‍र्थ्येऽपि हितयोगे चेति चतुर्थीविधानादिति वाच्यम्। ज्ञापकपरभाष्यप्रामाण्येनात्रापि तदर्थ इत्यस्य

---

चतुर्थीसमास एव वक्तव्यः। तथा बलिसुखग्रहणमपि कर्त्तव्यम्। तादर्थ्यस्य समासान्नियतप्रतीतिर्यथा स्यादित्येवमर्थम्। तस्मादारब्धव्यमेवेदं सूत्रम्। प्रकृतिविकारभाव एवेत्यस्य प्रयोजनं तु चिन्त्यमिति। अत्रेदं वक्तव्यम् तादर्थ्यस्य भानं द्विधा सम्बन्धत्वेन तद्व्याप्यतादर्थ्यत्वाख्यविशेषरूपेण चेति। तत्राश्वानां घासोऽश्वेभ्यो घास इति वाक्ये तावद्व्यवस्थितम्। तत्राद्ये समासः। द्वितीये तु नेष्यत इति भाष्य-

---

भाष्यशालेति। अपर आह रन्धनस्थाल्यादयोऽनभिधानात् षष्ठीसमासा न भवन्तीति। उभावपि प्रतिब्रूमः। येषु षष्ठीसमास इष्यते तेषु चतुर्थीसमास एवास्तु येषु तु नेष्यते तेषु तु चतुर्थीसमास एवानभिधानान्नेष्यतां माकारि ज्ञापनार्थं बलिरक्षितग्रहणं, स्वरस्तु चतुर्थीसमासेऽपि पूर्वोक्तेन प्रकारेण प्रकृतिविकारभाव एव व्यवस्थास्यते, किं चैवं सति सूत्रमेवैतदनर्थकं, यूपदार्वादावपि षष्ठीसमास एवास्तु, चतुर्थी तदर्थे इत्येतत्तु षष्ठी

संबन्धेनादोषात् । न च रक्षितार्थम् । तत्र तादर्थ्ये चतुर्थ्या एव सत्वात् । तृत्युक्तसंप्रदानचतुर्थी तु न । तत्त्वस्योपपादयितुमशक्यत्वात् । भाष्यप्रामाण्येनानभिधानात्संप्रदानत्वाभावकल्पनाच्च ॥

## रन्धनस्थाल्यादयस्त्वनभिधानादिति । (वा)

अत एवोपक्रमस्थं भाष्यं सङ्गच्छते ॥ ननु यूपदार्वादावपि अश्वघासादिवत् संबन्धसामान्यविवक्षायां षष्ठीसमासेऽन्तोदात्तत्वमपि स्यादत आह

---

वार्त्तिकादिप्रामाण्येन निर्णीयते यथा न भाषायामश्नीयादित्यादौ सम्बन्धसामान्ये षष्ठी । कर्मत्वरूपविशेषे तु द्वितीया यथा वा प्रदीयतान्दाशरथाय मैथिलीत्यत्र सम्बन्धिसामान्येऽण् । अपत्यरूपताद्विशेषे तु इञेव । यथा वा अभून्नृपो विबुधसख इत्यादौ भूतसामान्यविवक्षायां लुङ् । अनद्यतनत्वविवक्षायां तु लङेवेति । अत एवातोनुपसर्गे क इति सूत्रे नीवद्यत्वरूपविशेषाविवक्षायां प्रोवाच भगवान्कात्य इति प्रयुक्तं भाष्ये । अत एव कृतलब्धक्रीतकुशला इत्यत्र जातलब्धाभ्यां कृतक्रीतयोर्न

---

तदर्थ इति क्रियतां ज्ञापकाच्च स्वरस्य व्यवस्था क्रियतां, नन्वर्थ भेदो भवति, षष्ठीसमासे संबन्धमात्रं गम्यते चतुर्थीसमासे तु तादर्थ्यं संबन्धविशेषः, नैषोऽस्ति विशेषः । आरभ्यमाणेऽपि चतुर्थीसमासे न दण्डवारितः षष्ठीसमासस्तत्रार्थप्रकरणादिना विशेषोवसेयः, यद्येवं केवलेपि षष्ठीसमासे तथा विशेषो ऽवगंस्यते, किं च सिद्धान्तेऽश्वघासादिषु तावदर्थप्रकरणादिना तादर्थ्यविज्ञानः सर्वत्रैव तथास्तु नार्थोनेन । उच्यते । हितशब्देन तावत् षष्ठीसमासो न भवति तद्योगे चतुर्थ्या नित्यत्वादिति चतुर्थीसमास

## यूपदार्वादिष्विति ॥ (कै)

## तादर्थ्यमेवेति । (कै)

तादर्थ्यरूपः संबन्धविशेष एवेत्यर्थः ॥ नन्वेवमश्वघासादौ चतुर्थीसमास एवास्तु बलिरक्षितग्रहणं तज्ज्ञापितं प्रकृतिविकृतिग्रहणं च मास्तु पूर्वपदप्रकृतिस्वरत्वं तु भाष्योक्तरीत्यैव न भविष्यति रन्धनाय स्थालीत्यादौ षष्ठीसमासवदयमपि अनभिधानान्न भविष्यतीति चेन्न । रन्धनाय स्थालीत्यादौ षष्ठ्येव न तादर्थ्यत्वेनैव तत्र संबन्धस्य

---

गतार्थता प्रकारभेदादिति चतुर्थे वृत्तिकारः । त्वयापि तत्र तथैवोपपादयिष्यते । तत्र भव इत्येव सिद्धे प्रायभवः, सोऽस्य निवास इति सूत्रयोरप्येषैव गतिः । यथा च प्रयोजने स्पष्टे कथञ्चिन्त्यतां ब्रूषे । ननु अश्वघास इत्यादावपि प्रकारत्वाविशेषाध्यवसायो भवत्येवेति चेत् । सत्यम् । न तु तत्र विशेषप्रकारको बोधः । लुप्तं स्मृतं बोधकमिति मते स्मृतषष्ठ्या सम्बन्धत्वप्रकारकबोधस्यैव जननात् । यः श्रिष्यते स लुप्यमानार्थाभिधायीति सिद्धान्तरीत्यापि चतुर्थीलोपाभावेन विशेषप्रकारकबोधे असामर्थ्यात् । अत एवार्थप्रकरणाद्यभिज्ञस्यापि दाश-

---

एव वक्तव्यः, ततश्च क्व चेत्यत्रापि चतुर्थीग्रहणं कर्तव्यं गोहितमित्याद्यर्थम्, एवं च गोरक्षितमित्यत्र न स्यात् चतुर्थ्या असम्भवात् षष्ठी तदर्थे इत्यस्य चाप्रसङ्गः प्रकृतिविकाराभावादिति रक्षितेनापि चतुर्थीसमास एव विधेयः, अर्थशब्देनापि योगे तादर्थ्यसंबन्धविशेषस्य नियमेन प्रतीयमानत्वाच्चतुर्थ्या सम्भवितव्यमिति तेनापि चतुर्थीसमास एव कर्तव्यः, बलिसुखग्रहणमपि कर्तव्यं, तादर्थ्यस्य समासे नियमेन प्रतीतिर्यथास्यादित्येवमर्थं

प्रतीतेरेव च तत्र चतुर्थीसमासवारणार्थं तस्यावश्यकत्वादिति भाष्याशयात्। कैयटेऽनभिधानादित्यस्य षष्ठ्यनभिधानादित्येवार्थः॥

भाष्ये

## इत्संज्ञा न प्राप्नोतीति। (कै)

आद्यसकारस्येत्यर्थः॥

## भवति वै कश्चिदिति। (कै)

रथशब्दान्नापत्यत्वप्रकारिका धीः किं तु सम्बन्धित्वप्रकारिकैवेत्यादि- शाब्दन्यायविदां स्पष्टम्। अत एवाहुः। भेद्यभेदकसम्बन्धोपाधिभेद- नियन्त्रितम्, साधुत्वमिति। तस्मादश्वाश्वशब्दयोरिव स्वविषयादन्यत्रा- साधुता क्वचित्साधुतया न विरुध्यत इत्यवधेयम्। एवं स्थिते बलि- रक्षितादिग्रहणं ज्ञापकमित्यादि प्रागुक्तमेव सम्यक्। यत्तु तादर्थ्यस्य समासान्नियमेन प्रतीत्यर्थं बलिसुखग्रहणमित्युक्तम्। तत्रापि न। तत्रापि पाक्षिकषष्ठीसमासस्य दुर्वारतया नियतप्रतीततादर्थ्येन चतुर्थीविभक्तिराक्षिप्यते। तस्मैहितमित्यतो वानुवृत्त्यसिद्धेः। पूर्वपक्षा-

तस्मादारब्धव्यमेव सूत्रं, प्रकृतिविकारभाव एव समास इत्यस्य तु प्रयोजनं चिन्त्यम्। 'अर्थेन नित्यसमासवचनमिति'। अन्यथा महाविभाषाधिकारा- द्ब्राह्मणायार्थ इति वाक्यमपि स्यात्। 'सर्वलिङ्गता चेति'। परलिङ्गताया अपवादः, अभिधेयवशेन च सर्वलिङ्गता न सर्वत्रेति दर्शयति। 'ब्राह्मणार्थं पय इत्यादि'। सर्थबिति चेदित्संज्ञाभाव इयङुवङ्प्रसङ्गश्च। स्यादेतत्। तदर्थं विकृतेः प्रकृताविप्यत्र तदर्थे सर्थबिति सूत्रं कर्त्तव्यं, चतुर्थीति

एवं च वैकल्पिकेऽपि बहुव्रीहौ यथान्यत्रापि क्वचिदस्वपदल-मेवमत्रापि ब्राह्मणोऽर्थः प्रयोजनमुपकार्यत्वेन यस्येति प्रयोजन-वाच्यर्थशब्देन विग्रहः। न तु चतुर्थ्यन्तेन विग्रहः। ब्राह्मणायार्थ-मुपकारोऽस्येतीति भावः ॥ तद् ध्वनयन्नाह

अत्र चेति। (कै)

प्रयोजनवाचीति। (कै)

---

वसरे त्वयैव तथोक्तत्वाच्चेति दिक्। अर्थेन नित्यसमासो विशेष्य-लिङ्गता चेति वक्तव्यम् ॥ द्विजायायं द्विजार्थः सूपः। द्विजार्थं पयः। तत्र नित्यत्वं न्यायसिद्धम्। चतुर्थ्या तादर्थ्यस्योक्तत्वादर्थशब्देन विग्रहो न भविष्यति परवल्लिङ्गतां बाधितुं विशेष्यलिङ्गतामात्रं वाच्यम्। स्यादे-तत्। तदर्थं विकृतेः प्रकृताविव्यत्र तदर्थसमर्थमिति सूत्रं क्रियताम्। तादर्थ्येन चतुर्थीविभक्तिराक्षिप्यते। तस्मैहितमित्यतो वानुवर्तते। चतुर्थीसमर्थात्तदर्थेऽभिधेये सर्थप् स्यात्। आदिर्ञिटुडवः षः प्रत्ययस्येति द्विसकारकनिर्देशात्सकारस्येत्संज्ञा। सितिचेति पदत्वम्। पित्त्वादनुदात्तः।

---

वर्त्तते चतुर्थीसमर्थात्तदर्थेऽभिधेये सर्थप्प्रत्ययो भवति, सकारः पदसंज्ञार्थः राजार्थः, गवार्थः पित्त्वादनुदात्तत्वम्, एवं चार्थ इति पूर्वपदप्रकृतिस्वरो न विधेयः, प्रत्ययत्वाच्च न तेन विग्रहः, तद्धितत्वाच्चाभिधेयवल्लिङ्गता सिद्धा-तीति। तन्न। सकारस्येत्संज्ञाभावप्रसङ्गात्। 'आदिर्ञिटुडवः' 'षःप्रत्यय-स्ये'ति द्विसकारकनिर्देशाश्रयणेनेत्संज्ञा स्यादेवमपि वृक्षार्थादिषु हयादिभ्यः सि प्रसङ्गः, प्रयं सर्थमित्यत्र चेयङुवङौ स्याताम्। बहुव्रीहावात्वकपोः प्रसङ्गः। स्यादेतत्। यद्ब्राह्मणार्थं पयस्तस्य ब्राह्मणोऽर्थः प्रयोजक इति

उपकार्यत्वेन हि ब्राह्मणस्य प्रयोजनता । प्रयोजकवाचीति पाठे तु ब्राह्मणार्थं पयस्तस्य ब्राह्मणः प्रयोजको भवतीति भावः ॥ भाष्ये

यदयं हितेति । (कै)

"हितयोगे चे"ति वार्त्तिकात्तद्योगे चतुर्थीति भावः । न च सुखग्रहणस्य न ज्ञापकत्वं तद्योगे चतुर्थ्यभावात् इति वाच्यम् । "हितयोगे चे"ति सुखयोगेऽपि चेति भाष्याशयात् ॥ भाष्ये

---

राजार्थः । गवार्थः । एवं चार्थे इति पूर्वपदप्रकृतिस्वरो न विधेयः । प्रत्ययत्वाच्च न तेन विग्रहः । तद्धितत्वादभिधेयलिङ्गता च सिद्धेति । नैवम् । चः प्रत्ययस्येत्यत्र सकारप्रश्लेषे मानाभावात् । वृक्षग्यादिसूत्रेण हृष्यादिभ्यः सप्रत्यये हृषास इत्यादावतिव्याप्तेश्च । किं च । सर्थपः प्रत्ययत्वे चूत्यर्थं अर्थमित्यत्रेयङुवङोः प्रसङ्गः । स्यादेतत् । ब्राह्मणोऽर्थः प्रयोजको-ऽस्य स ब्राह्मणार्थ इति बहुव्रीहिरस्तु । यो हि ब्राह्मणार्थः सूपस्तस्य ब्राह्मणोऽर्थः प्रयोजक इति यावत् । एवं च चतुर्थ्यन्तेन विग्रहाभावः । पूर्वपदप्रकृतिस्वरत्वं विशेष्यलिङ्गता चेति सर्वं सिध्यति । नैतत् ।

---

उच्यते वक्ष्यमतो ब्राह्मणोऽर्थोऽस्येति विग्रहे बहुव्रीहिः करिष्यते, तेन चतुर्थ्यन्तेन विग्रहाभावः पूर्वपदप्रकृतिस्वरत्वमभिधेयवल्लिङ्गता च सिद्ध्यतीति । तन्न । महदर्थमित्यत्रात्वकपोः प्रसङ्गात् । तदर्थस्यार्थादेश उद्भाव प्रसङ्गः । स्यादेतत् । चतुर्थी तदर्थेत्यनेन समासं विधायार्थ इत्यनेनांशेन तदर्थवाचिन उत्तरपदस्यार्थशब्द आदेशो विधीयते विभाषाधिकाराच्च यूपार्थं दारु यूपदार्वित्युभयं भविष्यति, ततो बलिरक्षितयोरपि विभाषार्थ-शब्द आदेशो भवति कुबेरार्थो बलिः कुबेरबलिरित्यादि । किमर्थमिदं,

## उक्तार्थानामिति। (भा)

न च तादर्थ्यस्य चतुर्थ्योक्तत्वेऽप्याश्रयबोधकार्थशब्दस्य कथमुक्तार्थ-त्वमिति वाच्यम्। सम्बन्धेन द्वितीयसम्बन्ध्या ऽऽक्षेपेणैव तत्राभ-धानाप्युपपत्तेः॥

## वचनादिति। (कै)

"चतुर्थीतदर्थार्थे"ति वचनात्॥

---

मद्दर्थमित्यत्रालकयोः प्रसङ्गात्। स्यादेतत्। चतुर्थीतदर्थेतियोगो विभज्यते। ततः अर्थ इत्यनेनांशेन तदर्थवाचिन उत्तरपदस्यार्थादेशो विधीयते। स च वैकल्पिकः। महाविभाषाधिकारात्। तेन यूपार्थं दारु यूपदार्वित्युभयं भवति। न चार्थादेशेनोक्तार्थत्वाद्धातशब्दप्रयोगानु-पपत्तिः। अर्थादेशस्य सकलशब्दसाधारणतया विशेषस्फुटीकरणार्थन्त-त्सम्भवात्। ततो बलिरक्षितयोरपि विभाषार्थशब्द आदेशो भवति। कुबेरार्थो बलिः कुबेरबलिरित्यादि पूर्वेण सिद्धे ज्ञापनार्थेदं प्रकृति-विकृतिभावादन्यत्र नित्योऽर्थादेश इति। तेन रन्धनार्था स्थालीत्यादि

---

न पूर्वेणैव सिद्धं, ज्ञापकार्थमेतज्ज्ञापयति प्रकृतिविकारभावादन्यत्र नित्योऽर्थादेश इति तेन रन्धनार्था स्थालीत्यादि भवति न तु रन्धनस्थाली-त्यादि, अश्वघासादयस्तु पूर्ववत् अत्र समासे कृते उत्तरपदस्य विधीय-मानेनार्थशब्देन विग्रहो न भविष्यति यस्मात्स्थानेऽर्थादेशस्तत्स्थिरता स्थानिवद्भावेन भविष्यति, अर्थ इति पूर्वपदप्रकृतिस्वरस्तु विधेय एवेति। तन्न। उदकार्थो वीवध इति वीवधशब्दस्यार्थादेशे कृते स्थानिवद्भावेन

लक्षणस्याभावादिति । (कै).

परस्योत्तरपदस्य प्रधानत्वात्प्रधानवल्लिङ्गं समासस्येति लक्षणस्याभावादित्यर्थः ॥ [1]यद्वा । एकदेशिसमासविषयकतया तस्याप्यभावात्प्रत्याख्यास्यमानत्वादेत्यर्थः ॥

---

[1] "यद्वा" इत्यारभ्य "वेत्यर्थः" इत्यन्तं नास्ति इंगलण्डीयपुस्तके ॥

---

भवति । न तु रन्धनस्थालीत्यादि । अश्वघासादयस्तु पूर्ववत् । तथा चार्थशब्दस्यादेशत्वात्तेन विग्रहो न भविष्यति । स्थानिलिङ्गं च भविष्यति । स्थान्यर्थाभिधानसमर्थस्यैवादेशत्वात् । स्थानिवद्भावाच्च । अर्थ इति पूर्वपदप्रकृतिस्वरस्तु विधेय एवेति । नैतदपि । उदकार्थो वीवध इत्यत्र वीवधशब्दस्यार्थादेशे कृते स्थानिवद्भावेन मन्थौदनादिसूत्रेणोदादेशप्रसङ्गात् ।

इत्युवौ सत्यपि स्यातां बहुव्रीहौ कथाच हि ।
अर्थादेशे तूदभावो यथान्यासं वरं ततः ॥

---

मन्थौदनादिसूत्रेणोदभवप्रसङ्गात्, अतश्चतुर्थीसमास एव विधेयः, तथा चार्थेन नित्यसमासः सर्वलिङ्गता च वक्तव्या, न वक्तव्या, ब्राह्मणायेति चतुर्थ्या तादर्थ्यस्योक्तत्वादर्थशब्देन विग्रहो न भविष्यति 'लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्गस्ये'ति सर्वलिङ्गता च सिद्धा—

तदेतत्प्रतिपद्यन्तां भाष्ये कृतपरिश्रमाः ।
नान्ये सहस्रमप्यन्धाः सूर्यं पश्यन्ति नाञ्जसा ॥

# सप्तमी शौण्डैः। २।१।४०॥

अर्थग्रहणे सतीति। (कै)

अर्थग्रहणद्वारा पर्यायार्थः स्यादित्यर्थः॥ भाष्ये

बहुवचनेति। (भा)

गणपाठसफलत्वादिति शेषः। साहचर्यादारोपितशौण्डशब्दस्वरूपाणां धूर्तादीनां शौण्डशब्दस्य च तेनाभिधानादित्यन्वयः॥

---

सप्तमी शौण्डैः॥ सप्तम्यन्तं शौण्डादिभिस्सह प्राग्वत्। अक्षशौण्डः। बहुवचननिर्देशादाद्यर्थावगतिः। ननु अर्थनिर्देशार्थं बहुवचनम्, तेन समासार्थं वा बहुवचनं किन्न स्यादिति चेन्न। गणपाठवैयर्थ्यापत्तेः। स्यादेतत्। कारकाणां क्रिययैव सम्बन्ध इति तावन्निश्चितम्। तदिह अक्षशौण्ड इत्यादौ सप्तम्यर्थः क्वान्वेतु क्रियाया अश्रवणात्। सत्यम्। प्रसक्तिरूपा क्रिया वृत्तावन्तर्भवति तद्द्वारकमेव च सामर्थ्यं यथा

---

“सप्तमी शौण्डैः”। अत्र साहचर्याद्धूर्तादिवाचकत्वार्थ एव शौण्डशब्दः प्रयुज्यते यथाक्षस्त्रियो गच्छन्तीति, अत्र च प्रमायां बहुवचननिर्देशः, अतोऽन्तरेणाप्याविर्भूतं तदर्थो गम्यत इत्याह। ‘शौण्डादिभिरिति’। गणपाठसामर्थ्यात्तु बहुवचननिर्देशोऽर्थनिर्देशार्थो बहुवचनान्तस्य

यथेति । (कै)

अन्यत्रापि क्वचित्वारोपेण तत्र प्रयोग इति भावः । एवं काकेभ्यो रक्ष्यतामित्यादावपि दध्युपघातकत्वसादृश्येन सर्वेषु काकत्वारोपात्प्रयोग इति बोध्यम् ॥ कारकस्य शौण्डादिभिः सामर्थ्याभावादाह

इत्यन्तरिति । (कै)

यदि तु यद्द्वारकं यस्य कारकत्वं तदन्वयद्वारैव तस्य क्रियान्वय इत्यङ्गीक्रियते तदा साक्षादपि सामर्थ्यमस्त्येवेति बोध्यम् ॥

---

दध्योदनगुडधानादिषु अन्तःशब्दोऽत्र पठ्यते । तद्योगे अवयविन आधारत्वविवक्षायां सप्तमी । यथा वृक्षे शाखेति । वने ऽन्तर्वणान्तः । अस्य वैकल्पिकत्वात्पक्षे ऽव्ययीभावः । अन्तर्वणम् । प्रगिरन्तरिति णत्वमिति हरदत्तः । अत्रेदं वक्तव्यं, नायं विभक्त्यर्थे ऽव्ययीभावस्य विषयः विभक्त्यर्थमात्रवृत्तेरव्ययस्य स इत्युक्तत्वात् । अत्र मध्यस्यापि प्रतीतेः । कथमन्यथा ऽवयवावयविभावमवोचः । किं चाऽव्ययीभावस्य नित्यत्वात्तदुपदर्शितो वने अन्तरिति विग्रहोऽपि न संगच्छेत । तस्मादधिकरणत्वमात्रवृत्तिना अन्तःशब्दान्तरेणाव्ययीभावो न तु मध्यवाचिनेत्यवधेयम् । अधि-

---

वा समासार्थं इति न भवति । ननु पानशौण्ड इत्यादौ क्रियाया अमत्वादधिकरणत्वं नोपपद्यते, न चान्यत्सप्तम्या निमित्तमस्ति, न चैतदेव ज्ञापकं शक्यमाश्रयितुं शौण्डो देवदत्त इत्यादावपि प्रसङ्गाद्, अत आह । 'इत्यादिविति' । अन्तःशब्दोऽत्र पठ्यते तद्योगेऽवयविन आधारत्वविवक्षायां सप्तमी, यथा वृक्षे शाखेति, वनेऽन्तर्वणान्तः, अस्य विकल्पितत्वादव्ययी-

अन्तःशब्दोऽपेति। (कै)

मध्यरूपाधिकरणे इत्यर्थकः॥ वनान्तरित्युदाहरणम्। वन-वर्त्तिमध्ये इत्यर्थस्तस्य। यस्त्वधिकरणशक्तिमापन्नस्तेनाव्ययीभाव एवान्तर्वणमिति यथा

आधारविवक्षायामिति। (कै)

आधारत्वविवक्षायामित्यर्थः॥

---

शब्दोऽत्र पठ्यते। तस्याधिकरणप्राधान्येऽव्ययीभावः। अधिस्त्रीति। आधेय-प्राधान्ये त्वनेन तत्पुरुषः ब्रह्मण्याधीन इति अध्युत्तरपदात्खः। ब्राह्मणेऽधि-धीति विग्रहः। शौण्ड, धूर्त्त, कितव, व्याड, प्रवीण, संवीत, अन्तर, अधिकरणप्रधान एवायमिह पठ्यते। अधि, पटु, पण्डित, कुशल, चपल, निपुण। इति॥

---

भावोऽपि भवति, अन्तर्वनं, प्रविरल इति वाक्यम्। अधिशब्दः पठ्यते, तस्याधिकरणप्राधान्ये ऽव्ययीभावः। 'अधिस्त्रीति'। आधेयप्राधान्ये त्वयं तत्पुरुषः। 'ब्राह्मणाधीनमिति'। अध्युत्तरपदात्ख इति खः। ब्राह्मणे-ऽधीति वाक्यम्।

# कृत्यैर्ऋणे।२।१।४३॥

भाष्ये

नियोगे इति। (भा)

आवश्यके इत्यर्थः॥

गौणस्याप्यर्थस्येति। (कै)

ऋणग्रहणमावश्यकोपलक्षणमित्यर्थः॥

यत्ग्रहणं चेति। (कै)

यत्ग्रहणं त्वित्यर्थः॥

---

कृत्यैर्ऋणे। सप्तम्यन्तं कृत्यप्रत्ययान्तैः सह प्राग्वदावश्यके। ऋणग्रहणमावश्यकोपलक्षणार्थम्। यत्प्रत्ययान्तेनैवेष्यते। अल्पश इत्यनुवृत्तेः। कृत्यैरिति बहुवचनं तु प्रकृतिभेदाभिप्रायम्। मासे देयमृणम्। पूर्वाह्णे गेयं साम। तत्पुरुषे कृतीत्यलुक्।

---

"कृत्यैर्ऋणे"। 'यत्प्रत्ययान्तेनैवेष्यत इति'। अल्पश इत्यनुवृत्तेरेतल्लभ्यते, कृत्यैरिति बहुवचनं तु प्रकृतिभेदाभिप्रायम्। 'ऋणग्रहणं च नियोगोपलक्षणार्थमिति'। नियोगोऽवश्यं भावः, ऋणमवश्यं देयमिति नियोगस्साहचर्यान्नियोगमात्रमुपलक्षयति, तेन किं सिद्धं भवतीत्याह। 'इहापीति'। 'पूर्वाह्णे गेयमिति'। 'तत्पुरुषे कृति बहुलमित्यलुक् यथा ऋणमवश्यं देयमेवमिदमपि पूर्वाह्णेऽवश्यं गेयमिति नियोगोऽस्ति॥

# पूर्वकालैकसर्वजरत् पुराणनवकेवलाः समानाधिकरणेन। २।१।४९॥

भाष्ये

इह कस्मादिति। (भा)

समाहारद्विगोरिवात्रापि बाध्यसामान्यचिन्तया बाधः स्यादिति प्रश्नः॥

एकत्वविशेषणादिति। (कै)

एकत्वेन विशिष्टस्य विशेषणत्वादित्यर्थः॥

---

पूर्वकालैकसर्वजरत्पुराणनवकेवलास्समानाधिकरणेन। एते सप्त सुबन्ताः समानाधिकरणेन सुपा सह समस्यन्ते स तत्पुरुषः। पूर्वकाल इत्यर्थनिर्देशः। अन्येषां षण्णां स्वरूपग्रहणम्। पूर्वकालोऽपरकालेन समस्यते। पूर्वत्वस्य ससम्बन्धित्वात्। विशेषणं विशेष्येणेति सिद्धे पूर्वकालादीनां पूर्वनिपातनियमार्थं वचनम्। एकशब्दस्य तु दिक्संख्ये संज्ञायामिति

---

"पूर्वकालैकसर्वजरत्पुराणनवकेवलास्समानाधिकरणेन"। भिन्नप्रवृत्तिनिमित्तस्येत्यादि'। भिन्नग्रहणं पर्यायनिवृत्त्यर्थम्, एकग्रहणं गौरश्व इत्यादिनिवृत्त्यर्थं, क्वचिद्भिन्ननिमित्तप्रयुक्तस्येति पाठः, भिन्नेन निमित्तेन प्रवृत्तिनिमित्तेन प्रवर्तितस्येत्यर्थः। विशेषणं विशेष्येणेति सिद्धे पूर्वकालादीनां पूर्वनिपातार्थं वचनम्, एकशब्दस्य तु 'दिक्संख्ये संज्ञायामि'ति नियमात्प्राप्त्यर्थमेव। 'पूर्वकाल इत्यर्थग्रहणमिति'। पूर्वः कालोऽस्य पूर्वकालः पूर्वमनुष्ठित इत्यर्थः, स च परमानुष्ठितमपेक्ष्य भवतोऽपरापेक्षेणैव समासो विज्ञायत इत्याह। 'परकालेनेति'। 'स्नातानुलिप्त इति'। पूर्वं

नद्येति । (कै)

नदीत्वेन नदीप्रधानं नत्वेकत्वेनेत्यर्थः ॥

विप्रतिषेधेनेति । (कै)

एकशब्दातिरिक्तसङ्ख्याशब्दे ऽव्ययीभावस्य चारितार्थ्यमिति भावः ।

समाहारे इति । (कै)

स च नास्तीति भावः ॥

इति शिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते
व्याकरणमहाभाष्यप्रदीपोद्योते द्वितीयाध्यायस्य
प्रथमे पादे द्वितीयमाह्निकम् ॥

---

नियमात्प्राप्त्यर्थमेव । पूर्वं स्नातः पश्चादनुलिप्तः स्नातानुलिप्तः । अत्र क्रियाशब्दत्वात्पाचकपाठकवत्पर्यायः प्राप्तः । एकशाटी । शाटशब्दाज्जातिलक्षणो ङीष् । सर्वयाज्ञिकाः । जरत्तार्किकाः । पुराणमीमांसकाः । नवपाठकाः । केवलवैयाकरणाः । समानाधिकरणे किम् । एकस्याः शौक्ल्यं, षष्ठीसमासस्त्विह न भवति । गुणेन नेति निषेधात् ॥

---

स्नातः पश्चादनुलिप्त इत्यर्थः । अत्र क्रियाशब्दत्वात्पाचकपाठकादिवत्पूर्वनिपातः पर्यायात्स्यात् । 'एकशाटीति' । शाटशब्दाज्जातिलक्षणो ङीष, 'एकतद्धिते चे' ति ह्रस्वः । 'सर्वमनुष्य इति' । अत्र विशेषणामित्यपि समासे न दोषः, तस्मात्क्रियावाचिनां गुणवाचिनां वा समासो दर्शनीयः, एवं जरदादिष्वपि । 'एकस्याः शाटीति' । अत्र भवितव्यमेव षष्ठीसमासेन तस्मादेकस्याः शौक्ल्यमिति प्रत्युदाहर्त्तव्यम्, अत्र हि गुणेन नेति प्रतिषेधः ॥

# महाभाष्यप्रदीपोद्योतः ।

पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ॥

कृते ऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ॥

## तद्धितार्थोत्तरपदसमाहारे च ।

## २ । १ । ५१ ॥

**इत्येतच्च वक्तव्यमिति ।** (भा)

समाह्रियमाणानां प्रधानानां बहुत्वादिति भावः ॥

**कुमार्यर्थस्य प्राधान्यादिति ।** (कै)

---

तद्धितार्थोत्तरपदसमाहारे च । तद्धितार्थे विषये उत्तरपदे च परतः समाहारे च वाच्ये दिक्संख्ये समानाधिकरणेन सह समस्येते स तत्पुरुषः । पूर्वस्यां शालायां भवः पौर्वशालः । समासे कृते दिक्पूर्व-

---

"तद्धितार्थोत्तरपदसमाहारे च" । विशेषणं विशेष्येणेति सिद्धस्य पूर्वेणानियमादप्राप्तविधिरयम्, अप्रधानमात्रविषयत्वादयमपि नियमः

एवं च प्रधानत्वेन नानाक्रियासम्बन्धयोग्यतया नानाविभक्त्युत्पत्तेरेकविभक्तीति नोपसर्जनत्वमिति भावः ॥

पक्षे स्त्रीत्वमिति । (कै)

एवं च स्त्रीत्वेऽप्यनुपसर्जनत्वाद्ध्रस्वत्वे ऽनदन्तत्वात् ङीबभावे पञ्चखट्वा इति स्यादिति तात्पर्यम् । क्वचित्तु मूल एवेदं दृश्यते । परे तु नात्र नपुंसकह्रस्वप्राप्तिः । एतद्भाष्यप्रामाण्येनास्य [1]अर्धर्चादित्वेन पुंस्त्वस्यापि स्वीकारात् । [2]पञ्चकुमारिरित्यत्र विसर्गो लेखकप्रमादाद् भ्रष्टः । अत एव [3]सनपुंसकमिति भाष्यं [4]विभाषा वृचेति

---

१ अ २ । पा ४ । सू ३१ ॥
२ यदि कर्मसाधनः पञ्चकुमार्य्यः समाहृताः पञ्चकुमारि दशकुमारि । अत्रैव भाष्ये ॥
३ अ २ । पा ४ । सू १७ ॥ ४ अ २ । पा ४ । सू १२ ॥

---

पदात्संज्ञायां ञः । एवमापरशालः । उत्तरपदे, पूर्वशालाप्रियः । इह त्रिपदे बहुव्रीहौ कृते प्रियशब्दे उत्तरपदे पूर्वयोस्तत्पुरुषे सति समासान्तोदात्तत्वं लकाराकारस्य भवति असति त्ववान्तरतत्पुरुषे पूर्वपदप्रकृतिस्वरेण पूर्वशब्दस्याद्युदात्तत्वं स्यात् । दिक्षु समाहारो नास्ति ।

---

प्रक्रियते बहुमयं नियमः पूर्वो विधिरिति । एकापि समासो विषयभेदाद्भिद्यत इत्याह । 'तद्धितार्थे विषयभूत इत्यादिना' । तद्धितार्थेऽभिधेय इत्येवं तु विज्ञायमाने पाञ्चनापितिरित्यादौ तद्धितो दुर्लभः स्यात्, तदर्थस्य समासेनैवोक्तत्वादिति भावः । अभिधानप्रयोजनं तद्धिते

सूत्रे [1]लिङ्गमशिष्यमित्यादिना प्रत्याख्यातं व्यभिचारदर्शनात्तत्र कार्यमिति तदाशयः। अन्यथा संख्यादेरपि लोकाश्रयत्वात् किमर्थं वैव तत्कथनेनेत्यलम् ॥

बुध्या (कै)

हस्तादिवत्करणभूतया एकस्यां क्रियायां क्रियारूपे वस्तुनि

समीपीकरणम्। (कै)

सङ्घट्टनमित्यर्थः ॥

अर्जननिमित्तत्वादिति। (कै)

बहुव्रीहिः। अर्जने हि एतावन्मयेदमर्जितमित्येकक्रियायां सङ्घट्टनं भवतीति भावः ॥ अर्जनं स्वस्वत्वाक्रान्तताकरणम्। भाष्ये

विक्षिप्तेष्विति। (भा)

---

१ इदं तर्हि प्रयोजनम्। लिङ्गमशिष्यं लोकाश्रयत्वात् लिङ्गस्य। न तर्हीदानीमिदं वक्तव्यम्। वक्तव्यं च। किं प्रयोजनम्। पूर्वत्र नित्यार्थम्। पूर्वत्र नित्यार्थमुत्तरत्र व्यभिचारार्थं विभाषा वृत्तम्रेण इति ॥

---

अनभिधानात्। संख्यायास्तद्धितार्थे॥ षाण्मातुरः पाञ्चनापितिः॥ अनपत्य इत्युक्तत्वान्न लुक्। पंचकपालः। संस्कृतम्भक्षा इत्यण्। द्विगोर्लुगनपत्ये इति लुक्। पञ्चगवधनः। अत्रापि त्रिपदे बहुव्रीहौ धनशब्द उत्तरपदे पूर्वयोस्तत्पुरुषे गोरतद्धितलुकीति टच्। ननु पाक्षिकं पञ्चगोधन इति दुर्वारम्। महाविभाषाधिकारेण तत्पुरुषस्य वैकल्पिकत्वात्।

---

त्रिषय इत्येवास्तु तद्धिते परत इति तु विज्ञायमाने इतरेतराश्रयं प्राप्नोति समासात्तद्धितो विधेयस्तद्धिते च समास इति, किं च तद्धितार्थेऽभिधेय इत्यस्मिन्पक्षे न दोषः, ।'द्विगोर्लुगनपत्य' इति लुग्वचनं ज्ञापकमुत्पद्यते द्विगोस्तद्धित इति सर्वतद्धितसाधारणो द्विगुस्तत्रावश्यं विशेषाभिधानाय

विक्रयार्थं विचित्य स्थापितेष्वित्यर्थः। तत्र नौत्तराधर्यमिति भावः॥

समीपीकरणमित्यर्थ इति। (कै)

तत्रैकदेशे क्रियायां बुद्धौ वेत्यन्यत्॥

एकवर्गीकरणेनेति। (कै)

फलरूपे हेतौ तृतीया। अभिमुख्यार्थाङ्गं वर्गीकरणं लभ्यम्॥ भाष्ये

साहश्येऽपि वर्त्तत इति (भा)

एकक्रियाकारकत्वादिरूपं सादृश्यमेव समाहारशब्दार्थः। अनुहरतिवत्॥ नन्वनुपूर्वकस्यैव तत्र शक्तिरत आह भाष्ये

अथवेति॥ (भा)

नैवेदमिति। (भा)

"[1]पञ्चग्रामी"त्यादिपदम्। इयमिति पाठे उक्तिरिति शेषः॥

१ अत्रैव भाष्ये।

त्यिकत्वात्। अत एव नित्यत्वमुपसंख्यातं वार्तिककृता द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनमिति। अत एव वाक् च दृषच्च प्रिये अस्य वाग्दृषदप्रियः, छत्रोपानहप्रिय इति त्रिपदे बहुव्रीहौ पूर्वयोर्नित्यं द्वंद्वः। तेन समासान्तोऽपि नित्यमेव। स्यादेतत्। समुदायस्यैकार्थीभावे सति अवयवयोरावश्यक इत्युपसंख्यानं व्यर्थमिति चेत्।

तद्धित उत्पद्यत इत्यपि शक्यं विज्ञातुम्। अथैवं कस्मान्न विज्ञायते तद्धितार्थे द्विगुर्भवति तद्धितो यथा स्यादिति द्विगुर्भवतीति, यथा दारार्थं घटामहे दारा यथा स्युरिति घटामह इति, नैवं शक्यं विज्ञातुम्। एवं

इयत्येव। (भा)

पञ्चग्रामादिमात्र एव॥

असौ। (भा)

प्रायोक्ता द्रष्टा वा॥

ततः। (भा)

ग्रामादितः। अतिरिक्तं इति शेषः॥

आकाङ्क्षति। (भा)

बोधयितुम्॥

क्रियाम्। (भा)

नदीतीरस्थलादिरूपाम्॥

गुणम्। (भा)

सम्बद्धत्वादिरूपम्॥

तत्र च बुध्येति। (कै)

"तत्र" क्रियादौ। "बुध्या" करणभूतया। तेषां सामीप्यं सङ्कुचितं क्रियत इत्यर्थः॥

---

नैवम। त्रयाणां समासे कृते ऽन्यपदार्थोपसंक्रमेण परस्परसम्बन्धाभावात् सति तूपसंख्याने वचनसामर्थ्याद्द्वन्द्वतत्पुरुषयोः प्रवृत्तेः। न चैवं त्रिपदे बहुव्रीहौ चित्राजरद्गुरित्यत्रापि तत्पुरुषे चित्राशब्दस्य पुंवद्भावापत्तिः। उपसंख्यानस्य तद्धितार्थोत्तरपदेति सूत्रोक्ततत्पुरुषमात्रविषयत्वात्तस्यैवो-

हि विज्ञायमाने तद्धितोत्पत्तये विधीयमाना समाससंज्ञा विषयान्तरे न स्यात्, एवं तस्यैव समासस्य विधीयमाना द्विगुसंज्ञापि, ततश्च पञ्चारत्नि-रित्यत्र इगन्ते द्विगाविति स्वरो न स्यात्, तस्य तु समाहारद्विगुरवकाशः,

असम्भवादिति । (भा)

जातेरेवानयनान्वयः क्रिया तु तत्रासम्भवात्तत्सम्बद्धे द्रव्ये इति द्रव्यद्वारा तदानयनादिति भावः ॥ तद्ध्वनयन्नाह

अन्यानयने पाचस्यैवेति । (कै)

अग्निरानेय इति बोधिते शब्दाबुद्धपाचस्यापि यथा आनयनं केवलतदानयनासम्भवात्तथेहापीति भावः । मञ्जूषायां चेदमुपपादितम् ॥

वास्तवभेदाभावादिति । (कै)

त्तरपदे प्रतिपदोक्तत्वात् । अत एव "खादिरेतरशम्यम्" (२ । १ । १ । भाष्ये) इत्यत्र पुंवद्भावसिद्धये कर्मधारयोत्तरपदो बहुव्रीहिर्न तु त्रिपदे इति समर्थसूत्रशेषे कैयटः । यत्तु पूर्वतन्त्रे बाधलक्षणे [१]"एकस्य युगपद्विधेरेकाहवद्द्विसामत्वम्" (मीमां-द-१०-६-४) इत्यधिकरणे "एषः षडहो बृहद्रथन्तरसामा" कार्य इत्युदाहृत्य द्वन्द्वं कृत्वा बहुव्रीहिः यथा स्वरे विधीयमानः पराङ्गवद्भावः षत्वणत्वयोर्न भवति तथात्रापि । 'पौर्वशाल इति' । पूर्वस्यां शालायां भव इति तद्धितार्थे विवक्षिते समासस्ततस्तद्धितः । 'पूर्वशालाप्रिय इति' । पूर्वा शाला प्रिया ऽस्येति त्रिपदे बहुव्रीहौ प्रियाशब्द उत्तरपदे परतः पूर्वयोस्तत्पुरुषे सति समासान्तोदात्तत्वं शालाशब्दस्य भवति, असति त्ववान्तरतत्पुरुषे पूर्वपद-

१ इदमाम्नायते । "एषः षडहो बृहद्रथन्तरसामा" इति । तत्र अयमर्थः सांशयिकः किमहरहर्द्विसामकं कर्त्तव्यम् । उत केषु चिदहःसु रथन्तरम् । केषु चिद् बृहद् इति । कुतः संशयः । यद्येते समस्ते सामनी । यदि विभक्ते । उभयथा "एषः षडहो बृहद्रथन्तरसामा" इति शब्दोऽवकल्पते । तत्रैव विचारः । किं द्वन्द्वगर्भो बहुव्रीहिरयं बृहद्रथन्तरे सामनी यस्य इति । उत । अनेकपदो बहुव्रीहिः । बृहदस्य

द्रव्याकृत्योरिव समाहारसमाह्रियमाणयोरपि वास्तवभेदाभाव इति भावः॥ नन्वेवं घटानां समाहार इति न स्यादत आह

बुद्धिपरिकल्पितेति। (कै)

यतोऽयं बुद्धिकल्पितोऽतो वास्तवभेदस्यैवाभाव इति भावः॥

अव्यतिरेकात् (भा)

इत्यस्याव्यतिरेकमात्रस्याभावादित्यर्थ इति भावः॥ द्विगो-रित्येवमविधानात्कथं प्रत्ययो द्विगुनिमित्तोऽत आह

पञ्चस्विति। (कै)

द्विगुनिमित्तप्रातिपदिकत्वनिमित्तत्वात्तन्निमित्तत्वमिति भावः॥ नन्वेवमप्युत्तरपदेन सः द्विगोरुत्तरपदनिमित्तेऽपि बहुव्रीहेस्त्वया-णामपि भावेन उत्तरपदत्वस्य द्विगुनिमित्तत्वाभावादत आह

कार्य इति कात्यायनवचनमुपष्टम्भकमाश्रित्य पूर्वपक्षितं यच्च कात्यायनवचनं समासान्तविशेषमात्रविषयमित्याश्रित्यानेकद्वन्द्व इति सिद्धान्तितं तदुभयं चिन्त्यम्। उत्तरपदे इत्युक्तेदंदं छत्वेत्यस्यासङ्गतेः। स्वरे विशेषस्य स्पष्टतया समासान्तपर्यन्तमाग्रहे बीजाभावाच्चेति दिक्। समाहारे पञ्चमूली पञ्च-प्रकृतिस्वरेण पूर्वशब्दस्यादाद्युदात्तत्वमवतिष्ठेत। 'समाहारे दिक्शब्दो न सम्भवतीति'। स हि समूहरूपत्वाद्भेदनिबन्धनः, संख्येव च भेदमाचष्टे दिक्शब्दस्तु प्रत्यर्थनियतः, विभक्तिरपि समासे निवर्त्तते। ननु यथा काकसमूह इत्यत्र विभक्त्यभावेऽपि भेदावगतिस्तथात्रापि भविष्यति,

---

रथन्तरमस्य इति। यदि द्वन्द्वगर्भो बहुव्रीहिः। प्रत्यङ्ं समस्ते सामनी। अनेकपदे बहुव्रीहौ विभक्ते इति। किं तावत् प्राप्तम्। समस्ते इति। तत एतद् वर्ण्यते द्वन्द्वगर्भो बहुव्रीहिरिति। कुतः। बृहद्रथन्तरशब्दयो-रानन्तर्यात्। वृत्तिपक्षस्याश्रितत्वात्। वृत्तिपक्षे च समासस्य नियतत्वात्

पञ्चगाव इति॥ (कै)

तत्पुरुषे कृत एव बहुव्रीहिर्न प्रागिति कुतोऽत आह

सुप्सुपेति। (कै)

सङ्ख्याविवक्षितत्वमुपलक्षणं सुबन्तत्वं समुदाये न पर्याप्तमित्यस्यार्थस्य अविशेषेण बहुव्रीहिरिति पक्षेऽप्याह

अथवेति॥ (कै)

सङ्क्षिप्तत्वं हेतुः

एकार्थीभावादिति॥ (कै)

अर्थशब्दो न प्रयोजनवाचीत्याह

तद्धिताभिधेय इति। (कै)

तच्च वाच्ये समास इत्यर्थः॥

कुमारी। इह पञ्चानां मूलानां कुमारीणां च समाहार इति विग्रहः। न तु पञ्चमूलाः समाहृता इत्यादि। भावसाधनो हि समाहारशब्दो न तु कर्मसाधनः। तथा सति पञ्चकुमारीत्यत्र कुमार्यर्थस्य प्राधान्यात्समासशास्त्रे च अप्रथमानिर्दिष्टत्वादेकविभक्तित्वाभावाच्चोपसर्जनभावेन तस्मात्प्रयोगाभावादित्येवात्र हेतुर्वक्तव्यः। 'पाञ्चनापितिरिति'। पञ्चानां नापितानामपत्यमिति समासे 'अत इञ्'। 'पञ्चकपाल इति'। पञ्चसु कपालेषु संस्कृत इति समासे 'संस्कृतं भक्षाः' इत्यणो 'द्विगोर्लुगनपत्ये' इति लुक्। 'पञ्चगवधन इति'। पञ्च गावो धनमस्येति त्रिपदे बहुव्रीहौ कृते

---

(२।१।५१। द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्यसमासवचनम् इति वार्त्तिकव्याख्यानावरे भगवता महाभाष्यकारेणोक्तं "तत्तर्हि वक्तव्यम्। न वक्तव्यम्। इह द्वौ पक्षौ वृत्तिपक्षः अवृत्तिपक्षश्च। यदा वृत्तिपक्षः तदा सर्वेषामेव वृत्तिः। यदा तु अवृत्तिपक्षः तदा सर्वेषाम् अवृत्तिः" एत-

**प्रकृत्यर्थव्यतिरिक्तप्रत्ययार्थाभावादिति। (कै)**

वाचकप्रत्ययस्थले स आवश्यक इति भावः॥ द्वितीयं दोष-मुद्धर्त्तुमाह

**यन्निमित्त (कै)**

इत्यादि॥

**यानि तु द्विगोरिति। (कै)**

द्विगोः परस्य तद्धितस्य लुगिति सूत्रार्थे तु समाहारद्विगोः परस्य तद्धितस्य लुगर्थमिदमपि वाचकान्नमेवार्थविशेषासंप्रत्यये "अतन्निमित्तादपी"ति वार्त्तिकात् द्विगोर्निमित्तं यस्तद्धित इत्यर्थे तु तत्र दोषस्यैवाभाव इति चिन्त्यम्॥

गोस्त्रियोरिति ह्रस्वो न स्यात्। अथात्र नपुंसकह्रस्वत्वं ब्रूया, एवमपि पञ्चखट्वी न सिध्येत्। वा टाबन्त इति स्त्रीलिङ्गत्वपक्षे ह्येदं रूपम्। तत्र च ह्रस्वाभावात् द्विगोरत इति ङीप् न स्यात् सिद्धान्ते तु समासार्थे समाहारे नानाविभक्तिभिर्युज्यमानेऽपि कुमारीशब्दस्य नित्यमप्येव

धनशब्द उत्तरपदे परतः पूर्वयोस्तत्पुरुषे 'गोरतद्धितलुकी'ति टच्। अय-मुत्तरपदे तत्पुरुषो महाविभाषाधिकाराद्विकल्पेन प्राप्नोति नित्यो वक्तव्यः, अन्यथा पञ्चगोधन इत्यपि स्यात्। उक्तं च 'द्वन्द्वतत्पुरुषयोरुत्तरपदे नित्य-समासवचनमि'ति, वाक्च दृषच्च प्रिये अस्य वाग्दृषत्प्रिय इति त्रिपदबहु-

देवाश्रित्य प्रवक्ष्यामिमोच्यते "वृत्तिपक्षे चे"ति)। द्वन्द्वे च स्वार्थाभि-धानात्। अत्यनुग्रहोऽन्तरङ्गता च इतरथा च उभयमपि बाध्येत। अतो द्वन्द्वगर्भो बहुव्रीहिः। मीमां-द-भा-१०-६-४। द्वन्द्वगर्भो बहुव्रीहिरयम्। अथवा अनेकपदविशिष्ट इति। द्वन्द्वगर्भे प्रथमं तावत् टङ्कश्च रथश्चा-चेति द्वन्द्वः। पश्चादन्यपदार्थसम्बन्धः। अनेकपदे विशिष्टे द्वन्द्वस्य रथ-

**प्रत्ययसंज्ञासम्बन्धमिति । (कै)**

प्रत्ययशब्देनोपादानादिति भावः ॥

**लोके स्त इति । (कै)**

नित्यत्वेऽपि संज्ञानां तदीयसङ्केतग्रहस्य शास्त्रनिरपेक्षं लोकेऽसत्त्वमिति भावः ॥ भाष्ये

**एते संज्ञे इति । (कै)**

उत्तरपदशब्दोऽपि समाससंज्ञानिमित्तकत्वात्संज्ञैवेति भावः ॥

**द्विगोर्वा लुग्वचनं ज्ञापकमिति । (भा)**

योग इत्येकविभक्तिकत्वात्सिद्धमुपसर्जनत्वम् । न च एकविभक्तावषष्ठ्यन्तवचनमिति वार्तिकेन अर्धपिप्पल्यादाविव उपसर्जनत्वनिषेधः शक्यः । तस्यैकदेशिसमाससमात्रविषयकत्वात् । अत्र चैतत्सूत्रीय भाष्यमेव प्रमाणम् । यद्वा । "विभाषाछन्दसी"तिसूत्राद्विभाषाग्रहणानुवृत्त्या व्यवस्थितवि-

व्रीह्यौ पूर्वयोर्द्वन्द्वः स च नित्य इष्यते, नित्यं समासान्तो यथा स्यादिति । 'पञ्चपूलीति' । पञ्चानां पूलानां समाहार इति विग्रहः, न तु पञ्चपूलाः समाहृता इति, भावसाधनो हि समाहारशब्दः समाहरणं समाहारः, विप्रकीर्णानामेकत्र राशीकरणं, पञ्चग्रामो दशनगरी त्रिपुरीत्यत्रैकस्मिन्

न्तरमस्येति सर्वाण्येवास्य शब्देन सम्बध्यन्ते निरपेक्षाणि ॥ तत्र पूर्वपक्षः । वृक्षच्छब्द उच्चरितः सम्बन्धिनमपेक्षते । रथन्तरशब्देऽपि तयोरानन्तर्येण उच्चरितत्वात् प्रथमं तावद् आनन्तर्येण सम्बन्धः पश्चादस्य शब्देनावृत्तिपदस्याप्रवृत्तत्वादिति । वृत्तिशब्देन समासं ब्रवीति । स प्रागन्यपदार्थसम्बन्धाद् द्वन्द्वसमासो भवति । पश्चादन्यपदार्थसम्बन्धः । ननु "विभाषा" (२ । १ । ११ । पा-सू) इत्यनेन वैकल्पिकः समासः स्यात् । न । तत्र यदा वाक्यं तदा अन्यपदार्थसम्बन्ध एव भवति । नावान्तरसम्बन्धः । यदा

एवं तद्धितार्थे विषयभूत इत्यर्थेन च सिध्यति। न चास्य पक्षे अर्थग्रहणं व्यर्थं तद्धिते विषयभूत इत्येव वक्तुं युक्तत्वादिति वाच्यम्। स्वरे दोषप्रसङ्गात्। वस्तुतो ज्ञापकेनायमेवार्थो बोध्यत इति बोध्यम्। भिन्नार्थत्वे हेतुः

**स्वरूप** (कै)

इत्यादिः।

**समाहार एव तद्धितलुकीति।** (कै)

नियमस्य सजातीयापेक्षत्वात्तेन पञ्चगवधन इत्यादौ टच्सिद्धिरिति भावः॥ भाष्ये

**द्विगोः समाहार इति।** (भा)

अनवयवभूतद्विगोस्तत्समाहार एवेत्यर्थः। तेन पञ्चगवधनमित्यस्य सिद्धिः॥

भाषाश्रयणाच्चैकविभक्तित्वेऽप्युपसर्जनता एकदेशिसमासे न भवति। पञ्चखट्वादौ तु स्यादेव। स्पष्टं चैतद्भाष्यग्रन्थे। तस्माद्भावसाधन एवेह समाहार इति स्थितम्। द्विगुरेकवचनमिति तु सनपुंसकमिति वक्ष्यमीत्यारभ्यते। स्यादेतत्। समाहारः समूह इति पर्यायौ। समूहश्च तत्रो क्रियायां समन्वयाद्भिन्नदेशानामपि बुद्ध्या राशीकरणं भवति, अथ कर्मसाधने को दोषः, इह पञ्चकुमारीति कुमार्यर्थप्राधान्यात्समासशास्त्रे चाप्रथमानिर्दिष्टत्वादेकविभक्तित्वाभावाच्चोपसर्जनत्वाभावात्'गोस्त्रियोरुपसर्जनस्ये'ति ह्रस्वो न स्यात्, काममत्र नपुंसकह्रस्वत्वं सिद्धम्, इह पञ्च खट्वाः समासक्षदाऽवान्तरसम्बन्धो लभ्यते। एतस्मिन् द्वैते चोदकसामर्थ्यात् वाक्यमेवाश्रयामो न समासमित्याग्रहं निराकर्तुं वृत्तिपक्षे च समासस्य नित्यत्वाद् इत्यनेन ग्रन्थेन नित्यं समासं प्रतिपादयतीदृश्येषु। कथमेवमाह

**समाहारेणेति।** (भा)

*समाहारेण समाहारशब्दप्रतिपाद्येन*

**अभिधानं** (भा)

विधानं यथा स्यादित्यर्थः। एवं

**तद्धितार्थेन** (भा)

तद्धितार्थशब्दप्रतिपाद्येनेत्यर्थः॥ तत्फलितमाह

**समाहाराभिधेय इति।** (कै)

एवं च समाहारशब्देनैव समासेनापि तस्य पुंस्त्वेनैव बोधो नपुंसकत्वातिदेशात्तु तत्प्रयुक्तं कार्यमात्रमिति बोध्यम्॥

**तदा कार्येणैव भेदः स्यादिति।** (कै)

---

तद्धितार्थः। तस्य समूह इति सूत्रात्। तथा च तद्धितार्थ इत्येव सिद्धे किं समाहारग्रहणेन। न चैवं तद्धितश्रवणं स्यादिति वाच्यम्। द्विगोर्लुगिति लुक्सम्भवात्। नन्वेवं लुक्कृतानि स्युः। तद्यथा। पञ्चपूलीत्यत्रापरिमाणबिस्तेतिङीप्प्रतिषेधः स्यात्। पञ्चगवम्। गोरतद्धितलुकीति

---

समासान्ताः पञ्चखट्वीति वा टाबन्त इति स्त्रीलिङ्गपक्षे ऋत्वाभावाद् द्विगोरत इति ङीब् न स्यात्, भावसाधने तु समासार्थे समाहारे नानाविभक्तिभिर्युज्यमानेऽपि कुमारीशब्दस्य नित्यं षष्ठ्येव योग इत्येकविभक्तिकत्वासिद्धमुपसर्जनत्वम्, तस्माद्भावसाधनः, द्विगुरेकवचनमित्येतत्तु 'स नपुंसकमि'ति

"द्वन्द्व तत्पुरुषयोरुत्तरपदे नित्यसमास वचनम्" (२।१।५१।वा)। वाक्त्वचप्रियः। पञ्चगवधनः। दशगवधन इति। यदि पूर्वसमासो न क्रियेत तथा सत्यप्रयोगः प्राप्नोति। तस्माद्द्वन्द्वभाविनो पूर्वपदयोरेवान्तरसमासो नित्य इति॥ टुप्टी-१०-६-४॥

स्वरे भेदस्य सत्त्वात्समर्थसूत्रभाष्ये उक्तत्वाच्च चिन्त्यमेतत्। क्वचित्तु रूपेणैव भेदः स्यादिति पाठः। क्वचित्तु कार्येणैवेति पाठः। स्वररूपकार्येणैव भेदो न तु रूपेणेत्यर्थः॥ भाष्ये

**अवयवानामिति। (भा)**

द्वन्द्वतत्पुरुषविषयाणामित्यर्थः॥

**तदभावोऽवयवयोरिति। (कै)**

न चैकार्थीभावेऽपि विभाषानुवृत्तिसामर्थ्यात्समासविकल्पोऽस्तु तस्य सर्वत्र सामर्थ्येनैव समन्वयस्य क्लृप्ततया समासेनासमन्वयात्। नन्वेवं द्वन्द्वयोग्यपदयोर्निष्कृष्य चार्थान्तर्भावेणैकार्थीभावे मानाभावः। एतद्वचस्यैव तथैकार्थीभावकल्पनात्। एवं च द्वन्द्वो दुर्लभः। इदं वचनं तु प्रत्याख्यातम्। "[1]चार्थे" इति सूत्रं तु "धवखदिरा-

---

१ अ २। पा २। सू २९॥

---

टच् न स्यादिति चेत्। मैवम्। न तद्धितलुक्यतद्धितलुकीत्येतत्स्थाने समाहारशब्दपाठेन सर्वसामञ्जस्यात्। तथाहि। अपरिमाणबिस्तादिभ्यः समाहारे नियमार्थमिदम्। एभ्यः समाहार एवेति। पञ्चानामश्वानां

वक्ष्यामीत्यारभ्यते, कथं पञ्चपूलीमानयेत्युक्ते पूलानामानयनं, नान्तरेण द्रव्यानयनम्, भावानयनम्, सम्भवति, यथा नान्तरेण पात्रानयनममेरानयनं सम्भवति, एवमपि समाहारग्रहणमनर्थकं भावसाधनो हि समाहारशब्दः

गवामश्वनिके एवाश्वहष्टे प्रत्यक्षं द्वयम्।
वृक्षद्वयन्तरं चोत भवेत् किञ्चित् क्वचिद्विने॥
द्वन्द्वगर्भबहुव्रीहेरादोऽन्त्येऽपि समो ह्यसौ।
अन्योऽन्यनिरपेक्षस्य चोदकादन्तिमो भवेत्॥ अ-न्या-वि-१०-६-४॥

वि"त्यादौ चरितार्थं किं चैवं द्वौ मुनी वंश्यौ प्रियौ यस्येति बहुव्रीहौ पूर्वयोरव्ययीभावापत्तिः । तथा च स्वरे दोषः । एवं द्वित्रिंशत्प्रिया अस्येति शैषिकबहुव्रीहौ "[1]संख्ययाव्यये"त्यवान्तर-बहुव्रीह्यापत्तौ "[2]बहुव्रीहौ संख्येय" इति डजापत्तिः सुचः श्रवणानापत्तिश्चेति चेन्न । निष्कृष्यैकार्थीभावस्यैव समासादिनिमित्तत्वे मानाभावात् । समासान्तरेणानभिधानाच्चेति । अधिकमधिवर्ष-प्रसङ्गेन समर्थसूत्रशेषे (२।१।१) भाष्ये ध्वनितम् । द्वन्द्वोऽपि बहुव्रीह्यवयव एव न द्वन्द्वावयव इति "होतृपोतृनेष्टोद्गातार" इति भाष्येण ध्वनितम् । नव्यानां तत्र प्रमाद एवेति दिक् ॥ भाष्ये

परिमाणिनेति । (भा)

१ अ २ । पा २ । सू २५ ॥ २ अ ५ । पा ४ । सू ७३ ॥

---

समाहारः पञ्चाश्वी । नेह । पञ्चभिरश्वैः क्रीता पञ्चाश्वा । तथा, गोः । गोन्तात्तत्पुरुषाट्टच् स्यात् । पङ्गवः । ततः समाहारे । गोरित्यनुवर्तते सजातीयापेक्षो नियमः । गोन्ताद् द्विगोस्समाहार एव टच् स्यात् । पञ्चगवम् । नेह । पञ्चभिर्गोभिः क्रीतः पञ्चगुः । तदेतत्सकलमभिसन्धायोक्तं वार्तिक-

---

समूहपर्यायः, समूहस्य तद्धितार्थत्वात्तत्र तद्धितार्थ इत्येव सिद्धम्, यद्येवं तद्धितोत्पत्तिः प्राप्नोति, उत्पद्यतां तद्धितः 'द्विगो'रिति लुग्भविष्यति, लुक्कृतानि प्राप्नुवन्ति पञ्चपूली, अपरिमाणबिस्ताचितेति ङीप्प्रतिषेधः प्राप्नोति, 'पञ्चगवं गोरतद्धितलुकी'ति टच् न 'प्राप्नोति', नैव दोषः' । अपरिमाणे-

## प्रधानस्य । (भा)

सापेक्षस्य वृत्तिस्तु कैयटोक्तन्यायादेव ॥ असामर्थ्यादित्यस्योभयोरपीतरसापेक्षत्वेनासामर्थ्यादित्यर्थः ॥ "शस्त्रीश्यामे"त्यादौ पूर्वोत्तरपदयोः परस्परापेक्षत्वेनासामर्थ्यप्रयोजकमिति न दोषः । यद्यपि लिङ्गवचनभेदेऽप्यभेदान्वयो "वेदाः प्रमाणमि"त्यादौ दृष्टस्तथापि लिङ्गभेदादीनां दूषकताबीजं सहृदयोद्वेग एवेति स्पष्टमलंकारतत्त्वविदाम् ॥

## अनेकोपकारकोपकार्यम् । (कै)

अनेकविशेषणविशेष्यत्वम् ॥

---

इति कैयटः । अत्राहुः । नेह गाम्भीर्यं साधारणधर्मत्वेन विवक्षितं किन्तु विततदुरवगाहत्वादि । तस्य चाप्रयोगोऽस्त्येवेति निर्बाधः समास इति ॥

---

प्राप्त इति । 'पुरुषोऽयं व्याघ्र इव शूर इति' । ननु सामान्यशब्दप्रयोगे सति तदपेक्षत्वादसामर्थ्यादेव न भविष्यति, एवं तर्ह्येतज्ज्ञापयति भवति प्रधानस्य सापेक्षस्य वृत्तिरिति, तेन राजपुरुषोऽभिरूप औपगवः शोभन इत्यादि सिद्धं भवति, न्यायसिद्ध एवार्थे लिङ्गदर्शनमिदम् । प्राधान्यादेवानेकोपकार्यत्वसम्भवात्पुरुषव्याघ्रोऽभिरूप इति भवत्येव, शौर्यं त्वत्र समानधर्मो नाभिरूप्यम् । अत एव "सामान्याऽप्रयोग" इत्युक्तं न तु गुणाप्रयोग इति ॥

# विशेषणं विशेष्येण बहुलम् ।

## २ । १ । ५७ ॥



भाष्ये

उभयविशेषणत्वादिति । (भा)

उभयोर्विशेषणत्वादित्यर्थः ॥ "कयोरुभयोः" । विशेषणविशेष्ययोः ॥ अत्रोभयमुद्दिश्य विशेषणत्वस्य विधेयताप्रतीतेः समासेनो-

---

समानाधिकरणपदस्तत्पुरुषः कर्मधारयः इत्युच्यते । *"प्रसन्नेन दृगब्जेन" इत्यादौ "मयूरव्यंसकादि" ( २ । १ । ७२ ) समासः । पूर्वपदार्थप्रधानता परवल्लिङ्गता च तत एव ॥ "राजान्तरम्" इत्यादौ तद्धितसमासस्यापि पूर्वपदार्थप्रधानत्वात् । न तु "उपमितं व्याघ्रादिभिः"

---

विशेषणं विशेष्येण बहुलम् ॥ भेदकं समानाधिकरणेन भेद्येन बहुलं प्राग्वत् । नीलमुत्पलम् । नीलोत्पलम् । बहुलग्रहणात् क्वचिन्नित्यसमासः । कृष्णसर्पः । लोहितशालिः । क्वचिन्न, रामो जामदग्न्यः । व्यासः पाराशर्यः । विशेषणविशेष्ययोः ससम्बन्धिकतया ऽन्यतरोपादानमात्रेणेतरा-

---

विशेषणं विशेष्येण बहुलम्" ॥ 'भेदकमिति' । असिश्छिनत्तीतिवत् करणस्य कर्तृत्वविवक्षायां ण्वुल् । 'विशेषणमिति' । शिषॢ शेषणे विपूर्वः,

---

* परिणामः क्रियार्थश्चेद्विषयी विषयात्मना ।

प्रसन्नेन दृगब्जेन वीक्षते मदिरेक्षणा ॥

कुवलयानन्द-परिणामालङ्कारप्रकरणे ॥

द्देश्यविधेयभावः॥ ननु विशेषणविशेष्ययोरिति षष्ठी नोपसर्जना-प्रसिद्धिरित्यपेक्षया विशेषेण उपसर्जनत्वप्रसिद्धिसत्त्वात् नाप्युभया-पेक्षया सविशेषणतया समासानापत्तेरत आह

## उभयापेक्षेयम् (कै)

इत्यादि॥ ननु विशेषणविशेष्ययोरुभयं चेद्विशेषणं विशेष्यं च तदोभयोरप्युपसर्जनाप्रसिद्धिरिति दूषणासङ्गतिरत आह

---

(२। १। ५६) इति सामान्यधर्मप्रयोगात्। न चानुपात्तधर्मेणात्र सादृश्यम्। धर्मोपादाने उपात्तधर्मेणैव सादृश्यमित्यर्थस्य प्रकाशे दशमे स्फुटत्वात्॥ "परेन्दुः सकला कला" इत्यादावुपात्तधर्मातिरिक्तधर्मेण सादृश्यस्याभावाच्च। किं चेदं सूत्रं समानलिङ्गवचनत्वे एव प्रवर्त्तते। अत एव "परवल्लिङ्गम्" (२। ४। २६) इति सूत्रे "तत् पुरुषस्यापि कः प्रयोजयति यः पूर्वपदार्थप्रधान एकदेशिसमास" इति भाष्यं "द्वन्द्वैक-देशिनोरि"ति न्यासेन तत्पुरुषग्रहणप्रत्याख्यानपरं भाष्यं च सङ्गच्छते। अन्यथा "वृकाञ्जेन" इत्यादेः पूर्वपदार्थप्रधानस्य दृश्यमानपरवल्लिङ्गस्य सत्त्वेन तदसंगतिः स्पष्टैव। वृकाञ्जस्य वीप्सायामव्ययत्वे तस्य पूर्वपदार्थ-प्रधानत्वान्निर्बाधः। मुखचन्द्र इत्यादावपि "मयूरव्यंसकादि" (२। १। ७२) समास एव तस्य पूर्वपदार्थप्रधानत्वात् चन्द्ररूपकव्यवहारः

---

त्वेपसम्भवे उभयोपादानं स्पष्टार्थं कुत्सितानि कुत्सनैरित्यादाविवेति कैय-टमतम्। हरदत्तस्त्वाह। विशेष्येणेत्युक्त्या विशेषणं लभ्यम्। तस्य पुनर्विशे-षणत्वोक्तिर्विशेष्यते इति व्युत्पत्त्या विशेष्यत्वलाभार्थं, तथा च समस्यमान-

---

विशेष्यतेऽनेनेति विशेषणं करणे ल्युट्, यत्साधारणाकारेण प्रतिपन्नं बहु-प्रकारं वस्तु प्रकारान्तरेभ्यो व्यवच्छिद्य एकस्मिन्प्रकारे व्यवस्थापयति तत्पदं विशेषणं भेदकमिति चोच्यते, व्यवस्थाप्यमानं विशेष्यं भेद्यमिति च।

## अनियत इति । (कै)

व्यावर्त्यव्यावर्तकभाव एव विशेषणविशेष्यभावः । स च परस्परमुभयोरित्यव्यवस्थेति शङ्कार्थ इति भावः । उपसर्जनाप्रसिद्धिरित्यस्योपसर्जननियमासिद्धिरित्यर्थो भाष्ये ॥

## द्रव्यमात्रम् । (कै)

सख्यागुणं सर्वं द्रव्यम् ॥

---

परवल्लिङ्गतापि तत एव । एतेन उत्तरपदार्थप्रधानत्वं तत्पुरुषलक्षणमित्यपास्तम् । "दृगञ्जेन" इत्यादावप्याप्तेः । "सुप्यति" इत्यादावव्ययीभावेऽतिव्याप्तेश्च । उत्सर्गस्तु आश्रीयत एव । नीलं च तद् उत्पलं च नीलोत्पलम् । अत्र वाक्ये चकारप्रयोगेण प्रवृत्तिनिमित्तोत्पलत्वनीलत्वयोर्वैयध्यमात्ररीत्या नीलोत्पलयोर्वा साहित्यं भासते । अत एवात्र द्वन्द्वमाशङ्क्यानवकाशेन कर्मधारयेण बाधान्नेति भाष्ये उक्तम् । एवं च नीलत्वोत्पलत्वसमुच्चयवन्नीलमुत्पलम् इति बोधः । नीलसमानाधिकरणं तदभिन्नमुत्पलम् इति वा तत्र वाक्ये इव वृत्तौ च शब्दाप्रयोगायैकार्थीभावः । एतेन कर्मधारयेऽवयवशक्त्योपस्थितयोरर्थयोर्विशेष्यविशेषणभावसम्भवान्न तत्रैकार्थीभाव इत्यपास्तम् । केचित्तु "पदद्वयजन्यबोधप्रकारयोः परस्परव्यभिचारित्वे समासोऽयं यथा नीलोत्पलादौ । तक्षकः सर्प इत्यादौ तु न भवति । नहि तक्षकत्वं सर्पत्वव्यभिचारीति । अत्रेदं वक्तव्यम् । शब्दशास्त्रसहकारपादपादिति प्रयुञ्जानेन प्रकृतसूत्र एव शिंशपावृक्ष इति समासो भवत्येवेति वदता त्वयाऽपि शिंशपावृक्षादिभ्यस्तक्षकः सर्प इत्यादौ विशेषो वक्तव्यः । ननूक्त एवासौ,

---

ननु च विशेषणं विशेष्यमिति च सम्बन्धिशब्दावेतौ, ततश्च विशेषणमित्युक्ते गम्यत एव विशेष्येणेति, एवं विशेष्येणेत्युक्ते गम्यते विशेषणमिति, तत्कि-

**तिलशब्दो विशेषणमिति । (कै)**

परिच्छेदकबोधक इत्यर्थः । परिच्छेद्यपरिच्छेदकभाव एव च विशेष्यविशेषणभाव इत्यभिमानः ॥ अन्यतरापरशब्दयोः सर्वप्रतिपादकत्वादनियमस्तदवस्थ इत्यत आह

---

ब्राह्मणाः" "दधित्रपुचिकारी" त्यादिवाक्ये इव पण्डितब्राह्मणा इत्यादिवृत्तावुद्देश्यविधेयभावेनान्वयवारणाय एकोपस्थितये सः । अत एव "*वषट्

---

"लुब्योगाप्रख्यानादिति" सूत्रस्वरसेन शिंशपादिशब्दानां फलेऽपि मुख्यतया शिंशपात्वस्य वृक्षत्वव्यभिचारादित्युपपादितत्वादिति चेन्न । तदुक्तो नाग-

---

मर्थमुभयमुपादीयते, यत्र पूर्वोत्तरपदयोर्द्वयोरपि प्रत्येकं विशेषणविशेष्यभावस्तत्रैव यथा स्याद् यथा नीलोत्पलमिति, अत्र हि नीलार्थो भ्रमरादिसाधारणरूपेण प्रतिपन्न उत्पलार्थेनोत्पले अवस्थाप्यते, उत्पलार्थो हि

---

* वषट्काराच्च भक्षयेत् । मीमांसाद — अ ३ । पा ५ । सू ३१ ॥

अथ किं समाख्यैवैका भक्षणकारणम् । न इति ब्रूमः । "वषट्काराच्च भक्षयेत्" वषट्कारश्च भक्षणे निमित्तम् । कथम् । वचनात् । एवं हि श्रूयते "वषट्कर्तुः प्रथमभक्षः" इति भक्षणस्याप्राप्तत्वात् । न प्राथम्यविधानार्थ एष शब्दः । प्राथम्यविशिष्टं भक्षणमेव विदधाति इति ॥ शबरभाष्यम् ॥

इदमपरं वचनं वषट्कर्तुः प्रथमभक्ष इति । तत्किं वषट्कारं निमित्तीकृत्य प्राथम्यविशिष्टं भक्षणं विधत्ते उत भक्षणमनूद्य प्राथम्यमात्रं विधत्त इति विचारः । किं प्राप्तम् । न चेदन्येन शिष्टा इति कथं चिदनुवादत्वे संभवति विशिष्टविधानानुपपत्तेः प्राथम्यस्य चाप्राप्तत्वात्तदनुवादेन भक्षविधानासंभवात् एवं वचनं व्यज्यते यो वषट्कर्तुः भक्षः स प्रथम इति । ननु चाप्राप्तत्वात् भक्षो ऽप्यनुवदितुं न शक्यते । समाख्यया

## द्रव्यस्यैवेत्यर्थः। (कै)

इत्यादि। द्रव्यस्यैवानयनादिक्रियासंभवेन तस्यैव क्रियान्वयौचित्येन तस्यैव विषयताविशेषरूपं विशेष्यत्वमिति भावः॥ एतदेव

कर्त्तुः प्रथमभक्षः" इत्यत्र भक्षान्तरविधिरेव न तु होतृचमस इति प्राप्तत्वादनुवादो गम्यते। अस्ति हि तस्य समाख्यया चमसेषु भक्षः स

बंधक्योरिति नानार्थकोशानुरोधेन तक्षकशब्दस्यापि वर्धकौ रूढतया तक्षकत्वस्य सर्पत्वव्यभिचार इत्यविशेषात्। तक्षकत्वं सर्पत्वव्याप्यं भिन्न-

रक्तादिसाधारणरूपेण प्रतिपन्नो नीलार्थेन नीले व्यवस्थाप्यत इति भवति प्रत्येकमुभयभावः, यत्र तु स नास्ति न तत्र समासो भवति यथा प्रत्युदा-

भक्षयेत्। तत्रैतत्स्यात् ग्रहेषु चमसान्तरेषु च प्राप्त्यभावादनुवादो नोपपद्यत इति। नैष दोषो न ह्यवश्यं यदेव सर्वत्र प्राप्तं तदेवानुवदितव्यम्। सर्वानुवादानां यथासंभवं प्राप्त्यपेक्षत्वात्। न च ग्रहचमसान्तराणां वषट्कर्तृभिरभक्ष्यमाणानां किं चिन्न सिध्यति। प्रतिपत्तिरिति चेत्। वेदविहितप्रतिपत्त्यभावे लौकिकप्रतिपत्तिसिद्धेर्वक्ष्यमाणनिमित्तद्वारेण वा भक्षणोपपत्तिः। अथोच्येत समाख्यया विप्रकृष्टा प्राप्तिर्न शक्यते शीघ्रप्रवर्त्तिन्या श्रुत्या ऽनुवदितुमतः प्राप्त्यभाववेलायां श्रुतिः प्रवर्त्तमाना यत्र यत्र वषट्कृतं तत्र तत्राविशेषेण विधास्यतीति। तदयुक्तम्। यत्र हि संनिकर्षविप्रकर्षावपेक्ष्येते यत्र विरोधः कश्चित् इयं तु श्रुतिरनेकार्थविधिक्लेशभयाद्यथा कथं चिदपि प्राप्नुवन्तं भक्षं प्रतीक्षते। यदा केन चिदपि प्रमाणेन नास्ति प्राप्तिरित्यवगम्यते तदा विशिष्टविधानमङ्गीकरोति। तथा च प्रकरणादिप्राप्तार्थानुवादेन श्रुतयो गुणानां विधात्र्य इष्टाः। तस्मात्प्राथम्यमात्रनिमित्तत्वान्न वषट्कारो भक्षकारणमिति प्राप्त उच्यते।

ध्वनयितुं प्रधानपदं भाष्ये उपात्तं तदेव चाच विशेष्यविशेषणभाव-शब्देन गृह्यते न तु परिच्छेद्यपरिच्छेदकभाव इति तत्त्वम् ॥

एतदेव ध्वनयन्नाह

ते हीति। (कै)

यदातदाशब्दौ भाष्ये यतस्तत इत्यर्थकाविति भावः ॥

---

शक्यो ऽनुवदितुम् । तेषां च यो यदा वषट्करोति स तदा प्रथम-समाख्याबलात् प्राप्ता वषट्कर्तृसम्बन्धिभक्षानुवादेन प्राथम्यविधिरिति मीमांसकाः ॥

---

मेव । तच्च न व्यभिचारीति चेत् । तत्किं शिंशपात्वं वृक्षत्वपलाशत्वयोर्व्याप्यं नानेति न पर्यालोचये । किं च रामो जामदग्न्यः । अर्जुनः कार्त्तवीर्य

---

इत्यत्रो तक्षकः सर्प इति । नहि तक्षकः सर्पत्वं व्यभिचरति, ननु व्यभिचरति क्रियानिमित्तकोऽपि तक्षकशब्दोऽस्ति तक्ष्णोतीति तक्षक

---

समासार्थादिविस्कृष्य नैकांशो ऽनूद्यते यतः ।
व्यक्तवत्तेन सर्वो ऽयमपूर्वो ऽर्थो विधीयते ॥

यथैव व्यक्तैः खिष्टकृतं यजतीत्यत्र नाग्न्यनूद्य चित्वं विधीयते किं तर्हि पूर्वनिष्पन्नः समासार्थो विधेयो भवति तथेहापि परिपूर्णस्य पदस्य पदान्तरयोगाद् एकदेशनिष्कर्षे च सामर्थ्याभावादशक्यमेवानुवदितुं यो वषट्कर्तुर्भक्ष इति । न हि प्राक्समासाद्भक्षस्य वषट्कर्तृसंबन्धो युक्तः सापेक्षत्वे सति समासानुपपत्तेः । ननु च भवति वै प्रधानस्य सापेक्षस्यापि समास इति सत्यपि वषट्कर्तृसंबन्धे समासो ऽवकल्पिष्यते । भवेदेतदेवं यदि भक्ष एवैकः सापेक्षः स्यादिह तु प्राथम्यमपि वषट्कर्तृसंबन्धि-त्वात्सापेक्षम् । न हि प्राथम्यस्य भक्षो निमित्तं किं तर्हि वषट्कर्तृत्वमतो वषट्कर्तुः प्रथम इत्येवं संबन्ध आपद्येत ततश्च विस्पष्टमसामर्थ्यं स्याद्यो

**प्राधान्येन ।** (कै)

इत्यस्य तेनैवेत्यर्थः ॥

**विवक्षामात्रेति ।** (कै)

यदातदाशब्दौ विवक्षितातिशब्दस्य भाष्यस्थो ऽबोधे विपरीतप्रतिपत्तौ च बीजम् ॥

---

"यद्वृत्तयोगप्राथम्ये उद्देश्यतानियामके ।
पश्चात्त्वतद्वृत्तयोगौ विधेयता नियामकौ" ॥

इति तु न युक्तम् । "प्रथमो भक्षः" "पण्डितो ब्राह्मणः" इत्यादौ

---

इत्यादि प्रकृतसूत्र एव वृत्तौ प्रत्युदाहृतम् । तत्र यदि रामत्वमर्जुनत्वं च दाशरथिधनञ्जयादिव्यावृत्तं भिन्नमेव तत्र व्याप्यमित्याशयस्तर्हि समं शिंश-

---

इति, सत्यमस्ति न त्वसौ नामधेयेन गाहते तुल्यकक्षतां, प्रागेव वृत्तौ प्रतिभ-क्रियाशब्दे विलम्बिता । इह तु शिंशपावृक्ष इति शिंशपाशब्दस्य पक्षेऽपि

---

वषट्कर्तुर्भक्ष इति चानूद्यमाने विशिष्टानुवाददोषो भक्षमात्रेण वषट्कर्तुराक्षेपात् । वषट्कर्तृत्वस्य च क्रियान्तरेष्वप्यनैकान्त्यादन्यतरानुवादे तु सर्वभक्षाणां प्राथम्यं विधीयेत सर्ववषट्कर्तृव्यापाराणां च । तस्माच्छक्यं कर्तुमतो वषट्कर्तृप्राथम्यविशिष्टपूर्वभक्षविधानमेतत् । तयोश्च परस्परानियमादत्यन्तसमानविषयत्वमतो यावति विषये वषट्कारस्तावत्येव प्रथमभक्षः । कथं पुनर्वषट्कारो निमित्तभूतः सन्नुपादीयते कथं चानुपादीयमानस्य नियमो ऽवकल्पते । उच्यते ।

नियमः सर्वथा तावदेककर्मनिमित्तकः ।
उपादानानुपादाने न विशेषः प्रतीयते ॥

न च वषट्कर्तृत्वमनुपादेयं न ह्यत्र यदिशब्दसमभ्याहितं निमित्तत्वम् किं तर्हि वषट्कर्तरि क्रियाङ्गत्वेनोपादीयमाने ऽर्थान्निमित्तत्वं भवति

**विशेषणविशेष्यभावस्येति । (कै)**

परिच्छेदकपरिच्छेद्यभावस्येत्यर्थः ॥

**प्रतिपादितम् (कै)**

द्रव्यस्य इति च बुद्धेति शेषः ॥

**स्वातन्त्र्यादिति । (कै)**

प्रयोक्तुरिति शेषः ॥

**द्रव्येण सहविवक्षाया इति । (कै)**

साक्षाद् द्रव्यवत्क्रियायामनन्वयादिति भावः ॥

---

तथा बोधदर्शनेन तस्य व्यभिचारात् । "अपृक्त एकाल् प्रत्ययः" ( १ । २ । ४१ ) इत्यादिसूत्रेषु व्यभिचाराच्च । अत एव वृद्धैरपि

---

पात्वे । अथ शिंशपात्वं पलाशत्वयोरेकं तर्हि नानार्थोच्छेदः तत्प्रकारामा-र्जुनादावतिप्रसङ्गश्च । उभयम्प्रधारणजातिसाधकं नास्तीत्यादि तु तुल्यमेव ।

---

दर्शनादद्रव्यव्यभिचाराद्भवत्येव समासः, न चात्र वृद्धप्रतीतिपूर्विका फले प्रतीतिर्येन बहिरङ्गा स्यात्, यथैव हि पञ्चालादयः शब्दा जनपदानां

---

तस्माददोषः । ननु च तस्मादेकं साम तृचे क्रियते स्तोत्रीयमिति समास-स्यामप्यर्थमनूद्य त्रित्वविधानं दृष्टं तथा प्राथम्यविधानमपि सेत्स्यति । न तत्रापि समासार्थस्यैव विधानाभ्युपगमात् सर्वस्तोत्रसाम्नां हि तृचा एवो-पादीयन्ते । तत्र यदि सकलः समासार्थो न प्राप्तः स्यात्ततः सर्वविधि-र्भवेत् सर्वत्र चर्चः सामचोदनयैव पाठक्रमेण च प्राप्ता दृश्यन्ते तेन न चेरन्येन शिष्टा इत्येवं न विधीयन्ते । वषट्कर्तुः प्रथमभक्ष इत्यत्रापि यावद्वषट्कारं समासार्थो विधीयते तत्र यद्यवदेव सर्वत्र भक्षः प्राप्तः

यदि त्विति ।(कै)

न तु योऽस्तीति न तथाप्रयोग इति भावः ॥ भाष्ये विपरीत-विशेषणविशेष्यभावविवक्षैव नेति मानेन समासे तथाप्रयोगः समासान्तरेणापि नेत्युक्तम् ॥ भाष्ये

तिलानां कृष्णा इति । (भा

कृष्णावयवा इत्यर्थः ॥

---

"यद्वृत्तयोगप्राथम्यमित्याद्युद्देश्यलक्षणम्" ।

इत्याद्यादिपदोपादानेनास्यानैयत्यं सूचितम् । न च विशेष्यतयोपस्थितिर्विधेयतयान्वये नियामिकेति वाच्यम् । पदाद्विशेष्यतयैवोपस्थितेः ।

---

तस्मादिह कैयटमतमेव प्रामाणिकमित्यवधेयम् । अत एव कैलासाद्रिः, मन्दराद्रिः, भावपदार्थः, तर्कविद्या, व्याकरणशास्त्रमित्यादयः प्रयोगास्सङ्गच्छन्ते । इदं त्ववधेयम् । विशेषणविशेष्यभावे कामचारात्पाचकपाठका-

जनपदस्य च साधारण्येनान्योऽन्ययोगमपेक्षन्ते तद्वदेतेऽपि, यथोवाच भगवान् 'लुब्योगाप्रख्यानादि"ति । इह तर्हि कथम् "अथजयाय नु मेरुमहीभृत" इति, न मेरुमहीभृत्त्वं व्यभिचरति । निरङ्कुशाः कवयः । यदि तर्हि यत्र प्रत्येकमुभयभावस्तत्र समासः, उभयोरपि विशेषणत्वमिति प्रथमा-

---

स्यात्ततो विधिशक्त्या मुच्येत । स तु नवसु चमसेषु ग्रहेषु चाप्राप्तो निमित्तत्वेन चोपनीतो न ज्ञातुमनुवदितुं वा शक्यते । यदि तु ऋचामपि क्वचिदप्राप्तिर्भवेत्ततः समासे विशेषाभावाद्भवेदेव विधिः सर्वस्तोत्रसामसु तु ताः प्राप्ताः । अपि च त्रिवृत्त्वं विधीयते तस्य प्रधानत्वात्तदपेक्षत्वेऽपि समस्यन्ते । न त्विह प्राथम्यं भक्षमात्रसंबन्धीत्युक्तम् । तस्मादवषट्कारनिमित्तं भक्षं पूर्वं कृत्वा भूयः समाख्याभक्षः कर्तव्यो न तस्यैव प्राथम्यमिति सिद्धम् ।

निषेधादिति । (कै)

एवं चैतदुत्तरं "तिलकृष्णा" इति भाष्ये क्वचिद् दृश्यमानोऽपाठ इति बोध्यम् । एवं च न द्वन्द्वषष्ठीसमासार्थावितः प्रतीयेते नापि तत्र साधुत्वं किं त्वभेदः प्रतीयते तथापि न साधुत्वमिति सर्वथा तद्रूपाभाव एवेति भाष्यार्थः ॥ पूर्वध्वनितं विपरीतविशेषणविशेष्यभावासम्भवं स्फुटयति ।

किं तर्हि (भा)

इत्यादिना ॥ द्रव्यस्यैव प्राधान्याङ्गीकारात्प्रधानशब्दावित्यसङ्गतमित्याशङ्क्याह

---

विशेष्यत्वासमानाधिकरणैव विधेयता इत्यपि न युक्तम् । अज्ञातार्थस्यैव विधेयत्वेन तस्य विशेष्यत्ववद्विशेषणत्वस्यापि सम्भवेन नियमे मानाभावात् । न च तथा शाब्दबोधं प्रति उद्देश्यविधेयवाचकघटितैकसमस्तपदभिन्नपद-

---

दाविव नीलोत्पलादावपि अव्यवस्थितः पूर्वनिपातः प्राप्तः । तत्रायं सिद्धान्तः । उपसर्जनमिति तावदन्वर्थसंज्ञेत्युक्तमप्रधानमुपसर्जनमिति । तदिह जातिगुणशब्दयोः सन्निपाते गुण एव विशेषणं तस्य द्रव्यावच्छेदद्वारैव क्रियानिर्वर्तकत्वात् । श्रौतव्यवहारोऽप्येवम् । "श्वेतं छागमालभेते"ति हि चोदनायां श्वेतच्छागालाभे कृष्णच्छाग आलभ्यते न तु श्वेतमपि पश्व-

---

निर्दिष्टत्वादुपसर्जनत्वे सति पूर्वनिपातानियमः स्याद् नीलोत्पलम् उत्पलम् नीलमिति । नैष दोषः । उपसर्जनमित्यन्वर्थसंज्ञेयमप्रधानमुपसर्जनमिति, अर्थतश्चाप्राधान्यं, तदिह द्रव्यगुणोपनिपाते द्रव्यं प्रधानमप्रधानं गुणः, द्रव्यं हि क्रियासिद्धौ साक्षादुपयुज्यते गुणस्तु द्रव्यावच्छेदद्वारेण, अतो गुणवचनस्यैव पूर्वनिपातो न द्रव्यवचनस्य । ननूत्पलशब्दोऽपि जातिशब्दः न द्रव्यशब्दः,

प्रथमान्ताविति । (कै)

तत्र वाक्यार्थे यन्मुख्यविशेष्यन्तदभिन्नार्थकत्वाद् द्वितीयप्रथमान्तमपि प्रधानत्वेनोक्तमित्यर्थः । इदं प्रथमान्तेन विग्रह इति पक्षे परिनिष्ठितविभक्त्या समास इति पक्षे समानविभक्त्यन्ताविंत्यर्थः ॥ तद् ध्वनयन्नाह ।

अनेनेति । (कै)

एतच्चावयवार्थेति । (कै)

विग्रहवाक्याभिप्रायेणेत्यर्थः ॥ समासे तु द्वन्द्वेऽपि एकार्थीभावसत्त्वादुभयोरेकार्थवृत्तित्वमस्त्येवेत्याह

---

न्वयोपस्थितिर्हेतुरिति पूर्वोक्ते "पीतवासाश्चतुर्भुजः" इत्यादौ च न दोष इति वाच्यम् । तत्तच्छक्तिभेदघटितगुरुतरकार्यकारणभावकल्पनापेक्षयैकार्थीभावस्वीकारस्य लघुत्वादित्याहुस्तन्न । तथान्वयाभिप्रायेण समासप्रयोगे प्राप्तत्वविपर्य्यालोचनोत्तरं बोधस्येष्टत्वात् । अत एव आलंकारिकैरुद्देश्या-

---

न्तरं, क्रियाजात्योरप्युपनिपाते एवमेव । तेन नीलोत्पलं पाचकब्राह्मण इति व्यवस्थित एव प्रयोगः । यत्र तु गुणशब्दयोः क्रियाशब्दयोः गुणक्रियाशब्दयोर्वोपनिपातस्तत्रानियमः एव । खञ्जकुब्जः । कुब्जखञ्जः । पाचक-

---

यदि तु जातिविशिष्टे द्रव्ये पर्यवसानाद् द्रव्यशब्दत्वं, हन्तैवं नीलशब्दोऽपि गुणविशिष्टे द्रव्ये पर्यवस्यन् द्रव्यशब्दः स्यात् । अत्रोच्यते । उत्पत्तेः प्रभृत्याविनाशाज्जातिर्द्रव्यं न जहाति, शब्देन तु द्रव्याव्यतिरेकेण जातिः प्रत्याय्यते शाबलेयो बाहुलेयो गौरिति, न तु भवति शाबलेयस्य गौरिति, तस्माज्जात्यात्मकमेव द्रव्यं प्रतीयत इति जातिशब्दो द्रव्यत्वेन व्यवस्थाप्यते । गुणाः पुनस्तस्मिन्नेव द्रव्ये कदाचिदुपयन्ति कदाचिदपयन्ति पटस्य शुक्ल इति,व्यति-

समुदायार्थापेक्षायामिति ।

भाष्ये

युगपद्वक्ष्येते ॥ (भा)

प्रयुज्येते ॥

परस्परेति । (कै)

प्रथमान्तयोरिति शेष ॥ भाष्ये

---

नन्वर्थाभावेऽपि विधेयाविमर्श उक्तः "न्यक्कारो ह्ययम्" इत्यादौ । तत्र विलम्बेन तथा प्रतीतिस्तादृशोत्सर्गपरित्यागात् स हृदयवैमुख्यं वा दुष्टि बीजम् । तथा प्रकृतेऽपि विलम्बेन प्रतीतिः । समासे तथा प्रतीतिरित्युत्सर्गपरित्यागेन सहृदयोद्वेगो वा दुष्टिबीजन्तद्वदेव चास्यापि नासाधुता । "अपृक्त एकाल्प्रत्ययः" "अभ्यासजोपश्च" इति सौत्र-

---

पाठकः । पाठकपाचकः । खञ्जपाचकः पाचकखञ्ज इति । शिंशपावृक्ष इत्यत्र तु शिंशपात्वस्य व्याप्यत्वात् वृक्षत्वस्य च व्यापकत्वात् विशेषणविशेष्यभावव्यवस्था स्पष्टैवेति दिक् ॥

---

त्तिका अपि द्रव्यात्मशब्दैः प्रत्याय्यन्त इति न गुणात्मकं द्रव्यं भवतीति न गुणशब्दो द्रव्यशब्दत्वे व्यवस्थातुमर्हति, अत एव 'श्वेतं छागमालभेते'ति चोदनायां श्वेताभावे छागमात्र आलभ्यते न तु छागाभावे पिष्टपिण्डीमालभ्य कृती भवती, क्रियाद्रव्ययोरुपनिपातेऽप्येवमेव द्रष्टव्यम् । पाचकशाक्रय इति' । यत्र तु गुणशब्दयोः क्रियाशब्दयोः गुणक्रियाशब्दयोर्वोपनिपातस्तत्रानियम एव भवति खञ्जकुब्जः कुब्जखञ्जः, पाचकपाठकः पाटकपाचकः, खञ्जपाचकः पाचकखञ्ज इति । 'शिंशपावृक्ष इति' । द्रव्यशब्दयोरेवोपनिपातेऽपि वृक्षत्वस्य व्यापकत्वान्महाविषयत्वाद् दूरात्प्रथमत एवोप

**चोभौ गुणशब्दाविति । (कै)**

क्रियाया अपि उपलक्षणमेतत् । अत एव "खञ्जकुब्जावि"त्यत्र खञ्जेत्यस्य क्रियात्वेऽपि न क्षतिरित्याहुः ॥

**कुब्जवामन इति । (कै)**

केवलगुणोदाहरणं तत्प्रधानविशेष्यताख्यविषयतावदित्यर्थः ॥

---

प्रयोगात् । अत एव "*सप्तदशारत्निर्वाजपेयस्य यूपो भवति" "†लोहितोष्णीषा ऋत्विजः प्रचरन्ति" इत्यादौ वाजपेययूपारत्नीनुष्णीषां चानूद्यत्व-

लम्भाच्च प्राधान्यं, शिंशपात्वस्य तु विपर्ययादप्राधान्यमिति न तत्राप्यनियमः । 'विशेषणमिति किमिति' । विशेष्यशब्दस्य सम्बन्धिशब्दत्वादेव विशेषणमिति लप्स्यत इति प्रश्नः । 'तक्षकः सर्प इति' । ननु तक्षकशब्दोऽपि विशेषणं भवत्येव, एवं मन्यते, विशेष्यशब्दस्य सम्बन्धिशब्दत्वादेव पूर्वपदस्य विशेषणत्वे लब्धे पुनर्विशेषणग्रहणमुत्तरपदस्य विशेषणत्वप्रतिपत्त्यर्थं, विशेष्येण विशेषणं समस्यते तच्चेद्विशेष्यं विशेषणमिति, न चाचोत्तरपद-

---

* वाजपेये श्रूयते "सप्तदशारत्निर्वाजपेयस्य यूपो भवति" इति । तत्र सन्देहः । किं सप्तदशारत्निता वाजपेयस्य ऊर्ध्वपात्रे निविशते । उत पशोर्यूपे निविशते इति । किं तावत् प्राप्तम् । ऊर्ध्वपात्रे इति । कुतः । वाजपेयस्य यूपाभावात् । यद् वाजपेयस्य अस्ति पात्रं यूपसदृशं तत्र भवितुमर्हति । अस्ति च षोडशिपात्रं तच्च खादिरत्वाद् ऊर्ध्वत्वाच्च यूपस-

† अथ यदुक्तं "समाख्यानाद् आर्त्विजं तपः" इतिगुणत्वात् न समाख्यया गृह्यते । यत्र पुरुषस्य गुणभावः तत्र समाख्यानियामिका । एवं वा श्येने श्रूयते "लोहितोष्णीषा लोहितवसना ऋत्विजः प्रचरन्ति" इति ॥ तथा वाजपेये श्रूयन्ते "हिरण्यमालिन ऋत्विजः प्रचरन्ति" इति ॥ तत्र सन्देहः किं श्येने उद्गातृभिर्लोहितोष्णीषता कर्त्तव्या ।

## न च शब्देनेति। (कै)

जातिप्रवृत्तिनिमित्तकेनेत्यर्थः। शब्देन जातेर्द्रव्यव्यतिरेकाप्रतीतौ हेतुरुत्पत्तिप्रभृत्याविनाशमत्यागः। तथा गुणानां व्यतिरेकप्रतीतौ हेतुरुपायित्वापायित्वम् उपायापायावुत्पत्तिविनाशौ द्रव्ये सत्येव भाष्ये

---

दण्डत्वलोहितत्वादिविधिरिति मीमांसकाः। न चात्र यूपारत्न्यूर्ध्वोमयोरतिदेशप्राप्ते तयातिदेशादुपदेशस्य बलवत्त्वेन पूर्वमेतैरेव विशिष्टविधिरितिवाच्यम्। यूपरत्नित्वानामप्यतिदेशप्राप्ततया तत् पर्यालोचनोत्तरमेवास्यविधेः

---

विशेषणं तक्षकस्य सर्पत्वाव्यभिचारादिति। 'लोहिततक्षक इति'। नात्र तक्षको विशेष्यत्वस्य लोहितत्वाव्यभिचारात्। यद्येवं लोहितो विशेषणं न स्यात् तस्यापि विशेष्यापेक्षत्वात्, एवं तर्हि पाठक्रमादर्थक्रमो बलीयानिति तक्षको लोहित इति पाठो द्रष्टव्यः, अत्र हि तक्षको विशेषणं भवति

---

दृशम्। तत्र निवेशे सति वाजपेयशब्द आञ्जस्येन भवति। इतरथा वाजपेयाङ्गपशुयागे लक्षणया वाजपेयशब्दो वृत्तः इति गम्येत। ननु तत् पक्षेऽपि यूपशब्दो लक्षणयोर्द्धपात्रे उच्यते। सर्वथा वयं लक्षणाशब्दाश्रमुच्यामहे। मत्पक्षेतु वाजपेयप्रकरणम् अनुगृह्यते। तस्मादूर्द्ध्वपात्रे निवेश इति। एवं प्राप्ते ब्रूमः। "आनर्थक्यात्तदङ्गेषु" वाजपेयशब्दः तावत् सोमयागविशेषवचनः। तस्य साक्षाद्यूपेन न प्रयोजनम्। अस्ति तु तस्याङ्गं पशुयागः। तस्य तु पशून् बन्धुं यूपेन कार्य्यम्। साक्षाद् वाजपेय-

---

वाजपेये च अध्वर्युभिर्हिरण्यमालित्वम्। उत उभयमपि सर्व्वर्त्विजाम् इति। किं तावत् प्राप्तम्। समाख्यानात् श्येने उद्गातृभिः। वाजपेये अध्वर्युभिः इति। एवं प्राप्ते ब्रूमः "गुणत्वाच्च वेदेन न व्यवस्था स्यात् (३-८-१२) गुणो लोहितोष्णीषता हिरण्यमालित्वं च। पुरुषः प्रधानम्।

**अवश्यं तद्गुणद्रव्यमाकाङ्क्षतीति** (भा)

सन्निहितपदोपात्तं छागादीति शेषः । तद्गुणकं द्रव्यविशेषमवश्यमपेक्ष्यते तदभावे गुणमात्रेण शास्त्रार्थसिद्धिं न मन्यते इति द्रव्यं प्रधानमित्यर्थः ॥ भाष्यस्थवाक्यमपि छागपदघटितमेवेत्याशयेनाह

---

प्रवृत्तेः प्रथमतोऽत्रविशिष्टविधिरेव । प्राप्ताप्राप्तविवेके तु विशेषणे पर्यवसानमित्यस्याप्ययमेवार्थः । आपाततः प्रतीतावपि प्राप्तत्वादिपर्य्यालोचने

---

लोहितत्वस्य तक्षकत्वव्यभिचारात । यद्येवं लोहितत्वस्य विशेष्यत्वमपि स्यात्, अस्त्येव तस्य विशेष्यत्वं पूर्वपदस्य तु विशेष्यत्वाभावात्प्रत्युदाहरणत्वम् एवं च कृत्वा तक्षकः सर्प इत्येतदेवास्मिन्नपि प्रश्ने प्रत्युदाहरणं भवति विस्पष्टार्थं तूभयोरुपादानम् ॥

---

यूपस्य यदि सप्तदशारत्निता विधीयते । तस्याभावात् । अनर्थकमेव वचनं प्राप्नोति । तत् अनर्थकं मा भूत् । इति योऽस्य पशुयागे यूपः तत्र निवेशम इति । ऊर्द्धपात्रे च यूपशब्दो लक्षणया स्यात् । नन्वितरस्मिन्नपि पक्षे वाजपेयशब्दो लक्षणया इति । न इति ब्रूमः । वाजपेये एव वाजपेयशब्दो भविष्यति । शक्ष्यति च स पशुयूपं विशेष्टुम् । सोऽस्याङ्गस्योपकारकः । यस्य यस्योपकारिणा उपकरोति भवति स तस्य सम्बद्धो मुख्येनैव सम्बन्धेन । न च एकान्तरितः इति कृत्वाऽसम्बन्धो भवति । यथा देवदत्तस्य नप्ता इति । पुत्रेण च असावन्तरितः । अथ च देवदत्तेन

---

अतो लोहितमुष्णीषं हिरण्यमाला च पुरुषं विशेषणत्वेन श्रूयते न कर्त्तव्यतया । तस्मात् पुरुषप्राधान्यम् । किमतः । यद्येवं पुरुषाणां प्रधानभावे समाख्या न नियामिका इत्येतदुक्तम् । अपि च गुणत्वश्रवणात्

श्वेतच्छागमिति । (कै)

एवं चामुकदीक्षितः देवदत्तसोमयाजीत्यादयो लोके प्रयुज्यमाना अप्यसाधव इति बोध्यम् । एवं च लक्षणोपक्रमेऽपि वाक्ये

---

तथातात्पर्य्यग्रहाच्छाब्दबोध इति । उच्चारितशब्दस्य तात्पर्य्यन्तात्पर्य्याद् वाक्येऽपि प्राप्तत्वादिपर्य्यालोचनमेव तथान्वये तात्पर्य्यग्राहकम् । अत एव "पण्डितो ब्राह्मणः" इत्यादौ यस्यैवाप्राप्तत्वं तस्यैव विधेयता पर्य्यायेण दृश्यते । यदृच्छयोगादिकमपि प्राप्तत्वादेरेव गमकमेव च

---

मुख्येनैव सम्बन्धेन सम्बध्यः । तस्माद् एष एव पक्ष आश्रयणीयः । न हि एतस्मिन् पक्षे कश्चिदपि लक्षणाशब्दो भवति इति ॥

यदि सप्तदशारत्निर्वाजपेयस्येति विधीयते यूपशब्दो यथा कथं चित्तदनुवादः ततः षोडशिपात्रे निवेशः । अथापि यो वाजपेयस्य संबन्धी स सप्तदशारत्निरिति विधीयते तथाप्येवम् । अथ यो यूपः स सप्तदशारत्निरिति वचनव्यक्तिः वाजपेयशब्दो यथा कथं चिद्विशेषणं प्रकरणप्राप्तानुवादो वा ततस्तदङ्गपशुयूपस्येदं परिमाणमिति । किं प्राप्तम् ॥

आनन्तर्यात् प्रधानत्वात्तथा प्रकरणाच्छ्रुतेः ।
वाजपेयेन संबन्धः साक्षान्न पशुना सह ॥

साक्षात्कर्मणः सप्तदशारत्नित्वं न संभवतीति तदङ्गद्रव्यं लक्ष्यते ।

---

सर्वपुरुषाणामेतद्विधानम् इति गम्यते । प्रधानसन्निधौ हि गुणाः श्रूयमाणाः प्रति प्रधानम् उपदिष्टो भवति । तत्र वचनेन प्राप्तं कथं समाख्यया विद्यमानयापि नियन्तुं शक्येत । तस्माद् उभयत्र सर्व्वर्त्विग्भिः एवं जातीयको धर्म्मः क्रियेत इति ।

"गुणत्वे तस्य निर्देशः" (३-८-६) इत्यनेन गतार्थम् इत्यन्यथा व्याचष्टे ये संस्काराः सन्तो वचनादृत्विजां जातास्ते किं समाख्यया नियम्यन्ते नेति ।

विशेष्यभूता एव तिलाः कृष्णगुणमाश्रयान्तरेभ्यो निवर्त्तयन्तीति न तिलानां परिच्छेदकत्वहानिः। एतेन विशेषणताख्यविषयताव-देव परिच्छेदकं भेदकं चेत्यपास्तम्। राजपुरुष इत्यादौ च

---

समासे तथान्वये एकप्रसरताभङ्गेनासामर्थ्यात् समासानापत्तिरितिमीमां-सकनव्योक्तमपास्तम्। प्रथमभक्ष इत्यत्र तु समाख्यापेक्षया वाक्यश्रुत्यो-र्बलवत्त्वेन प्रथमतोऽनेनैव भक्षान्तरविधिरिति न दोषः॥ नन्वेवं कटोऽपि-कर्म भीष्मादयोऽपीति भाष्योक्तपक्षे परमेण कारकेण कृतं परमकारकेण कृतमित्यादौ "तत्पुरुषे तुल्यार्थ" (६।२।२) इति सूत्रभाष्योक्तस्य परिनिष्ठितविभक्त्या समासस्यानुपपत्तिः। विशेषणविशेष्ययोर्द्वयोरपि तत्र पक्षे करणत्वेन क्रियायामन्वयेन सामर्थ्याभावात्। न च यत् यत्

---

यत्र यदेव साक्षात्संबन्धि तदेव ग्रहीतव्यम्। यद्यपि पशुरपि वाजपेय-प्रकरणान्तर्गत इति तत्संबन्धे ऽपि प्रकरणादनतिरेको भवत्येव वाजपेयस्य तद्धि भवति तथाप्यङ्गप्रधानानां भिन्नकथंभावयोगित्वाद्वाजपेयकथंभा वेनाग्रहणात्प्रकरणबाधोऽभिधीयते। वाजपेयस्येति च षष्ठीश्रुत्या संबन्धो भवति। भवतश्च यूपसामानाधिकरण्याद्वाक्येन स्यान्न च वाजपेयशब्द-वेलायां कश्चिद्विरोधो येन लक्षणाश्रीयते। गुणे त्वन्याय्यकल्पनेति तद्वरं यूपशब्द एव लक्षणा। तस्मादूर्ध्वपात्र एव निवेश इति प्राप्तेऽभिधीयते।

---

लोहितोष्णीषादयो हि श्येनाद्याविषु पठ्यमानाः सत्यपि संस्कारत्वे वचना-वृत्तिजां क्रियामाणाः समाख्याविषयतां प्रतिपद्यन्त इति प्राप्ते ब्रूमः।

संस्कारत्वादतिक्रान्ते समाख्या गोचरे स हि।

वचनेनर्त्विजां येन तेनैवान्येष्वपि स्थिताः॥

ऋत्विगुद्देशेन ह्येते विधीयमानाः प्रतिप्रधानावृत्तिन्यायात् सर्वेषां भवन्तो न शक्याः समाख्यया बाधितुम्। तस्मादिह न व्यवस्थास्यादिति॥

विशेष्यस्यापि पुरुषस्य राज्ञि भेदकत्वदर्शनादिति दिक् ॥ शिंशपावृक्षयोरपि सामान्यविशेषवाचित्वेन विशेष्यविशेषणभावमाशङ्क्याह

---

क्रियायामभिप्रेततमं तत् सर्वं कर्म । यत् यत् क्रियां साधकतमं तत् तत् करणं दध्यं गुणश्च । न ह्यसौ कटमात्रेण सन्तुष्यति । एवं च सर्वेषां क्रियायां प्रत्येकं कारकत्वात् सर्वेभ्यः कर्मादावेव तत्तद्विभक्तिरिति हि तत् पक्षबीजं तदयुक्तमासनशयनादिक्रियोपयोगितया द्रव्यस्येप्सिततमत्वेऽपि गुणादेस्तत्त्वाभावादितिवाच्यम् । कारकान्तरापेक्षयैव प्रकर्षस्य विवक्षणात् । न तु स्वकक्षायामपि । अन्यथा अश्वेन यथा दीपिकया व्रजति इत्यादौ सर्वेषां करणत्वानापत्तेः । न च पार्ष्णिकपरस्परान्वयेन सामर्थ्यमिति वाच्यम् । तस्य दुर्वचत्वात् । तथा हि स न शाब्दः शाब्दबुद्धि-

---

अगत्या लक्षणावृत्तिः समभिव्याहृतेर्भवेत् ।
न चोर्ध्वपात्रसंबन्धी यूपशब्दः प्रतीयते ॥

यो हि प्रकरणमव्यहितसंबन्धं चानुगिष्टक्षति तस्य यूपशब्दोऽनर्थकः स्यात् । ऊर्ध्वपात्रं लक्षयिष्यतीति चेन्न । असति सामानाधिकरण्ये अन्यथा संभवे वा लक्षणाभावात् । असत्पक्षे पुनर्न किं चिल्लक्षणावृत्तम् । षष्ठ्याः संबन्धमात्रवाचित्वेनानङ्गेऽप्युपकारकमात्रापेक्षयोपपन्नत्वात् । न ह्यसावङ्गाङ्गिसंबन्धमेवैकं ब्रवीति । अनङ्गमपि स यूपस्तद्रूपस्वर्थत्वादुपकारको वाजपेयस्य । यच्चानन्तर्येण षष्ठीश्रुतिर्विनियोजिकेति तद्यूपशब्देनापि सहाविशिष्टम् । अतश्च समदशारत्निविधिपरे नूयमानत्वाद्यादृशं वयं वाजपेयस्य यूपं पश्यामस्तादृशस्य ग्रहणमिति पशुयूपाश्रयणम् ॥ अस्ति त्वेषापि जिज्ञासा यदि वाजपेयस्य साक्षाद्यूपः स्यादिति । यदा तु स नोपलब्धस्तदा पक्षान्तरमवलम्बितम् । किं च

द्वयोरिति ॥ (कै)

मास्त्यन्यतरस्येति । (कै)

वृत्तस्येत्यर्थः ॥ भाष्ये

आवश्यकः (भा)

इत्यस्य नियत इत्यर्थः । कादाचित्कस्तु अस्त्येवेति भावः ॥ तदेवोपपादयति

---

कर्मणां विरम्यव्यापाराभावात् । न च गुणादेः परिच्छेद्याकाङ्क्षासत्त्वेन द्रव्यस्य च परिच्छेदकाकाङ्क्षासत्त्वेन प्रथमन्द्रव्यगुणयोः श्रौतक्रियासम्बन्धेऽपि पश्चादुक्ताकाङ्क्षावशात् परस्परं विशेषणविशेष्यभावेन विशिष्टस्य क्रियासम्बन्धविषयो बोधः । आकाङ्क्षावशादेव पुनरनुसन्धानं शब्दस्य । सामर्थ्यं कारकस्य क्रियान्वय इति च श्रौतप्रथमबोधेनोपपन्नम् । द्वितीयमादाय च सामर्थ्यम् इति वाच्यम् । एवं हि श्रौतसम्बन्धस्य बलवत्त्वात् तत्र च प्रत्येकं साधुत्वबोधात् "श्वेतं छागमालभेत" इत्यादिविषये श्वेतछागाभावे कृष्णछागेनैव येन केनचित् श्वेतेनापि यागस्य साङ्गत्वापत्तेः । किं

---

वाजपेयेन संबन्धस्तेनाधापि न निरूप्यते ।
साक्षात्संवन्धिमात्रेण तद्यूपेनाथ वा स्फुटः ॥

साक्षात्तावन्न समदशारत्नित्वं यूप्यत इत्युक्तम् । संबन्धिमात्रमप्यनिर्दिष्टं वाजपेयस्येत्येतावन्मात्रेण न ज्ञायेत । यूपशब्दार्थत्वतत्संबन्धित्वाद् दूरभ्रष्टः । तस्माद्यथोक्तमेवास्य विशेषणत्वम् अधिकारप्रकरणप्राप्तमनुवदिष्यति । वक्ष्यति ह्येतत् आरादपीति चेन्न । तद्वाक्ये हि तदर्थत्वादित्यत्र यथा प्रकरणवशेन तदुपकारिमात्रे धर्मा विधीयन्ते न साक्षादङ्गेष्वेव केवलेष्विति । तस्मान्न केन चित्प्रमाणेन विरोध इति ॥

यदा प्रथमत एवेति॥ (कै)

यदा तु प्रथममिति। (कै)

अनेन च न केवलं गुणद्रव्यसमभिव्याहारे द्रव्यस्य प्राधान्यमित्येव नियमः। किं तु व्याप्यव्यापकजातिसमभिव्याहारे व्यापकस्य विशेष्यत्वमित्यपीति बोध्यते॥ वृत्तप्राधान्ये हेतुद्वयं

---

च तत्तद्विभक्त्यन्तस्यानुसन्धाने कारकत्वेन क्रियान्वयायोगात्। न च विभक्तिरहितस्यानुसन्धानं तस्याबोधकत्वात्। "न केवला प्रकृतिः" इति निषेधाच्च॥ नन्वसमस्तपदानुसन्धानम्। यत्र समासात् प्राक् परस्परान्वयस्तत्रैव समासाभ्युपगमे न तदनुसन्धानासम्भवात्। किं च समस्तपदानुसन्धानेन सामर्थ्यवर्णनं सामर्थ्यज्ञानाधीनश्च समास इत्यन्योऽन्याश्रयापत्तिः। किं चैवं सति वाक्ये परस्परमुद्देश्यविधेयभावेन परस्परान्वयस्य दौर्लभ्यापत्तिः समस्तपदे परैस्तथान्वयास्वीकारात्। न च

"यद्दृष्टयोगः प्राथम्यमित्याद्युद्देश्यलक्षणम्"

इत्यभियुक्तवाक्ये प्रथमं क्रियान्वयरूपमेव प्राथम्यमन्यादृशस्यातिप्रसक्तत्वात्। एवं च तयोरुद्देश्यविधेयत्वाभ्यां क्रियान्वय आवश्यकः। न हि समासपदैकदेशस्याख्यातेनान्वयसम्भवः। आदौ समासघटकपदार्थान्वये

---

भवेत् सप्तदशारत्निर्वाजपेयस्य यूपकः।
उभ्मानं द्वयगं वाजपेयस्याङ्गं पशोरुत॥
आनन्तर्यात् प्रकरणात् कर्माङ्गं षोडशिग्रहः।
ऊर्ध्वपात्रे खादिरेऽग्रे संयुज्यान्वेति कर्मणा॥
यूपद्वारा पशोरङ्गं पशुद्वारा च कर्मणः।
सौमिकत्वाद्वाजपेये यूपो नास्ति पशुं विना॥

**प्रथमत उपलम्भादिति** (कै)

**महाविषयत्वादिति** (कै)

च महाविषयत्वमेवोपपादयति

**व्यापकत्वादिति ॥** (कै)

**विशेष्यत्वमेवेति ।** (कै)

विषयताविशेषरूपमित्यर्थः ॥ फलव्यवच्छेदाय वृत्तशब्द इत्यपि नेत्याह

---

एव तस्य साधुत्वाङ्गीकारादयमेव समासादावेकार्थीभावो नामातो न समस्तपदे तथान्वयः । प्रकृते तु आदावुपात्तासमस्तपदयोः क्रियान्वयसम्भवेन पश्चादनुसंहितसमस्तपदेऽपि तथान्वयसम्भव इति वाच्यम् । पूर्वमनुसंहितासमस्तपदेतथान्वय सम्भवेनोपात्तसमस्तपदेऽपि तथान्वयापत्तेः । किं च उद्देश्यत्वविधेयत्वाभ्यां तयोः क्रियान्वय इत्युक्तिमात्रं रमणीयम् । तयोः परस्परनिरूपितत्वेनोद्देश्यविधेययोरेव तद्रूपेणान्वयात् । किं च नीलमुत्पलमस्तीत्यादौ सत्तायामुत्पलस्योद्देश्यत्वेनान्वये तस्या विधेयत्वं वाच्यं नीलस्य विधेयत्वेनान्वये च तस्या उद्देश्यत्वं वाच्यम् । न चेदमावृत्तिं विना सम्भवति वैरूप्यात् । वाक्यभेदश्च नैवं विधे विषयेऽनुभवसिद्धः । किं चाभियुक्तोक्त उद्देश्यस्य प्राथम्यलाभेऽपि विधेयस्य न तल्लाभः । "तद्वृत्तयोगः पश्चात्त्वं स्याद्विधेयस्य लक्षणम्" इति तच्छेषात् । किं च "इको यण्" इत्यादौ इक इति षष्ठ्यन्तस्य आदौ क्रियान्वयासम्भवः । स्थान्यादेशभावसम्बन्धस्य षष्ठ्यर्थत्वेन तस्य क्रियायामभावात् । एवं राज्ञः पुरुष इत्यादौ स्वस्वामिभावसम्बन्धार्थकषष्ठ्यामपि तथान्वयासम्भवः । किं च भवदुक्तं प्राथम्यमप्यसंगतम् । अभियुक्तोक्तवाक्यशेषविरोधात् । "न्यक्कारो ह्ययम्" इत्यादावुद्देश्यप्राथम्याभावेनाविस्पष्टविधेयांशतेति प्रकाशोक्तेरसङ्गतेश्च । अपि "वृद्धिरादैच्" सूत्रभाष्ये "पूर्वोच्चारिताः संज्ञी

**तथा चेति ।** (कै)

वृक्षविशेषस्य खदिरादेः प्रतिनिधिर्वृक्षो भवति । न तु तद्वृक्षाभावे तदीयफलाद्युपादानमित्यन्वयः । वृक्षविशेषः खदिरादेरिति पाठः पाठः । वृक्षाभावे फलेत्यादिश्च । एवं च फलं न वृक्षसमतया तदर्थं इति तात्पर्यम् ॥ तदाह भाष्ये

---

परोच्चारिता संज्ञा" इत्यादिग्रन्थेन पूर्वोच्चारितत्वरूपप्राथम्यस्यैवोक्तत्वात् । उक्त एकार्थीभावोऽपि निर्मूलः । तत्तत्प्रत्ययविधायकशास्त्रीयप्रत्यासत्तिन्यायमूलिकया प्रकृतिप्रत्ययौ सहार्थं ब्रूत" इति भाष्यसंमतव्युत्पत्त्यैव प्रकृतिप्रत्यययोस्तल्लाभेन तद्धितविधौ समर्थपरिभाषयोपस्थितेर्भाष्योक्ताया वैयर्थ्यापत्तेः । अस्मदुक्तैकार्थीभावस्यैव समर्थपदार्थपदार्थताया भाष्ये उक्तेश्च । न च मानसः पार्ष्णिकबोध इति वाच्यम् । शब्दयोरर्थद्वारकपरस्परान्वयाभावेनासामर्थ्यस्य तदवस्थत्वात् । किं च नीलमुत्पलं पश्य इत्यादौ दर्शनकर्मत्वस्य साक्षादेव गुणे सत्त्वेनाकाङ्क्षाभावेन पार्ष्णिकबोधे मानाभावात् तत्र समासानापत्तिः । यत्र गुणवाचकानां स्वपरिच्छेद्यद्रव्यद्वारा क्रियाकारकत्वं तत्र परिच्छेद्यं द्रव्यं किमित्याकाङ्क्षायामुपात्तमेवेति अरुणाधिकरणवार्त्तिकोक्तेः । किं च नीलादिपदार्थानां परिच्छेद्याकाङ्क्षायां द्रव्यमुपात्तगुणवदेव गुण उपात्तद्रव्यवृत्तिरेवेति भेदसंसर्गविषयकस्यापि पार्ष्णिकस्य लाभेन नियमतोऽभेदविषयकपार्ष्णिकबोधाभावेन सामानाधिकरण्यनिमित्तसमासानापत्तिस्तन्निमित्तपुंवत्त्वानापत्तिश्च । दर्शनीया माता इत्यादौ तद्वारणाय वृत्तौ वृत्तेः प्राक् च यत्र सामानाधिकरण्यं तत्रैव पुंवत्त्वप्रवृत्तेः । एतच्च बहुव्रीहिप्रकरणे स्फुटीभविष्यति । एतेन समासघटकीभूतं गुणिपरमित्यपास्तमिति चेदत्राहुः । भीष्मं कटं कुरु इत्यादौ भीष्मादिगुणविशिष्टकटस्य करोति क्रिययेप्सितत्वात् कर्मत्वं तत्र

**न च वृक्ष इति ।** (भा)

तथा च शिंशपोपक्रमे वृक्षपदप्रयोगो नेति भावः । अशिंशपा तु वृक्षोऽस्त्येवेति वृक्षोपक्रमे भवत्येवाशिंशपाप्रयोग इति बोध्यम् ॥

---

कटपदोत्तरद्वितीययाविशिष्टस्य प्रधानानतिरिक्ततया प्रधानगतस्य तस्योक्तौ विशिष्टगततदभिहितमेवेति भीष्मादिभ्यो द्वितीया न स्यादित्याशङ्क्य भाष्ये विशिष्टगतकर्मत्वस्य समानविभक्तिकविशेषणं विना प्रत्यापयितुमशक्यत्वेन भीष्मादीनामपि कर्मत्वशक्तिमत्त्वादुक्तत्वेऽपि द्वितीयेत्येकं समाधानं कृतं तस्यायं भावः । विशिष्टस्य कर्मत्वे विशेषणस्यापि तत्त्वमन्यथापि विशिष्टं कर्म इत्युक्तिव्याघातः । कुण्डलीपण्डित इत्यादौ कुण्डलादेः पण्डितत्वप्रमातु न । शिखीध्वस्त इत्यादौ विशिष्टे बोधे विशेषणगतस्य तत्रारोपेण प्रतीतिवत् अत्र विशेषणबाधे विशेष्यगतस्यारोपेणोपपत्तेः । एवं च तदंशे भ्रमत्वं ज्ञानस्य यत्र त्वबाधस्तत्र नांशेऽपि तत्त्वम् । विशिष्टगत्यैककर्मत्वप्रतिपादनं च नोभयत्र द्वितीयां विनेति विशेषणादपि सा । प्रत्ययानां प्रकृत्यर्थान्वयित्वमिव विशेषणविशिष्टस्वप्रकृत्यर्थान्वयित्वमपि । अत्र विशेषणपदात् कर्मत्वाद्यनालिङ्गितैव तदुपस्थितिर्विशेष्यस्य तु तद्विशिष्टे प्रतीतेर्विशिष्टस्यैककर्मत्वबोधः । तथा बोधे विशेषणोत्तरद्वितीयापि सहकारिणीत्यत्र सामर्थ्यं नानुपपन्नम् । ततोऽथवा कटोऽपि कर्म भीष्मादयोऽपीत्युक्तम् । तस्यायं भावः । उभयोरपि कर्मत्वात् कटपदोत्तरद्वितीयया कटगतकर्मत्वोक्तावपि विशेषणगतकर्मत्वप्रतिपादनायविशेषणादपि द्वितीया तत्रोत्पत्तिरपि गुणस्य द्रव्यद्वारैव वाच्या दानादिकर्मता च द्रव्यद्वारैवेति साक्षात् फलाश्रयादेरिव द्रव्यद्वारा फलाश्रयादेरपि कर्मत्वादिकमेवं च विशेषणं पृथक्कर्मादिशक्तिवैशिष्ट्येनैव बोधकम् । द्रव्येणाभेदात्तु तस्या

वृक्षप्रतीतिव्यवधानेनेति। (कै)

एतेन १"लुब्योगाप्रख्यानादिति" सूत्रस्वरसेन शिंशपादिशब्दानामपि फले मुख्यतया शिंशपात्वं वृक्षत्वव्यभिचारीति "नन्ववृक्ष" इति भाष्यमसङ्गतमित्यपास्तम्। लुपः प्रत्याख्यानेऽपि वृक्षस-

१ अ १। पा २। सू ५४॥

शक्तेर्वाक्यार्थबोधे विशेष्याग्रहः। अत्रापि पक्षे विशेषणविशेष्ययोः परस्परान्वयपूर्वकमेव क्रियान्वयः। न च कारकाणां भावान्वयनियमहानिः। साक्षात् क्रियाजनकानां साक्षादेव तदन्वयः। इतरद्वारा कारकाणां तु तदन्वयद्वारक एव क्रियान्वय इति नियमेन तदहानेः। एतेन "गुणानां च परार्थत्वादसम्बन्धः समत्वात् स्याद्" ( पूर्वमीमां-अ१०-पा८-सू१६ ) इति न्यायविरोधः परस्परान्वय इत्यपास्तम्। उक्तरीत्या समत्वाभावात्। एवमेव यन्तं ज्ञानद्वयकल्पने गौरवात्। अननुभवाच्च। किं च कारकविभक्तिसाधुत्वाय प्रथमं क्रियान्वयः समासस्य पार्ष्णिकान्वयमादाय साधुत्वमुत समासस्यैव प्राथमिकपरस्परान्वयेन साधुत्वं विभक्तेस्तु पार्ष्णिकेनेत्यत्र विनिगमनाविरहात्। द्वितीयोपपत्त्यार्थमेवैषा कल्पना। भाष्यकृतः सूत्रकृतः प्रकृत्यादिविभागकल्पनावन्नत्वत्र बोधे विशेषः। कैयटस्याप्यत्रैव तात्पर्य्यम्। एवं चात्रापि सामर्थ्याविघातः स्पष्ट एव। न च तथापि श्वेतं छागम् इत्यादौ श्वेतच्छागाभावे येन केनचिच्छ्वेतेनापि यागसाङ्गता कुतो नेति वाच्यम्। जातेः शब्देन कथमपि भेदास्पर्शेन द्रव्यात्मकत्वान्न तत्त्यागः। न हि भवति शावलेयस्य गौरिति। गुणस्य तु घटस्य शुक्ल इति भेदेन प्रतीत्या द्रव्ये सत्येव गुणापगमेन च विप्रकृष्टत्वेन तस्य त्यागात्। जातेस्त्यागे सर्व्वथैव साधनभेदात्क्रियान्तरमेव स्यात्। मन्मते तु सादृश्यात खदिरवृक्षेणापगम इत्यदोषात्। अत एव "न ङिसम्बुद्ध्योः" (८। २। ८।) इति सूत्रे भाष्ये सम्बुद्ध्यन्तानां राजन्वृन्दारकेत्यादौ न समासः। इह तावत्

सम्बन्धित्वेनैव तद्बोधात् । आदौ हि शिंशपाशब्दाद् वृक्षस्यैव प्रतीतिः । पश्चात्तत्सम्बन्धित्वेन फलस्येत्याशयात् ॥ नन्वन्तरङ्गत्वेऽपि फलार्थकत्ववारणाय वृक्षपदप्रयोगो भविष्यति तत्र च द्रव्यवाचित्वेन विशेष्यत्वानियमात्प्रयोगानियमो भविष्यत्येवेति चेन्न । नह्यवृक्षः

---

समानार्थेन वाक्येन भवितव्यं समासेन च यस्त्वेहार्थो वाक्येन गम्यते नासौ जातु चित् समासेन गम्यते अवयवसम्बोधनं वाक्येन गम्यते समुदायसम्बोधनं समासेनेत्युक्तम् । पृथगवयवार्थयोरभिमुखीकरणे परस्परस्यैकार्थीभावलक्षणसामर्थ्यायोगादिति कैयटः । सम्बोधनविभक्त्यर्थस्यानुवाद्यतयान्वयित्वेनोभयोरपि क्रियान्वयित्वेन परस्परान्वयाभावान्नैकार्थीभाव इति तद्भावः । तत्र तु नीलमुत्पलमित्यादौ पार्ष्णिकान्वयेन सामर्थ्यवत्त्वापि वक्तुं शक्यत्वेन भाष्याद्यसंगतिः स्पष्टैव । तस्मात् मदुक्तरीत्या नीलोत्पलमित्यादौ प्रत्येकं कर्मत्वेऽपि विशिष्टस्यैवेतरान्वयादस्ति सामर्थ्यं सम्बोधनस्थले. प्रत्येकमभिमुखीभावे एवोभयत्र सम्बोधनविभक्तिरिति न तस्या विशेषणविभक्तितुल्यत्वमिति न तत्रान्त्यप्रकारत्रयसम्भवः प्रत्येकं सम्बोधनविभक्तौ कदापि विशिष्टसम्बोधनाप्रतीतेर्यस्त्वेहार्थ इत्यादिना भाष्येण स्पष्टमेवास्य वाक्यस्य विशिष्टाबोधकत्वमुक्तमिहेत्यनेन च अन्यत्र वाक्यस्य समाससमानार्थबोधनसामर्थ्यं च दर्शितमिति भाष्यविदो विभावयन्तु । कट एव कर्म तत्सामानाधिकरण्याद् भीष्मादिभ्यो द्वितीयेति तृतीयपक्षे तु तस्य कर्मत्वाभावेऽपि स्वविशेष्यगतकर्मत्वेन तत्र द्वितीया । यथेश्वरसुहृदः स्वयं निर्धना अपि तद् धनेनैव धनफलभाजस्तद्वत्तदेकयोगक्षेमत्वादिति कैयटः । अयं भावः । सामानाधिकरण्यं नामैकार्थबोधकत्वं यदि भिन्नशक्तित्वं स्यात्तदा शक्तित्वं स्यात्तदा शक्तिभेदेनार्थभेदादेकार्थत्वभङ्गस्तस्माद्विशेषसमानशक्तिकत्वं तदभिन्नविशेषणानामिति तत् समानविभक्तिकत्वमेव पक्षाश्रयत्वादिवत् तद्वत् सामानाधिकरण्यमपि तत्तच्छक्तौ

शिंशपाप्रसिद्धोऽस्तीति भाष्यार्थात् । एवं च फलरूपार्थस्याप्रसिद्धत्वादिना प्रकरणादिकं तदुपस्थित्यनुदयेन तद्व्यावर्त्तकविशेषणोपादानाभाव इति तात्पर्यात् । एवं च सामान्यविशेषवाचकपदसमभिव्याहारे सामान्यवाचकस्यैव विशेष्यत्वं यत्र तूभयोरपि परस्परापेक्षया सामान्यत्वं विशेषत्वं च तत्रानियम एव यथा ब्राह्मणदेवदत्तौ

---

नियामकमिति । एवं च पूर्वोत्तरपक्षैकवाक्यतया मध्यमपक्षोऽप्युक्तरीत्यैव बोध उचितः । अरुणाधिकरणसिद्धान्तोऽप्येवमेव । "अर्थैकत्वे द्रव्यगुणयोरैककर्म्यान्नियमः स्याद्" ( ३-१-१२ ) इति जैमिनिः सिद्धान्तसूत्रात् । द्रव्यगुणवाचकयोः शब्दयोरर्थैकत्वे परस्परमभेदान्वयेनैकार्थबोधकत्वे सति ऐककर्म्यादिविशिष्टैवास्यैकक्रियासम्बन्धान्नियमः परस्परावच्छेदरूप इति तदर्थात् लोकसिद्धाया आरुण्यविशिष्टैकहायन्याः क्रियानुवादेन विधानान्न वाक्यभेदः । गुणवचनानां सन्निहितविशेषपरत्वं तद्गतलिङ्गादिग्राहित्वं चेत्येष ह्येतदधिकरणसिद्धान्त इत्यलम् ॥ नन्वेवंरीत्या नीलघटमानय इत्यादौ समासे कृते नीलादिपदोत्तरं द्वितीयाद्यापत्तिरुक्तरीत्या कर्मत्वसत्त्वाद् इति चेन्न । जातविभक्तेः "सुपोधातु" ( २ । ४ । ७१ । ) इति लुकाऽस्मृतेः समासादिविशिष्टस्यैव उपस्थित्या विशिष्टोत्तरविभक्त्यैव तद्गतस्य तस्योक्तत्वाच्च इत्याहुः ॥ अभेदान्वये च समानविभक्तिकनाम्नोरेव साधुत्वमिति सर्वादिसूत्रे भाष्ये स्पष्टम् । नामपदेन च विभक्त्यन्तमिति निरूपितं तद्दधिपश्य इत्यादावपि लुप्तविभक्त्या तत्त्वम् । विभक्तिलोपमजानतस्तद्व्युत्पत्त्यज्ञता च । उपदेशात उभयज्ञानमपि सुलभं राजपुरुषइत्यादौ लुप्तविभक्त्यैव विरुद्धविभक्तित्वम् । विशेषणविभक्तिरभेदार्थेति तु न युक्तं मानाभावाल्लक्षणया विभक्तावभावाच्च । विशेषणविभक्तिः साधुत्वार्थेत्यपि चिन्त्यमेव तथानुशासनाभावात् । समानविभक्तिकत्वं समानार्थकविभक्तिमत्त्वं तेन राज्ञः सुतस्य धनम् इत्यादौ न दोषः । एकत्र

देवदत्तब्राह्मण इति॥ ननु विशेषणविशेष्ययोः सम्बन्धिकत्वादन्यतरोपादानेनैव सिद्धे उभयोपादानं द्वयोरपि परस्परव्यभिचारित्व एव यथा स्यादित्येतदर्थम्। अत एव तक्षकः सर्प इत्यादौ न तक्षकत्वस्य सर्पत्वव्यभिचाराभावात्। ध्वनितं चेदं वृत्तौ। तत्कथं शिंशपावृक्षे समास इत्यत आह

---

भिन्नप्रवृत्तिनिमित्तत्वार्थत्वेनापरत्र स्वत्वार्थत्वेन तस्याभावात्। समानवचनत्वसमानलिङ्गत्वे च नाभेदान्वये तन्त्रे वेदाः प्रमाणं गोदौ ग्रामः तेनतुल्यं क्रिया चेत्। "शैत्यं हि यत् सा प्रकृतिर्जलस्य" इत्यादौ व्यभिचारात् मुख्यं सामानाधिकरण्यं तु वचनलिङ्गैक्ये एवेत्याहुः॥ कर्मधारयके "विशेषणं विशेष्येण बहुलम्" इति सूत्रे विशेषणविशेष्यत्वे विषयताविशेषरूपे निविशेन तु परिच्छेद्यत्वपरिच्छेदकत्वे। तथा सति नीलमिति सामान्योपक्रमे उत्पलस्य परिच्छेदकत्वेन विशेषणत्वादुत्पलनीलमित्याद्यापत्तेः। अत एव इतरस्य प्रधानत्वादितरस्य विशेषणत्वादिति प्रधानशब्देन विशेष्यं भाष्ये व्यवहृतं तत्र विशेष्यभूतेनाप्युत्पलेन नीलस्याश्रयान्तरव्यवच्छेदः क्रियते। यथा राजपुरुष इत्यत्र विशेष्यभूतोऽपि पुरुषो राजानं स्वान्तरेभ्यो व्यवच्छिनत्ति एतेन परिच्छेदकत्वरूपं भेदकत्वं विषयताविशेषरूपविशेषणतासमनियतमित्यपास्तम्। अत्र सामानाधिकरण्यं विशेषणविशेष्यत्वं चार्थयोरेव सूत्रे तु तत् प्रतिपादकशब्दे लक्षणाविशेषणादिशब्दानां चोभाभ्यामेकद्रव्यस्यैवाभिधानं भेदाश्रयविशेषणविशेष्यभावानुपपत्तिरिति वाच्यम्। धर्मभेदेन द्रव्यभेदात् निरुपाधिकं द्रव्यं वाधिष्ठानं चैतन्यरूपन्तयोराश्रय इति सामानाधिकरण्यमभ्युपगमं विशिष्टशक्तिग्रहकाले तदुपलक्षिते शुद्धेऽपि शक्तिग्रहः। अत एव कर्मधारयविषये भाष्योक्तं द्वन्द्वापादानं सङ्गच्छते नीलसमानाधिकरणं नीलमुत्पलम् इति बोधः। उक्तं च हरिणा

द्वयोरुपादानमिति। (कै)

भाष्यप्रामाण्यात् स्पष्टार्थमेव तदित्यर्थः। "तक्षको नागवर्धक्यो-रि"ति कोशात् तक्षकत्वस्यापि सर्पत्वव्यभिचाराच्च। बहुलग्रहणाच्च तक्षकः सर्प इति। अत्र समासाभावे प्रमाणं विचार्यं भाष्यारूढं बहुश्रुतैः॥

---

"द्रव्यात्मनास्त्वयत्तस्माद्बुद्धौ नाना व्यवस्थिता।
आश्रयाश्रयिभावेनेत्ययं पूर्वेभ्य आगमः" इति।

यत्तु प्रवृत्तिनिमित्तयोरेकद्रव्यवृत्तित्वं सामानाधिकरण्यम्। विशेष्य-विशेषणभावस्तु प्राग्वदेवेति तन्न विशेषणेन समानाधिकरणेनेति सूत्र-विरोधात्। अन्ये तु शब्दयोरेवैकविशेष्यभूतार्थप्रतिपादकत्वरूपं सामाना-धिकरण्यं विशेषणविशेष्यत्वमपि तद्रूपार्थप्रतिपादकत्वरूपं तयोरेवेत्याहुः। तत्र जातिशब्दसंज्ञाशब्दार्थस्य गुणक्रियासमभिव्याहारे विशेष्यतैव स्वभा-वात्। यदा जातिसंज्ञाशब्दघटिते वाक्ये कृष्णादयो द्रव्यवचना अपि समासे गुणादिमात्र बोधकाः तादात्म्येन गुणादिविशिष्टद्रव्यप्रतीतेश्च गुणादयो विशेषणं स्पष्टं चेदं हरिग्रन्थे॥ गुणयोः क्रिययोर्गुणक्रिययोश्च नियम ज्ञातो नीलोत्पलमिति व्यवस्थित एव प्रयोगः। खञ्जकुब्जखञ्ज इत्या-दावव्यवस्थित एव व्याप्यव्यापकभावानापन्न जात्योरनियम एव। यथा भूत-मूर्त्तयोः व्याप्यव्यापकभावापन्नयोऽस्तु व्यापकस्य विशेष्यतैव तेन शिंशपावृक्ष इत्येव। नैतयोरावश्यकः समावेश इति भाष्यादेतत्प्रयोगाभाव एव इत्यन्ये। एवं च डित्थ सोमराजीत्यादसाध्वेव क्वचिदन्यदेवेत्यर्थका-दबहुलग्रहणाद्वा साधु सर्वं चेदम्भाष्ये स्पष्टमित्यलम्॥

# पूर्वापरप्रथमचरमजघन्यसमानमध्य-मध्यमवीराश्च । २ । १ । ५८ ॥

भाष्ये

उत्तरत्र । (भा)

[1]विशेषणं विशेष्येणेत्युत्तरम् ॥

एवमादि (भा)

पूर्वापरेत्यादि ॥ तदाह

एतत्सूत्राद्युत्तर (कै)

इत्यादि ॥ "उत्तरत्रे"त्यस्य फलमाह

पूर्वकालेत्ययं त्विति ॥ (कै)

ऊह्यमिति । (कै)

[2]"दिक्संख्ये" इति नियमात् "तद्धितार्थे"त्यावश्यकं इवार्थघ-

१ अ २ । १ । सू ५७ ॥
२ अ २ । पा१ । सू ५० ॥

पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च ॥ एते सुबन्ताः

"पूर्वापरप्रथमचरमजघन्यसमानमध्यमध्यमवीराश्च" ॥ 'पूर्वस्यैवायं

टितेऽर्थे समासस्य प्रकृत्ये [1]"उपमानानीति"। "सामान्यवचनैरे" वेति नियमार्थमिदमित्यन्ये ॥ [2]"उपमितमिति"। विशेष्यस्य पूर्वनिपातार्थमिति बोध्यम् ॥

**यत्र तु प्रयोजनाभाव इति।** (कै)

वीरैकादिव्यावृत्तये बहुलग्रहणानुवृत्तेरत्राप्यावश्यकत्वेन तेनैव गुणादिसमभिव्याहारे पूर्वनिपातनियमसिद्धिरिति भावः॥ भाष्ये

**एवमादि** (भा)

इत्यादिशब्दः प्रकारे इति बोध्यम् ॥

**उत्तरत्रानुक्रमणसामर्थ्यमिति।** (कै)

उत्तरत्रैवमाद्यनुक्रमणकरणसामर्थ्यमित्यर्थः। सूत्रकृता दर्शितमिति शेषः॥

**अव्यापकत्वमिति।** (कै)

कृत्स्नपदं कृत्स्नविषयपरमिति भावः॥ भाष्ये

---

१ अ २। पा १। सू ५५॥
२ अ २। पा १। सू ५६॥

---

समानाधिकरणेन सुपा सह प्राग्वत्। पूर्वेणैव सिद्धे पूर्वनिपातनियमार्थमिदम्। गुणक्रियाशब्दैः सह समासे पूर्वादीनामेव पूर्वनिपातो यथा स्यात्।

---

प्रपञ्च इति'। गुणक्रियाशब्देन सह समासे पूर्वादीनां पूर्वनिपातनियमार्थं तु न भवति बहुलग्रहणेनैव सिद्धत्वादिति मन्यते॥

**यद्नेन कृतमिति।** (भा)

प्रवृत्त्यप्रवृत्त्यादिकं तत्सर्वं विषयाव्यापकत्वान्निष्प्रयोजनमित्यर्थः॥

**सामर्थ्याविघातेति।** (कै)

बहुलग्रहणघटितवचनस्य प्रसंगार्थमित्यर्थः॥ तत्प्रयोजनं शङ्कितसन्तोषः। तेन तदा ग्रहणान्तौ व्यर्थकाक्षेपाभावात्तत्र दृष्टान्तमाह

**यथेति॥** (कै)

व्याख्यान्तरमाह

**चतुर्भिरिति।** (कै)

चत्वारः। "क्वचित्प्रवृत्तिः" "क्वचिदप्रवृत्तिः" "क्वचिद्विभाषा" "क्वचिदन्यदेवे"त्येवं रूपाः। अत्र पक्षे कृत्त्वादिशब्दैः शब्दमर्यादयैतदर्थालाभादरुचेराह

**अन्ये त्विति॥** (कै)

**कारकमितीति।** (कै)

प्रवृत्त्यादिकारकत्वेन व्यापकमित्यर्थः॥

**साधकमितीति।** (कै)

यथायोग्यकारकमित्यर्थः॥

---

पूर्ववैयाकरणाः। अपराध्यापक इत्यादि। अपरश्चासावर्द्धश्च पश्चार्द्धः। "पश्चादिति" सूत्रे पठिष्यमाणे "नार्द्धे चे"ति वार्त्तिकेनापरस्य पश्चभावः।

**निवर्त्तकम्।** (भा)

सर्वविषयात्यागेन साधुत्वप्रयोगसाधकमित्यर्थः॥

**विभाषा गुणेति।** (कै)

प्रयोजनस्यापि प्रयोजकत्वेन हेतुत्वादिति भावः॥ भाष्ये

[1]**ते खल्वपीति।** (कै)

यद्विधिविषये लक्षणं सामान्यशास्त्रं प्रपञ्चस्तस्यैव विशेषशास्त्रेण उदाहरणप्रदर्शनं ते विधयो मन्दामन्दबुद्धिभिः सर्वैरपि सम्यक् ज्ञातुं शक्यत्वात्सुपरिगृहीता भवन्तीत्यर्थः। एवं च प्रपञ्चार्थमिदं शास्त्रमिति भावः॥

**केवलेनेति।** (कै)

उदाहरणप्रपञ्चपरविशेषसूत्ररहितेन बह्वक्षपदघटितसामान्य-सूत्रेणेत्यर्थः॥

**प्रपञ्चेनेति।** (कै)

सामान्यलक्षणरहितप्रपञ्चपरविशेषसूत्रेणेत्यर्थः॥ भाष्ये

१ "एते खल्वपि" इतिपाठोऽप्यस्ति भाष्ये॥

"पश्चार्द्धेन प्रविष्टः शरपतनभयाद्भूयसा पूर्वकायम्"
इति कालिदासः। अथ कथं
"दृप्तंसराजन्यकमेकवीरः" इति।

अवश्यं खल्वपीति। (भा)

अवश्यं विकल्पार्थकशब्दप्रयोगे कर्त्तव्ये पर्यायेषु लाघवगौरवविचाराभावात्। वेदे नानाशब्दैर्व्यवहारदर्शनाच्च वेदाङ्गत्वमस्यैवेति ध्वनयितुं वेदव्यवहृतेर्नानाशब्दैर्व्यवहार इत्यर्थः॥ युक्त्यन्तरमप्याह।

सर्ववेदपारिषदं हीति। (भा)

हिरर्थे॥

तत्र नैकः पन्था इति। (भा)

क्वचिदन्यदेवेत्यर्थस्य बहुलग्रहणसिद्धस्यान्यैर्विभाषादिशब्दैः प्रतिपादयितुमशक्यत्वादित्यर्थः। तदुदाहरणानि च वेदेषु बहूनीति ध्वनयितुमेव लोकवेदसाधारणेऽपि सर्ववेदपारिषदलोक्तिरिति परे॥

---

इह हि पूर्वकालैकेति बाधित्वा परत्वादनेन समासे वीरैक इति स्यात्। सत्यम्। पूर्वविप्रतिषेधोऽत्र वक्तव्य इति दुर्घटवृत्तिकारादयः। न त्वत्रोपष्टम्भकं मुनित्रयवचः पश्यामः। बहुलग्रहणं वा शरणीकर्त्तव्यम्॥

# श्रेण्यादयः कृतादिभिः॥ २। १। ५९॥

यद्यपि वृत्त्यादौ श्रेण्यादयः कृतादयश्च पठ्यन्ते तथापि कृतादिभिः कृतादिराकृतिगण एवेति बोधयितुं भाष्ये

श्रेण्यादय इति॥ (भा)

एकशिल्पेति। (कै)

एकशिल्पाश्रये एकपण्याश्रयेण वेत्यर्थः॥

तच्च यदेति। (कै)

एकशिल्पाद्यजीविसंघस्य तदुत्करणमित्यर्थः॥

---

श्रेण्यादयः कृतादिभिः॥ अर्थः प्रागवत्। श्रेण्यादिषु च्व्यर्थवचनम्। अश्रेणयः श्रेणयः कृताः श्रेणिकृताः। एकेन शिल्पेन पण्येन वा ये जीवन्ति तेषां समूहः श्रेणिः। श्रेण्यादयः पठ्यन्ते। कृतादिराकृतिगणः। च्व्यन्तानां तु "कुगतीति" नित्यं समासः परत्वात्। श्रेणि, एक, पूग, मुकुन्द, राशि,

---

"श्रेण्यादयः कृतादिभिः"॥ एकेन शिल्पेन पण्येन वा ये जीवन्ति तेषां समूहः श्रेणिः, तत्र पृथक्स्थितानां श्रेणिकरणे यथा स्यात् श्रेणिस्थानामेव तु दण्डादिरूपेण करणे मा भूदित्याह। 'श्रेण्यादिषु च्व्यर्थवचनमिति'। 'श्रेण्यादयः पठ्यन्त इति'। तेन तत्रादिशब्दो व्यव-

## दण्डनादिरूपकरणम्। (कै)

तद्योग्यरूपकरणमवरोधादिति यावत्॥ तदुक्तं भाष्ये

### किं क्रियन्ते इति। (भा)

किंचिदर्थविशिष्टाः क्रियन्त इत्यर्थः॥

### परत्वान्नित्य इति। (कै)

ऊर्यादिच्वीतिच्व्यन्तस्य गतित्वादिति भावः॥

---

विषय, निचय, निधन, इन्द्र, देव, मुण्ड, भूत, श्रवण, वदान्य, अध्यापक, अभिरूपक, ब्राह्मण, क्षत्रिय, पटु, पण्डित, कुशल, चपल, निपुण, कृपण, इति श्रेण्यादिः॥

---

ण्यावाची। 'कृतादिराकृतिगण इति'। प्रयोगदर्शनेनाकृतिग्राह्यो गण आकृतिगणः, अत्रादिशब्दः प्रकारे। 'च्व्यन्तानामित्यादि'। परत्वादिति भावः। आकृतिगणेऽप्युदाहरणरूपेण कतिपयाग्पटति। 'कृत मतेत्यादि'॥

# क्तेन नञ्विशिष्टेनानञ्॥ २। १। ६०॥

अवधारणेति। (कै)

नञैव विशिष्टेन नान्येनेत्येवमित्यर्थः॥

आधिक्यवाचीति। (कै)

नञधिकेनेत्यर्थः॥

अर्थरूपाभ्यामिति। (कै)

एति गच्छति जहातिजिहीतयोर्व्यावृत्तये उभयोपादानम्॥

भाष्ये

---

क्तेन नञ्विशिष्टेनानञ्॥ नञ्मात्राधिकेन क्तान्तेनानञ् क्तान्तं समस्यते स तत्पुरुषः। कृतं च तदकृतं च कृताकृतम्। एकमेव वस्तु एकदेशकरणात्कृतमेकदेशान्तरस्याकरणाच्चाकृतमित्युच्यते। पीतापीतम्। उदिता-

---

"क्तेन नञ्विशिष्टेनानञ्"॥ विशिष्टशब्दोऽयमधिके वर्तते, तच्चाधिक्यं क्वचित्सावधारणं, तद्यथा, देवदत्तो यज्ञदत्तात्स्वाध्यायेन विशिष्टः, स्वाध्यायेनैव विशिष्टोऽन्ये गुणाः समा इति गम्यते, क्वचिन्निरवधारणम्, तद्यथा, देवदत्तो यज्ञदत्तात्स्वाध्यायेन विशिष्टः, स्वाध्यायेन तावद्विशिष्टोऽन्ये गुणाः समा भूयांसो वा नैतन्निरूप्यते, वाक्यस्यैकरूपत्वेऽर्थप्रकरणादिना विशेषनिर्णयस्तत्र निरवधारणपक्षे सिद्धं च तदभुक्तं चेत्यत्रापि स्यात्, क्तान्तयोः प्रकृतिभेदेऽपि नञ् तावदधिक इति विशिष्टग्रहणं चानर्थकं स्यात्, क्तेन सनञा नञित्येव वाच्यं स्यात्, अतः सावधारण-

## प्रतिषेधो वक्तव्य इति । (भा)

प्रतिषेधघटितबहुव्रीहिरूपं क्तान्तविशेषणमित्यर्थः । क्तान्तलाभार्थं तत् कर्त्तव्यं अन्यपदार्थस्य उपस्थितक्तान्त एवेति तल्लाभ इति भावः ॥

## तदयमर्थ इति । (कै)

"अनञितिप्रतिषेधो वक्तव्य इति" भाष्यस्यायमर्थ इत्यर्थः ॥

## ततश्चानञिति । (कै)

अवधारणसहिताधिक्यपरत्वे तु तन्न कर्त्तव्यं भवतीति भावः ॥

## अर्थभेदमिति । (कै)

तत्कारो विकारः । "क्तेति" चिन्त्यम् ॥

---

लुदितम् । लुडिडाधिक्येऽपीष्यते । अशितानशितम् । क्लिष्टाक्लिशितम् । लुडिड्ग्रहणमर्थाभेदकस्य विकारस्याप्युपलक्षणम् । शाच्छोरन्यतरस्याम् । छाताच्छितम् । पूर्वनिपातनियमार्थं सूत्रारम्भः । कृतापकृतादीनामुप-

पक्षमाश्रित्याह । 'नञेव विशेषो यस्येति' । प्रकृत्यादिकमित्यादिशब्देन प्रत्ययोपसर्गयोर्ग्रहणं तत्र सिद्धं च तदभुक्तं चेति प्रकृतिरतुल्या, कर्त्तव्यमकृतमिति प्रत्ययः, प्रकृतं चानपकृतं चेत्युपसर्गः, एवं च पूर्वपदमपि क्तान्तमेव लभ्यत इत्याह । 'अनञ् क्तान्तमिति' । अनञिति शक्यमकर्तुम्, नहि पूर्वपदे सनञि उत्तरपदेनञधिको भवति । 'कृतं च तदकृतं चेति' । अवयवधर्मेणायं समुदायस्य व्यपदेशः, एकमेव च वस्त्वेकदेशकरणात्कृतं च भवत्येकदेशाकरणादकृतं चेति नात्र कश्चिद्विरोधः, यदि तर्हि सावधारणपक्ष आश्रीयत एवं सति यस्य लुडपरोधिक इडागमो वा तेन

**समसम्प्रधारणेति । (कै)**

समयोर्मध्येऽन्यतरस्य संप्रधारणा गुणाधिक्यं प्रतिपिपादयिषित-मित्यर्थः । अवधारणे तद्गर्भे आधिक्ये इत्यर्थः ॥ भाष्ये

**नाप्यनञितीति । (भा)**

नञैव विशिष्टेन क्तान्तेन सुबन्तं समस्यत इत्युक्ते क्तान्तप्रकृतिक-मेव तल्लभ्यत इति भावः ॥

**समासो न प्राप्नोतीति । (भा)**

तस्मात्तत्कर्त्तव्यमिति भावः ॥

**इदानीमव्याप्त्यतिव्याप्तीति । (कै)**

---

संख्यानम् ॥ कृतापकृतम् । भुक्तविभुक्तम् । पीतविपीतम् । गतप्रत्या-गतम् । भावे क्तः । तत्क्षणभुवा प्रत्यागमनेन सहचरितं गमनं गतप्रत्या-गतम् । यातं च तदनुयातं च तदानीमेव पुनर्गमनाद् यातानुयातम् ।

सह समासो न स्यादित्यत आह । 'नुडिटाविति' । नुडिड्ग्रहणा-मागमोपलक्षणं, न्यायस्य तुल्यत्वात्तेनच्छन्नाच्छन्नमिति तुगधिकस्यापि ग्रहणम् । 'अशितानशितेनेति' । अश भोजने, 'तस्मान्नुड्चि' 'क्लिष्टाक्लिशितेनेति' । 'क्लिशः क्त्वानिष्ठयो'रिति पक्षे इट्, तत्र नुट् प्रत्ययान्तभक्तः, इट् प्रत्ययभक्तस्तुक् नञ्भक्त इति सर्वेषामुत्तरपदेऽन्त-र्भावः, इह तु कृताच्छिन्नमिति 'घ्राच्छोरन्यतरस्यामि' तीत्वे कृते तेना-धिक्यात्समासो न प्राप्नोति । अत्र केचिदाहुः । नुडिड्ग्रहणमर्थाभेद-कस्य विकारमात्रस्योपलक्षणं, तेनेहापि समासो भवतीति, त्राताचाय-

अव्याप्तिः कृतापकृतादौ। अतिव्याप्तिः। सिद्धमभुक्तं कर्त्तव्यमकृतमित्यादौ प्रागुक्ता। कैयटे द्वावप्यपिशब्दौ प्रक्षिप्तौ फलाभावात्॥

विरूपं कृतमिति। (कै)

असमाप्त्यैव विरूपत्वं मध्ये तत्क्रियात्यागाच्च तस्याविरूपत्वमिति भावः॥

अभुक्तमिति वार्थ इति। (कै)

एवमपकृतमित्यस्याकृतमिति वार्थ इत्यपि बोध्यम्॥

सिद्धमभुक्तमिति। (कै)

अचारब्धस्यासमाप्तिर्न गम्यत इति न दोष इति भावः॥

---

क्रयाक्रयिका। अल्प इति कप्रत्ययः। तदन्तस्य स्वभावात्स्त्रियाम्। "अन्येषामपि दृश्यत" इति दीर्घः। महान् क्रयः क्रयशब्देनोच्यते। गोबलीवर्दन्यायात्। एवं पुटापुटिका फलाफलिका मानोन्मानिकेति। "समानाधि-

---

मित्यत्र तु निष्ठान्तस्यासिद्धत्वाद्भेदकत्वाभावः, गौणत्वात्सामानाधिकरण्यस्य पूर्वेण न प्राप्नोतीत्यारम्भः, पूर्वनिपातनियमार्थश्च, कृताकृतमित्येव यथा स्यादकृतकृतमिति माभूत्। 'कृतापकृतमिति'। एकदेशस्येष्टस्य करणादेकदेशस्य चानिष्टस्य करणादेकमेव वस्तु कृतं च भवत्यपकृतं च भुक्तं च तदत्यवच्छुतत्वा, द्विभुक्तं चाशोभनत्वाद्भुक्तविभुक्तं, विशब्दोऽत्राशोभनत्वं द्योतयति विरूपवत्, एवं पीतविपीतं, गमनं गतं प्रत्यागमनं प्रत्यागतं तत् त्वसभुवा प्रत्यागमनेन सह चरितं गमनं गतप्रत्यागतं, यातं च तदनुयातं च तदानीमेव पुनर्गमनात् यातानुया-

यत्सर्वथेति । (कै)

अयं भावः । सूत्रस्थनञ्विशिष्टपदं लक्षणया विसमाप्तिवचने-त्यर्थपरं व्याख्येयमिति सूत्रेणैव सिध्यतीति नुडिडधिकेनेत्यपि न कर्त्तव्यन्तत आधिक्येऽपि विसमाप्तिवचनत्वाचतेरिति ॥ भाष्ये

गतप्रत्यागतमिति । (भा)

*गतं गमनं तदात्मकमेव प्रत्यागमनं तथोच्यते यस्तु ग्रामान्तरं प्रतिनिर्गत्य तमप्राप्य मध्यत एव निवृत्तस्तदीयगमनप्रत्यागमने एकत्वेन तथा व्यवह्रियेते यातमनुयातं तदानीमेव पुनर्गमनाद्यातानुयातम् ॥*

---

करणाधिकारे शाकपार्थिवादीनां सिद्धये उत्तरपदलोपस्योपसंख्यानम्" ॥ शाकप्रियः पार्थिवः शाकपार्थिवः । पृथिव्या ईश्वरः "तस्येश्वर" इत्यञ् लक्षणया सिद्धे उत्तरपदलोपो नोपसंख्येय इत्याहुः ॥

तम् । 'क्रयाक्रयिकेति'। 'अल्प' इति क प्रत्ययः, तदन्तस्य स्वभावात्स्त्रियां वर्त्तते, 'क्रयाक्रयिकेति' 'अन्येषामपि दृश्यत' इति दीर्घः। महान् क्रयः क्रयशब्देनोच्यते गोबलीवर्दन्यायेन, एवं पुटापुटिका फलाफलिका मनोन्मानिकेति । 'शाकपार्थवादीनामिति'। सिद्धय इति शेषः। पृथोरपत्यं पार्थवः, केचित्पार्थिवेति पठन्ति, पृथिव्या ईश्वर पार्थिवः' 'तस्येश्वर' इत्यञ्, तस्याभ्यवहार्येषु शाकं प्रियत्वात्प्रधानं तत्र साहचर्यादेव तद्व्यपदेशत्वलाभादुत्तरपदलोपो न वक्तव्यः, समासस्तु वक्तव्यो गौणत्वात्सामानाधिकरण्यस्य ॥

# युवा खलतिपलितवलिनजरतीभिः ॥ २ । १ । ६७ ॥

भाष्ये

यथाजातीयकमिति । (भा)

स्त्रीलिंगशब्दरूपमित्यर्थः ॥

किमेतस्येति । (भा)

---

युवा खलतिपलितवलिनजरतीभिः ॥ जरद्भिरिति पाठान्तरम् । तत्रा-द्यपाठे युवशब्देन जरत्याः सामानाधिकरण्यासम्भवात्तदन्यथानुपपत्त्या "प्रातिपदिकग्रहणे लिङ्गविशिष्टस्यापी"ति परिभाषा ज्ञाप्यते । तथा च युवयुवतिशब्दयोर्द्वयोरपि खलत्यादिभिस्तुर्भिरुभयलिङ्गैः समानाधिकरणैः सह समासे अष्टौ उदाहरणानि पर्यवस्यन्ति । तथाहि । युवाखलतिः युवखलतिः । युवतिः खलती युवखलती । "हृतिकारादक्तिनः" "सर्वतोक्ति-

---

"युवा खलतिपलितवलिनजरतीभिः" ॥ संज्ञायनो ग्रहणे गार्ग्यायणः खलतिरित्यादावेव तु स्यान्न च तस्य जरतीशब्देन सामा-नाधिकरण्यं न च गार्ग्यायणी युवतिरस्ति स्त्रियां युवसंज्ञाप्रतिषेधादतो युवेति स्वरूपग्रहणमित्याह । 'युवशब्द इति' । खलत्यादिभिः समा-नाधिकरणैरिति'। कथं पुनर्युवशब्दस्य जरतीब्देन सामानाधिकरण्यं

लिङ्गविशिष्टपरिभाषयैव सिद्धमिति प्रश्नः । सा एतज्ज्ञापकसिद्धैवेत्युत्तरं । यद्यपि मुखं चन्द्र इत्यादौ भिन्नलिङ्गयोरपि सामानाधिकरण्यं दृश्यते तथापि न सर्वत्र किं तु संप्रतिपन्नस्थले एव तदप्येकस्य नियतलिङ्गत्व एवेति भाष्याभिप्रायः ॥

## तद्रूपारोपादिति । (कै)

नन्वेवं पुंस्त्वस्याप्यारोपस्तु किं ज्ञापकेन असङ्गतं च तदिति चेन्न । उभयारोपे गौरवात् लक्ष्यानुरोधेन भाष्यप्रामाण्येन कृप्तपरिभाषाज्ञापनस्यैवौचित्याच्चेत्यलम् ॥

---

न्नर्थादित्येके" इति ङीष् । युवपलितः । युवपलिता । युववलिनः । युववलिना । वलिशब्दः पामादिः । युवजरन् युवजरतीति । जीर्यतेरतृन् । उगितश्चेति ङीप् । युवत्यामेव जरतीधर्मोपलम्भेन तद्रूपारोपात्सामानाधिकरण्यम् । यत्तु एवं सति पुंस्येव स्त्रीत्वारोपेण जरतीसामानाधिकरण्यं सम्भवतीति परिभाषाज्ञापनं कथमिति हरदत्तेनोक्तं तत्रेदमुत्तरम् ।

---

पुंल्लिङ्गस्य स्त्रीलिङ्गेनेति, तत्राह । स्त्रीलिङ्गनिर्देश इति ’। अस्यां हि परिभाषायां सत्यां युवशब्दस्य ग्रहणे युवतिशब्दस्यापि ग्रहणादुपपद्यते युवतिजरतीशब्दयोः सामानाधिकरण्यमसत्यां तु नोपपद्यत इत्यर्थापत्त्या परिभाषा ज्ञायते । ‘युवखलतीति ’ । ‘ इदिकारादक्तिनः ’ ‘सर्वतोक्तिन्नर्थादित्येक ’ इति ङीष् , वलिशब्दः पामादिः । ‘ युवजरन्निति ’ । जरन्निरित्यपि पाठः केन चिदाचार्येण बोधित इति पुंल्लिङ्गेनापि समासो

जरद्भिरित्यपीति । (कै)

अत्र मानश्चिन्त्यम् ॥

युवजरन्निति । (कै)

बहुलग्रहणेनापि सुसाधम् ॥

---

आरोपं विनोपपत्तौ किं तेन । न हि एकमगत्या आरोपितमिति सर्वमेवारोपणीयम् । लक्ष्यानुरोधेन परिभाषाज्ञापनस्यैवौचित्यात् । कुमारः श्रमणादिभिरिति वा ज्ञापकमस्तु । श्रमणादिषु स्त्रीलिङ्गानामेव बहूनां पाठात् । अस्मादिभ्यः फञ्विधौ पुंसिजात इति गणसूत्रे पुंसोत्पत्तिर्ज्ञापिकेति तु तत्त्वम् । युवशब्दस्य पूर्वनिपातनियमार्थं वचनम् । अनियमो हि प्रसक्तः । गुणशब्दत्वात् ॥

- - - - -

भवतीति भावः । 'युवतिर्जरतीति'। कथं विरुद्धवाचिनः सामानाधिकरण्यम्, अन्योन्यधर्मोपलम्भात्तद्रूपत्वारोपाद्भविष्यति, यद्येवं विभिन्नलिङ्गयोरप्येवमेव सामानाधिकरण्यसम्भवात्कथं परिभाषाज्ञाप्यत इति चिन्त्यं, युवशब्दस्य पुर्वनिपातनियमार्थं वचनमनियमो हि गुणशब्दत्वात्स्यात् ॥

# वर्णो वर्णेन ॥ २ । १ । ६९ ॥

**बुद्ध्या परामृष्टमिति ।** (कै)

वक्ष्यमाणमसन्निहितमपि विचारविषयमित्यर्थः । बुद्धिविषयत्वेनैव च प्रत्यक्षता ॥ नन्विदंशब्देन सूत्रमेव गृह्यतां तत्राह

**न तावदिति ।** (कै)

सूत्रकर्त्तव्यत्वाकर्त्तव्यत्वविचारो नास्तीति न तस्येदमा परामर्श इति भावः ॥ अस्मिन् प्रदेश इति पाठः । कस्मिन् प्रकरणे सूत्रं कार्यमित्येवात्रत्यविचारतात्पर्यमित्याशयः । पश्चाद्भाविप्रत्याख्यानप्रकारं मन्दबुद्धिव्युत्पत्तये सौकर्याय च दर्शयति ।

**इह कृष्णसारङ्ग इतीति ॥** (कै)

**विशेषणं विशेष्येणेति सिद्ध इति** (कै)

प्रत्याख्यानं तु पश्चाद्भविष्यतीत्यन्वयः ॥ षष्ठीसमासस्त्वीदृशे विषये न सम्भवत्येव । भाष्यप्रामाण्येनानभिधानाच्च ॥

---

वर्णो वर्णेन ॥ समानाधिकरणेन सह प्राग्वत् । कृष्णसारङ्गः । सारङ्गश्चित्रः । स चाकृष्णो ऽपि सम्भवति । अतः कृष्णो विशेषणम् । न चास-

---

"वर्णो वर्णेन" ॥ विशेषणं विशेष्येणेति वर्तते, तत्र द्वयोः स्वरूपग्रहणेन विशेषणता भवेत् । 'वर्णश्चासौ वर्ण इति' । किं व्यावर्त्त

गौणेऽपीति । (कै)

बहुवचनग्रहणात् गौणमुख्यन्यायोऽत्र न प्रवर्त्तत इति भावः । विशिष्टरूपोपादानाभावात् । लाक्षणिकतामात्रेण गौणत्वाभावाच्च चिन्त्यमिदम् ॥ भाष्ये

वर्णेन तृतीयासमासो वा स्यादिति । (भा)

"वर्णो वर्णेनेति" सूत्रं "तृतीयातत्कृते" ( २ । १ । ३० ) । इत्यनन्तरं कार्यम् उताचैवेति विचार्यत इत्यर्थः ॥ ननु तृतीयासमासस्य तत्कृतत्वेनैव सिद्धेस्तत्प्रकरणे इदं व्यर्थमत आह

हेतुतृतीयेति । (कै)

हेतुतृतीयान्ते हि तस्य न प्राप्तिरिति भावः ॥

प्रकृतिस्वरे सिद्ध इति । (कै)

अतिप्रसङ्गनिवारणार्थमिति शेषः ॥

अनेते वर्णा इति सूत्रं कर्त्तव्यम् । (कै)

इत्यन्यथि

---

भवः । नानारूपसमाहारश्चित्रमित्यभ्युपगमात् । चित्रत्वं रूपत्वव्याप्यं नीलत्वादिविरुद्धं जात्यन्तरमेवेति पक्षे तु कृष्णावयवके कृष्णशब्दस्य लक्षणा

---

किमन्वितम् अथैकत्र विशेषायां रूपस्यान्यत्र च ग्रहः, शुक्लश्चासौ वर्ण इति न स्याद्वर्णो विशेषणं शुक्लस्य वर्णत्वाव्यभिचारात् तस्मादुभयत्र विशेष-

**तेन कृष्णेत इति । (कै)**

"एतः शबलः" शबलैताश्च कर्बुर इति कोशात् । इत उत्तरं

**कृष्णेनेति (कै)**

**सहयोगे इत्थंभूतलक्षणे वा तृतीया अनेनैव समास इति (कै)**

ग्रन्थः कैयटे दृश्यते सोऽग्रन्थः । एतशब्दस्य कृष्णघटितवर्णसमुदायवदर्थकत्वेन साहित्यस्य ज्ञापकत्वस्य चात्यन्तभेदनियतत्वेन सहयोगे तृतीयाया इत्थं भूततृतीयायाश्चाप्राप्तेः कृष्णसारङ्गोक्तरीत्या सिद्धे उपयोगाभावाच्चेति केचित् ॥

**पूर्वपदप्रकृतिस्वरो [1]भवतीति । (कै)**

पूर्वपदस्य हिमशब्दस्य वर्णवाचित्वाभावान्निषेधाप्राप्तेरित्यर्थः ॥ अनेते वर्ण इति प्रथमान्तम् ॥ नन्वत्र "वर्णो वर्णेनेति" न प्राप्नोति हिमस्य वर्णत्वाभावादत आह

---

१ 'एव' इत्यधिकमस्ति काशीस्थकैयटपुस्तके ॥

---

बोध्या । स्यादेतत् । "तृतीयातत्कृते"तीह सिद्धम् । सारङ्गत्वस्य कृष्णादिकृतत्वात् । एवं च वर्णो वर्णेष्विति पूर्वपदप्रकृतिस्वरोऽपि न विधेयः । तत्पु-

---

ग्रहणमित्याह । 'वर्णविशेषवाचीत्यादि' । कृष्णसारङ्ग इत्यादिना' । नानावर्णसमाहारः सारङ्गः, तथा शबलत्वस्य वर्णान्तरसमाहारेऽपि भावा-

**हेतौ तृतीयेति ।** (कै)

जनकत्वसाम्याद्धेतुपदं कर्त्रुपलक्षणं कृतद्वारकं च सामर्थ्यमिति भावः ॥ तदाह

**यत्कृतार्थेनेति समास इति ॥** (कै)

**अकारकत्वादिति ।** (कै)

कृतद्वारकसामर्थ्ये एव समासत्वेनैतत्पदार्थं प्रत्यकारकत्वादित्यर्थः ॥ भाष्ये

**द्वितीयेनेति ।** (भा)

सप्तम्यन्तेनेत्यर्थः । नैते "वर्णो वर्ण" इति सूत्रं पाठ्यमिति भावः ॥ "अनेत" इत्यस्यासमर्थसमासत्वेन वा न चतिरिति भाष्ये यद्यन्तर्भावेन सूचितं तदभावमाह ।

**प्रयोजके नास्तीति ।** (कै)

"तृतीयाकर्मणी"त्यादिप्रवृत्तेरिति भावः ॥ नन्वनेत इति "तृतीयाकर्मणी"त्यस्यापि निषेधः स्यादत आह

**आनन्तर्यादित्यादि ॥** (कै)

---

वर्षे तुल्यार्थैस्तृतीयेत्येव गतार्थत्वात् । नैवम् । कृष्णमुक्तो हरितमुक्ता इत्याद्यर्थं समासस्यावश्यं विधेयत्वात् । न हीह तत्कृतत्वमस्ति । तथा स्वरसूत्र-

त्वात्पूर्वान्वयो नियतो न स्यादिति कृष्णो विशेषणम्, एवं लोहितशब्देऽपि द्रष्टव्यं, ननु च कृष्णशब्दोऽवयवे वर्त्तते न समुदाये तस्य सारकृत्वात्

"अनेत" इत्यस्य पूर्वपदप्रकृतिस्वरनिषेधत्वात्कृत्स्वरस्य च पूर्वपदप्रकृतिस्वरापवादत्वात् परत्वादित्ययुक्तं तत्राह

**अनेत इति प्रतिषेध इति । (कै)**

पूर्वपदप्रकृतिस्वरस्य बाधकः किम्प्रतिषेधोऽथ कृत्स्वर इत्यन्वयः ॥

**विशेषाभावात्त्विति । (कै)**

एतशब्दस्यान्तोदात्तत्वादिति भावः ॥ निषेधाश्च बलीयांस इति न्यायमभिप्रेत्याह

**अथवेति । (कै)**

**कक्ष्यान्तरप्राप्तत्वादिति । (कै)**

पूर्वपदप्रकृतिस्वरापवादकृत्स्वरापवादत्वादित्यर्थः ॥ भाष्ये

**द्विर्वर्णग्रहणमिति । (भा)**

**अनेत इति प्रतिषेध (कै)**

इत्यनुषज्यते । आचार्यदेशीयः । प्रकृतसूत्रसत्ताश्रयणेन

---

मध्यभाष्यां वक्तव्यम् । इह मा भूत्, कृष्णैतो लोहितैत इति । तथा चानेत इति निषेधार्थं विध्यर्थं वेति परं संशयः । तत्र कृष्णसुरूढादौ विध्यर्थमेवेति

---

तत्कथमवयववृत्तेः कृष्णशब्दस्य समुदायवृत्तिना सारङ्गशब्देन सामानाधिकरण्यमत आह । 'अवयवद्वारेणेत्यादि' । कृष्णावयवसम्बन्धात्समुदाय

प्रतिपदोक्तपरिभाषया सिद्धिमाश्रित्यैकवर्णग्रहणाकरणेन पक्षयोः साम्यं दर्शयति । भाष्ये

**एकं वर्णग्रहणमिति ॥** (भा)

**अन्यतरच्च कस्मादिति ।** (भा)

अवर्णस्य वर्णे वर्णस्य वा अवर्णे कस्मान्न भवतीत्यर्थः । क्वचित्तु तथैव पाठः ॥ अथ तृतीयासमासवादी स्वमते लाघवमाह

**सामान्येन ममेति ॥** (भा)

इतर आह ।

**अवश्यं वर्णेति ॥** (भा)

यद्यपि हेतु तृतीयान्तेन समासार्थं कृष्णसारङ्ग इत्याद्यर्थमावश्यकं तथापि स्पष्टत्वाय यत्र कृतद्वारकसामर्थ्यस्यासम्भवस्तदर्थमित्याह

**शुकबभ्रुरिति ।** (भा)

सहयोगे तृतीयेत्येव न्याय्यम् ॥ स एव पुनः पृच्छति

---

स्थितम् । प्रतिपदोक्तस्य समासस्य ग्रहणासंभवात्स्वरसूत्रे वर्णेनेत इत्येवास्तु वर्णोवर्णेष्विति न कर्तव्यमिति तु तत्त्वम् । वस्तुतस्तु वर्णो वर्णेष्विति यथान्या-

---

एव लक्षणा उच्यत इत्यर्थः । अत एवात्र गौणं सामानाधिकरण्यमिति सूत्रारम्भः । ननु तृतीया तत्कृतेनेत्येवात्र सिद्धः समासः कथं सारङ्ग-

अथेदानीमिति ॥ (भा)

सिद्धान्त्याह

बाढमिति ॥ (भा)

एवमपीति । (भा)

एवं चेत्यर्थः । इदं सूत्रमत्र पक्षे उदाहरणमात्रपरमिति बोध्यम् ॥ क्वचिद्विशेषणविशेष्यभावे कामचारात्प्रधानोपसर्जनत्वे व्यवस्थिते तत्राह

प्रधानग्रहणं वेति ।

तदयमर्थः । पूर्वपरसूत्रोपात्तप्रधानयोः सह समाससंज्ञाप्रसङ्गे परसूत्रोपात्तं प्रधानं भवति पूर्वसूत्रोपात्तं प्रधानमुपसर्जनं तादृशो- पसर्जनयोः समासप्रसङ्गे परशास्त्रोपात्तमुपसर्जनमुपसर्जनं पूर्वशा- स्त्रोपात्तमुपसर्जनं प्रधानमिति ॥ भाष्ये

इभ्ययुवतिराढ्ययुवतिः (भा)

इति पाठः स चिन्त्यः । तयोरजातित्वात् । इभयुवतिरश्वयु- वतिरिति पाठस्तु उचित इति केचित् । भाष्यप्रामाण्यात्तयोरपि

---

समस्तु । प्रकृतसूत्रमेव तु न कर्तव्यं "विशेषणं विशेष्येणे"त्येव समासस्य सिद्धत्वादिति ध्येयम् । "मत्वर्थीयचिकीर्षायां न कर्मधारय इति वक्तव्यम् "।

---

शब्दो गुणवचनः सारङ्गत्वं द्रव्यावयववृत्तमित्यत्रत्येव सिद्धिः, तत्रायम- प्यर्थः । 'वर्णो वर्णेनेत' इति पूर्वपदप्रकृतिस्वरो न वक्तव्यो भवति,

जातिवाचित्वम् । अत एव "जातेरस्त्री"ति सूत्रे "अयोपधादि" त्यस्य "इभ्या चचियेति" प्रत्युदाहरणं भाष्ये दत्तं हस्तिपकजाति-रिभ्यपदेनोच्यते अर्य्येति पाठः । अर्यो ब्राह्मण इत्यन्ये ॥

वृन्दारकयुवतिरिति । (भा)

वृन्दारकशब्दो देवजातिवाचीत्याहुः ॥ भाष्ये "कृत्यतुल्ये"-त्यस्यावकाशप्रदर्शनावसरे "तुल्यमहानि"त्यपपाठः । "तुल्यश्वेतः" "तुल्यकृष्ण" इत्येव पाठ्यः पाठः ॥

न्यायव्युत्पादनायेति । (कै)

प्रत्यासत्त्यादिन्यायेनेत्यर्थः ॥ विप्रतिषेधप्रकरणादिष्टिरूपत्वं कथं लभ्यमित्यत आह

प्रत्यासत्तेरिति ॥ (कै)

ज्ञाप्यते इति । (कै)

शेषत्वाभावादिति भावः ॥

---

१ अ ४ । पा १ । सू ६३ ॥

---

वीरपुरुषवान् ग्राम इति मा भूत् । तथा च प्रथमत एव मत्वर्थविवक्षया बहुव्रीहिरेव भवति । न्यायसिद्धं चेदमिति भाष्यम् । बहुव्रीहिमात्रेण

---

तत्पुरुषे तुल्यार्थेत्ततीयेत्येव सिद्धत्वात्, तदवश्यं वक्तव्यमेतत्प्रतिषेधार्थ-मिह मा भूत् कृष्णेतो लोहितैत इति, इदं तु न वक्तव्यं इदमपि

**शेषग्रहणे प्रत्याख्याते इति।** (कै)

तथासत्येव कण्ठेकाल इति तदवकाशो युज्यते इति भावः। नहि ज्ञापकसिद्धं सावकाशत्वं गृहीत्वा सूत्रेण विप्रतिषेधो युक्तो विचारयितुमित्यभिमानः। अयं ग्रन्थः प्रौढ्या। नहि चिकतः शेषे एकसंज्ञाधिकारे च तत्प्रत्याख्यानमस्ति व्यधिकरणसमासस्यात्यल्प-विषयता सूचनार्थं तस्यावश्यकत्वाच्चेति केचित्॥ कदाचिदित्यनेन समासद्वयस्यैकविषयत्वमाशङ्क्याह

**विषयविशेषेति॥** (कै)

**नास्ति वस्तुभेद इति** (कै)

क्वचिदित्यतो नार्थभेद इत्यर्थः॥ भाष्ये

**सर्वधनाद्यर्थं इति।** (भा)

सर्वधनादिप्रकृतिकमत्वर्थीयार्थमित्यर्थः॥ प्रयोजनस्योक्तत्वात् किम्प्रयोजनमिति प्रश्नानुपपत्तिमाशङ्क्याह

**सर्वधनेति॥** (कै)

**प्रयोगादर्शनात्त्वेति** (कै.)

चरहितः पाठः। वाक्यालङ्कारे वा चः।

---

लभ्येऽर्थे मतुबादेर्गौरवपराहतत्वात्। कृष्णसर्पवान्वल्मीकः। लोहितशालि-मान् ग्राम इत्यादि तु भवत्येव। कर्मधारयं विना जातिविशेषस्याप्रतीतेः।

---

वक्तव्यमिहापि यथा स्यात् शुक्लबभ्रुः कृष्णशुक्लो हरितशुक्लः बभ्रुक-पिलः, यस्य कश्चिदवयवः शुक्लः कश्चिद्बभ्रुः स समुदायो ऽवयवशु-

कर्मधारयस्यानुक्तसिद्धत्वादिति ॥ (कै)

कदाचित्कर्मधारय इति । (भा)

पूर्वविप्रतिषेधानुक्तावपि सिद्धत्वादित्यर्थः ॥

मत्वर्थीयप्रकृतिरिति । (कै)

षष्ठीतत्पुरुषः ॥ भाष्ये

मत्वर्थीयैरभिधानमिति । (भा)

तः प्रत्ययैस्तदर्थाभिधानं यथा स्यादित्यर्थः ॥

तस्यास्वाभाविकत्वादिति । (कै)

बहुव्रीहिविषये पूर्वविप्रतिषेधेन कर्मधारयविधानात्तदर्थस्तेनोक्त एवेति भावः ॥

मत्वर्थीयोऽर्थान्तर इति । (कै)

अन्यपदार्थरूपे मत्वर्थे इत्यर्थः ॥

न वक्तव्यमिति । (कै)

वक्तुमनर्हमित्यर्थः ॥ क्वचित्तु "न कर्त्तव्यमि"ति पाठस्तत्राप्य-यमेवार्थः । तदर्थस्य विषयविशेषनिष्ठत्वस्याभावादिति भावः ॥

---

सर्वशब्दस्य त्वकारान्तैः कर्मधारय इष्यते । तस्माच्च ठनं बाधित्वा निरेवेति वक्तव्यम् । सर्वधनी सर्वबीजी सर्वकेशी ॥

---

ब्दाभ्यां तयोच्यत इति नात्र तदुक्तत्वसंभवः, अत्र कृष्णसारङ्ग इत्यादौ यत्रैकोऽवयवशब्दो ऽपरः समुदायशब्दस्तत्रावयवस्याप्रधानत्वादुपसर्ज-

अन्यथा (कै)

प्रकारान्तरेण ॥

मत्वर्थीयोत्पत्तिम् (कै)

तन्नियमम् ॥

वत्त्वत्यर्थ इति । (कै)

"भवति वै किञ्चिदि"ति भाष्यस्य । एवं जातीयकं किञ्चिद्वचनं भवति खल्वित्यर्थः ॥ किं जातीयमित्याशङ्कायां "कार्याः शब्दा इति" यज्जातीयं तज्जातीयमित्युत्तरम् ॥ "कार्याः शब्दा इति" वचनमेव केनाभिप्रायेण पठितमित्यत आह

आचार्याः कार्यवद्बुद्धिं कृत्वा पठन्तीति । (भा)

घटादिरूपकार्यवच्छब्दा अपि कार्या इति बुध्या पठन्तीत्यर्थः ॥

पठ्यमानवचनाकारमाह

कार्याः शब्दा इति ॥ (भा)

अथवा पठिक्रियेति । (कै)

आचार्यककर्तृकिञ्चित्कर्मककार्यत्वबुद्धिकरणोत्तरकालिकपठनक्रियाकर्तृकं भवनमित्यर्थः ॥ दृष्टान्तमुपपाद्य प्रकृतोपयुक्तमाह

तद्वदिति । (कै)

"कार्याः शब्दा" इति वत्कार्यवद्बुध्येदं पठितमित्यर्थः ॥ तदाशयमाह

---

त्वात्पूर्वनिपातः, द्वयोरव्ययवयवशब्दयोः पर्याय इति द्रष्टव्यम्, इह यस्मिन्प्रयोगे वीरैः पुरुषैस्तद्वान् ग्रामः प्रतिपादयितुमिष्टस्तत्र प्रथममे-

**कार्याः शब्दा इति ॥** (कै)

**दर्शने इति ॥** (कै)

**तत्प्रत्यायनम् ।** (कै)

तत्प्रत्यायनसामर्थ्यम् ॥ नन्वेवं वीरपुरुष इत्यादौ अन्तरङ्गत्वात् कर्मधारय एव स्याद् नतु बहिरङ्गो वीरपुरुषक इति बहुव्रीहिरित्यत आह भाष्ये

**अस्तु विभाषेति ॥** (भा)

तदाशयमाह

**नाच इत्यादिना ॥** (कै)

**बहुव्रीहिः सिध्यतीति ।** (कै)

अपवादत्वादिति भावः ॥ भाष्ये

**इष्टिरियम्** (भा)

इत्यमेन यदुक्तं तद्दर्शयति ।

**प्रथममेवेति ।** (कै)

वीरपुरुषादौ यद्यन्यपदार्थविवक्षा तर्हि प्रथममेव न तु कर्मधारयोत्तरमित्यर्थः ॥ इदमेवार्थतः पठ्यते "न कर्मधारयान्मत्वर्थीय" इति ॥ भाष्ये

---

वान्यपदार्थविवक्षा कार्या वीराः पुरुषा अस्मिन्सन्तीति वीरपुरुषको ग्राम इति, बहुव्रीहिरेव नित्यं यथा स्याद् अन्यथा पूर्वमनपेक्षिते ऽन्यपदार्थ

**अल्पेनेति ।** (भा)

द्रव्येणेत्यर्थः ॥ अल्पेन यत्नेनेति क्वचित्पाठः ॥

**माषेण ।** (भा)

तत्परिमितसुवर्णेन ॥

**शतसहस्रमिति ।** (भा)

वस्त्राणि गा वेत्यर्थः ॥

**कुद्दालपदेनेति ।** (भा)

पर्वतीयाः कुद्दालैरेव भूकर्षणं कृत्वा सस्यं सम्पादयन्तीति तद्व्यवहारानुसारेणेदम् ॥

**प्रतिपत्तिगौरवेति ।** (कै)

एकस्य विरुद्धयोः प्राधान्यगुणत्वयोराश्रयणमेव प्रतिपत्तिगौरवमित्याहुः ॥

**अन्ये तु शब्दलाघवमिति ।** (कै)

इदमेव भाष्यस्वरससिद्धं मतम् एकस्यैवार्थस्य प्रतिपादनाय वृत्तिद्वयापेक्षायां गरीयान् शब्दो बोधको बहुव्रीहौ त्वल्प इति भावः ॥

---

वीराः पुरुषा वीरपुरुषा इति कर्मधारये कृते पश्चादन्यपदार्थविवक्षायां मत्वर्थीये सति वीरपुरुषवान् ग्राम इत्याद्यनिष्टमपि कदाचिदनुषज्येत,

न प्रसञ्जनीयमिति । (कै)

अत इष्टिरित्येव सम्यक् । एवं च "यदीष्टिः पश्यते नार्थोऽनेने"त्यादिरित्येव "तदा भवती"त्यन्तग्रन्थ आचार्यदेशीयस्येति भावः । किञ्च वक्ष्यमाणयुक्तिभिः "सर्वधनी"त्यादिप्रयोगसाधनेऽप्यसुन्दर इति [1]"प्रत्ययस्थात्कादि"ति सूत्रस्थभाष्यप्रयोगासङ्गतिः । मम तु सर्वधनाद्यर्थं इत्यादिशब्दस्य प्रकारार्थत्वान्न दोषः । कर्मधारयपदं च नञ्समासस्याप्युपलक्षणं ध्वनितं चेदं [2]"रक्षत" इति सूत्र भाष्ये ॥

ततश्चाच वचनादिति । (कै)

"सर्वादेरि"ति वचनसामर्थ्यात् ॥ भाष्ये

कृष्णसर्पो नाम जातिरिति । (भा)

जातिव्यक्त्योरभेदाश्रयेण ॥ तदुक्तम् भाष्ये

पूर्वपदातिशय इति । (भा)

---

१ अ ७ । पा ३ । सू ४४ ॥
२ अ ६ । पा ३ । सू १६१ ॥

---

सर्वशब्दस्य त्वकारान्तैः कर्मधारयोऽपीष्यते तस्माच्च मत्वर्थविवक्षाया‑ 'मत इनिठना' विति ठनं बाधित्वा इनिरेव भवतीति वक्तव्यं, सर्वं धनं

तदर्थातिशये इत्यर्थः। समासार्थस्य लिङ्गसङ्ख्याद्याकाङ्क्षारहितस्य समर्थादिति समर्थः पदविधिरित्युक्तेरिति भावः॥

सुबन्तेन पदेनेति। (कै)

तेन हेतुना लिङ्गसङ्ख्यादिभिः परिसमाप्तपदार्थस्य प्रकर्षादिसम्बन्धसामर्थ्यमिति भावः॥

नान्यथेति। (कै)

केवलप्रातिपदिकोपस्थाप्येनेत्यर्थः॥

प्रतियोगिवस्त्वन्तरापेक्षयेति। (कै)

हेतौ येयम्॥

तद्वतोऽपेक्षणादिति। (कै)

वस्त्राणि सौक्ष्म्यविषयस्पर्धायां तद्वन्तमपेक्षन्त इति भाष्याचार्थः। बहुव्रीह्यातिशायिकयोर्युगपत्प्राप्तिविषये तद्वन्तमपेक्ष्य वस्त्राणां सौक्ष्म्यगुणविषया स्पर्धेति अस्यापि सूक्ष्माणि वस्त्राण्यस्यापि सूक्ष्माणि अस्यास्मादतिशयेन सूक्ष्माणीति विवक्षायां किलातिशायिकबहुव्रीह्योरेकत्र प्रसक्तिर्वाच्या तत्र वस्त्रद्वारा सूक्ष्मशब्दस्य तद्वस्त्रापेक्षत्वादातिशायिकाप्रसक्तिरित्ययुक्तो विप्रतिषेध

---

सर्वधनं तदस्यास्तीति सर्वधनी सर्वबीजी सर्वकेशी, यत्र कर्मधारयो जातिविशेषवचनस्तत्र कर्मधारयन्मत्वर्थीयो भवति कृष्णसर्पवान्वल्मीकः,

इति भावः। एवं च परम्परया औज्ज्वल्यगुणविषयप्रकर्षस्य विशेषणस्यैव सापेक्षत्वमित्युक्तं भवति। वचनप्रामाण्यादातिशायिकस्तत्र भविष्यत्येवेति मन्यमानः शङ्कते। भाष्ये

ननु चेति॥ (भा)

याहि तद्वन्तमिति। (भा)

न सा नियतेति भावः। एकस्वामिकयोरपि स्पर्द्धादर्शनादिति बोध्यम्॥

अतिशयनानीति। (कै)

अन्याभिभवकर्तॄणि प्रकर्षयुक्तानीत्यर्थः॥

अतिशय्यमानानि। (कै)

अभिभूयमानानीत्यर्थः। अतिशेतिरभिभवे॥ भाष्ये

[1]तद्वता च सम्बन्ध इति। (भा)

अनेन हि प्रकृते विशेषणस्य सापेक्षत्वरूपं तरपोऽप्राप्तिबीजं ध्वनितम्॥

---

१ तद्वता चाभिसम्बन्धः। क॥

---

लोहितशालिमान् ग्रामः गौरखरवदरण्यं, गौरमृगवदिति, नहि बहुव्रीहिणा तव्यात्वा तद्वत्त्वं शक्यं प्रतिपादयितुम्॥

अर्थान्तरत्वम् (कै)

दृष्टिरूपत्वम् । क्वचित्त्वर्थत्वमिति पाठस्तत्राप्ययमेवार्थः ॥ भाष्ये

किं तर्हीति । (भा)

एवं च तत्सामर्थ्यात्सापेक्षत्वेऽपि बहुव्रीहितद्धिताविति भावः ॥

कथमिति । (भा)

वस्त्रान्तराणां वस्त्रान्तरैर्युगपत्स्पर्धा तद्वता चाभिसम्बन्ध इति येषां बहुव्रीहितद्धितयोरप्राप्त्युपपादिका युक्तिरुक्ता तयायुक्त्या द्वयोरप्यप्राप्तेः कथमानर्थक्यमिति प्रश्नः । समाधत्ते

यदाह्येतीत्यन्ये । (भा)

[1]यदा ह्यन्तरेण वस्त्राणां वस्त्रैर्युगपत्स्पर्धाम् इति (भा)

पाठः तद्वतोऽभिसम्बन्ध इति च ॥

इष्टौ तु सत्यामिति । (कै)

तस्मादिष्टिर्दुष्टेति भाष्याभिप्राय इति भावः ॥

तर्हीदानीमिति । (कै)

तदेदानीमित्यर्थः ॥ इष्ट्यारम्भे इति यावत् ॥

इदं न भवति । (भा)

---

१ "यदाह्यन्तरेण वस्त्राणां वस्त्रान्तरैर्युगपत्स्पर्धा" इति क पुस्तके ॥

इदं न सिध्यति ॥

**भवति ।** (भा)

सिध्यति ॥ कुतस्तत्राह

**यदेति ।** (भा)

इति भाष्याक्षरार्थः ॥

**कथमन्यपदार्थस्य प्रकर्ष इति ।** (कै)

यतः प्रत्ययस्तदर्थप्रकर्षस्तत्प्रत्ययनिमित्तम् । एवं च सौक्ल्यप्रकर्षे प्रत्यये क्रियमाणेऽप्यन्यपदार्थप्रकर्षाभावात्कथं तत्प्रतिपादकमुदायात् प्रत्ययः । प्रकर्षद्वयप्रतिपादने तु नैकस्य सामर्थ्यम् । न च सौक्ल्यप्रकर्ष एवान्यपदार्थप्रकर्षः । अन्यदीयस्यान्यदीयत्वायोगादिति भावः ॥

**एक एवासाविति ।** (कै)

गुणप्रकर्ष एव द्रव्यप्रकर्ष इत्यर्थः । स च क्वचित्प्रवृत्तिनिमित्तगुणप्रकर्षः । यथा शुक्लतर इत्यादौ क्वचित्तत्सहचरितगुणप्रकर्षः । यथा गोतर इत्यादौ क्वचित्तद्विशेषणघटकगुणप्रकर्षो यथा प्रकृतेनैवान्यस्येति भाष्येणापि पृथग् द्रव्यप्रकर्षाभाव एव प्रतिपाद्यते इति बोध्यम् ॥ भाष्ये

**वस्त्राणि मे स्युरिति ।** (भा)

वस्त्रस्य द्रव्यत्वात्तत्र प्रकर्षाभावेन तरप्न कृतः ॥

**सूक्ष्मतराणीति।** (भा)

सूक्ष्मत्वस्य गुणत्वात्तत्र प्रकर्षसम्भवेन बहुव्रीहेस्तत्पक्षेणाप्यातिशायिकेन परम्परासम्बन्धस्य तस्यैव प्रकर्ष उच्यते इति भावः॥

**तथापि यत्रेति।** (कै)

साक्षात्स्वगतगुणप्रकर्षः स्वसम्बन्धिपदार्थगतगुणप्रकर्षो वा उभयमपि द्रव्यप्रकर्षरूपं भवत्येवेति भावः॥ भाष्ये

**गुणवचनादिति।** (भा)

गुणोपसर्जनगुणिबोधकात्प्रवृत्तिनिमित्तगुणप्रकर्षे तत्सहचरितगुणप्रकर्षे वा प्रत्यय उच्यत इत्यर्थः। गुणग्रहणं धर्ममात्रपरम्॥

**समासोऽपि गुणवचन इति।** (भा)

सूक्ष्मत्वविशिष्टवस्त्रविशिष्टपुरुषवचनत्वादिति भावः॥ अन्यपदार्थे रूढतया गुणवचनत्वं नेत्याशयेन पृच्छति।

**कथमिति॥** (भा)

उत्तरयति।

**अजहत्स्वार्थेति।** (भा)

एवं चावयवार्थोपस्कृतान्यपदार्थस्य समुदायेनोपस्थापनाद् गुणवचनत्वम्। प्रवृत्तिनिमित्तसहचरितगुणप्रकर्ष इव प्रवृत्तिनिमित्तविशेषणप्रकर्षोऽपि तदुत्पत्तिनिमित्तं स च गोतर इत्यादाववाच्य-

गतोऽपि यदि निमित्तं किं वक्तव्यं विशेषणं विशेषणतया वाच्य-
स्येति भावः ॥

अथेति । (भा)

तत्र हि उपसर्जनपदानामर्थाभावेऽपि प्रधानपदेन समुदायेन
वस्तुतस्तादृग्गुणोपलक्षितव्यक्तेरेव बोधो न तु गुणानां वाच्यत्व-
मिति भावः ॥

जहत्स्वार्थायां च न दोष इति । (भा)

अवयवानामर्थाभावेऽपि तद्गुणविशिष्टाया व्यक्तेरानयनादि
यथा वाच्यत्वेऽपि तथा तद्गतप्रकर्षे प्रत्ययः । गोतर इत्यादाववा-
च्यत्वाद् दोहादिप्रकर्ष इवेति भावः ॥

सन्देहः स्यादिति । (कै)

प्रकरणादिना निश्चयसम्भवादिदं चिन्त्यम् । नायं उत्तरपद-
लोपेनेत्याशुरिति । अत्रारुचिबीजं तु "शाकभोजिपार्थिव" इत्या-
दिप्रयोगव्यावृत्तये वार्त्तिकमावश्यकमिति ॥

# चतुष्पादो गर्भिण्या । २ । १ ७१ ॥

भाष्ये

वक्तव्यम् (भा)

इत्यस्य व्याख्येयमित्यर्थः ॥ व्याख्यानप्रकारं दर्शयति ।

चतुष्पाज्जातिरिति वक्तव्यम् । इह मा भूत् । कालाक्षी गर्भिणी । स्वस्तिमती गर्भिणी ॥

चतुष्पादो गर्भिण्या ॥ जातिरिति मण्डूकप्लुत्यानुवर्तते चतुष्पाज्जातिवाचिनः सुबन्ता गर्भिणीशब्देन सह प्राग्वत् । गोगर्भिणी अजगर्भिणी । जातिः किम् । कालाक्षी गर्भिणी । चतुष्पात्किम् । ब्राह्मणी गर्भिणी ।

"चतुष्पादो गर्भिण्या"। 'चतुष्पाज्जातिरिति'। केचिदाहुः। पोटादिसूत्राज्जातिग्रहणमनुवर्त्यमिति । अन्ये त्वाहुः । ये शब्दान्तरनिरपेक्षाश्चतुष्पादानस्य एवान्तरङ्गत्वादृह्यन्ते न तु कालाक्ष्यादयो यौगिकाः

केचिद् (कै)

इत्यादिना ॥

शब्दान्तरेति । (कै)

चतुष्पाद्वचनाच्चतुष्पाद्विषया इत्येव पाठः । जातिरित्यस्य विच्छिन्नत्वादन्तरङ्गबहिरङ्गभावस्य च सर्वैर्दुर्ज्ञेयत्वाद्वचनमेवावश्यक-मिति तत्त्वम् ॥

---

केचिज्जातिग्रहणमनर्थकमित्याहुः । अन्येत्वाहुः । शब्दान्तरसन्निधिनिरपेक्षा ये चतुष्पाज्जातिवचनास्त एवान्तरङ्गत्वाद् गृह्यन्ते न तु कालाख्यादयो यौगिकाः शब्दान्तरसन्निधानाच्चतुष्पाज्जातिविषयाः ॥

---

गर्भिणीशब्दस्य परनिपातार्थं वचनम् । प्रयुदाहरणे तु विशेषणमिति समासे पूर्वनिपातो बोध्यः ॥

---

शब्दान्तरसंनिधानाच्चतुष्पाद्विषया इति, गर्भिणीशब्दस्य परनिपातार्थं वचनम् ॥

# मयूरव्यंसकादयश्च।२।१।७२॥

मयूर इव व्यंसक इति (कै)

---

किमर्थश्चकारः। एवकारार्थः। मयूरव्यंसकादय एव क मा भूत्। परमो मयूरव्यंसक इति।

---

मयूरव्यंसकादयश्च॥ एते समुदाया निपात्यन्ते। चकारोऽवधारणार्थः समासान्तरं व्यावर्तयति। व्यंसको धूर्तः। मयूरश्चासौ व्यंसकश्चेति विग्रहः। व्यंसकशब्दस्य गुणवचनत्वात्पूर्वनिपाते प्राप्ते वचनम्। एवं छात्रव्यंसकादीनां यवनमुण्डपर्यन्तानाम्। अन्ये त्वाहुः। मयूर इव व्यंसकः। छात्र इव व्यंसकः। कम्बोज इव मुण्डः। यवन इव मुण्डः। उपमानसमासोऽयम्। तत्र "उपमानानिसामान्यवचनैरि"त्येव सिद्धे पुनर्विधानं "सत्पुरुषेतुल्यार्थतृतीये"ति

---

"मयूरव्यंसकादयश्च"। 'मयूरव्यंसक इति'। व्यंसको धूर्तः, मयूरश्चासौ व्यंसकश्चेति व्यंसकशब्दस्य गुणवचनत्वात्पूर्वनिपाते प्राप्ते वचनम्। एवं छात्रव्यंसकादीनां कम्बोजमुण्डपर्यन्तानाम्। अन्येत्वाहुः। मयूर इव

केचित्तु विशेषणसमासे गुणवचनत्वाद्व्यंसकस्य पूर्वनिपाते प्राप्ते

---

मयूर इव व्यंसको धूर्तः। छात्र इव व्यंसकः। काम्बोज इव मुण्डः। इत्युपमानसमासापवादोऽयं समासः। प्रतिपदविहितोपमानसमासविषय-पूर्वपदप्रकृतिस्वरबाधनार्थं इत्याहुः॥

---

पूर्वपदप्रकृतिस्वरो मा भूदिति। स ह्युपमानसंशब्दनेन विहिते समासे विधीयते। मयूरव्यंसकः। छात्रव्यंसकः। कम्बोजमुण्डः। यवनमुण्डः। पादगृह्य, हस्तगृह्य, लाङ्गूलगृह्य, पुनर्दाय, एते चत्वारश्च छन्दसि।

यस्माद्धिरण्याः पितरं पादगृह्य। अग्निर्होता हस्तगृह्या निनाय।

पुनर्दाय ब्रह्मजायाम्। "पुनश्चनसौ छन्दसीति" गतिसंज्ञा तु वार्तिक-कारोक्ता न तु सूत्रात्केति गणकारेणेदं पठितम्। एह्रीडादयोऽन्यपदार्थे॥ एह्रीडेति तस्मिन्कर्मणि तदेह्रीडम्। एवमेहि यवम्। एहि वाणिजेति यस्यां क्रियायां सा एहिवाणिजा। एवमपेहिवाणिजा। प्रेहिवाणिजा। एहि

---

व्यंसकश्छात्र इव व्यंसकः कम्बोज इव मुण्डः, यवन इव मुण्डः, उपमान-समासोऽयम्, 'उपमानानि सामान्यवचनै'रित्येव सिद्धे पुनर्विधानं "तत्पुरुषे तुल्यार्थतृतीये"ति पूर्वपदप्रकृतिस्वरो मा भूदिति, स ह्युपमानसंशब्दनेन विहिते समासे विधीयत इति। 'पुनर्दायेति' 'पुनश्चनसौ छन्दसी'ति गति-संज्ञा। 'वार्तिककारोयेति'। गणकारेणेदं पठितम्, एहि इडेति यस्मिन्-

दृदमित्याहुः ॥ तन्न । [1]"उपमानानीति" सूत्रस्थभाष्यकैयटरीत्या तस्य [2]येननाप्राप्तिन्यायेन विशेषणसमासबाधकत्वात् ॥

---

१ अ २ । पा १ । सू ५५ ॥

२ येन नाप्राप्ते यो विधिरारभ्यते स तस्य बाधको भवति । परिभाषेन्दुशे ॥ ५८ ॥

---

स्वागतमिति यस्यां क्रियायां सा एहिस्वागता । ऊह वितर्के, लोण्मध्यमैकवचनम् । प्रोह कटमिति यस्यां सा प्रोहकटटा । निपातनात्पररूपमैपदम् । प्रोहकटा । प्रोहकर्दमा, उद्धरचूडा । आहरवसना । आहरवनिता । छन्तविचक्षणा । छती छेदने । लोट् । सेर्हिः मुचादित्वान्नुम् । छन्त विचक्षण इति यस्यां क्रियायां सेत्यर्थः । गणरत्ने तु छन्धि विचक्षणेति पाठः । तत्र छती वेष्टन इति रुधादिर्बोध्यः । उद्धर कोष्ठात् उत्सृज देहीति यस्यां क्रियायां सा उद्धरोत्सृजा । आख्यातमाख्यातेनेति सिद्धे असातत्यार्थं वचनम् । एवमुद्धमविधमा । उत्पचनिपचा । उत्पतनिपता । इहैषां समासानामन्यपदार्थे स्त्रीलिङ्गत्वाट्टाप् । एवमग्रेऽपि । उदक् च

---

कर्मणि तदेहीडम्, एवमेहियवम्, एहि वाणिजेति यस्यां क्रियायां सा एहिवाणिजा एवमपेहिवाणिजा प्रेहिवाणिजा, एहिस्वागतमिति यस्यां क्रियायां सा एहिस्वागता, इह वितर्का, लोण्मध्यमैकवचनं, प्रोह कटमिति यस्यां सा प्रोहकटटा, एवं प्रोहकर्दमादय आहरवसनान्ताः । छती छेदने, तदेव वचनं, मुचादित्वान्नुम् , छन्त विचक्षणेति यस्यां क्रियायां सा

अवाक् च उच्चावचम् । उच्चैश्च नीचैश्चोच्चनीचम् । आचितं चापेचितं च आचोपचम्, आचपचम्, निश्चितं च प्रचितं च निश्चप्रचम् । एते सर्वे निपात्यन्ते । न विद्यते किं चन यस्यासावकिंचनः । सकिंचनः । स्नात्वाकालकः । इह समासान्तोदात्तत्वं ल्यबभावश्च निपात्यते समानकर्तृकत्वं तु अन्तर्भूतक्रियापेक्षं बोध्यम् । स्नात्वाकालकः संपन्न इत्यर्थावगमात् । पीत्वास्थिरकः भुक्त्वासुहितः । प्रोष्य पायान् उत्पत्य या कषा उत्पतनं कृत्वा या पाण्डुर्भवति सोच्यते हस्तिज्वरः पाकलः । तद्विशेषस्तु कूटपाकलः "कलभं कठोर इव कूटपाकल" इति भवभूतिप्रयोगात् हस्तिशास्त्रे तथादर्शनाच्चेत्यन्ये । निपत्यरोहिणी निषद्यश्यामा अपेहिप्रघसा । जहिकर्मणा बहुलमाभीक्ष्ण्ये कर्तारं चाभिदधाति ॥ जहीति लोण्मध्यमैकवचनान्तम् । तत्कर्मणा बहुलं समस्यते आभीक्ष्ण्ये गम्यमाने समासेन चेत्कर्ताभिधीयते । जहिजोडमित्याभीक्ष्ण्येन य आह स जहिजोडः । जहिस्तम्बः । उज्जहिस्तम्बः । आख्यातमाख्यातेन क्रियासातत्ये ॥ अश्नीतपिबतेत्येवं यत्र सततमभिधीयते सा ऽश्नीतपिबता । एवं पचतभृज्जता । खादतमोदता ।

---

कृन्तविचक्षणा, उद्धर उत्सृजेति यस्यां सोद्धरोत्सृजा, आख्यातमाख्यातेनेति सिद्धे ऽसातत्यार्थं वचनम्, एवमुद्धमविधमा उत्पचविपचा, उत्पतनिपाता, उदक् च अवाक् च उच्चावचम्, उच्चैश्च नीचैश्च उच्चनीचम्, आचितं चोपचितं च आचोपचं, निश्चितं च प्रचितं च निश्चप्रचं, सर्वएते निपात्यन्ते, न किंचन विद्यते यस्य सो ऽकिंचनः, स्नात्वाकालकादिषु समासान्तोदात्तत्वं ल्यबभावश्च निपातनात् । प्रतीयमानक्रियापेक्षं च समानक-

खादतवमता । आहरनिचया । आहरनिष्कषा । उत्पचनिपचा । भिन्धि-लवणा । भिन्धि लवणमिति यस्यामभिधीयते सा क्रिया तथा । एवं पचलवणा । आकृतिगणोऽयम् । तेनान्येऽपि ज्ञेयाः । तत्र केचिद्गणा-रत्नकृता संगृहीताः । तद्यथा नास्ति कुतोऽपि भयं यस्य सः अकुतोभयः । कान्दिशं गच्छामीति य आह स कान्दिशीकः । गणपाठसामर्थ्यादीकण् द्वितीयाया अलुक् । कान्दिशीको भयद्रुत इत्यमरः । अहोपुरुषोऽहमिति यो मन्यते तस्य भाव आहोपुरुषिका । "मनोज्ञादित्वाद्वुञ् । अहं श्रेष्ठोऽहं श्रेष्ठ इति यस्यां साहमहमिका । या इच्छा अभिप्राय इति यदृच्छा । एहिरेयाहिरा । एहि रे याहि रे इति यस्यां सा तथेत्यर्थः । गणपाठा-दात्वम् ।

एहिरां याहिरे नीता येन निष्प्रभा अपि ।
तत्त्वमं दग्धुं सेवेथा गोविन्दमकुतोभयम् ॥

उन्मृड्ढि अवमृड्ढीति यस्यां सा उन्मृजावमृजा । अत एव निपातनादनयोरिहैव साधुत्वम् । अन्यद् द्रव्यं द्रव्यान्तरम् । अन्तरशब्दो

---

ऽकालं कालाकालकः संपन्न इति । 'जहि कर्मणेति' । जहीति लोण्मध्य-मैकवचनं, तदेतत्कर्मणा बहुलं समस्यते आभीक्ष्ण्ये गम्यमाने समासेन चेत्कर्ता विधीयते, जहि जोडमित्याभीक्ष्ण्येन य आह स जहिजोडः, अश्नीत पिबतेत्येवं यत्र सततमभिधीयते सा ऽश्नीतपिबता, एवं पचत-भृज्जता, भ्रस्ज पाके । भिन्धि लवणमिति यस्यामभिधीयते सा भिन्धिल-वणा, एवं पचलवणा । 'अविहितलक्षणस्तत्पुरुष इति' । यस्य तत्पुरुषस्य

इति शिवभट्टसुतसतीगर्भजनागोजीभट्ट-
कृते भाष्यप्रदीपोद्द्योते द्वितीयाध्या-
यस्य प्रथमे पादे तृतीयमाह्निकम् ॥
पादश्च समाप्तः ॥ १ ॥

---

भिन्नवाची। भिन्नस्याभेदेन संबद्धेन पूर्वपदार्थे विशेषणम्। पूर्वपदजन्यबोध-प्रकाराश्रयप्रतियोगित्वं भेदे व्युत्पत्तिसिद्धम्। अवश्यकार्यम्। तदेव तन्मात्रम्। मात्रं कार्त्स्न्येऽवधारणे इत्यादि ॥

---

लक्षणं न कृतं प्राप्तप्रयोगस्य भवति स मयूरव्यंसकादेराकृतिगणत्वादत्रैव द्रष्टव्य इत्यर्थः ॥

## महाभाष्यप्रदीपोद्योतः ।



पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ॥



कृते ऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ॥



# अर्धं नपुंसकम् ।२।२।२॥



सूत्रे "नपुंसकम्" इत्युक्तेरिहकस्मादिति प्रश्नोऽनुपपन्न इत्याशङ्क्याह

**नपुंसकस्येति ॥ (कै)**

---

अर्धं नपुंसकम् ॥ नित्यक्लीबो ऽर्धशब्द एकद्रव्ये विद्यमानेनावयविवाचिना सह प्राग्वत् । भित्तं शकलखण्डे वा पुंस्यर्धोऽर्धं समेंऽशके इत्यमरः ॥ इह काकाक्षिन्यायेन वा पुंसीति पूर्वोत्तराभ्यां सम्बध्यते । तत्र शकलखण्डे इति नपुंसकत्वस्य रूपभेदाद्वितीये पुंस्यविकल्पादस्त्रियामिति फलितम् ।

---

“अर्द्धं नपुंसकम्” ॥ ‘अविष्टलिङ्ग इति’ । नियतलिङ्ग इत्यर्थः । ‘तस्येदं ग्रहणमिति’ । तत्रैवार्थे नपुंसकत्वस्याव्यभिचाराद् अवयववाचो ह्यभिधेयवशेन त्रिलिङ्गः, अपूपार्द्धं मया भक्षितं दन्तार्द्धमास्यात्पतितं ग्रामार्द्धो नगरार्द्धः, सर्पिषार्द्धया व्यनक्तीति ‘तस्यार्द्धाः शल्वार्द्धाः परिश्रित्य

सूत्रे नपुंसकग्रहणं किमर्धशब्दस्यार्थविशेषप्रतिपत्तये उत समासगतरूपविशेषप्रतिपत्तये । नाद्य इत्याह

**अव्यवस्थितत्वादिति । (कै)**

नपुंसकत्वस्यापूपार्धमित्यादावन्यार्थेऽपि दर्शनादिति भावः ॥ नान्त्य इत्याह

**कृते चेति । (कै)**

तस्य नपुंसकत्वलक्षणविशेषानवसायेन तल्लक्षरूपविशेषाभावादिति भावः ॥ अधिकरणस्याकाशस्य निर्ज्ञातत्वात्प्रश्नानुपपत्तेराह

**नपुंसकत्वेति । (कै)**

कस्मिन्नर्थे पुंस्त्ववाचक इति भाष्याक्षरार्थः ॥ पुल्लिङ्ग एवेति भ्रमं वारयति ।

**नियमेनेति ॥ (कै)**

**नपुंसकग्रहणं ज्ञापकमिति । (कै)**

---

न च स्त्रीलिङ्गरूपमेव किन्न स्यादिति वाच्यम् । भिन्नलिङ्गानां न द्वन्द्व इति तेन परिभाषितत्वात् । एकत्वस्यास्त्रीति निर्देशेनैव निर्णयात् । अर्ध इत्यत्र तु रूपभेदात्पुंस्त्वावगतौ सत्यां वा पुंसीति तद्विकल्पेनाविशेषात्स्त्रीनपुंसके लभ्येते । तथा चार्धशब्दस्त्रिष्विति फलितोऽर्थः । समेंऽशके तु अर्धं नित्य

मध्ये निविदं दधाती'ति । भाष्ये त्ववयववाची पुल्लिङ्ग इत्युपलक्षणं, क्वचित् समप्रविभागे स्त्रीलिङ्गता दृश्यते 'एकान्तृचेर्द्धा युग्मास्वि'ति, युग्मासु ऋच अर्द्धाः शस्त्वा निविदं दध्यादित्यर्थः, तस्यार्षत्वेन निर्वाहः । अर्द्धमिति नपुं
८६ निर्देशः शब्दरूपापेक्षयापि सम्भाव्येत, यथा 'समज्ञातिधनाख्याय म

निर्देशेन नपुंसकत्वमात्रे लब्धेऽपि नित्यनपुंसकत्वलाभाय तस्यावश्यकत्वम् अन्यथा अपूपार्धं दन्तार्धमित्यादावसमांशवाचिन्यपि एकदेशिसमासः स्यादिति चिन्त्यमेतत्। परे तु समप्रविभागे नपुंसकलिङ्ग इत्यस्य नपुंसकलिङ्गोऽपीत्यर्थः। अत एव [1]"ए ओङ्" [2]"एच" इति अनयोः सूत्रयोर्भाष्ये एचो ह्रस्वविधानेऽर्धैकारार्धौकारौ प्राप्नुत इति शङ्कायां[3] नैव लोके नापि वेदेऽर्ध एकारोऽर्ध

१ ए ओङ्। ३। ऐ औच्। ४॥

२ एच इग् ह्रस्वादेशे। १। १। ४८॥

३ ननु चैङः सस्थानतरावर्ध एकारार्ध ओकारस्य। न तौ स्तः। यदि हि तौ स्यातां तावेवायमुपदिशेत्। ननु च भो श्छन्दोगानां सात्यमुग्रिराणायनीया अर्धमेकारमर्धमोकारं चाधीयते। सुजाते ए अश्व सूनृते। अध्वर्यो ओ अद्रिभिः सुतम्। शुक्रं ते ए अन्यद् यजतम् ते ए अन्यद् इति। पार्षदकृतिरेषा तत्र भवतां नैव हि। लोके नान्यस्मिन् वेदे अर्ध एकारो ऽर्ध ओकारो वास्ति॥ ३। ४। १। १।

नपुंसकमित्यर्थः। अर्धं पिप्पल्याः अर्धपिप्पली। एकविभक्तावषष्ठ्यन्तवचनमिति। वा। पिप्पलीशब्दस्यानुपसर्जनत्वान्न ह्रस्वः। एकाधिकरणे किम्। अर्धं पिप्पलीनाम्। कथं तर्ह्यर्धपिप्पल इति। अर्धानि पिप्पलीनामिति विग्रहे मा भूत्। खण्डसमुच्चये तु भविष्यति। अर्धपिप्पली च अर्धपिप्पली

'बन्धुनि बहुव्रीहावि'ति तस्मान्नपुंसकमित्युक्तम्। 'अर्द्धपिप्पलीति'। पिप्पलीशब्दस्यैकविभक्ति चेत्युपसर्जनसंज्ञा न भवति एकविभक्तावषष्ठ्यन्तमिति वचनात्। 'अर्द्धं पिप्पलीनामिति'। न तर्हीदानीमिदं भवति अर्द्धानि पिप्पलीनामर्द्धपिप्पल्य इति, नैतदस्मिन्विग्रहे भवति खण्डसमुदाये

ओकारो वास्तीत्युत्तरपरभाष्ये समविभागविषयेऽपि पुल्लिङ्गः प्रयुक्तः । अवयववाची तु पुल्लिङ्ग एव ॥

## अपूपार्धमिति । (कै)

समप्रविभाग एव अन्यत्रापूपार्धं इत्येव १"परवल्लिङ्गमिति" सूत्रे भाष्येऽप्येतत्स्पष्टमित्युत्तरसूत्रे स्फुटीकरिष्यते । अन्यतरस्यां ग्रहणापकर्षेण योगविभागेन वा एकदेशिसमासविषये षष्ठीसमासः सूत्रकृतोऽपीष्ट एव । एवं चारम्भप्रत्याख्यानयोः समफलता । नपुंसकग्रहणे तु सूत्रेषु निर्देशो लिङ्गाविवक्षायां ज्ञापकमित्याहुः ॥

भाष्ये

## अर्धपिप्पलीनामिति । (भा)

दशानां पिप्पलीनामर्धमित्यर्थः । न च समासे एकत्वसङ्ख्यायाम् औत्सर्गिकत्वात्कथमत्र समासापादनम् एकत्वस्यापि तत्राभानाच्छुद्ध-

१ अ २ । पा ४ । सू २६ ।

चेत्यादि विग्रहात् । एकदेशिनेति किम् । अर्धं पशोर्देवदत्तस्य । देवदत्तोऽत्र स्वामी नत्ववयवीति न तेन समासः । पशुना तु स्यादेव । अर्धपशुर्देवदत्तस्येति । देवदत्तस्वामिकं पशोरर्धमित्यर्थः । नपुंसकं किम् । ग्रामार्धो नगरार्धः । अर्धमिति निर्देशादेव सिद्धे नपुंसकग्रहणं सूत्रे

भवति अर्द्धपिप्पली चार्द्धपिप्पली चार्द्धपिप्पल्य इति । 'देवदत्तशब्देन समासो न भवतीति' । देवदत्तोऽत्र स्वामी न त्वेकदेशी यस्त्वेकदेशी पशुस्तेन भवत्येव समासः । अर्द्धपशुर्देवदत्तस्येति, देवदत्तस्वामिकं पशोरर्द्धमित्यर्थः, तत्र समुदायेन सम्बन्धान्नास्ति सापेक्षत्वम् । अयं योगः शक्यो-

पिप्पलीत्वेनानेकपिप्पलीबोधसम्भव इति शङ्काशयः । इतरोऽर्ध-पदार्थस्य तत्र पञ्चपिप्पलीरूपत्वेन समासे बहुवचनं मत्वा पृच्छति

**न वा भवतीति ॥** (भा)

अर्थान्तरे भवति न त्वेतदर्थे इत्याह

**भवति यदा** (भा)

इत्यादिना ॥

**अर्थश्चाचेति ।** (कै)

दशानां पिप्पलीनाम् अर्धं पञ्च इत्यचार्थः । पिप्पलीनां प्रत्येकम् अर्धानि बहूनीति तत्रार्थः ॥ भाष्ये

**तदा न भवितव्यम्** (भा)

इत्यर्थमभिप्रेत्याह

---

लिङ्गनिर्देशो न विवक्षित इति ज्ञापयितुं तेन तस्येदमिति लिङ्गत्रयेऽपि भवति । एतत्सूत्रं परवल्लिङ्गमित्यत्र भाष्ये प्रत्याख्यातम् । तथा हि । अर्धपिप्पलीति कर्मधारयेण सिद्धम् । समुदाये दृष्टाः शब्दा अवयवेऽपि वर्तन्ते इति न्यायात् । समप्रविभागादन्यत्र हि तत्राप्येषैव गतिः । अर्धा-

---

ऽवक्तुं, कथमर्द्धपिप्पली, सामानाधिकरण्यो भविष्यति । अर्द्धं चासौ पिप्पली चेति । ननु च यद्यर्द्धं न पिप्पली अथ पिप्पली नार्द्धम् अर्द्धं पिप्पली चेति विप्रतिषिद्धं, नास्ति विप्रतिषेधः, समुदाये हि दृष्टाः शब्दा अवयवेष्वपि वर्तन्ते । किञ्च समप्रविभागादन्यत्रार्द्धचन्द्रादावयमेव गतिप्रकारः समप्र-

**अर्धपिप्पलीत्येव स्यादिति।** (कै)

यद्यप्यर्धपदार्थो बहवः तथाप्यर्धशब्देनैकत्वावच्छिन्नसमुदायस्यैव भानादिति भावः ॥

**तदा कस्मान्नेति।** (भा)

समासः कुतो न इत्यर्थः ॥

**तिरोहित भेदस्येति।** (कै)

तिरोहितावयवभेदस्येत्यर्थः। समूहः समूहिभ्यो भिन्नोऽपीति भावः ॥

---

श्चारः। अर्धक्षारः। अर्धजरतीयम्। अर्धवैशसम्। अर्धोक्तम्। अर्धविलोकितमित्यादिदर्शनात्। न च समप्रविभागे षष्ठीसमासं बाधितुमिदं सूत्रमिति वाच्यम्। षष्ठीसमासस्यापीष्टत्वादिति। तथा च कालिदासः प्रायुङ्क्त। प्रेम्णा शरीरार्धहरां हरस्येति ॥

---

विभागेऽपि तथास्तु, इदं तर्हि प्रयोजनं समप्रविभागे षष्ठीसमासो माभूदिति, इष्यते षष्ठीसमासेऽपि, तथा च भगवान्पिङ्गलनागः प्रयुङ्क्ते, स्वरार्द्धं चार्यार्द्धमिति। एवं तर्हि गौणत्वात्सामानाधिकरण्यस्य विशेषणसमासो न किल स्यादित्ययमारम्भः ॥

# द्वितीयतृतीयचतुर्थतुर्याण्यन्यतर-स्याम् । २ । २ । ३ ॥

नान्तरीयकतयेति । (कै)

तत्सिद्ध्यनुगुणतया ज्ञापकत्वमस्येति भावः ॥

स्मरणाय पुनर्ज्ञाप्यत इति । (कै)

वारद्वयज्ञापितं दृढसंस्कारजननद्वारा शीघ्रं स्मरणाय इत्यर्थः। विनिगमनाविरहादिदमपि ज्ञापकमिति भावः ॥ सामान्येऽवयवाभावादाह

सामान्याश्रयसमूहेति । (कै)

[1]"षष्ठी" इत्यादिना सामान्यशास्त्रेण विहितेत्यर्थः ॥

१ अ २ । पा २ । सू ८ ॥

द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम् ॥ एतानि एकदेशिना सह वा प्राग्वत्समस्यन्ते एकं चेद् द्रव्यम् । द्वितीयं भिक्षायाः द्वितीयभिक्षा । भिक्षाद्वितीयम् । तृतीयभिक्षा । भिक्षातृतीयमित्यादि । एकदेशिना किम् । द्वितीयं भिक्षाया भिक्षुकस्य । एकाधिकरणे किम् । द्वितीयं भिक्षा-

"द्वितीयतृतीयचतुर्थतुर्याण्यन्यतरस्याम्" ॥ 'अन्यतरस्यां ग्रहणात्षष्ठीसमासोऽपि भवतीति'। ननु च पूरणप्रत्ययान्ता एवैते द्वितीयादयस्तत्र पूरणगुणसुहितेत्यादिना प्रतिषेधेन भवितव्यं, तदापि 'पूरणाद्भागे तीयादनि'ति

प्रतिनियत इति । (कै)

"अर्धम्" इत्यादि शास्त्रेण विहितः ॥ भाष्ये

अवयवविधाविति । (भा)

तद्विषये नोत्सर्गप्रवृत्तिरित्यर्थः ॥

न्यायादिति । (कै)

येन नाप्राप्तिन्यायादित्यर्थः ॥

विरोधाद् (कै)

इत्यादि । तदुभयसत्त्वे हि बाध्यबाधकभावः । प्रकृते चोभयस्याभावात् तदभाव इति वार्त्तिकमतेनेदं प्रयोजनमुक्तमित्यन्वयः ॥

भाष्यकारस्त्विति । (कै)

"सत्यपि सम्भवे बाधनं भवति" इति तदुक्तेरिति भावः ॥ नन्वीदृशं दधिदानं तक्रदानस्य निवर्त्तकं दृष्टं तत्र लोकफलतास्ति न च सा प्रकृते इत्यत आह

---

णाम् । स्यादेतत् । पूर्वसूत्रवदिदमपि प्रत्याख्यायताम् । तथा हि । समुदायशब्दस्यावयवे वृत्तौ कर्मधारयेण द्वितीयाभिक्षेत्यादि सिद्धम् । भिक्षाद्वितीयमित्यादि तु षष्ठीसमासेन सिद्धम् । मैवम् । पूरणेति षष्ठीसमासनिषेधात् । सिद्धान्ते तस्मिन् सूत्रेऽन्यतरस्यां ग्रहणसामर्थ्यात्पक्षे षष्ठी-

---

स्वार्थिकोऽन्प्रत्ययः क्रियते तदापि पूरणगुणसुहितार्थेत्यर्थशब्दस्य प्रत्येकमभिसम्बन्धात्पूरणार्थग्रहणं न तु तदधिकारविहितप्रत्ययग्रहणमिति भवितव्यमेव प्रतिषेधेन तत्कथं सोऽपि भवतीत्याह । 'पूरणगुणेत्यादि' ।

**अर्थाभिधाने इति ॥** (कै)

**प्रतिपत्तिः।** (कै)

प्राप्तिः। वस्तुतो भाष्यनये विरोधाभाव इवैकफलत्वाभावेऽपि बाध इति निरूपितम् आकडारसूत्रे भाष्ये ॥

**शबादेशाः श्यन्नादय इति।** (भा)

तत्र श्नमादेशत्वाद्रूपं निवर्त्तयति मित्वादन्त्यादचः परो रमागमवदिति भावः ॥ भाष्ये

**यत्रोत्सर्गापवादमिति।** (भा)

यत्रोत्सर्गापवादं महाविभाषाविकल्पितं तत्रेति पाठान्तरम्। "अस्वाङ्ग पूर्वपदाद्वा" इत्यतो ङीप् ङीष्विधौ वा इत्यनुवृत्तिरिति पाठः। उत्सर्गापवादयोरुभयोरपि वैकल्पिकत्वं दर्शयितुं ङीष् ङीब् विधौ इत्युक्तम् ॥

**वार्त्तिककारस्येति।** (कै)

यदि त्वसंयोगोपधाद् इत्याद्यनुवृत्तौ प्रतिपत्तिगौरवमिति वार्त्तिकाशय इति भावः ॥

---

समासो लभ्यते। वाक्यस्य महाविभाषयैव सिद्धेः। नन्वेतत्सूत्रं विनापि पूरणाद्भाग इति स्वार्थेऽन्प्रत्ययं कृत्वा तदन्तेन षष्ठीसमासं करिष्याम इति चेन्न। तत्रापि प्रतिषेधसाम्यात्। पूरणेत्यत्र हि अर्थग्रहणं न तु पूरणाधिकारविहितप्रत्ययग्रहणम्। अर्थशब्दस्य प्रत्येकमभिसम्बन्धात्। स्वार्थि-

---

वाक्यस्य महाविभाषयैव सिद्धत्वात् षष्ठीसमासप्राप्त्यर्थमेवान्यतरस्यां ग्रहणमिति भावः। पूर्वं तु षष्ठीसमासापवादो योग इत्याद्यप्राप्त्यभिप्रायेणोक्तं,

## ङीष एव त्वनुदात्तविधाने इति । (कै)

ङीबादेशद्वारेत्यर्थः ॥

## नित्ये स्वरमात्रविधाने (कै)

इत्यस्यापि स्वरमात्र फलके ङीबादेशविधाने इत्यर्थः । नित्यत्वं वाग्रहणाननुवृत्तेः । तदनुवृत्तौ हि पक्षे ङीष् श्रवणं स्यादेवेति भावः ॥ भाष्ये

## इदं तर्हि प्रयोजनम् अर्धपिप्पली (भा)

इत्यादि "परवल्लिङ्गम्" इति सूत्रस्थभाष्येणेदं विरुध्यते । तत्र हि एकदेशिसमासो नारभ्यते कथमर्धपिप्पलीति समानाधिकरणो भविष्यति । अर्धं चासौ पिप्पली चेति । न चैकदेशिसमासारम्भे षष्ठी समासस्य तेन बाधो भवति । अन्यथा षष्ठीसमासोऽपि प्राप्नोति । इष्यते षष्ठीसमासोऽपि । अपूपार्धं मया भक्षितं लब्धं मया ग्रामार्धम् इति । एवं पिप्पल्यर्धम् इत्यपि भवितव्यमित्युक्तं तस्माद् यथाश्रुतसूत्रमते एकदेश्युक्तिरियम् ॥

काम प्रकृत्यर्थेनार्थवन्त इति अनन्तस्यापि पूर्ण्यार्थतास्त्येवेति भाष्ये स्थितम् । अत एव "तान्युञ्छषष्ठाङ्कितसैकतानी"त्यत्र ( रघुवंशपञ्चमसर्गस्य ८ श्लोकः ) समासः प्रामादिक इत्याहुः । वस्तुतस्तु परवल्लिङ्गमिति सूत्रे तत्पुरुषग्रहणं द्विगुप्राप्तेत्यादिवार्त्तिकं पूर्वापरेत्यादिविवृत्ती च भाष्ये प्रत्याख्याता । तथा च भिक्षाद्वितीयादिसिद्धये संज्ञाप्रमाण-

यदा सत्यस्मिन्योगे षष्ठीसमासप्रतिषेधस्यास्य च षष्ठीसमासबोधकत्वमविशिष्टमिति मत्वा तथोक्तम् । अयमपि योगः शक्यो ऽवक्तुं, कथं, समुदायावयवयोरौपचारिके सामानाधिकरण्ये सति द्वितीयभिक्षादिसिद्धं

उन्मत्तगङ्गम् अव्ययीभावेनेति । (भा)

यद्यपि वाक्येन संज्ञानवगमात् सोऽव्ययीभावो नित्यसमास-सदृशः । तद्वत् समासान्यूनार्थकवाक्याभावात् तथापि वापदं तत्र सम्बध्यत एव । अत एव वाक्यं भवत्येव । अत एव "संज्ञायामि"ति समासविषयेऽपि वाप्यामश्वो वाप्यश्व इति वाक्यं भाष्याद्युक्तं संगच्छत इति भावः ॥

पूरणाधिकारेति । (कै)

पूरणशब्दस्य स्वरितत्वादित्यभिमानः ॥ पर्य्यवसन्नशब्दं व्याचष्टे

अनाव्यवहितमिति । (कै)

स्वरभेदप्राप्तमिति यावत् ॥

न तु तदधिकारेति । (कै)

एवं सूत्रे विनिगमनाविरहाद् भाष्यप्रमाण्याच्चान् प्रत्ययान्तानां केवलानां च द्वितीयादीनां ग्रहणं भिन्नासम्बन्धिद्वित्वसंख्यापूरण-मित्यर्थः ॥ भाष्ये

एवं तर्हीति । (भा)

अन्यतरस्यामित्येतत् सामर्थ्यात् पूरणेति प्रतिषेधो नेति भावः ॥

---

त्वादिनिर्देशानां सामान्यापेक्षत्वज्ञापकताश्रयणीया पूरणेत्यादिनिषेधो ऽनित्य इति । एवञ्चोक्तसमस्तेत्यपि साध्विति दिक् । तुरीयस्यापीष्यत इति वृत्ति-काराः । एतच्च भाष्यादौ नास्ति ॥

मुख्यार्थवृत्तौ षष्ठीसमासे तु भिक्षाद्वितीयमित्यादि भविष्यतीति, नैतत्सु-वचं, अनेनैव खल्वन्यतरस्यां ग्रहणेन षष्ठीसमासः प्राप्यते कथमस्मि-न्योगेऽसति भविष्यति ॥

# प्राप्तापन्ने च द्वितीयया। २। २। ४॥

अयमप्युच्यते (भा)

इत्यादि। उभयोरपि प्राप्तापन्नग्रहणेन विशेषविहितत्वादित्यर्थः॥ "द्वितीयया" इत्यत्र प्रश्लेषे उद्देश्यासन्निधानं चकारेण व्यवधानं चेति भावेनाह

---

प्राप्तापन्ने च द्वितीयया॥ एतौ द्वितीयान्तेन सह प्राग्वत्। पक्षे द्वितीयाश्रितेतिसमासः। प्राप्तो जीविकां प्राप्तजीविकः। जीविकाप्राप्त इति वा। आपन्नजीविकः। जीविकापन्नः। यद्यपि प्राप्ता जीविका येनेति कृत्वा कर्मणि क्तान्तेन बहुव्रीहौ प्राप्तजीविक इत्यादि सिध्यति। तथापि समासान्तोदात्तार्थं वचनं प्राप्तसुख इत्याद्यर्थञ्च। इह हि बहुव्रीहौ जातिकालसुखादिभ्य इति निष्ठायाः परनिपातः स्यात्। लिङ्गविशिष्टपरिभाषया

---

"प्राप्तापन्ने च द्वितीयया"॥ 'प्राप्तजीविक इति'। एकविभक्तीत्युपसर्जनत्वाद्ध्रस्वत्वम्। प्राप्ता जीविका येनेति कर्मणि क्तान्तेन बहुव्रीहावप्येतत्सिद्धं, समासान्तोदात्तत्वार्थं तु वचनम्। इह प्राप्तसुखः प्राप्तदुःख इत्यादिषु जातिकालसुखादिभ्य इति प्राप्तापन्नयोः परनिपातप्रसङ्गश्च। इह लिङ्गविशिष्टपरिभाषया प्राप्ताशब्दस्याप्ययं समासो भवति, प्राप्ता जीविकां

**सौत्रत्वाच्चेति ॥** (कै)

**सूत्रारम्भ इति ॥** (कै)

"द्वितीयाश्रित" इत्येव सिद्धे एतत् सामर्थ्यादिति भावः ॥

**लिङ्गविशिष्टेति ।** (कै)

एकादेशस्य पूर्वान्तत्वादित्यपि बोध्यम् ॥

---

प्राप्तशब्दस्याप्ययं समासः । प्राप्ता जीविका प्राप्तजीविकेति । नन्वेकविभक्तीत्युपसर्जनतया जीविकाशब्दस्य ह्रस्वोऽस्तु नाम । प्राप्ताशब्दस्य तु कुतः स । अत्र भाष्यम् । अचेति पूर्वपदस्याकारोऽपि सूत्रेऽस्मिन् विधीयते । चकारेण समुच्चयार्थेनाकारप्रश्लेषस्यानुमानादिति प्राप्तापन्ने समस्येते । अ च अत्वं च भवति प्राप्तापन्नयोः । सौत्रत्वाच्च प्रकृतिभावो नेति भाव इति प्राञ्चः । वस्तुतस्तु द्वितीयेत्यस्यानन्तरमकारप्रश्लेषो बोध्यः । एवं हि प्रकृतिभावप्रसङ्ग एव नास्तीति बोध्यम् ॥

---

प्राप्तजीविका इति, पुंवद्भावो वक्तव्यः । भाष्ये त्वकारः पूर्वपदस्य विधीयत इत्युक्तं, चकारेण समुच्चयार्थेनाकारप्रश्लेषोऽनुमीयते सौत्रत्वाच्च निर्देशस्य प्रकृतिभावाभावः, प्राप्तापन्ने द्वितीयान्तेन स समस्येते अ च अत्वं च भवति प्राप्तापन्नयोरित्यर्थः ॥

# कालाः परिमाणिना । २ । २ । ५ ॥

तत्पुरुषे प्राय उत्तरपदार्थप्राधान्यात् प्रश्नानुपपत्तिमाशङ्क्याह

इहेति ॥ (कै)

प्राधान्यमिति । (कै)

एवं च समानार्थत्वभङ्ग इति भावः ॥ ननु चित्रगुरित्यादिवत् समासे उत्तरपदार्थप्राधान्यम् एकार्थीभावकृतं स्यात् तत्राह

अन्योत्तरेति । (कै)

तद्वैधर्म्यं च भाष्योक्तं किं च वाक्यविपरीतविशेषणविशेष्यभावो नैकार्थीभावः साध्यः । अत एव तस्य एकार्थीभावकृतविशेषेषु भाष्ये गणनाभावः ॥

किं प्रधानोऽयं समास इति । (भा)

---

कालाः परिमाणिना ॥ परिमीयते परिच्छिद्यते येन तत्परिमाणं तदस्यास्तीति परिमाणी । परिच्छेद्यवाचिना सुबन्तेन सह कालाः समस्यन्ते स तत्पुरुषः । मासो जातस्य यस्य स मासजातः । ननु जातो देवदत्तः तस्य च दिष्ट्यादिपरिच्छेदकं न तु कालः । तस्य क्रियामात्रपरिच्छेदकत्वादिति

---

"कालाः परिमाणिना" । 'सामर्थ्यात्परिमाणवचना इति' । परिमाणमपेक्ष्य परिमाणी भवति नान्यथेत्येतत्सामर्थ्यं, तत्र च यद्यपि कालः प्रस्थादिवत्सर्वतो मानं न भवति तथापि परिच्छेदहेतुत्वात्परिमाणमित्यु-

समासपदं विग्रहपरमपि उत्तरपदार्थप्रधान इत्युत्तरमप्युभय-साधारणम्। न च विग्रहेऽपि जातस्य प्राधान्ये जातस्य मास इति षष्ठ्यनुपपत्तिः। विशेषणादेव षष्ठीविधानादिति वाच्यम्। वृत्ति-विग्रहयोः समानार्थत्वानुरोधेन तस्य वाक्यस्य वृत्त्यर्थबोधकत्वविव-क्षायां विशेष्यविशेषणभाववैपरीत्येऽपि पूर्वजातसंस्काराानिवृत्तेः। अन्यथा समासे जातप्राधान्येन विशेषणविभक्तिषष्ठ्यापादनस्य भाष्येऽसंगत्यापत्तेः। मम तु न दोषः। विग्रहेऽपि तस्यैव प्राधा-न्येन तत् स्थितिवत् समासे विशेषोत्तरषष्ठ्या तत्सम्भव इत्याशयात् सम्बन्धस्याशेषत्वान्न षष्ठीत्युत्तरम्॥ भाष्ये

**यैवासावन्तर्वर्त्तिनीति।** (भा)

उत्तरपद इति शेषः॥

**योऽसाविति।** (भा)

परिच्छेद्यपरिच्छेदकत्वरूपः॥

---

चेत्। सत्यम्। साक्षात्क्रियां परिच्छिन्दन्नपि कालस्तद्द्वारा देवदत्तं परि-च्छिनत्ति यस्य हि जननादूर्ध्वं मासो गतः स मासजात इति व्यवह्रियते तत्र व्यवहारकालजननक्षणयोरन्तरालभावी मासो जननद्वारा जातमपि परिच्छिनत्त्येव। विग्रहे षष्ठीनिर्दिष्टस्यापि वृत्तौ प्राधान्यमिह बोध्यम। दण्डी चित्रगुरित्यादाविव विशेषणविशेष्यभावव्यत्यासेनैव एकार्थीभावा-

च्यते। 'मासो जातस्येति'। कस्य पुनरयं मासः परिच्छेदको न तावज्जा-तस्य, तस्य हि दिष्ट्यादि परिमाणं न तु मासः, नापि जननक्रिया, तस्या एकक्षणभावित्वान्मासेन सम्बन्धाभावात्। उच्यते। जननक्रियावधिर्मासेन परिच्छिद्यते, मासो जातस्येति, कोऽर्थः, जननक्रियाया ऊर्द्ध्वमस्य मासो

स समासे इति । (भा)

षष्ठीप्रयोजको न भवतीत्यर्थः । तदाह

अभिहित इति । (भा)

षष्ठ्यप्रवृत्तौ निमित्तमिदम् । समासेनाभिहितो यतः अत एवान्तर्भूतः ॥ प्रथमोत्पत्तिनिमित्तमाह

प्रातिपदिकार्थे इति । (भा)

हि यतोऽभिहितस्तत एव प्रातिपदिकार्थः सम्पन्न इत्यर्थः। अन्यथा पचतीत्यादौ कर्त्राभिधीयमानो गुणभूतत्वादन्तर्भूतोऽपीति तत्रापि प्रथमा स्यादत इदमुक्तम् । अनभिहितसम्बन्ध एव षष्ठीति तात्पर्य्यम ॥

अन्तर्भावादिति । (कै)

सम्बन्धिविषयकोपस्थितिविषयत्वादित्यर्थः ॥

अनुद्भव एवेति । (कै)

पृथगुपस्थित्यविषयत्वसम्बन्धित्वमनुद्भवः ॥

---

भ्युपगमात् । तथा च हरिणा । क्व चिद् गुणप्रधानत्वमर्थानामविवक्षित-मित्युपक्रम्य,

आख्यातं तद्धितार्थस्य यत्किञ्चिदुपदर्शकम् ।
गुणप्रधानभावस्य तत्र दृष्टो विपर्ययः ॥

इति, वदता आख्यातवैयाकरणाद्युदाहरणानि स्पष्टीकृतानि । तथा

---

जातः, अतीते मासेऽस्य जननमिति यावत्, अनेन प्रकारेण मासो जातस्य परिमाणं, यथा मासे देयमृणमिति ऋणदानस्यावधिर्मासेन परिच्छिद्यते ।

[1]प्रथमोत्पत्तिनिमित्तमिति । (कै)

षष्ठीप्रतिबन्धद्वारा इत्यर्थः ॥ ननु पक्व इत्यादौ तत्त्वेनाभिधीयमानं कर्मादिकर्त्रभिहितमित्युच्यते नैष तथासम्बन्धत्वेनाभावादत आह

गुणभावेनेति । (कै)

सम्बन्धाभिधानमेव भवतीत्यर्थः । सम्बन्धिविषयकोपस्थितिविषयत्वमेव गुणभाव इत्याहुः ॥ ननु

क्वचिदन्तर्भावमिति । (कै)

न सम्बन्धिविषयकोपस्थितौ विषयो भवतीत्यर्थः । उभयोः पृथगुपस्थितयोरेव सम्बन्धसम्भवादिति भावः ॥

विवक्षितोऽर्थ इति । (कै)

कियान् कालोऽस्य जातस्य इति प्रश्ने जातस्य मास इत्युत्तरेणैवाकाङ्क्षा शान्तिः । न तु मासस्य जात इति उत्तरेणेति स एव विवक्षितोऽर्थः स च न ततः प्रतीयत इति भावः ॥

---

१ उपलब्धकैयटे तु "प्रथमोत्पत्तिनिमित्तकथनम्" इति पाठोऽस्ति ॥

---

च मासजात इत्यस्य मासप्रागभाविजननाश्रय इत्यर्थः । अत एव मासजातो दृश्यतामित्यादिक्रियायोगो जातस्यैव भवति न तु अर्धपिप्पल्यादाविव पूर्वपदार्थस्य । द्व्यहजातः । द्वयोरह्नोः समाहारः । राजाहःसखिभ्यष्टच् । नसंख्यादेः समाहार इत्यह्नादेशप्रतिषेधः । कथन्तर्हि

---

'मासजात इति' । यथा गावोऽस्य सन्तीति गोमानिति वाक्ये षष्ठीनिर्दिष्टस्यापि तद्वतो वृत्तौ प्राधान्यं, तत्कस्य हेतोः, अभिहितः षष्ठ्यर्थोऽन्तर्भूतः प्रातिपदिकार्थः संपन्न इति, यथा चित्रा गावोऽस्य चित्रगुः पुरुष इति

## [1]मास जात इति। (कै)

समासस्य त्वार्थमुत्तरत्वं बोध्यम्॥ नन्वेवं विग्रहे षष्ठीसमासेनैव सिद्धौ सूत्रं व्यर्थम् उत्तरं तु तत्रैव समासार्थमेवेति चेन्न। एतद्भाष्यप्रामाण्येन परिच्छेद्यपरिच्छेदकसमभिव्याहारे परिच्छेद्यबोधकादेव षष्ठीति स्वीकारात्। अवयवावयविनोः समभिव्याहारे यथावयविवाचकादेव तत्रार्थे जातमास इत्यनिष्टनिवृत्त्यर्थं सूत्रम्॥

## शब्दशक्तिस्वाभाव्यादिति। (कै)

यद्यपि एतद्भाष्यात् "[2]तदर्हति" इति सूत्रभाष्याच्च वृत्त्यर्थोपदर्शके विग्रहवाक्येऽपि तत्समानैव विषयतेति लभ्यते। तथाप्यत्र वाक्यपदमर्थबोधाय प्रयुक्तस्वतन्त्रवाक्यपरमिति बोध्यम्। भाष्येऽप्येवमेव॥

## सत्ताया नित्यत्वादिति। (कै)

नित्यत्वमत्र परिच्छेदककालाधिककालस्थायित्वं बोध्यम्॥

---

१ "मासस्य जातः" इति पाठोऽस्ति॥
२ अ ४। पा ४। सू ७६॥

---

द्व्यह्नजात इति। उच्यते। नायं समाहारे द्विगुः किन्तूत्तरपदे द्वे अहनी जातस्य यस्येति त्रिपदतत्पुरुषाभ्युपगमात्। ननु सुप्सुपेत्येकत्वस्य विवक्षितत्वात्कथमेतदिति चेत्। वचनादित्यवेहि। उक्तं हि वार्त्तिककृता। उत्तरपदेन परिमाणिना द्विगोः समासवचनमिति॥ अस्यार्थः। परिमाणिवच-

---

बहुव्रीहाविति तद्वदत्रापि वाक्ये षष्ठीनिर्दिष्टस्यापि तद्वतो जातस्य वृत्तौ प्राधान्यं द्रष्टव्यं, तथा च मासजातो दृश्यतामिति क्रियायोगो जातेऽस्यैव भवति न पुनरर्द्धपिप्पल्यादिवत्पूर्वपदार्थस्य। 'द्व्यह्नजात इति'। द्व्यो-

इत्यभिप्रायेणेति । (कै)

जातसम्बन्धीकालो मास इत्यभिप्रायः ॥ भाष्ये

बदराणामिति । (भा)

देवदत्तसम्बन्धिबदराणामित्यर्थः ॥

कालशब्देनेति । (कै)

कालपरिमाणमिति षष्ठीतत्पुरुषः ॥ अत्र व्याख्याने वार्त्तिकस्थ-कालपदार्थयोः स्वरसत ऐक्यं प्रतीयमानं भज्यते इत्यत आह

अथवेति । (कै)

अत्र पक्षे कालपरिमाणमिति बहुव्रीहिः ॥

तद्यस्येति । (कै)

तत् कालसमानं ज्ञातमपि प्रतीतिजननक्रियापरिच्छेदद्वारा इत्यर्थः ॥

तरतृणेति । (कै)

पदार्थानामनन्यथासिद्धदृष्ट्यपेक्षयानुमेयः काल इति भाष्या-शय इति भावः ॥

---

नेनोत्तरपदेन द्विगोः सिद्धये समासो वक्तव्यः । अर्थाद् द्वयोर्युगपदिति गम्यते । तथा च वचनाद्बहूनामप्ययं तत्पुरुषो भवति एवं द्वौ मासौ जातस्य पूर्वयोस्तत्पुरुषे सति कालान्ते द्विगाविति पूर्वपदप्रकृतिस्वरो भवति द्वयो-

---

रह्नोः समाहारः 'राजाहः सखिभ्यष्टच्' 'न संख्यादेः समाहार' इत्यह्ना-देशस्य प्रतिषेधः । कथं तर्हि द्व्यह्नजात इति, द्वे अहनी अस्य जातस्येति त्रयाणां पदानां युगपदनेन समासे कृते जातशब्द उत्तरपदे परतः पूर्वयो-

[1]प्रत्ययान्तरम् । (कै)

कारणान्तरम् ॥

तस्यैकत्वादिति । (कै)

अखण्डकालाभिप्रायमिदम् । वस्तुतस्तु एकत्वे तस्य कार्यवैचित्र्यनियामकत्वानुपपत्तिरिति भाष्योक्तलक्षणानुपपत्त्या क्षणधारारूपः कालः इति युक्तं क्षणानां चाशुविनाशित्वात् । कथमहरादिविभाग इति चावतरणं युक्तं कैयटेऽपि नित्यः । प्रवाहनित्यतया एकः समूहरूपेण विभुः क्षणस्य विभुत्वात् । तस्य समूहस्यैकत्वाद् इत्यर्थ इत्यन्ये ॥

इत्याहेति । (कै)

इति हेतोराह इत्यर्थः ॥ भाष्ये

तस्यैवेति । (भा)

बुद्धिविषयक्षणसमूहस्येत्यर्थः ॥

क्रिययेति । (कै)

क्रियासमूहेनेत्यर्थः ॥ नन्वौपाधिकत्वेऽपारमार्थता स्यादत आह

१ "प्रत्ययान्तराविशेषेऽपि" इत्यस्ति ॥

---

मासयोः समाहारो द्विमासम् । पात्रादिः, द्विमासं जातस्येति तु विग्रह समासे क्रियमाणे सतिशिष्टत्वात्समासान्तोदात्तत्वं स्यात् । स्यादेतत् यावद्वचनं वाचनिकमिति परिमाणिमात्रेण त्रिपदतत्पुरुषः । अन्यत्र तु

---

द्विगुर्भविष्यति । ननु च 'सुप्सुपे' त्येकत्वसंख्याया विवक्षितत्वाद् द्वयोर्द्वयो समासो न बहूनां युगपत् । उच्यते । बह्वर्थमेवैतद् उत्तरपदेन परि

परोपाधिक एवेति । (कै)

व्यवहारमात्रस्यैवाधिकत्वाद्यावद्बाधं प्रामाण्यमङ्गीकार्य्यमिति भावः ॥ अत्रार्थे वृद्धसम्मतिमाह

[1]तथाचेति ॥ (कै)

तस्य (हरिः)

क्षणसमूहरूपकालस्य ॥

आत्मा । (हरिः)

स्वरूपम् ॥

धर्मान्तराश्रयैः । (हरिः)

---

१ तथाचोक्तं हरिणा –

तस्यात्मा बहुधाभिन्नो भेदैर्धर्मान्तराश्रयैः ।
न हि भिन्नमभिन्नं वा वस्तु किञ्चन विद्यते ॥ १ ॥
नैको न चाप्यनेकोऽस्ति न शुक्लो नापि वासितः ।
इत्थात्मा स तु संसर्गादेवं रूपः प्रकाशते ॥ २ ॥
संसर्गिणास्तु ये भेदा विशेषास्तस्य ते मताः ।
संभिन्नस्तैर्व्यवस्थानां कालो भेदाय कल्पते ॥ ३ ॥

---

द्विपद एवेति स्थितम् । तथा च कथं "त्रिलोकनाथेन सतां मखद्विष" इति कालिदासः । "नवरसरुचिरमिति" च काव्यप्रकाशकारः । इह हि त्रिलोकनवरसशब्दयोर्न तावद्विशेषणं विशेष्येणेति समासः । दिक्सङ्ख्ये संज्ञा-

---

माणिना द्वयोः समासवचनमिति परिमाणिवचनेनोत्तरपदेन द्विगोः सिद्धये समासो वक्तव्यः, अथ द्वयोर्युगपदिति मन्यते, तस्माद्वचनाद्बहूनामप्येवं

धर्मी । सूर्य्यः । तद्वृत्त्यन्तरं धर्मान्तरं धर्मविशेषः क्रियारूपः स आश्रयो येषां तैः क्रियाश्रितैः । भेदैः । विशेषैः । बहुधा अहरादि-भेदेन न केवलं कालस्यैव भेद औपाधिकः किं तु सर्वस्यापीत्याह

**न हीति ॥** (हरिः)

भेदाभेदौ । एकत्वानेकत्वे । शुक्लत्वकृष्णत्वे । इत्यादिसर्वमपि न कस्य चित् स्वाभाविकमित्यर्थः । तदुक्तं न हि गौः स्वरूपेण गौः नाप्यगौः गोत्वाभिसम्बन्धात्तु गौरिति । किन्त्वौपाधिकमेव इत्याह

**द्रव्यात्मेति ।** (हरिः)

द्रव्यपदार्थस्तत् तत्संसर्गादेकत्वानेकत्वादिना व्यवहारविषय इत्यर्थः । एवं च ब्रह्मैव कल्पित तत्तत्पदार्थसंसर्गाद्भेदैकत्वानेकत्व-शुक्लत्वकृष्णत्वादिना भासते इति भावः । वस्तुतस्तत्तु सर्वधर्मविनि-र्मुक्तमिति बोध्यम् ॥ प्रकृते आह

**संसर्गिणां त्विति ।** (हरिः)

आदित्यक्रियादीनां ये भेदा विशेषास्ते एव तस्य कालस्य विशेषा अहरादिविशेषव्यवहारहेतव इत्यर्थः । तैर्भिन्न स्वरूपः

---

यामिति नियमात् । नापि समाहारे द्विगुः । द्विगोरितिङीप्प्रसङ्गात् । न च पात्रादित्वं कल्प्यम् । त्रिलोकीति प्रयोगस्यासाधुतापत्तेः । तथा च परि-शेषात्त्रिपदत्वपक्ष एवावशिष्यते द्विमासजातः । त्रिपदे तत्पुरुषे जातशब्दे

---

समसो भवति । एवं द्वौ मासौ जातस्य द्विमासजातः त्रिपदे तत्पुरुषे जात-शब्दउत्तरपदे परतः पूर्वयोस्तत्पुरुषे सति कालान्ते द्विमावपि पूर्वपद-प्रकृतिस्वरो भवति । द्वयोर्मासयोः समाहारो द्विमासं, पात्रादिः, द्विमासं

कालो व्यवस्थानाम् अहरादिव्यवहाराणां भेदाय विशेषाय कल्पित इत्यर्थः॥

## क्रियाया एकत्वादिति। (कै)

गच्छतीत्यादितस्तथाप्रतीतेरिति भावः॥

## आख्यातेन त्विति। (कै)

स्वतो निवृत्तभेदैवेत्यर्थः॥ अन्ये तु दिनपर्य्यन्तस्थायिक्रियानुपलम्भात् प्रश्नः

## कयेति। (भा)

आदित्यगत्येति उत्तरम्। तत्क्रियासमूहस्य तावत्कालं धारारूपेणानुस्यूतत्वादित्यर्थ इत्याहुः॥ ननु क्रियापरिच्छेदकत्वमेव कालस्य न तु द्रव्यपरिच्छेदकत्वं द्रव्यस्य हि वितस्त्याद्येव परिच्छेदकमत आह

## जातस्य जननक्रियावधिरिति। (कै)

मासो जातस्य इत्यस्य जननक्रियाया ऊर्ध्वमस्य मासो जात इत्यर्थ इत्यभिप्रायः। एवं च जननक्रियापरिच्छेदद्वारा जातपरिच्छेदकत्वमिति तात्पर्यम्॥ मासस्य परिच्छेद्यान्तरमुक्तं निराकरोति

---

उत्तरपदे परतः स चोक्तरीत्यादुष्ट एवेति। अत्रोच्यते लोकशब्दोऽत्र समुदायपरः। तथा च व्यवयवो लोक इति मध्यमपदलोपी तत्पुरुषः। इदञ्च

---

जातस्येति विग्रहस्य समासे क्रियमाणे सति शिष्टत्वात्समासान्तोदात्तत्वं स्यात्, इह मासौ जातस्य मासा जातस्येति द्विवचनबहुवचनान्तानामयं

न च मासेति॥ (कै)

त्रिंशद्रात्र (कै)

इति बहुव्रीहिः। यद्यमाभवत् पृषोदरादित्वेनाकारान्तता-समूहोऽन्यपदार्थः। समाहारद्विगौ "संख्यापूर्वं रात्रं क्लीबम्" इति नपुंसकतापत्तेः॥ *

न च कालसामान्यमिति। (कै)

तस्य नित्यत्वाद्विभुत्वाच्चेति भावः। क्षणपक्षे तद्धारा ऽविच्छेदेन तस्यानन्तत्वादपरिच्छेद्यत्वमिति भावः॥ युक्त्यन्तरमप्याह

न वस्त्वन्तरस्येति। (कै)

एवं च क्रियाद्वारैव कालपरिच्छेदकत्वं वाच्यमिति तद्द्वारा जातपरिच्छेदकत्वमेवेति भावः॥ ननु संख्याविशेषैकत्वावगतिरिति न इत्यत आह

एकत्वं त्विति॥ (कै)

तथाभूतत्वात्। (कै)

नियतपरिच्छेदकपरिमाणवाचित्वात्। अन्यथा जातस्य अस्य कियान् काल इति प्रश्नेऽस्योत्तरत्वं न स्यादित्यर्थः॥ नन्वेवं सति तात्पर्ये द्वित्वाद्यवगतिरपि स्यादत आह

---

"द्विगोर्लुगनपत्ये" इत्यत्र भाष्य एव स्पष्टम्। नयायां लोकनाथ इति वा। नवरसा चासौ रुचिरेति बहुव्रीहिगर्भः कर्मधारयोऽपि सुवचः। प्रकृतमनुस-

---

समासो भवति, हृत्तौ विभक्तौ निवृत्तायां द्वित्वबहुत्वावगतौ प्रमाणाभावाद् अभेदैकत्वसंख्यायाश्च न भवति शुद्धमेव त्वेकत्वं गम्यते, यत्र द्वयोर्बहूनां

## बहिरङ्गेति।

द्वित्वादिप्रतीतेरनुभवविरुद्धत्वाच्चेत्यपि बोध्यम् ॥

## शौर्पिक इति।

परिमाणमङ्गपरिमाणत्वम्। उपाधिमाश्रित्य संख्या। एकत्वरूपा। भेदेन। तद्रूपेण। भासते इत्यर्थः ॥ अत्र परिमाणवाचकस्थले तथैव व्युत्पत्तिरिति तात्पर्य्यम्। वस्तुतः समासे एकत्वमपि नैव भासते किन्तु मासत्वेनैकमासस्यैव भानं न त्वनेकस्यानभिधानादिति भाष्याशयः। एवं शौर्पिकतावको नादावपीत्यं बोध्यम् इदमनभिधानम् "समर्थ" सूत्रे (२। १। १) उक्तम्। एकार्थीभावकृतविशेषनिरूपणावसरे। तुल्यन्यायाद् "अक्षशलाका" (२। १। १०) इति सूत्रस्थमेकवचनान्तयोरित्यपि प्रत्याख्यातं बोध्यम्[१] ॥

---

१ शौर्पिके मासजाते च परिमाणं स्वभावतः।
उपाधिभूतमाश्रित्य सङ्ख्याभेदेन वर्त्तत इति ॥

रामः। राजपुरुषः इत्यादौ यद्यप्यभेदैकत्वसंख्या भासते तथापि मासजाते न तथा किन्तु शूर्पेण क्रीतः शौर्पिक इत्यत्र शूर्पस्येव मासस्य मुख्यमेवैकत्वम्। अङ्गपरिमाणस्य वाचके तथैव व्युत्पत्तेरिति ध्येयम् ॥

वानुस्यूत एकः शब्दार्थस्तत्रैवाभेदैकत्वसंख्या मासशब्दस्त्वङ्गपरिमाणमर्थमाचष्ट इति द्वित्वबहुत्वावगतौ विभक्तिमपेक्षते स्वतस्त्वेकत्वस्यैवासाधारणः ॥

# नञ्। २। २। ६॥

शब्दार्थावगतेर्वृद्धव्यवहाराधीनत्वेऽपि न्यायव्युत्पादनाय विचार इत्याह

इहेति॥ (कै)

प्रक्रियागतेति। (कै)

लिङ्गसङ्ख्यादिसिद्धितदभावरूपगुणदोषेत्यर्थः॥

असत् सामान्यम्। (कै)

अभावो भेदः तस्यासत्त्वं निरूपयितुमशक्यत्वात्। तथाहि। भिन्नाभ्यां हि धर्मि प्रतियोगिभ्यां स निरूप्यः तत्रायमेव स चेत् आत्माश्रयः। अन्यश्चेदन्योऽन्याश्रयः। तृतीयादेरन्यस्य स्वीकारे चक्रकमनवस्था चेति। तत्रान्तरे स्फुटं सामान्यत्वं च केवलान्वयित्वात्॥

---

नञ्। नञ् सुपा सह प्राग्वत्। अब्राह्मणः। अवृषलः। उत्तरपदार्थप्रधानोऽयम्। तथाहि। आरोपितत्वं नञा द्योत्यते। तत्रोत्तरपदप्रवृत्ति-

---

"नञ्"॥ विभक्तिप्रकारयोर्विशेषाभावाद् अकारोच्चारणं, सुपा नञ्शब्दस्य विशेषणात्तामादिलक्षणस्य नञ्सुबन्तत्वादेवाग्रहणं सिद्धम्। इहाब्राह्मणादिशब्दैः क्षत्रियाद्यभिधानमिष्यते तत्र जातिमात्रपरे ब्राह्मणशब्दे न विद्यते ब्राह्मण्यं यस्य सोऽब्राह्मणः क्षत्रियादिरित्यन्यपदार्थप्रधानः

[1]तद्वृत्तिः। (कै)

तद्वद् वृत्तिः। एवं च ब्राह्मणभिन्न इत्यर्थः फलितः॥

दुरुपदेशः (कै)

अमुष्मिन्नवकाशे ब्राह्मणमित्यादिः॥

मिथ्याज्ञानम् (कै)

प्रकारान्तरेण भ्रमः। ब्राह्मणपदार्थो ब्राह्मणत्वस्य स्वाभाविकी निवृत्तिर्मुख्यब्राह्मणाभावो द्योत्यते इति वक्रोक्त्या आरोपिततद्वत्ताद्योतको नञ् इत्युक्तं भवति॥

यद्यपीहेति। (कै)

इह सूत्रे ऽस्यार्थे तत्पुरुषसंज्ञेति न निर्दिष्टमित्यर्थः॥

यदि च नञेति। (कै)

यदि नञा ब्राह्मणार्थः प्रतिषिध्यते स्वार्थप्रतिषेधे रूपाभावविशिष्टो बोध्यते तदाभावप्रतियोगी ब्राह्मण इत्यर्थे सर्वात्मना ब्राह्मणेतरव्यावृत्तस्य नञर्थस्याभावात् किं निरूपितं परिच्छेद्यल-

---

[1] उपलब्धकैयट पुस्तके "तद्वृत्तिः" इति पाठो नास्ति॥

निरुम्। तथा चारोपितं यद् ब्राह्मणत्वं तद्विशिष्टे समासः शक्तो विशेषणविशेष्ययोः संसर्गस्त्वारोप एव तेन ब्राह्मणाभिन्नत्वबोध आर्थः। अत

समासो भवति तत्र नाप्राप्ते बहुव्रीह्यावारम्भादनेन तस्य बाधनादब्राह्मणको देश इत्यपि न सिद्ध्यति, न हि प्रवृत्तिनिमित्तमात्रनिष्ठेषु ब्राह्मणादिशब्देष्वयं समासो न तद्विशिष्टेष्विति नियामकमस्ति, इह चावर्षा हेमन्त इति हेमन्तस्य यद्वचने तत्समासस्य प्राप्नोति, लिङ्गं तु परवल्लिङ्गमिति वचना-

रूपप्राधान्यं स्यात्। अभावप्रतियोगित्वादेः केवलान्वयित्वात्॥

तदेवाह

तद्गतविशेषावचनान्नञनर्थक एवेत्यादि॥ (कै)

नञ्ञनर्थकत्वे साधुत्वं न स्यादत आह

अन्वाख्यानाद्वीति॥ (कै)

द्वन्द्वैकदेशिसमासयोरिति। (कै)

उपमितसमासः समानलिङ्गयोरेवेति भावः॥

अब्राह्मणको देश इत्यादि न सिध्यतीति। (कै)

नहि प्रवृत्तिनिमित्तमात्रनिष्ठेषु ब्राह्मणादिशब्देष्वेवायं समासो न तद्वन्निष्ठेष्वित्यत्र नियामकमस्तीति भावः॥

[1]नञोऽस्त्यर्थानामिति (वा)

तत्सूत्रस्थवार्त्तिकादिषयविभागो लभ्यते। [2]एतत्तदोरिति सूत्रेऽनञ्समासग्रहणाल्लिङ्गात्नञिति सूत्रविहितसमासे उपसर्जनत्वप्रयुक्त-

१ अनेकमन्यपदार्थे ( २। २। २४ ) इति सूत्रस्थवार्त्तिकम्॥

२ अ ६। पा १। सू १३२॥

एवानुपसर्जनत्वादतस्मिन्नित्यादिसर्वनामकार्यनिर्वाहः। स्यादेतत्। विघ्नानामभावो ऽविघ्नमित्यत्रापि परत्वात्तत्पुरुषः स्यात्। अव्ययीभावस्तु निर्म-

होषाभावः। इह च असोऽसर्वस्मै इत्युत्तरपदार्थस्योपसर्जनत्वात्त्यदादिकार्यं सर्वादिकार्यं च न स्यात्, यदा त्वसत्सामान्यवर्तमानो नञ् ब्राह्मणादिभिर्विशेष्यते ब्राह्मणत्वेनासत्क्रियान्तरेण तु सन् क्षत्रियादिकोऽब्राह्मण इति तदा पूर्वपदार्थप्रधानं तत्र नञर्थस्य प्राधान्यात्संख्यायोगः समासस्य न स्यात्, वाच-

कार्याभाव इति भाष्याशय इत्यन्ये ॥ ननु नञः पाठेऽपि तदन्तत्वा-भावादव्ययत्वाप्राप्तिरित्याह भाष्ये

पाठेनापीति। (भा)

एवं च नञः पाठेनाव्ययतया तदर्थस्य लिङ्गसङ्ख्यानन्वयित्वेन समासेऽपि तदर्थस्य प्राधान्ये स न स्यादिति भावः ॥ भाष्ये

नेदं वाचनिकम्। (भा)

नेदं वचनाप्रयोज्यमित्यर्थः। कैयटेऽपि "प्रयोजनमि"ति करणे ल्युट् ॥

ब्राह्मणाभावस्येति। (कै)

ब्राह्मणभेदस्येत्यर्थः ॥

गुणत्वादिति। (कै)

आश्रितत्वमत्र गुणत्वम् ॥

तद्युक्तेति। (कै)

तद्युक्तद्रव्ये ऽभेदेनान्वयित्वादित्यर्थस्तदाह्यति

---

च्छिकमित्यादौ सावकाशः। नैवम्। उत्तरपदार्थप्राधान्य एवास्य प्रवृत्तेः। उक्तं हि प्राक्। अव्ययीभावादिमहासंज्ञाव्यवहारेण पूर्वाचार्योक्तार्थनिय-

---

तिकौ तु परवल्लिङ्गता भवतु। स्यादेतत्, शब्दशक्तिस्वाभाव्यादसत्त्वरूपमर्थं वाक्ये नञाचष्टे समासे तु सत्त्वरूपं, तेन सिद्धः संख्यायोगः, एवमप्यपवादे-नानेनाव्ययीभावस्य बाधादमक्षिकमिति न सिद्ध्यति तस्य तु निर्मक्षिक-मित्यादिरवकाशः, असो ऽसर्वस्मा इति च पूर्ववत्स्मायाद्यसिद्धिः, अस्तु

**यदसौ द्रव्याश्रित इति।** (भा)

भाष्ये अयं भावः। भेद एव नञर्थः तस्य चाश्रयेण गुणस्येव तादात्म्यं सम्बन्धः। अब्राह्मणः क्षत्रियः ब्राह्मणभेदः क्षत्रिये इत्युभयविधव्यवहारदर्शनात्॥

**गुणवचनानाम्** (भा)

गुणोपसर्जनद्रव्यवाचिनाम्॥

**आश्रयतः।** (भा)

आश्रयविशेषतो लिङ्गवचनानीत्यर्थः। जात्याश्रयबोधकानां तु नियतलिङ्गतैवेति भावः॥

**इह त्वाश्रयेति।** (कै)

साक्षाल्लिङ्गसङ्ख्यानाश्रयत्वमेवासत्त्वमिति भावः॥ भाष्ये

**यदसौ द्रव्यं श्रित इति।** (भा)

यद्द्रव्यान्वयीत्यर्थः॥ उत्तरपदार्थप्राधान्यपरिग्रहस्तुल्यविकल्पाभिप्रायेण न भवतीत्याह

**अत्रापीति॥** (भा)

---

सोऽप्युत्सर्गतः स्त्रीं श्रयत इति। नन्वेवमनुपलब्धिरित्यादौ का गतिः। शृणु। रक्षोहागमलघ्वसन्देहा इति भाष्यप्रयोगात्पक्षे तत्पुरुषोऽपीष्यते।

---

तर्ह्ययं नोत्तरपदार्थप्रधानः, यद्येवमब्राह्मणमात्रस्यानयनं प्राप्नोति, यदुत्तरपदार्थप्रधानता तत्र हेतुरिहापि तर्हि राजपुरुषमानयेत्युक्ते पुरुषमात्रस्यानयनं प्राप्नोति, अस्त्यत्र विशेषः, राजा विशेषकः प्रयुज्यते, इहापि तर्हि नञ् विशेषकः प्रयुज्यते, कथं नञ् नाम विशेषकः स्यात्, अनियतगुणस्य

## अव्ययीभावस्येति। (कै)

परे तु नञा स नेष्ट एव। [1]असंहितमित्यत्रारोपितं संधानम्। परः संनिकर्षस्तदभावादद्रुतायां वृत्तौ संहितासंज्ञाप्रयुक्तं कार्यं न प्राप्नोतीत्यर्थ इति न दोषः। अत्यन्ताभावार्थकनञः क्रियागुणमात्रान्वयित्वेनामक्षिकमित्यादावसंहितमित्यादावुत्तरपदार्थाभावाप्रतीत्याऽव्ययीभावाप्राप्तेश्च। अनञ्समासग्रहणात् स्त्यायादिसिद्धिरप्युक्तेति तुल्यविकल्पाभिप्रायेणैव भाष्यम् ॥

## अवर्षाहेमन्तः (कै)

इत्यपि प्रतियोगिरूपाश्रयगतलिङ्गादिग्रहणात्सिद्धमभावेन प्रतियोगिनोऽपि स्वज्ञानाश्रयणेन तस्याप्याश्रयत्वात्। स्वघटितसमासघटकत्वेनोपस्थितत्वाच्चास्यैवाश्रयस्य ग्रहणमन्यथा तद्दोषदूषितपक्षोऽर्धमाश्रितेऽपि तद्दोषानुवृत्तौ भाष्यस्य निर्दलतापत्तिः। अथवा पुनरस्तूत्तरपदार्थप्रधान इति समकक्षतया पक्षान्तरकथनस्यासङ्गतिश्चेति वदन्ति ॥ अनेकमित्यादौ वचनदोषं तु भाष्यकृदेवाग्रे वक्ष्यति। भाष्ये

---

१ परः संनिकर्षः संहिता चेद् अद्रुतायामसंहितम् (१।४।१०२) "परः संनिकर्षः संहिता" एतत् सूत्रस्यवार्त्तिकम् ॥

---

अत एव भूवादिसूत्रे (१।३।१) "व्यथासंहितया" इति विरामोऽवसानमिति" (१।४।११०) सूत्रे तु "अद्रुतायामसंहितमिति" (वस्तुतः

---

गुणविशेषप्रतिपादनाय हि विशेषणं प्रवर्त्तते न तदुपघाताय नञा च सम्बन्ध्यार्थः प्रतिषिध्यमानः सर्वात्मना प्रतिषिध्यत इति कथमसतः प्राधान्यं स्यात्, तस्मादुत्तरपदार्थप्राधान्यमिच्छतास्मिन्विषये नञनर्थकोऽव्याख्यान-

**ब्राह्मणमात्रस्येति।** (भा)

अभावो नञर्थः। सविशेषणं चेद् अभावप्रतियोगी भेदप्रतियोगी वा ब्राह्मण इति बोधस्तथासति यत्किञ्चिन्निष्ठाभावप्रतियोगिनस्तादृशभेदप्रतियोगिनो वा ब्राह्मणस्यैवानयनं प्राप्नोतीत्यर्थः॥ "मात्र"शब्देन न शौचाचारादिहीनब्राह्मणस्य नापि क्षत्रियादेरित्यर्थबोधनम्॥

**राजा विशेषक इति।** (भा)

यद्यपि पुरुषमात्रस्यैवानयनं दृश्यते न राजविशिष्टस्य तथापि राजसंबन्धिन एवानयनं न यत्किञ्चित्संबन्धिन इति राजा पुरुषस्य विशेषक इति भावः॥

**नञ्विशिष्टस्येति।** (भा)

नञ्द्योत्यारोपितब्राह्मण्यविशिष्टस्येत्यर्थः॥

**कः पुनरिति।** (भा)

अभावस्यैव नञर्थत्वेन प्रसिद्धत्वात्प्रमितोत्तरपदार्थव्यतिरिक्तः कोऽसौ नञ्विशिष्ट उत्तरपदार्थ इत्याशयः॥ ननु नञर्थस्य

---

परःसन्निकर्षः संहिता। १। ४। १०९। इति सूत्रे उक्तपाठोऽस्ति) द्विधापि भाष्यवार्त्तिकयोः प्रयुक्तम्। यद्वा। अनुपलब्ध्यसन्देहादावपि लाक्षणिकार्थो वा तदभावबोधः। स्यादेतत्। अन्यपदार्थप्राधान्येऽयं समासः।

---

सामर्थ्यात्तु साधुत्वमेवंभूतस्यार्थवदनर्थकावयवस्य समासस्येति वाच्यं। ततश्च ब्राह्मणमात्रस्यानयनं प्राप्नोति। नैष दोषः। निवृत्तपदार्थकोऽत्र ब्राह्मणशब्दः, सा च निवृत्तिः स्वाभाविकी नञा द्योत्यते, कोऽर्थः, केवलो ब्राह्मणशब्दः प्रयोज्यमानः प्रसिद्धिवशान्मुख्यमेव ब्राह्मणमाचष्टे नञ्प्रयोगेण तु

विशेषणत्वे किं भेदप्रतियोगी ब्राह्मण इत्यर्थः। उक्तभेदानुयोगी ब्राह्मण इति भेदे प्रतियोगी चोपस्थितब्राह्मण एवेति। नाद्यः। ब्राह्मणमात्रस्यानयनापत्तेः। नान्त्य इत्याह

भावाभावयोरिति। (भा)

ब्राह्मणत्वब्राह्मणप्रतियोगिकभेदयोरित्यर्थः॥ कप्रत्ययप्रयोगसूचितबहुव्रीहिसूचितमर्थमाह

निवृत्त इति॥ (कै)

सर्वथा निवृत्तपदार्थत्वे विशेषणमेव न युज्येतेत्यत आह

सादृश्यादिनेति। (कै)

आदिना साहचर्यादि निवृत्तमुख्यब्राह्मण्यादिरारोपिततद्वान् इति भाष्याक्षरार्थः॥ तदाह

नञ्द्योतिततदवस्थ इति। (कै)

एवञ्चारोपितस्वप्रवृत्तिनिमित्तवानुत्तरपदार्थ इत्यत्र तात्पर्यग्राहको नञिति तात्पर्यम्। उत्तरपदार्थस्य प्राधान्यमप्येतदेवेति बोध्यम्॥

---

भावप्रधानो ह्यत्र निर्देशः। न ब्राह्मणत्वं यस्मिन्नित्यर्थादुन्मत्तगङ्गादावव्ययीभाव इवेह तत्पुरुषो बहुव्रीहेर्बाधक इति। फलन्तु अकर्ता ऽभोक्ता-

---

क्षत्रियादौ सादृश्यादिना निमित्तेनाध्यारोपितं ब्राह्मण्यं न तात्त्विकमिति द्योत्यते, तदेवं मुख्यो ब्राह्मणशब्दस्यार्थो निवृत्त आतस्त्वामुख्यः क्षत्रियादिरिति न ब्राह्मणमात्रानयनं नापि न कस्य चिदानयनमिति सिद्धम्, उक्तं च।

यदा पुनरिति । (भा)

या ऽस्योत्तरपदस्य मुख्यार्थप्रत्ययत्यागपूर्वकमारोपितप्रवृत्तिनिमित्तकार्थबोधकता सा स्वभावसिद्धेति नञ्वचनेन प्रकृत्यारोपितत्वस्य वाचकः सन्मुख्यपदार्थप्रत्ययं निवर्त्तयतीति प्रश्नस्तद्ध्वनयन्नाह

इदानीमिति ॥ (कै)

किं स्वयमिति । (कै)

निवृत्तस्य मुख्यब्राह्मणपदार्थस्य ब्राह्मणत्वस्य निवृत्तिस्तत्पूर्वकमारोपिततद्वद्बोधकत्वं द्योत्यते । अथ स्थितस्यैव मुख्यब्राह्मणस्य बोधनिवृत्तिस्तत्पूर्वकं तद्वत्त्वारोपितत्वं नञा प्रकृत्योच्यत इत्यर्थः ॥ ननु नञ आरोपितत्वे प्रकृतावपि ब्राह्मणादिपदैर्बोध्यस्य मुख्यब्राह्मणादेः कथं बोधोऽत आह

मन्त्रेणेवेति । (कै)

नञ्सामर्थ्यादेव तन्निवृत्तिरित्यर्थः ॥

नास्ति नञ इति । (कै)

प्रकरणादिकं च तात्पर्यग्राहकं भविष्यतीति भावः ॥

---

त्यादौ नद्युतस्वेति कवभावः स्यात् । मैवम् । अतस्मिन्नित्यादौ सर्वनामकार्यगणकार्ययोरसिद्धिप्रसङ्गात् । अवर्षा हेमन्त इत्यत्र हेमन्तस्यैव तद्धि-

---

'प्राक् समासात्पदार्थानां निवृत्तिर्द्योत्यते नञा ।
स्वभावतो निवृत्तानां रूपभेदादलक्षिता' ॥

इति । स्यादेतत्, अर्थप्रत्यायनाय शब्दः प्रयुज्यते ब्राह्मणार्थश्चेन्निवृत्तः किं मुधा ब्राह्मणपदं प्रयुज्यते, तन्न, असति ब्राह्मणपदे नेयेतात-

**पदार्थनिवृत्ताविति। (कै)**

पदार्थप्रत्ययनिवृत्तावित्यर्थः। स्वशक्त्यारोपितत्वबोधेऽपि ब्राह्मणादिपदानां स्वशक्यार्थबोधकत्वनिवृत्तिर्वचनं विना न शक्या किं च वचनेनापि तत्कर्त्तुमशक्यमित्युपहासः॥ भाष्ये

**पदार्थान्निवर्त्तयतीत्यस्य (भा)**

पदार्थप्रत्ययानित्यर्थः॥ अमुमेवार्थं शङ्कापूर्वकं दर्शयति

**नन्वित्यादिना॥ (कै)**

ननु शब्दस्य पदार्थनिवृत्तिकरत्ववत्तत्प्रत्ययनिवृत्तिकरत्वमप्यनुपपन्नम्। किं चैवमुत्तरपदार्थप्रत्यय एव न स्यादित्यत आह

**अयमत्रार्थ इति॥ (कै)**

**निवृत्तपदार्थकतेति। (कै)**

निवृत्तमुख्यप्रवृत्तिनिमित्तप्रत्यायकत्वस्यारोपितप्रवृत्तिनिमित्तकप्रत्यायकतेत्यर्थः॥ पुनर्दार्ढ्यायोक्तमेव स्मारयति

**पदार्थशब्देनेति॥ (कै)**

**ब्राह्मणप्रत्ययस्य। (कै)**

मुख्यब्राह्मणप्रत्ययस्येत्यर्थः॥ अनेन द्योतकानां प्रसिद्धार्थशक्य-

---

र्थयशस्याप्येकवचनापत्तेश्च। अधनो ब्राह्मण इत्यादावपि न्यायसाम्यात्तत्पुरुषपरवल्लिङ्गतापत्तेश्चेति दिक्। मतान्तरन्तु

---

श्रूयमाणे कस्यार्थो ऽत्र निवर्त्तयितुमिष्ट इति न ज्ञायते ब्राह्मणपदे तु सति तदर्थस्य क्षत्रियादौ मुख्यः सत्ताविरहः प्रतीयते। अन्यद्दर्शनं, सर्व एते शब्दा गुणसमुदाये वर्त्तन्ते। स्मर्यन्ते च।

तुद्बोधपूर्वकमर्थान्तरशक्त्युद्बोधकत्वं स्वभाव इति बोधितं तच्छक्त्य-नुद्बोधेनैव तत्पदार्थप्रत्ययनिवृत्तिरिति बोध्यम् ॥

**अभिप्रायमप्रतिपद्येति। (कै)**

केचित्तु यदि नञः शब्दस्य बोधकतासामर्थ्यनिवृत्तिद्योतकत्वं स्यात्तदा तदर्थगतयोद्धृत्वादिसामर्थ्यनिवृत्तिद्योतकत्वमपि स्यादिति भाष्याशयमाहुः ॥ ब्राह्मण्यनिवृत्तेर्नञा ऽनभिधानात्। नञ्निमित्ते-त्यनुपपन्नमित्यत आह

**क्षत्रियादाविति। (कै)**

तादृशब्राह्मण्यप्रवृत्तिनिमित्तकोऽस्माद् बोध इति भावः। अय-माशयः। तत्तदर्थकाः शब्दा भिन्नास्तु तत्समभिव्याहारे तु तदर्थकोऽयमिति ज्ञायते। इदमेव नञो द्योतकत्वम् ॥

**नञ्निमित्तात्तूपलब्धिरिति (भा)**

भाष्यस्य तत्समभिव्याहारे मुख्यब्राह्मणार्थको नायं किं तु आरोपित-तदर्थकोऽयमित्युपलब्धिर्निर्णय इत्यर्थः। तदर्थगतबोद्धृत्वादिसामर्थ्य-निवृत्तिद्योतकानां तु नास्य स्वभावादेवेति तात्पर्यम्। आरोपित-

---

"तपः श्रुतञ्च योनिश्चेत्येतद्ब्राह्मणकारणम्।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव स ॥
(अत्रैव भाष्ये) इत्यादिवचनप्रामाण्यात्सर्वे समुदायशब्दाः तत्तद्व्यक्ति-

---

'तपः श्रुतं च योनिश्चेत्येतद्ब्राह्मणकारणम्।
तपःश्रुताभ्यां यो हीनो जातिब्राह्मण एव सः' ॥ (अत्रैव महाभाष्ये)
इति, तथा च श्रुतिः।

तस्य नञ्वाच्यत्वे तु मुख्यब्राह्मणत्ववति गृहीतशक्तिकब्राह्मणपदार्थे तदन्वयो दुरुपपाद इति तदर्थप्रत्ययत्यागो वाच्यः स चाशक्यः शब्दार्थसंबन्धस्य नित्यताहानिश्चेति दिक् ॥ अमुमेवार्थं पुनः प्रश्न-प्रतिवचनाभ्यां स्पष्टीकरोति

**यदि पुनर् इत्यादिना ॥** (भा)

**स चेन्निवृत्त इति।** (कै)

ब्राह्मणपदशक्यं यत् मुख्यं ब्राह्मणं तस्य निवृत्तौ स्वशक्यस्य बोध्यस्याभावात् तत्प्रयोगो व्यर्थः। अशक्यबोधने तु नञ्मात्रेणापि तदर्थबोधसम्भव इति भावः ॥

**प्रतिषेधविषयेति।** (कै)

नञो द्योतकतया समभिव्याहृतपदशक्यबोधकत्वं वाच्यं तच्च पदान्तरप्रयोगं विना न सम्भवतीति तत्पदोपादानमिति तात्पर्यार्थः। अस्य पदस्य मुख्योऽर्थः प्रवृत्तिनिमित्तरूपो निवृत्तः। गौणश्चोपजात इति विज्ञायेतेति तु भाष्याक्षरार्थः ॥ भाष्ये

**नेत्युक्ते सन्देहः स्यादिति।** (भा)

समभिव्याहृतपदस्य बोधकत्वाभावात् निवृत्तिरूपार्थस्य प्रति-

---

भिन्नैव तदीयगुणसमुदायेनाप्युपस्थितायाः सत्ताया जातित्वात् तथा च अपूर्णा ब्राह्मणोऽब्राह्मण इति सर्वथाप्युत्तरपदार्थप्राधान्यं निर्बाधम्। अत्र

षट् व्याधयो यं पुरुषं तपन्ति जङ्गो ह्यार्दे चैटगो रैतश्चस्य।

तमस्य धर्म्मः शिशिरस्य शीतः ब्राह्मणस्तं स्मरार्थं गमतमिति'।

गौरः शुच्याचारः पिङ्गलकेश इत्यादयश्च धर्म्मास्तदेषां समुदाये ब्राह्मणशब्दः, एवं क्षत्रियादिशब्देष्वपि द्रष्टव्यम्। एवं स्थिते समुदायेषु

योग्याकाङ्क्षया अनिवृत्तेरबोधकत्वेन च तदप्रयोग एव स्यात्। नञ्स्तु वाचकत्वमेवेति चेदेवमपि सन्देहः स्यादिति भावः ॥ तदाकारं दर्शयति

कस्य पदार्थ इति । (भा)

कस्य पदस्य पदार्थ इत्यर्थः । अभिधेयपरः पदार्थशब्द इति तात्पर्यम् । सन्देहपदेन निर्णयाभावो विवक्षित इति तत्त्वम् ॥

एवं चैतदिति । (भा)

एवमेवैतदित्यर्थः । लक्षणापक्षमाश्रये । इयमेव यत आरोपितप्रवृत्तिनिमित्तकस्य बोधः । तत्र नञ्समभिव्याहारे निवृत्तमुख्यब्राह्मण्यको ब्राह्मणशब्दार्थ इति बुद्धेरारोपिततत्कार्यकत्वं फलतीति बोध्यम् ॥ इदानीं प्रकारान्तरेणापि नञो द्योतकत्वं व्युत्पादयति भाष्ये

अथवा सर्वं एते इति ॥ (भा)

अवशिष्टानामिति । (कै)

तथा च तद्गुणप्रतिपादनाय ब्राह्मणशब्दप्रयोगः। निवृत्तगुणानां निवृत्तिप्रतिपादनाय च नञ्प्रयोग इत्यर्थः । "अयमेव" एवमयं

---

च लिङ्गम् । एतत्तदोरिति सूत्रे ऽनञ्समासग्रहणम् । एवञ्च अनेकमन्यपदार्थ इत्यादावेकवचनं सिद्धम् । माघस्य । सेयं तनेकया सन्नतापाङ्ग्येति ।

---

वृत्ताः शब्दा अवयवेष्वपि वर्तन्त इति न्यायाज्जातिभिन्ने गुणभिन्ने वा यदा ब्राह्मणशब्दो वर्तते तदा स्वाभाविकी जातिगुणनिवृत्तिर्नञा द्योत्यते अवशिष्टांशसद्भावप्रतिपादनाय ब्राह्मणशब्दप्रयोगः । यद्येवं द्वयोरपि भिन्नविषयत्वप्रसङ्गः, कथं, यस्यांशस्य सद्भावं ब्राह्मणशब्द आह न तस्याभावं

समुदाये इत्यादिभाष्यार्थः। एवञ्च गुणसमुदायवति प्रवृत्तस्य ब्राह्मणशब्दस्यार्थे कतिपयगुणाभावप्रतिपादको नञिति भावः॥

[1]तपः श्रुतादिसङ्ग्रहायाह

गुणशब्देनेति॥ (कै)

याजनादिसङ्ग्रहायाह

निदर्शनायेति॥ (कै)

"कर्त्तरि चे"ति समासनिषेधमाशङ्क्याह

शेषषष्ठीसमास इति॥ (कै)

एषां ब्राह्मणेत्यादकत्वाभावादाह

व्यपदेशस्येति॥ (कै)

गुणसमुदायाभाव इति। (कै)

तत्र गौणः प्रयोग इत्यत्र जातिपदवत्त्वेऽपि क्वचित्तात्पर्यग्राहक इति भावः॥

---

१ तपः श्रुतञ्च योनिश्चेत्येतद् ब्राह्मणकारकम्।
तपः श्रुताभ्यां यो हीनो जातिब्राह्मण एव सः॥

---

कथन्तर्हि पतन्त्यनेके जलधेरिवोर्मय इति। अत्राहुः। अध्यारोपितैकत्वानां प्रकृत्यर्थतया तत्र वास्तवबहुत्वाभिप्रायं बहुवचनं न विरुध्यत इति। अनेकश्चानेकश्चेत्येकशेषो वा। यत्तु।

---

नञाह यस्याभावं नञाह न तस्य सद्भावं ब्राह्मणशब्द आह। नैष दोषः। द्वावप्येतौ समुदायावलम्बिनौ कृतवत्, यथैकदेशकरणाकरणाभ्यामेकमेव वस्तु कृतं चाकृतं च भवति तथेहाप्येकदेशविभागात् समुदाय एव निवृत्त

**बाहुल्येनेति।** (कै)

तथा चैते गुणा व्यभिचारिण इति भावः॥

**पिङ्गलकपिलकेशः** (भा)

इति भाष्ये। एकं पदं पिङ्गलाः कपिलाः केशा यस्येत्यर्थः। यद्वा पिङ्गल इति वर्णः। गौर इत्यस्य तु

"अष्टवर्षा तु या दत्ता श्रुतशीलसमन्विते।
सा गौरी तत्सुतो यस्तु स गौरः परिकीर्त्तित" इत्यर्थः॥

**ब्राह्मण्ये** (भा)

ब्राह्मणशब्दार्थगुणसमुदाये॥

**कुर्वन्ति** (भा)

केचिल्लौकिका इत्यर्थः॥ "पूर्वं पश्चात्ता" इत्यादि ग्रन्थः पस्पशायां व्याख्यातः॥ भाष्ये

**जातिहीने** (भा)

इत्यादि सामान्येनैकवचनं तेनावयवेष्विति प्रागुक्तेन सामानाधिकरण्यमुपपन्नम्॥

---

तत्सादृश्यमभावश्च तदन्यत्वं तदल्पता।
अप्राशस्त्यं विरोधश्च नञर्थाः षट् प्रकीर्त्तिता॥

---

उच्यते एकदेशसद्भावाच्च स एव सन्नभिधीयत इति सर्वमनवद्यम्। इहानेको जन आगत इति द्व्यादिष्वेकत्वमारोपितं प्रतीयते मुख्यं तु प्रतिषिध्यते त्रियादाविव ब्राह्मण्यमित्येकवचनमेव भवति द्व्यादिसंख्या प्रतीयते तदेवमुत्तरपदार्थप्रधान इति स्थितम्। अत्र च लिङ्गम्। एतत्तदोः सुलोपोऽको-

**न च भिन्नविषयत्वमिति । (कै)**

नञा यत्किञ्चिद्विषयनिवृत्तेर्ब्राह्मणपदेन यत्किञ्चिद्गुणवत्त्वस्य प्रतिपादनेन पूर्वोत्तरपदयोरसामर्थ्यात्समासो न स्यादिति भावः ॥

**द्वयोरपीति । (कै)**

एकदेशनिवृत्त्यादिद्वारा समुदायस्यैव निवृत्त्यादिप्रतिपादनाद्-द्वयोरेव सामर्थ्यमिति भावः ॥ नञ् समभिव्याहारे श्रुतादिगुण-निवृत्तिद्योतनद्वारा जन्मनिमित्तो ब्राह्मणशब्द इति फलतीत्येक-विषयत्वमित्यत्र तात्पर्यम् ॥ जात्यारोपस्य निमित्तफले आह

**तत्र स्तुत्येति ॥ (कै)**

भाष्ये

**दृष्ट्वाध्यवस्यतीति । (भा)**

अध्यवसायाकारो

**ब्राह्मणोऽयमिति ॥ (भा)**

तत उपलभते नायं ब्राह्मण इति प्रत्ययमुक्तं तस्य चारोप-मूलकता दर्शिता ब्राह्मत्वाध्यवसायोत्तरत्वोक्त्या

**अब्राह्मणोऽयमितीति । (भा)**

---

यथा अब्राह्मणाः, अपापं, अनश्वः, अनुदरा कन्या, अपचसि, अधर्मं, इति । तत्र यथायथमार्थिकार्थमभिप्रेत्येति बोध्यम् । निरूढलक्षणायाः

---

नञित्यत्र नञ्समासग्रहणम् । अन्यथैतत्तदोर्यद्वारेण सम्बन्धिनः सोर्लोपो विधीयमानो नैषो ददात्यसौ ददातीत्यत्र कथं प्राप्नुयात् । इह न ब्राह्म-

अस्य तत इत्यादिः प्रयुक्ते इति शेषः॥ अर्थैकदेशस्येति वक्तव्येऽर्थस्येत्ययुक्तमत आह

अयमत्रार्थ इति॥ (कै)

एकदेशविगमादिति। (कै)

एवं चोभयप्रतिपादनायोभयप्रयोग इति भावः॥ भाष्ये

दुरुपदेशादिति। (भा)

असम्यगुपदेशादिति तदर्थः। एतद्भाष्ये "अब्राह्मणोऽयमित्युत्तरं निर्ज्ञातं तस्य भवती"त्यपाठोऽनुपयोगात्॥

नान्यथेति। (कै)

पूर्वपदार्थप्राधान्ये भिन्ने एकत्वानवगतेरेकवचनं न सिध्यतीत्यर्थः। एवमन्यपदार्थप्राधान्येऽपि तदसिद्धिः॥

[1]एकप्रतिषेधमात्रमिति। (कै)

एको न भोजनीय एको जनो नागत इत्येवं रूप इत्यर्थः॥

---

१ उपलब्धबहुषु कैयटपुस्तकेषु "एकत्वप्रतिषेधमात्रम्" इति पाठो दृश्यते॥

---

प्रक्रियासमकालत्वतया सिद्धान्ते त्वतिरिक्तशक्तेरक्लृप्ततया वृत्तिविशेषे तदर्थान्तर्भाव इति वा कथं चिन्त्येयम्। इह न ब्राह्मणस्य भाव इति युगपदेव

---

णस्य भाव इति भावेन नञा च युगपत्सम्बन्धे विवक्षिते त्वतलौ च प्राप्नुतः समासश्च, तत्र यदि परत्वात्त्वतलौ कृत्वा पश्चात्पुनः प्रसङ्गविज्ञानान्नञ्समासः क्रियते ततस्तत्पुरुषे तुल्यार्थेति कृत्वा पूर्वपदप्रकृतिस्वरेणाद्युदात्तं

बहूनां संप्रत्यय इति। (भा)

एको नागत इत्येव प्रतीतेरिति भावः। ज्ञापकात् प्रसज्य-प्रतिषेधेऽपि तत्समासो जायत इत्यभिप्रायः॥

एकत्वप्रतिषेधमात्रमिति (भा)

पाठोऽपाठः॥ भाष्ये

क्रियागुणाविति (कै)

गुणोदाहरणं अनेकस्मिन् रूपं रस इत्यादि॥ एकं न भोजयेत्येक-निषेधाय प्रसज्जनस्य चारितार्थ्यात् कथं बहुत्वावगतिस्तत्राह

निराश्रययोरिति। (कै)

गुणक्रिययोरित्यर्थः॥

एतच्च प्रसज्येति। (कै)

एवं च तदाश्रयेणैकदेशिनः प्रश्नाद्यान्तमभ्युपेत्यैव प्रसज्यप्रति-षेधपदार्थनिर्णेतुमुत्तरमुक्तमिति भावः॥

तथानेकशब्देनेति। (कै)

आरोपितैकत्ववानित्यर्थः॥ एवं च पर्युदासपक्षे बहूनां प्रतीतिः सुलभैवेति भावः। तत्र द्वित्वादिनिर्णयस्तु तात्पर्यवशादिति

---

भावेनारोपितत्वेन च सम्बन्धे विवक्षिते समास एव प्रथमम्। न तु परा-वपि त्वतलौ प्रकृत्यर्थस्य सापेक्षत्वेनासामर्थ्यात्। नञ्समासस्तु प्रधानस्य

---

पदं स्यात् प्रत्ययस्वरो नञ्स्वरस्त्वेष्यत इति समासे कृते त्वतलौ कार्यौ। आह च, त्वतलभ्यां नञ्समासः पूर्वविप्रतिषिद्धं त्वतलोः स्वरसिद्ध्यर्थमिति

बोध्यम् ॥ आरोपितैकत्वत्वेनैव बोधाद्वैकवचनाभिसिद्धिः । एवं च "अनेके" इति बहुवचनमसाध्वेवेति बोध्यमिति मञ्जूषायां विस्तरः ॥

यत्र तु पूर्वमेवेति । (कै)

तत्र पूर्वं क्रियोपस्थित्यभावाद् नियतबहुद्रव्याक्षेपाभावेनैको न तिष्ठतीत्येव बोधपर्यवसानादिति भावः ॥ ननु एकमित्यत्र द्वयोर्नञोः प्रकृतार्थगमकत्वात् प्रियस्यैकत्वमेव प्रतीयेत न बहुत्वमत आह

आबाधे इति ॥ (कै)

षष्ठीति । (कै)

आबाधाया अप्रतीतेस्तत्प्रतीतेरनुपयोगाच्चेति भावः । नोऽस्माकमेकं प्रियं न किं त्वनेकमिति तदर्थः । एवमेको न तिष्ठतीत्यादावेकस्थितिनिषेधेऽपि अनेकस्थितिबोधो द्रष्टव्यः ॥ भाष्ये

त्वतल्भ्यामिति । (भा)

पूर्वपदार्थप्राधान्याश्रयेण वार्त्तिकारम्भः । उत्तरपदार्थप्राधान्ये तु असामर्थ्यात् पूर्वं भावप्रत्ययानुत्पत्तिरेवेति तत्सूचे भाष्ये स्पष्टमदाह

तत्र भावेति ॥ (कै)

---

सापेक्षत्वान्निर्बाधः । ततश्च सर्तिग्रहणः प्रत्ययस्वरौ नित्त्वरश्च भवति न तु तत्पुरुषे तुल्यार्थेत्ययम् ॥

---

तत्र भावप्रत्ययस्तावत्प्रकृत्यर्थस्य सापेक्षत्वेनासामर्थ्यान्न भवति बहुसमासस्य प्रधानस्य सापेक्षत्वाद्भवति ॥

# ईषदकृता । २ । २ । ७ ॥

ननु जातावीषदर्थान्वयासम्भवादेवासमासः सिद्धोऽत आह

यथैकेति ।

१"गोत्रं चे"ति

गार्ग्यत्वस्य जातित्वम् ॥

---

१ "सङ्ख्यदाख्यातनिर्ग्राह्या गोत्रं च चरणैः सह" "जातेरस्त्रीविषया-दयोपधात्" ( ४ । १ । ६३ ) एतत् सूत्रस्य वार्त्तिकम् ॥

---

ईषदकृता ॥ स्पष्टोऽर्थः । ईषत्पिङ्गलः । नन्वीषद्गार्ग्यमीषदुन्नतमित्या-दावव्याप्तिः । ईषद्गार्ग्यादावतिव्याप्तिश्च । सत्यम् । अत एव वार्त्तिक-कृतोक्तं, ईषद्गुणवचनेनेति । अकृतेत्यपनीय तत्स्थाने गुणवचनेनेति पूर-

---

"ईषदकृता" । ईषद्गुणवचनेनेति वक्तव्यमिति' । अकृतेत्यपनीय सूत्रे गुणवचनग्रहणं कर्त्तव्यमित्यर्थः । अकृतेति चोच्यमान ईषद्गार्ग्य इत्या-दावतिव्याप्तिरीषदुन्नत इत्यादावव्याप्तिः स्यादिति भावः । 'ईषद्गार्ग्य इति' ।

गडेरिति । (कै)

"कड मदे" इति भ्वादौ पठितादारन्यपि सिध्यति ॥

यद्यपीति ।

१"उणादयो बहुलमि"ति शास्त्रारम्भात्सर्वमौणादिकमव्युत्पन्नमिति नियम इति भावः ।

---

---

१ अ ३ । पा ३ । सू १ ॥

---

गोत्रीयमित्यर्थः । अतो नाव्याप्तिव्याप्ती । यद्यपि गर्गापत्यत्वे उत्कर्षापकर्षौ न स्तस्तथापि तदेकार्थसमवायिनां क्रियागुणानान्तौ बोध्यौ । तथा च प्रयुज्यते गार्ग्यतरो गार्ग्यकल्प इत्यादि ।

---

ननु च गार्ग्यो भवति वा न वा न पुनरीषद्गार्ग्यः कश्चित्, उच्यते, गार्ग्यत्वेन सह य एकार्थसमवेताः क्रियागुणास्तदपेक्षया जातेः प्रकर्षादियोगः, गार्ग्यतरो गार्ग्यकल्प ईषद्गार्ग्यो गार्ग्यपाश इति, यथा गोतरो गोकल्पो गोपाश इति ॥

# षष्ठी ।२।२।८॥

भाष्ये

वक्ष्यतीति । (भा)

[1]"न निर्धारणे" इत्यत्रेति शेषः ॥ उत्कर्षप्रतिद्वन्द्व्यर्थकापकर्ष-शब्दस्यानन्वयादाह

अपवाद इतीति । (कै)

अपकृष्यतेऽनेनोत्सर्ग इत्यपकर्षोऽपवाद इत्यर्थः॥

---

१ अ २ । पा २ । सू १० ॥

---

षष्ठी । षष्ठ्यन्तं समर्थेन सुबन्तेन सह प्राग्वत् । राजपुरुषः । कृद्योगा च षष्ठी समस्यत इति वाच्यम् । इध्मप्रव्रश्चनः । प्रतिपदविधाना चेति निषेधस्यायमपवादः । वस्तुतस्तु स निषेधोऽयं तदपवादश्चेत्युभयमपि न वक्तव्यमिति वक्ष्यते ॥

"षष्ठी" । 'कृद्योगा चेत्यादि' । 'कर्तृकर्मणोः कृती'ति कृच्छब्दोपादानेन वा विहिता सा कृद्योगा । 'इध्मप्रव्रश्चन इति' । ओव्रश्चूच्छेदने, करणे ल्युट् । 'पलाशशातन इति' । पलाशानि शात्यन्ते पात्यन्ते येन दण्डादिना स पलाशशातनः । किमर्थमिदमुच्यत इति' । सूत्रेण सिद्धिं मन्वानस्य प्रश्नः । 'प्रतिपदविधाना चेत्यादि' । यदा तस्य वक्तव्यस्यारम्भ, तदेदमपि वक्तव्यं, तस्य त्वनारभ्यतां तत्रैव वक्ष्यामः । अपकर्ष इति' अपवाद इत्यर्थः ॥

## प्रतिषेधविषये । (कै)

सर्पिषो ज्ञानमित्यादौ ॥

## कारकविशेषेति । (कै)

कर्तृकर्मणोरित्येवमित्यर्थः ॥

## इत्यादिप्रकरणमिति । (कै)

तत्र शेष इत्यनुवृत्तेरिति भावः ॥

## शेषलक्षणा (भा)

इत्यस्य शेषमात्रलक्षणामित्यर्थ इति तात्पर्यम् ॥

## समासनिवृत्त्यर्थमेवेति । (कै)

तत्तद्धातुयोगे उपात्तकारकातिरिक्तकारकाणां शेषत्वविवक्षाभावज्ञापनेऽपि चारितार्थ्यसंभवादिदं चिन्त्यम्। किञ्च लुगभाव एव कल्प्येत। यदि त्वेतद्वार्त्तिकबलात्समासाभावकल्पनं तदा तदावश्यकमेव। सूत्राण्यपि तत्रानुवादायावश्यकानीति न वक्तव्यं [1]"प्रतिपदविधाने"तीति चिन्त्यम्। किञ्च तस्य वचनस्य सत्त्वे [2]"द्वित्रसादृश्य" [3]"क्त्वोऽर्थप्रयोग" इत्यादिविषये ऽक्षाणां देवितेत्यादौ समस्ते [4]"नलोकेति" निषेधेन [5]"कर्तृकर्मणोरि"ति षष्ठ्यभावेन षष्ठ्यां समासनिषेधसिद्धिः। त्वद्रीत्या तु शेषग्रहणस्य तत्र निवृत्त्या

---

१ अ २ । पा २ । सू १० (वा) ॥ २ अ २ । पा ३ । सू ५८ ॥
३ अ २ । पा ३ । सू ६४ ॥ ४ अ २ । पा ३ । सू ६९ ॥
५ अ २ । पा ३ । सू ६५ ॥

समासः स्यादित्यपि चिन्त्यम्। तच्छब्देन द्रव्यपरामर्शे काकस्य कार्ष्ण्यमित्यादावतिप्रसङ्गमाशङ्क्याह

तच्छब्देनेति॥ (कै)

स्वात्मनीति। (कै)

स्वात्मन्येवाभेदे सावस्थिता न तु द्रव्ये इत्यर्थः॥ नन्वभेदस्याधाराधेयभावनियामकत्वाभावात्तत्स्थैरित्यनुपपन्नमिति शङ्कते

न चेति॥ (कै)

यद्यपि व्यपदेशिवद्भावेन तत्स्थैरिति वक्तुं शक्यम्। तथापि स न मुख्य इत्याह

मुख्यस्येति॥ (कै)

उत्तरयति

तस्मादविधानेति। (कै)

गुणमात्रशक्तशब्दमात्रप्रतिपाद्यगुणवाचकैः शब्दैरित्यर्थः॥ अत एवार्थस्य तत्स्थत्वमित्यग्रे वक्ष्यति। तदेवोपपादयति

इह केचिदिति॥ (कै)

द्रव्यान्निष्कृष्टाः। (कै)

भेदेनैव द्रव्यान्वयिनः। तदा हि गुणगतजातिः प्रवृत्तिनिमित्तम्॥

उपरञ्जकत्वम्। (कै)

स्वाभेदेन द्रव्यप्रत्यायकत्वम्॥

द्रव्येणैकत्वमिति। (कै)

जातिविशिष्टगुणप्रवृत्तिनिमित्तम् । अत एव ततो भावप्रत्ययेन गुणबोधः ॥

अर्थस्य च तत्स्थत्वमिति । (कै)

एवं च गुणिपरत्ववाचकशब्दाभाववत्त्वं तात्स्थ्यमिति फलितम् ॥

एवं तर्हीति । (कै)

तद्विशेषणैरित्यस्य तद्विशेषप्रतिपादकैरित्यर्थ इति भावः ॥ तीव्रादिशब्दैः समासप्रसङ्गमुपपादयति

यस्य गन्धेति ॥ (कै)

एवं तर्हीति । (कै)

तद्विशेषणैरित्यस्य तद्विशेषप्रतिपादकैरित्यर्थात्तीव्रादयः शुक्लादयश्च निषेधसूत्रस्य विषया इत्यनेन सूच्यते इति भावः ॥ भाष्ये

किमर्थमिदमिति । (भा)

इदमा व्यवहितमपि तत्स्थैरिति परामृश्यते । तदाह

गुणेनेति ॥ (भा)

केवलगुणेति । (कै)

घृतस्य तीव्र इत्याद्यपि केवलगुणवाच्येवेति भावः ॥ भाष्ये

एतदेवेति । (भा)

काकस्य कार्ष्ण्यमित्याद्येव ॥

यच्चेदमिति । (भा)

यत्त्विदमित्यर्थः ॥

सापेक्षमसमर्थमिति। (भा)

इतरसापेक्षत्वेन शुक्ला इत्यनेनानन्वयादसामर्थ्यमित्याशयः। तद्

ध्वनयन्नाह

शुक्लार्थेन संबन्धाभावादिति। (कै)

न तु तद्विशेषणैरिति वक्तव्यमितिभाष्ये प्रतिषेधविषयप्रदर्श-
नार्थमित्यादिः॥

---

# पूरणगुणसुहितार्थसदव्ययतव्यसमा-नाधिकरणेन। २। २। ११॥

---

[1]सत्त्वे निविशते (भा)

इत्यादि। वस्तुत इदं चिन्त्यम्। तस्य [1]"आकडार"सूत्रोक्तगुण-
वचनपदार्थसमत्वात्। तत्र [1]"बाधकः सर्वलिङ्गानामि"त्युक्तत्वाच्चाकस्य

---

१ सत्त्वे निविशतेऽपैति पृथग् जातिषु दृश्यते। आधेयश्चाक्रियाजश्च सोऽसत्त्वप्रकृतिर्गुणः॥ (४। १। ४४)।
२ अ १। पा ४। सू १॥

---

पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन॥ पूरणाद्यर्थैस्त्रिभिः सदादिभिश्च षष्ठी न समस्यते। पूरणे, सतां षष्ठः। अत्र पूरणार्थाः

---

"पूरणगुणसुहितार्थसदव्ययतव्यसमानाधिकरणेन"॥ 'प्रत्येकमिति'। पूरणादिभिरित्यर्थः। 'स्वरूपविधिरिति'। पूरणादीनामर्थपर्यन्तानां

कार्ष्ण्यमित्यादेरनुदाहरणत्वप्रसङ्गात्। तस्माद्व्याख्यानात् केवल-गुणवाची सन् यो गुणिबोधकः तत्प्रकृतिकभावप्रत्ययान्तप्रतिपाद्यानां गुणपदेन ग्रहणम् अर्थपदान्वयाच्च तद्बोधकशब्दमात्रग्रहणम्। एवं च प्राधान्यगौरवादौ प्रसक्तिरेव न॥

अवसितवृत्तिरिति। (कै)

---

प्रत्यया एव गृह्यन्ते न तु पूरणीभगादिशब्दा अपि। तेन कुम्भपूरणभव पटुबैरित्यादि सिद्धम्। अत्र च ज्ञापकं लोपेचेत्यादपूरणमिति सूत्र-प्रयोगः। पूरणाधिकारस्तु न गृह्यते। भागेन्प्रत्यये सति तदन्तेनापि निषेधस्य द्वितीयतृतीयेति सूत्रे भाष्य एव स्पष्टत्वात्। अत एव भिक्षा-द्वितीयमित्यादावन्यतरस्यां ग्रहणसामर्थ्यात्समास इत्युक्तम्। अत एव च "तान्युञ्छषष्ठाङ्कितसैकतानी" ति कालिदासस्य प्रमाद इत्याहुः। षष्ठ इत्याख्यातः षष्ठः। आख्यातव्यन्तादेरजिति वा समाधेयम्। गुणस्तेह "सत्वे निविशतेपैती" ति लक्षितो गृह्यते। केवलगुणस्य गुणोपसर्जनद्रव्यस्य च प्रतिपादकः शास्त्रिन्यायात्। काकस्य कार्ष्ण्यम्। ब्राह्मणस्य शुक्लाः। यदा ऽर्थात्प्रकरणाद्वा दन्तादि विशेष्यं निर्ज्ञातं तदेदमुदाहरणम्। कथं

---

चतुर्णामित्यर्थः, अत एव गुणशब्देन नादेशो ग्रहणं किं तर्हि सत्वे निविशतेऽपैतीत्यादिलक्षणलक्षितस्य गुणस्य ग्रहणं, नापि सञ्ज्ञोगुणप्रतिषेधे यस्य गुणस्य हि भावादिवत्प्रवृत्तिनिमित्तमात्रस्य ग्रहणं सामान्यादेरपि प्रसङ्गात्, नापि लोकप्रसिद्धस्य शुक्लादेरेव ग्रहणं कण्टकस्य तैक्ष्ण्यमि-त्यादेरपीष्टत्वात्, गुणशब्देन न केवलगुणवाचिनो गुणोपसर्जनद्रव्यवाचिनश्च शास्त्रिन्यायाश्रयेण गृह्यन्ते तत्र गुणस्य गुण्यपेक्षत्वात्केवलगुणवचनैर्गुणेन समासनिषेधः कण्टकस्य तैक्ष्ण्यमिति गुणवचनैस्तु तत्सम्बन्धिनो निषेधो

सामान्यशब्दस्यापि प्रकरणादिविशेषमात्रोपस्थापकत्वमित्यर्थः ॥ अनेनैतत्सूचयति वाक्यैकदेशन्यायेन शुक्ला इत्यस्य दन्ताः शुक्ला इत्यर्थः ॥ "षष्ठी"त्यस्य च षष्ठ्यन्तं समर्थप्रकृतिकसुबन्तेन समस्यते इत्यर्थः। तादृशं च न शुक्ला इति। पदमित्यसामर्थ्यमवस्थमेव। एतदभिप्रायेणैव पूर्वसूत्रे एतदेवोदाहरणमित्युक्तम्। अन्त्यं भाष्यं त्वेकदेश्युक्तिः। अनेन समासशङ्कावारणायाबुधानां यत्नः क्रियत इति

---

तर्हि गोसहस्रमिति। अत्राहुः। संख्यया नायं निषेधः शतसहस्रान्ताच्च निष्कात् कोशशतजनशतयोरुपसंख्यानम्। खारीशतमपि न ददातीत्यादि-मुनित्रयप्रयोगात्। अनित्यश्चायं गुणेन निषेधः। संज्ञाप्रमाणत्वात्, उत्तरपदार्थप्राधान्यमित्यादिनिर्देशात्। तेन करणपाटवम्। अर्थगौरवम्। बुद्धिमान्द्यमित्यादि सिद्धम्। चन्दनगन्ध इत्यादौ तु नायं निषेधः। तत्स्थैश्च गुणैरिति समासस्य प्रतिप्रसवात्। गन्धत्वेन प्रतीयमानो हि गन्धो न कदापि गुणिसमानाधिकरणः। किन्तु स्वप्रधानः। यस्तु वदति चन्दनमयं पिनष्टि गन्धानिति प्रयुज्यते स चन्दनत्वादिजातिनिमित्तको न तु गुणशब्दः। मालतीकुसुमादिष्वदर्शनादिति। एवं घटरूपमित्यादि। घटाभिशुक्लादिशब्दास्तु न तत्स्थगुणप्रतिपादकाः। तेन रूपेण प्रतीयमानस्य गुणिसामानाधिकरण्यदर्शनात्। एवं शौक्ल्यमित्यादावपि बोध्यम्। शौक्ल्यसौरभादिशब्दैर्हि शुक्लत्वसुरभित्वादिप्रकारक एव गुणबोधः।

---

ब्राह्मणस्य शुक्लादन्ता इति, न चात्र दन्तापेक्षया ब्राह्मणस्येति षष्ठी ततश्च शुक्लेनासंबन्धादप्रसङ्ग एव समासस्य, यदा तर्ह्यर्थात्प्रकरणाद्वा दन्ताद्यर्थ एव शुक्लादिशब्दस्य वृत्तिर्विज्ञाता भवति तदा तत्सम्बन्ध एव षष्ठीत्यस्ति समासप्रसङ्गः, 'शतसहस्रान्ताच्च निष्कात्' 'कोशशतयोजनशतयोरुपसंख्यानं' खारीशतमपि न ददातीत्यादि मुनित्रयप्रयोगाद् गोविंशतिरित्यादौ संख्यया

[१]"कर्मणि चे"ति सूत्रे वदता कैयटेन ध्वनितमेतत्। अन्यथा ब्राह्मणस्य ग्रामं गत इत्यर्थे ग्राममित्यस्य प्रकरणादिज्ञाने गत इत्यस्यैव वाक्यैकदेशन्यायेन तावदर्थत्वे समर्थात्समासापत्तिरिति स्पष्टं [२]"कर्मणि चे"ति सूत्रे भाष्ये॥ ननु ब्राह्मणस्य पच्यमित्यस्य ब्राह्मणस्यौदनं पच्यमित्यर्थावगमाद् ब्राह्मणस्य पाकापेक्षया कर्मत्व-कर्तृत्वाभावात् कर्तृत्वस्योक्तत्वाच्च षष्ठ्या अप्राप्तौ प्रतिषेधोऽस्त्विस्य-कृतेत्यत आह

१ अ २ पा २। सू १४॥ २ अ २। पा २। सू १४॥

तद्रूपापन्नस्य च द्रव्यसामानाधिकरण्यमस्त्येव शुक्लः सुरभिरित्यादाविति दिक्। सुहितार्थास्तृप्त्यर्थाः। फलानां सुहितः। करणस्यैव शेषत्वविवक्षया षष्ठी। न च न लोकेतिनिषेधः शंक्यः। तस्य कृद्योगलक्षणषष्ठीविषयत्वात्। इह सुहितार्थयोगे करणस्य शेषत्वविवक्षैव नियतेत्याहुरिति हरदत्तः। तत्राहुरित्यपरितोषोद्भावनम्। तद्बीजन्तु नियमे प्रमाणाभावः।

"नाग्निस्तृप्यति काष्ठानां नापगानां महोदधिः।
नान्तकः सर्वभूतानां न पुंसां वामलोचना"॥

इत्यादिप्रयोगाणां पाक्षिक्यापि शेषत्वविवक्षया सिद्धत्वात्। अत एव करणत्वविवक्षया तृतीयां भट्टिः प्रायुङ्क्त।

समासो न निषिध्यते, संज्ञाप्रमाणत्वादुत्तरपदार्थप्राधान्यमित्यादिप्रयोगदर्शनादनित्यो गुणेन निषेध इति करणपाटवं बुद्धिमान्द्यं यत्नगौरवमित्यादिभिर्ज्ञाङ्गिः। 'फलानां सुहित इति'। करणस्यैव शेषत्वविवक्षया षष्ठी, शेषत्वविवक्षैव च नियता सुहितार्थयोगे करणस्येत्याहुः, कृद्योगलक्षणाया एव षष्ठ्या निष्ठायोगे निषेधः। 'ब्राह्मणस्य कुर्वन्निति'। नेयं घटाद्यपे-

## आवर्जनवाचीति। (कै)

आवर्जनमङ्गीकारस्त्यागो वा इत्याहुः॥

## कर्मणि न भवतीति। (कै)

शेषषष्ठ्यन्तस्य नामार्थान्वये संभवति क्रियान्वयो नेति भावः। एतेन कर्मणः शेषत्वविवक्षायां षष्ठी सुलभेत्यपास्तम्। न १"लोके"-त्येतन्निषेधविषयेणाभिधानाच्छेषत्वविवक्षैव न भाष्यप्रामाण्यादित्यन्ये॥

---

१ अ २। पा ३। सू ६९॥

---

फलैर्नानाविधैस्तृप्तैः स्वादुशीतैश्च वारिभिः।
तर्पणानां भाजयमतीं पप्रच्छ कस्य पूरियम्"

इति। नन्वेवं षष्ठीसमासे निषिद्धेऽपि तृतीयातत्पुरुषेण फलतृप्त इति स्यादेवेति चेत्। इष्टापत्तेः। न चैवं निषेधवैयर्थ्यम्। स्वरे विशेषात्। तथाहि। षष्ठीसमासेऽन्तोदात्तत्वं स्यात् तृतीयासमासे तु थाथादिस्वरापवादस्तृतीयाकर्मणीति पूर्वपदप्रकृतिस्वरः। तृपिश्च सकर्मकोऽप्यस्ति। पितृन्‌तार्प्सीत्समर्मस्त बन्धुनीति भट्टिप्रयोगात्, तेनास्मात्कर्मणि क्तो नास्तीति न भ्रमणीयम्। फलतर्पणमित्यादौ तु स्पष्ट एव स्वरे भेदः। कारकात्परत्वेन कृदुत्तरपदप्रकृतिस्वरात्। सत्। द्विजस्य कुर्वन् कुर्वाणो

---

यथा षष्ठी ब्राह्मणस्य घटं कुर्वन्निति एवं ह्यसामर्थ्यादेव समासस्याप्रसङ्गः, किं तर्हि कुर्वन्निति किमुत्र उच्यते स हि कुर्वन् भवति ततो यथा ब्राह्मणस्य पाचक इति साक्षादेव पाचकेन सम्बन्धो न पुनर्गोदनद्वारेण तद्वदिहापीति द्रष्टव्यं, चोरस्य द्विषन्निति च सत उदाहरणम्, अत्र द्विषः शतुर्वावचनमिति पक्षे षष्ठी भवति। 'ब्राह्मणस्य कुर्वेति'। ब्राह्मणार्थं कुर्वेत्यर्थः,

ननु [1]"द्विषोऽमित्रे" इति विहितस्य न सत्संज्ञकत्वं [2]"लटः" इति सूत्रविहितयोरेव तत्संज्ञाविधानादित्याशङ्क्याह

[3]तौसदिति ॥ (कै)

अस्य शतुर्वादेशत्वाभावादाह

तृन्निति ॥ (कै)

अस्योदाहरणत्वं स्थापयति भाष्ये

१ अ ३। पा २। सू १३१॥ २ अ ३। पा २। सू १२४॥
३ अ ३। पा २। सू १२७॥

वा। किंकर इत्यर्थः। शेषे षष्ठी। चोरस्य द्विषन्। इह द्विषः शतुर्वा-वचनमिति पाक्षिकी कर्मणि षष्ठी। अव्ययम्। ब्राह्मणस्य कृत्वा। तादर्थ्य-रूपसम्बन्धस्य सामान्यरूपेण विवक्षायां षष्ठी। ब्राह्मणसम्बन्धिनी क्रिये-त्यर्थः। पुरा सूर्यस्योदेतोरित्यप्यव्ययोदाहरणम्। इह कर्त्तरि षष्ठी। अव्ययप्रतिषेधे तोसुन्कसुनोरप्रतिषेध इति वचनात्। अत्र सत्तृभ्यां साहचर्यात्कृदव्ययेनैव समासो निषिध्यते। येन तदुपरीत्यादि सिद्धमिति रक्षितः। तथा च भट्टिप्रभृतयः प्रयुञ्जते। यत्कृतेरौक्षिराट्सोमः। आदेयाः किंकृते भोगाः कुम्भकर्ण त्वया विना, भवत्कृतेखञ्जनमञ्जुलाक्षीति, तत्पाणिमात्मोपरि पातुकन्तु, किमुतदन्तखभौ भिषजौ दिव इत्यादि च।

सम्बन्धसामान्यरूपेण विवक्षितत्वात् षष्ठी पुरा सूर्यस्योदेतोरिति चोदा-हरणम्, अत्र ह्यव्ययप्रतिषेधे तोसुनोरप्रतिषेध इति कर्त्तर्येव षष्ठीति एवं वृक्षस्योपरीत्यादिकमप्युदाहरणम्। 'तव्यता सानुबन्धकेनेति'। निरनु-बन्धकग्रहणे न सानुबन्धकस्य ग्रहणमिति भावः। 'ब्राह्मणकर्त्तव्यमिति'। कर्त्तरि षष्ठ्याः समासः कृदुत्तरपदप्रकृतिस्वरेणान्तस्वरितमेतत्। निरनुबन्ध-

वक्ष्यत्येतदिति ॥ (भा)

इत्यादिन्यपीति । (कै)

सामर्थ्यात् सदव्ययमेव गृह्यते । अन्याव्ययैः सति सामर्थ्ये समास इष्ट एवेति भाष्याशयमाहुः ॥

पूर्वनिपातानियमः स्यादिति । (कै)

---

तथा "अनेकमन्यपदार्थे" इति सूत्रे सर्वपश्चादिति भाष्यप्रयोगोऽप्येतदनुकूलः । कैयटहरदत्तौ तु अव्ययप्रतिषेधे वृत्तस्योपरीत्युदाहरन्तौ सदव्ययेनापि निषेधं मन्येते तत्तु भट्टिश्रीहर्षादिप्रयोगाणां प्रतिकूलम् । यद्वा । अस्मिन्पक्षे सच्छब्दः सम्पदादिक्विबन्तः कार्यपरः । ततश्चतुर्थी । आत्मन उपरि पातुक इति विग्रहः । तस्यां यन्मध्यन्तरेत्यर्थे "सप्तमी शौण्डैरि" ति सूत्रोक्तरीत्या सप्तमीतत्पुरुषोऽव्ययीभावो वेति दिक् । तव्य । आशयस्य-कर्तव्यम् । निरनुबन्धकस्य सूत्रे ग्रहणात्तव्यता समासो भवत्येव । स्वकर्तव्यम् । स्वरे भेदः । गतिकारकोपपदादिति कृदुत्तरपदप्रकृतिस्वरः । तत्र तव्यतस्तित्त्वेनान्तस्वरितता । तव्यस्य त्वाद्युदात्तत्वान्मध्योदात्तं पदमिति । समानाधिकरणेन । तक्षकस्य सर्पस्य । विशेषणसमासस्त्विह बहुलग्रहणान्नेत्युक्तम् । स्यादेतत् । इह षष्ठीसमासः प्राप्नोत्येव न । बाह्यसम्बन्धापेक्षा ह्ययं षष्ठी । तथा च कटोऽपि कर्म भीष्मादयोऽपीति न्यायेन द्वयोरपि षष्ठ्यन्तयोर्विशेषणविशेष्यभावेनान्वये सति पश्चात्प्रातिपदिकार्थमात्रयोः पार्ष्णिकः सम्बन्धो वाच्यः । तथा च तक्षकस्येति सर्पस्येति च परस्परमसमर्थं कथं

---

केन तु समास उत्तरपदं मध्योदात्तं स्यात् सोयं स्वरार्थस्तव्येन निषेधः । 'शुकस्य माराविदस्येति' । मा रावीत्याहेति माराविकः, 'तदाहेति माशब्दादिभ्य उपसंख्यानमिति' ठक् शब्देन क्रियायाः प्रतिषेधको माराविकः, संज्ञैषा शुकविशेषस्य, क्वचित्तु माराविदस्येति पाठः, तत्र माराविशब्दं

उपसर्जनत्वस्यान्वर्थतामाश्रित्य षष्ठीसमासेऽपि तन्नियमसंभवा-
दुपसर्जनसंज्ञासूत्रे स्वयमपि तथैवोक्तेश्च चिन्त्यमेतत्। तस्माद्विशेषण-
समासोऽयम् बाहुलकादित्येव तत्त्वमिति कश्चित् तन्न। अर्धपिप्पली-
त्याद्यनुरोधेन तस्या अन्वर्थत्वाश्रयणमशक्यमित्याशयात्॥

विशेषणसमासे च वचनसामर्थ्यादिति। (कै)

---

समस्यताम्। अत एव नीलोत्पलस्य गेहमद्रोभत इत्यादावपि प्रथमान्तयो-
र्विशेषणसमासे ततः षष्ठीतिन्याय्यं न तु षष्ठ्यन्तयोर्विशेषणसमासः।
उक्तरीत्या ऽसामर्थ्यात्। किं च यथा चित्रगुरित्यादौ सम्बन्धस्याभिहित-
त्वात्प्रथमा तथेहापि षष्ठ्यन्तयोः समासे ततः प्रथमैव स्यान्न तु षष्ठी।
उच्यते। कट एव कर्म भीष्मादयस्तु तत्सामानाधिकरण्यमात्रात्तद्विभक्तिं
लभन्त इति पक्षे इदं बोध्यम्। समानाधिकरणेन निषेध एव चैतत्पक्ष-
ज्ञापकः। अत एव विशेषणविभक्तिः साधुत्वार्थेत्युद्घोषोऽपि सङ्गच्छते।
न चैवमपि समासात्षष्ठी न स्यादिति वाच्यम्। पञ्चकपक्षे द्वितीयादेरि-
वोपपत्तेः। सकलविभक्तिसाधारणेन कर्मधारयेणान्यतरस्य स्फुटमनभि-
धानात् एवमेव च वैयधिकरण्यस्थले सर्वेषां गतिः। तथाहि। राज्ञः
कुमार्या राजकुमार्या इति षष्ठ्यन्तस्य समासे पूर्वनिपातानियममाश-
ङ्क्योपसर्जनसंज्ञाया अन्वर्थतामाश्रित्य समाहितमाकरे। न च तत्र
त्वदुक्तस्यासामर्थ्यस्योक्तिसम्भवोऽपि, येन प्रथमान्तमेव समस्येत। तथा च

---

ददातीति मारविदः, स एवार्थः। 'किं च स्यादिति'। भवितव्यमेवात्र
विशेषणसमासेन तत् षष्ठी समास एवास्तु को दोष इतिप्रश्नः, 'पूर्वनि-
पातानियमः स्यादिति'। द्वयोरपि प्रथमानिर्दिष्टत्वेनोपसर्जनत्वादिति
भावः। ननु विशेषणसमासेऽपि द्वयोरपि यत्र विशेषणविशेष्यभावस्तत्रैव-

[1]"पूर्वापरप्रथमचरमेति" सूत्रे समानेत्यादिवचनसामर्थ्यादित्यर्थः। एवं च षष्ठीसमासे तदप्रवृत्तौ मानाभावः। न चैवं बहुव्रीहिरुच्छिद्येत। शेषग्रहणसामर्थ्येन तत्राप्यस्याप्रवृत्तेः। न च सुन्दरपाचक इत्यादौ तस्य सावकाशता। एवं तर्हि समानेत्यादिसामान्यापेक्षं यत्र समानाधिकरणानां विशेषविहितः समासः तत्रैतदप्रवृत्तिः समानादेस्य कृदन्तेन न समासोऽनभिधानादित्याशयः। केचित्तु [2]"प्रथमानिर्दिष्टमिति" सूत्रभाष्योक्तरीत्या [3]"षष्ठी"तिसूत्रे-

१ अ २। पा १। सू ५८॥ २ अ १। पा १। सू ४३॥
३ अ २। पा २। सू ८॥

राज्ञः कुमारी कुमार्यै इत्यादय एव विग्रहा इति उपसर्जनसंज्ञाविधायकयोः सूत्रयोः काशिकादौ स्पष्टम्। "अनेकमन्यपदार्थे" इति सूत्रे "तत्पुरुषे तुल्यार्थ" इति सूत्रे च भाष्यकैयटयोरपि स्पष्टमेवेदम्। तथा च प्रथमान्तेन विग्रह इति नियमाभावात्सर्वत्र तत्पुरुषोपरि द्वितीयादिविभक्तयः पक्षकपक्षवदेवोपपादनीया इति तत्त्वम्। राजपुरुषादौ सङ्ख्याया इवोत्तरपदार्थप्रविष्टसम्बन्धस्यापि वृत्तावप्रवेशाच्च। प्रयोगार्हे विग्रहे परं समासोत्तरविभक्तिसजातीयायाः प्रयोगात्। पचन्तीति पाचका इतिवत्। वाक्यसंस्कारपक्षे ऽलौकिकेऽपि बहुवचनात्मकाद्यादिकल्पनाया एव न्याय्यत्वादिति दिक्। यत्तु वृत्तावुदाहृतं **शुकस्य माराविकस्य राज्ञः पाटलिपुत्रकस्येति**। तत्र मारावीत्याहेति माराविकः। "तदाहेतिमा-

शमतक्तेनापि समासे विशेषणमिति प्रथमानिर्देशो द्वयोरपि तुल्यः, अथ तत्राप्रधानमुपसर्जनमार्थं चाप्राधान्यमिति द्व्यगुणादिषु तेन प्रकारेण व्यवस्था षष्ठी समासेऽपि तथैव व्यवस्था भविष्यति तस्मात्तत्र प्रत्यदाहरणं

येन सुबन्तेन समासस्तदर्थनिरूपितसंबन्धार्थकषष्ठ्येव लभ्यते तादृश-
मेव च सामर्थ्यं षष्ठीसमासप्रवृत्तौ निमित्तम्। न चेदं सामर्थ्यं
प्रकृतेऽस्ति तच्च इत्याशयेनाह

**असामर्थ्याद् न भविष्यतीति ।** (भा)

एवं च प्रत्याख्यातं समानाधिकरणग्रहणम् । अग्रिमभाष्यं त्वेत-
दाशयानभिज्ञपूर्वपक्षिसिद्धान्तिनोरेकदेशिनोरुक्तिपरमित्याहुः ॥

---

शब्दादिभ्य उपसंख्यानाम्" इति ठक् । शब्दनक्रियायाः प्रतिषेधको मारा-
विकः । माराविदस्येति पाठे मारादिशब्दं ददातीति स एवार्थः । एवं
पाटलिपुत्रे भवः पाटलिपुत्रकः । इत्थंस्थिते यदीह समासोनिष्टः स्यात्तदेदं
समानाधिकरण इत्यस्योदाहरणं सङ्गच्छेत । समास इष्ट इति तु वदता
तेनैव नेदमुदाहर्तुं युक्तम् । यत्तु तत्रैव समर्थितम् । षष्ठीसमासे सति
पूर्वनिपातानियमः स्यात् । विशेषणसमासे तु विशेषणस्यैव पूर्वनिपातः
सिध्यतीति । तत्रेदं वक्तव्यम् । विशेषणविशेष्यभावस्याव्यवस्थितत्वेनातिप्रसङ्गे
प्राप्ते ऽप्रधानमुपसर्जनम् आर्थं चाप्राधान्यमित्यादिक्रमेण द्रव्यगुणादिशब्देषु
व्यवस्थेष्यते । तत्र षष्ठीसमासेऽपि सुवचमिति किन्तन्निषेधेनेति । वस्तुतस्तु
गोधेनोः भोज्योष्णस्य कुमारश्रमणाया गोगर्भिण्या इत्यादीनीहोदाहा-
र्याणि । पोटायुवतीत्यादीनां विभक्त्यन्तरे विशेषणसमासं बाधित्वा चरि-
तार्थानां परेण षष्ठीसमासेन बाधापत्तेः । तथा च विशेषणस्यैवोपसर्जन-
तया पूर्वनिपातेऽप्यनिष्टं स्यादेवेत्यवधेयम् ॥

---

तच्छाकः सर्प इति तयोः षष्ठ्यन्तयोः समासप्रसङ्ग एव दोषः, तन्निवृत्तये च
प्रतिषेध इति वाच्यं, तदिह किं च स्यादित्यादिकमेवानुपपन्नम् उदाहरणं
तूपपन्नं यदि माराविकशब्दः संज्ञा, अथ सोऽपि योगवृत्तिः, तर्हि तदप्यनु-
पपन्नम्, एवं पाटलिपुत्रकेऽपि द्रष्टव्यम् ।

# कर्मणि च । २ । २ । १४ ॥

दोषदर्शनादिति । (कै)

पक्षद्वयेऽपि दोषदर्शनादित्यर्थः ॥

क्वचित्तु तृजकाभ्यामिति । (कै)

[१]'तृजकाभ्यामि'त्यस्य कर्त्तर्यर्थतृजकाभ्यामित्यर्थे इदम् ॥

[१]"कर्त्तरिचे"त्यस्यैवायमर्थ इति वृत्तिमते आह

कर्त्तरि चेति । (कै)

अन्यैस्त्वनुपपदकृदन्तैः शेषषष्ठ्या समासो भवत्येव । गङ्गाधर-भूधरादौ स्वरेऽपि न विशेषः । उभयथाप्यन्तोदात्तत्वात् । न च [२]"गस्थकनि" गाथकशब्देन साधां गायक इत्यर्थे समासानापत्तिः । शेषषष्ठ्या समासेऽपि स्वरे विशेषादिति वाच्यम् । अकर्त्तरीत्यस्य "तृजकाभ्यां कर्त्तरीति" सूत्रनिर्दिष्टभिन्ने नेत्यर्थात् कर्मणीत्यस्य षष्ठीविशेषणत्वे कनेत्यस्याचामनुवृत्तिरेवेति बोध्यम् ॥ भाष्ये

१ अ २ । पा २ । सू १५ ॥ २ अ २ । पा २ । सू १६ ॥
३ अ ३ । पा १ । सू १४६ ॥

कर्मणि च ॥ चकार इतिशब्दार्थः ॥ कर्मणीतिशब्दमुच्चार्य विहिता परिशेषिता वा या षष्ठी सा न समस्यते । चित्रकृत्वान्दोहो ऽगोपेन । यद्यनेन कर्मषष्ठीमात्रं न समस्यते इत्यभिप्रेतं स्यात्तर्हि तृजकाभ्यां विषेधं

"कर्मणि च" ॥ 'उभयप्राप्तौ कर्मणीति' । अनेकार्थत्वान्निपाता-नामितीत्यर्थे चशब्दोयं तेन कर्मणीत्युच्चार्य या षष्ठी विधीयते सा न समस्यतइत्यर्थः । यदि च या काचन कर्मणि षष्ठी गृह्येत 'कर्तरि चेति' निषेधं न कुर्याद् अनेनैव सिद्धत्वात् साधु पयसः पानमिति, कर्मणि च

तृजकाभ्यां चेति। (भा)

अस्यैव कर्त्रर्थतृजकाभ्यामित्यर्थ इति भावः॥

पारंपर्येणेति। (कै)

भुजेरोदनेनौदनस्य ब्राह्मणेनेतीत्यर्थः॥

भवति वै इति। (कै)

ब्राह्मणस्य शुक्ला इत्यत्रोक्तो न्यायः॥

समासशङ्कानिवारणायेति। (कै)

अनेन तन्न्यायाश्रयणेऽपि पूरणेतिसूत्रोक्तमदृीत्या वस्तुतः सामर्थ्यं नास्त्येवेति सूचयति। तदाह

अबुधानामिति॥ (कै)

अतिप्रसङ्ग इति। (कै)

अन्यत्राप्येवं न्यायैः समासापादनसंभवात् तत्रापि प्रतिषेधो वक्तव्य इत्यर्थः॥ भाष्ये

ब्राह्मणस्य गत (भा)

इत्यादेर्ब्राह्मणस्य ग्रामं गत इत्यादिक्रमेणार्थः॥

इत्याद्युदाहरणमिति। (कै)

"ब्राह्मणस्य भुक्तो ब्राह्मणस्य गत" इति पूर्वोक्ते तु असामर्थ्यादेव समासो न भवतीति बोध्यम्॥

---

नारभेत। यत्र हि कर्तरि तृजकौ तत्र कर्मणिषष्ठ्याभाव्यम्। शब्दानुशासनमित्यादौ यथा न समासनिषेधस्तथोक्तं पस्पशायाम्॥

---

येन संस्पर्शादिति नित्यसमासार्थवचनमिति वक्ष्यति, तत्र पयः पानं सुखमित्युदाहरिष्यते, इदं तु शरीरसुखस्याविवक्षायां रोगाद्यभिभूतो ऽप्यनुवन्नेव यदा साधु पिबति तदा द्रष्टव्यम्॥

# नित्यं क्रीडाजीविकयोः।२।२।१७॥

**प्रतिषेधे सिद्ध इति।** (कै)

जीविकाविषये तृजकाभ्यामित्यनेन 'कर्त्तरि चे'त्यनेन वेति भावः॥

**नित्यप्रतिषेध इति।**

---

१ अ २। पा २। सू १६॥

---

नित्यं क्रीडाजीविकयोः॥ एतयोरर्थयोरकेन नित्यं षष्ठी समस्यते। उद्दालकपुष्पभञ्जिका। क्रीडाविशेषस्येयं संज्ञा। संज्ञायामिति भावे ण्वुल् पुष्पाणामिति कर्मणि षष्ठी। जीविकायाम्। दन्तलेखकः। तत्र क्रीडायां विकल्पे प्राप्ते जीविकायां कर्तरि चेति निषेधे प्राप्ते वचनम्। जयादित्यस्तु तृजकाभ्यामिति सूत्रे कर्तरीत्येतदनुवृत्तायाः षष्ठ्या विशेषणं। तृजुत्तरार्थं इत्युक्त्वा कर्तरि चेति सूत्रे कर्तृग्रहणं तृजकयोर्विशेषणतया व्याख्याय नित्यंक्रीडेति सूत्रे अकप्रत्ययमेवोदाजहार। तत्रेदं वक्तव्यम्। प्रथमसूत्रेकर्तृग्रहणं तृजकयोरेव विशेषणं युक्तम्। तयोः श्रुतत्वात्। न तु षष्ठ्याः। एवं च तृजुत्तरार्थं इत्यपि न कल्प्यम्। अकस्यैव चोत्तरत्रानु-

"नित्यं क्रीडाजीविकयोः"॥ 'नेति निवृत्तमिति'। नित्यग्रहणाद्- महाविभाषाधिकाराद्विकल्पेनैव पाक्षिकस्य प्रतिषेधस्य सिद्धत्वान्नित्यः प्रतिषेधो भविष्यति किं नित्यग्रहणेन। 'ण्वुच् क्रीडाजीविकयोर्नास्तीति'। वामनस्त्वके जीविकार्थेत्यत्राकइति किं रमणीयकर्तेति जीविकायां ण्वुचं प्रत्युदाहरिष्यति स मन्यते मा भूत्क्रीडायां ण्वुच् लक्षणाभावात्, जीवि-

प्रतिषेधवाक्यैस्तद्विषये व्यपेक्षाया एव बोधनादिति भावः॥ विधित्वे तु जीविकायां "कर्त्तरि चे"ति निषेधे प्राप्ते ऽस्यारम्भात्तद्विषये नित्यमित्येतत्स्पष्टार्थकं क्रीडायां तु विकल्पे प्राप्ते ऽस्यारम्भात्सामर्थ्यादेव नित्यत्वं सिद्धमिति बोध्यम्॥

---

---

कृत्सिन्नं तृन्नचः, असम्भवात्। तथा च सूत्रद्वयस्य व्यत्यासेनार्थं उचित इति। वामनस्तु अके जीविकार्थं इति सूत्रे अक इति किम्। रमणीयकर्त्तेति। जीविकायां तृचं प्रत्युदाजहार। तस्यायमाशयः। मा भूत्क्रीडायां तृच। लक्ष्याभावात्। जीविकायान्तु ण्वुल्तृचाविति वृत्तौ तृजपि सुलभ एवेति। एतन्मते नित्यं क्रीडेत्यत्र तृज्ग्रहणासम्बन्धेऽप्यङ्गावारणार्थं तृजुत्तरार्थं इत्यादि कुचेष्टादरणमित्याहुः॥

---

कायां तु ण्वुल्तृचाविति वृत्तिव तृच् कस्मान्न स्यादिति, अन्ये तु तदनुसारेणेदमप्येवं व्याचक्षते क्रीडाजीविकयोर्नास्तीति द्वयोर्नास्ति किन्त्वन्यतरस्मिन्नेवेत्यर्थः। 'एक एवोदाह्रियते इति'। उभयत्रेत्यर्थः। उद्दालकपुष्पभञ्जिकेत्यादौ संज्ञायामिति ण्वुल्, नित्यग्रहणमुत्तरार्थं नहि कारकेण क्रीडाजीविकयोरवगतिरस्ति, क्रियाकारकसम्बन्धमात्रावगमात्॥

# कुगतिप्रादयः। २। २। १८॥

ननु गतिग्रहणेन प्रादीनां विशेषणात्कर्मप्रवचनीयेषु प्राप्त्यभावादनर्थकः प्रतिषेधोऽत आह

प्रादिग्रहणस्येति॥ (कै)

प्रत्यादिविषय एवेति। (कै)

व्याख्यानादिति भावः॥

सामर्थ्यसद्भावादिति। (कै)

सूत्रगतसत्त्वपात्वद्योतकत्वादिति भावः॥

द्वितीयापि न स्यादिति। (कै)

---

कुगतिप्रादयः॥ कुशब्दो गतिसंज्ञाः प्रादयश्च समर्थेन नित्यं समस्यन्ते। कुः पापार्थे। कुपुरुषः नित्यसमासविषयस्याप्यस्य पूर्वपदप्रकृतिस्वरार्थमव्ययत्वमिष्यते। तथा च वार्त्तिकम्। अव्यये नञ्कुनिपातानामिति। तस्मादयं स्वरादिषु बोद्धव्यः। स एव चेह गृह्यते न तु पृथिवीवचनः। गत्यादिसाहचर्यात्। गतिः। उरीकृत्य। प्रादिग्रहणमगत्यर्थम्। तद्विषयविभागार्थानि तु बहूनि वार्त्तिकानि। तथाहि। दुर्निन्दायाम्। दुष्पुरुषः। स्वती पूजायाम्। सुपुरुषः। अति पुरुषः। आङीषदर्थे। आ-

---

"कुगतिप्रादयः"॥ 'कुशब्दोऽव्ययं गृह्यत इति'। स्वरादिष्वपठितोऽप्ययं पठितव्य इति भावः। नित्यसमासविषयस्यास्य पूर्वपदप्रकृतिस्वरार्थमव्ययत्वं, यथा वक्ष्यति अव्यये नञ्कुनिपातानामिति वक्तव्यमिति। 'न

१"कर्मप्रवचनीययुक्त" इति युक्तग्रहणादिति भावः ॥

## व्यवहितानामिति । (कै)

स्वान्वययोग्यार्थवाचकपदापेक्षया पदान्तरेण व्यवहितानामित्यर्थः ॥

## समास इति । (कै)

अव्यवहितपदैरित्यर्थः ॥ सामर्थ्याभावमाशङ्क्याह

## याहीति ॥ (कै)

## ऐकस्वर्यमिति । (कै)

अव्ययपूर्वपदप्रकृतिस्वरे सति मन्द्रस्य पृथगुदात्तत्वं न स्यादित्यर्थः । यद्यपि वेदे आपाद्यं रूपं नास्ति तथापि एवं जातीयके लौकिकप्रयोगे दोष इत्यर्थः । वेदेऽपि तस्यासाधुत्वशङ्कानिवृत्तिः फलमित्यन्ये ॥

---

१ अ २ । पा १ । सू ८ ॥

---

पिङ्गलः । प्रायिकं चैतदुपाधिवचनम् । अन्यथा ईषदर्थे चेति कोः कादेशविधानमनुपपन्नं स्यात् । कोष्णं दुष्कृतं । दुरत्र कृच्छ्रार्थे । अनभिधानात्तु भूते खल् न भवति । सुष्टुतम् । सुशब्दोऽतिशये न तु पूजायाम् । अत एवोपसर्गनिबन्धनं षत्वम् । अतिस्तुतम् । अतिरतिक्रमणे चेति कर्मप्रवचनीयत्वा-

---

द्रव्यवचन इति' । पृथिव्यादिद्रव्ये यो वर्त्तते स न गृह्यत इत्यर्थः । 'दुर्निन्दायामिति' प्रशस्ते द्वेषान्निन्दा भवति पापं तु वस्तुस्थित्या गर्हितमिति । द्वयोरप्युपादानम् । 'प्रायिकमिति' । अन्यथेषदर्थे चेति कोः कादेश-

**सामर्थ्यमेव नास्तीति ।** (कै)

एकक्रियान्वयिलक्षणसामर्थ्यग्रहणे हतः सर्वो मृत्तिकयेत्यादौ समासापत्तिरिति भावः ॥ दध्योदनादौ तु क्रियान्तर्भावेण सामर्थ्यमेवं च वचनद्वयमपि प्रत्याख्यातमिति बोध्यम् ॥ वृत्तौ गतशब्दाप्रयोगे हेतुमाह

**वृत्तिविषय इति ।** (कै)

पदैकदेशन्यायेनेति भावः । प्रगतः शिष्ये प्राप्तः गुरुं प्राप्तः पितामहस्य पितृत्वं प्राप्त इति चार्थः ॥ पूजामित्युपलक्षणमित्याह

**उपाधीनामिति ॥** (कै)

**अतिसिक्तमेवेति ।** (कै)

तथा प्रयोगदर्शनादिति भावः । कर्मप्रवचनीयत्वाद्व षत्वाभावः ॥

---

भावः । प्रादयो गताद्यर्थे प्रथमया ॥ वृत्तिविषये गताद्यर्थवृत्तयः प्रादयो गतित्वाभावेऽपि प्रादिग्रहणेन समस्यन्त इत्यर्थः प्रगत आचार्यः प्राचार्यः । प्रान्तेवासी । अत्यादयः क्रान्ताद्यर्थे द्वितीयया ॥ अतिक्रान्तो मालामतिमालः । अवादयः क्रुष्टाद्यर्थे तृतीयया ॥ अवक्रुष्टः कोकिलया अवकोकिलः ।

---

विधानमनुपपन्नं स्यात् । 'दुष्कृतमिति'। दुर्निन्दायामिति विषयनिर्देशो गतित्वेन प्राप्तस्यापि समासस्य नियामकः स्यादिति मन्यते, यदा तु प्रादिग्रहणप्राप्तस्यैव नियामकस्तदा गतित्वादेवात्र सिद्धः समासः, दुःख कृच्छ्रार्थोऽनभिधानात्कृतेः खल् न भवति, दुष्कर इत्यादावुपपदसमासः, आमन्त्रैरिन्द्र हरिभिरित्याङो मन्त्रं प्रत्यगतित्वादनीषदर्थत्वाच्च समासाभाव इत्येक-

**अर्थान्तरेऽपि** (कै)

इत्यस्य समासो भवतीत्यनेनान्वयः॥ तत्र हेतुः

**गतित्वादिति॥** (कै)

**दुष्कृतमिति।** (कै)

दुःखक्रार्थे। अनभिधानात्तु भूते खल् न भवति॥

**सत्यपीति।** (कै)

अपिना वस्तुतः सामर्थ्यमेव नास्तीति ध्वनितम्॥

**अगतित्वादिति।** (कै)

मद्रस्य क्रियात्वाभावादिति भावः।

**ईषदर्थेऽपीति।** (कै)

अत एवोत्तरपदाधिकारे॥

---

पर्यादयो ग्लानाद्यर्थे चतुर्थ्या। परिग्लानोऽध्ययनाय पर्यध्ययनः। अलं कुमार्यै अलंकुमारिः। नित्यसमासत्वेऽपि चतुर्थीविधानसामर्थ्यात्पक्षे वाक्यमिति रक्षितः। एतेनैकविभक्तिचापूर्वनिपात इति सूत्रे अलंकुमारिरिति भाष्यं पर्यादयोग्लानाद्यर्थे इति समास इति कैयटवचनं च व्याख्यातम्। तदेव भाष्यमनित्यतायां ज्ञापकमिति वास्तु। वस्तुतस्तु नेहानेन समासः। अलमो ऽप्रादित्वात्। प्रादिसमासस्य त्वयं प्रपञ्च इत्याकरः। किन्तु द्विगु-

---

त्वयं न भवति। 'सुस्तुतमिति'। सुप्रभृतोऽतिशये न पूजायाम्, अत एवोपसर्गनिबन्धनं षत्वम्। 'अतिस्तुतमिति'। 'अतिरतिक्रमणे चे'ति कर्मप्रवचनीयत्वात्षत्वाभावः॥ 'प्रादयो गताद्यर्थे इति'। वृत्तिविषये गताद्यर्थवृत्तयः प्रादयो गतित्वाभावेऽपि प्रादिग्रहणेन समस्यन्त इति। 'पर्यध्ययन इति'। परिश्रान्तोऽध्ययनार्थमित्यर्थः। 'वाससी इवेति'। वसोर्णिचेऽसुन्प्रत्ययान्तो

ईषदर्थ इति । (कै)

कोः कादेशविधानं चरितार्थं पृथ्वीवाचकस्य व्यावृत्तये त्वेतद्वचनम् । साहचर्यं तु न सर्वत्र व्यवस्थापकमिति भावः ॥ सहसुपेति योगविभागेन सिद्धे इदं व्यर्थमित्यत आह

सहसुपेत्यत्रेति । (कै)

एतेन नित्यार्थमिदमित्यपास्तम् । तद्भाष्यप्रामाण्येनेह वार्त्तिकेषु नित्यपदासंबन्धादिति भावः ॥ वस्तुतस्तत्पुरुषसंज्ञार्थमत्र वचनानां पाठः । अत एव पुनर्गव इत्यत्र टच् । तत्र करणादतत्त्वमपि लक्ष्यानुरोधेन व्यवस्थेत्याहुः ॥

अत्र पूर्वमिति । (कै)

अनुना समासात्पूर्वमित्यर्थः ॥

त्रयाणां पदानामिति । (कै)

गतिविशिष्टतिङन्तेनाव्ययस्य समासविधानादित्यर्थः ॥

---

ग्रामापन्नालम्पूर्वेत्यनेन ज्ञाप्यमानो ऽलंपूर्वस्तत्पुरुषः पर्याप्तिग्रहणात्पर्याप्त्यर्थेनापि भवन्नभिधानानुरोधाच्चतुर्थ्यन्तेनैव भवति । तस्य चानित्यसमासत्वं निर्बाधमेवेत्यवधेयम् । निरादयः क्रान्ताद्यर्थे पञ्चम्या ॥ निष्क्रान्तः कौशाम्ब्या निष्कौशाम्बिः । प्रादिग्रहणस्य चागत्यर्थत्वादतिप्रसङ्गे प्राप्ते कर्मप्रवच-

---

वासःशब्दः, वस्त्रशब्दः ष्ट्रन्प्रत्ययान्तः, द्वावपि नित्याद्युदात्तौ । 'प्रादिप्रसङ्ग इति' । सूत्रे प्रादिग्रहणमगत्यर्थमिति कर्मप्रवचनीयानां प्रतिषेध उच्यते प्रत्यादिविषयश्चायं निषेधः स्वत्योस्तु समासो भवत्येव । 'वृक्षं प्रतीति' । कर्मप्रवचनीयेन योगाद् द्वितीयावत्समासस्यापि प्रसङ्गः, उदा-

[1]उदात्तवता (भा)

इत्यनेन तु न [2]विना समासः। निघाते तु तस्योदात्तवत्त्वाभावादिति भावः॥

[3]तत्पुरुषे तुल्यार्थेति। (कै)

समपाद इत्यादौ पूर्वपदप्रकृतिस्वरेण पूर्वपदानुदात्तत्ववारणाय उदात्तस्वरितग्रहणानुवृत्त्या तद्योगिपूर्वपदस्यैव [4]"बहुव्रीहौ प्रकृत्ये"-त्यत्र ग्रहणादिति भावः॥

[5]पूर्वपदत्वाभावादिति। (कै)

[5]विनाऽपत्तदित्यस्य न समासः। किं तु विशिष्टेनाचक्षदित्यनेनानोरित्याशयः। अन्यथा वेददात्तत्वे [6]उदात्तयणः परत्वादकारस्य स्वरितत्वं स्यादिति भावः॥

---

१ उदात्तवता तिङा गतिमता च तिङाव्ययम् ( अत्रैव वार्त्तिकम् )॥
२ "विना" इति तृतीयान्तं पदम्॥
३ अ ६। पा २। सू २॥ ४ अ ६। पा २। सू १॥
५ अत्रापि "विना" इति तृतीयान्तं पदम्॥
६ अ ६। पा १। सू १७४॥

---

नीयानां प्रतिषेधो वक्तव्यः। वृत्तम्मति विद्योतते विद्युत्। कथन्तर्हि अधीत्येति। इह हि अधिपरी अनर्थकाविति कर्मप्रवचनीयत्वम्। उच्यते। अध्यापकधूर्तैरिति निर्देशादनित्यः प्रतिषेधः। अत एव सुस्तुतमतिस्तुतमिति सत्वाभावेऽपि समास उदाहृतः। स्वतो पूजायामिति वचनाद्वा तत्सिद्धिः॥

---

त्तवता तिङा गतेः समासवचनं, यो जात एव पर्यभूषत् यः शम्बरमन्वविन्दत्, योऽन्तरिक्षं विममे यो वै प्रजवं यातामपथेन प्रतिपद्यते॥

# उपपदमतिङ्। २। २। १९॥

## यदि तिङन्तस्येति। (कै)

उपपदस्येत्यर्थः॥

## तिङन्त एवेति। (कै)

[1]कृदभिहितस्य द्रव्यवद्भावादिति भावः। न च मा भवान्भूदित्येतद्व्यावृत्तये ऽतिङन्तः समास इत्यर्थकं तत्। [2]"माङी"त्यस्य सतीत्यर्थात्। तत्रोपपदत्वमेव नेत्यदोषात्। प्रथमार्थे मौत्री सप्तमी हि उपपदसंज्ञालिङ्गमत एव पचावित्यादौ नोपपदत्वम्। तुमुन्ण्वुलावित्यत्र तु [3]क्रियार्थोपपदस्येति कार्यार्थमुपपदत्वमावश्यकमिति भाष्याशयः॥

---

१ अ २। पा २। सू १९॥
२ अ ३। पा ३। सू १७५॥ ३ अ २। पा ३। सू १४॥

---

उपपदमतिङ्॥ उपपदं सुबन्तं समर्थेन नित्यं समस्यते। अतिङन्तश्च समासः। कुम्भं करोतीति कुम्भकारः। इह कुम्भ अस् कार इत्यलौकिकं प्रक्रियावाक्यम्। लडर्थाद्याधिक्येऽप्यदूरविप्रकर्षेण तूक्तं लौकिकं वाक्यं

---

"उपपदमतिङ्"॥ 'एधानाहारको व्रजतीति'। 'तुमुन्ण्वुलौ क्रियायां क्रियार्थाया'मिति ण्वुल्। 'अतिङिति किमिति'। येनाभिप्रायेण पृष्टं तमाविष्करोति। 'ननु चेति'। 'एनञ्जापयतीति'। स्यादेतत्। तुल्यस्य तिङन्तस्य प्रतिषेधोऽनर्थक इति यत्नेन समासार्थः सुबन्तस्य

**अर्थशब्दसन्निधाने इति ।** (कै)

तिङन्तशब्दरूपार्थकस्योपपदस्याभावादिति भावः ॥

**तिङर्थ उच्यत इति ।** (कै)

कस्य तिङर्थस्येति भाष्येऽपि तिङ्पदेन तदर्थो ग्राह्य इति भावः।

**कस्येति** (भा)

प्रश्नोऽपि तदर्थशब्दार्थप्रश्नद्वारा तच्छब्दार्थप्रश्न एवेति बोध्यम् ॥

**पुरुषः ॥** (कै)

प्रत्यक्षादिः ॥

**उपग्रहः ।** (कै)

कर्त्रभिप्रायत्वादिः । यद्यपि कर्त्रभिप्रायत्वं न तिङर्थस्तथापि यथाकथंचित् द्योत्यं भवत्येवेति बोध्यम् ॥

---

बोध्यम् । अतिङ् किम् । मा भवान् भूत् । माङिलुङिति सप्तमीनिर्देशा-न्माङुपपदम् । ननु सुपेत्यधिकारात्तिङन्तेन न भविष्यति । सत्यम् । तल्लि-ङ्गमतिङनेन ज्ञाप्यते । तत्फलं त्वनुपदमेव स्फुटीकरिष्यामः । प्रथमान्तन्तु सुप्ग्रहणमिहानुवर्तत एव । अत एव राजदृषीत्यादौ पूर्वपदे नलोपादि-

---

प्रतिषेधो विज्ञायते, तत्र यद्यपि कालकारकसंख्योपग्रहयुक्तः पूर्वापरीभूतः क्रियारूपस्तिङन्तार्थप्रधानोऽर्थो न सुबन्तस्य सम्भवति तथापि क्रियावाचि-त्वमात्रेण तदर्थत्वमाश्रीयते, क्रियावाच्युपपदं न समस्यत इत्यर्थः, तेन कारको गतः कारकस्य व्रज्येति गतव्रज्याशब्दयोः कारकशब्देन समासो न भवति, अन्यथा हि क्रियार्थायामिति सप्तमीनिर्देशेनोपपदत्वादनयोरपि समासः स्यादिति । तन्न, अनुपपदत्वात्, क्रियायां क्रियार्थायामिति

**तिङर्थे** (कै)

इत्यस्य तिङन्तार्थ इत्यर्थः ॥

**अनेकार्थेति।** (कै)

कालसाधनादिरूपेत्यर्थः ॥

**साध्यत्वादिति।** (कै)

साधनसाध्यत्वेन शाब्दप्राधान्यादित्यर्थः ॥ तिङ्ग्रहणमपनीय क्रियापद्ग्रहणे लाघवं दर्शयति

**यदीति** ॥ (कै)

**अतिङ्ग्रहणादिति।** (कै)

अक्रियाग्रहणादित्यपि बोध्यम् ॥ नन्वत्र गतशब्दस्य सत्त्वप्रधानतया कथं क्रियावाचित्वमित्याशंक्याह

**अत्र चेति।** (कै)

द्रव्यवाचित्वे प्रत्ययानुपपत्तिः। क्रियावाचित्वे तु उपपदसमासो

---

पदकार्यं सिध्यति। सुप्सुपेतीह नानुवर्त्तत इति भाष्यवृत्त्यादिग्रन्थास्तु मिलितं नानुवर्तत इत्येवं पराः। अतिङिति नोपपदस्य विशेषणं किन्तु समासस्येति। यद्यपीह भाष्ये न स्पष्टं तथापि अनत्याधानतायमर्थयोरिति सूत्रे भाष्य एव स्पष्टम्। तत्र हि किंवृत्तस्यानधिकारादकिंवृत्तग्रहणानर्थक्यमि-

---

सप्तमीनिर्देशेन क्रियावाचिन उपपदत्वं धातुरेवात्र क्रियावचनस्तदाश्रयस्त्वतुल्प्रत्ययो गतशब्दस्तु क्रियोपसर्जनं कर्त्तारमाह शब्याशब्दोऽपि यत्तस्य सिद्धता नाम धर्मस्तत्र घञादयो भवन्तीति धात्वर्थस्य सिद्धतायां वर्तन्ते, अतो यत्क्रियावाचित्वादुपपदं न तत्सुबन्तं यत्सुबन्तं न तत्क्रियावाचि नाप्युपपदमिति नार्थ एवमर्थेनातिङ्ग्रहणेन। 'एतयोर्योगयोरिति'। ननु चास्मि-

दुर्वार इति तद्व्यावृत्त्यर्थमक्रियाग्रहणमिति भावः॥ इदानीमेव क्रियावाचित्वोपपादनादाह

**सुबन्तेति। (कै)**

उपपदविशेषणमित्यर्थः॥

**नैव क्रियावाचीति। (भा)**

भाष्यस्य नैतत्प्राधान्येन क्रियावाचीत्यर्थः॥ नन्वेवमत्र समासो दुर्वारोऽत आह

**अत एवेति॥ (कै)**

प्रत्ययोत्पत्तिनिमित्तमुपपदत्वं च न गतशब्दस्य किं तु धातोरेवेत्याह

**धातोश्चेति। (कै)**

अन्यथा भावेऽपि सामर्थ्यादुपपदत्वमित्यभिमानः॥ ननु प्रत्ययोत्पत्तिवत्समासोऽपि स्यादत आह

**धात्वर्थस्येति। (कै)**

---

त्युक्ता उपपदसंज्ञार्थं तृतीयाप्रभृतीन्यन्यतरस्यामिति समासप्रतिषेधात्संज्ञानर्थक्यमिति सिद्धान्तितम्। एवं पूर्वसूत्रेऽपि गतिग्रहणं पृथक्कृत्य तेनाप्यतिङ्ग्रहणं सम्बन्धनीयम्। गतिः समस्यते अतिङन्तश्च समासं स्यादिति।

---

नैव योगे तदनभिसम्बन्धो युक्तो यत्रातिङ्ग्रहणमस्ति न पूर्वत्र, एवं मन्यते, योगविभागेनातिङ्ग्रहणं पूर्वसूत्रेणापि सम्बन्धनीयमिति। यद्येवं कुशब्दे प्रादिषु चातिप्रसङ्गः, तत्रापि प्राक् सुबुत्पत्तेः समासः स्यात्, एवं तर्हि पूर्वसूत्रे गतिग्रहणं पृथक्कृत्य तेनैवातिङ्ग्रहणं संबन्धनीयं, गतिकारकोपपदानामस्यायमर्थः, गतीनां कारकाणामुपपदानां च कृद्भिः सह यः

एवं च तस्मात्सत्यान्येनैकार्थीभावासम्भव इति भावः ॥ वस्तुतस्तु नैतत् क्रियावाचीत्यनेनाच तुमुन्ण्वुलाविति ण्वुलेव नेति बोध्यते ॥

## क्रियार्थायामिति । (पा)

स्त्रीलिङ्गनिर्देशेन क्रियार्थायाः क्रियायाः एव लाभे पुनः क्रियाग्रहणेन प्राधान्येन साध्यमात्रावस्थक्रियाप्रतिपादकस्यैव ग्रहणात्किं च क्रियाशब्देन क्रियावाचकशब्दग्रहणे क्रियाप्रधानभूता साध्यावस्थैवा च गृह्यते इति गतिकारकोपपदादिति सूत्रेऽपि भाष्ये स्फुटम् । अर्थग्रहणे तु गुणीभूताया अपि ग्रहणमिति पाकादियोगे कारकविभक्तित्वतुजादीनां साधुत्वं भवत्येवेत्याशयः । अन्यथा सिद्धान्ते कारको गत इत्यत्र समासो दुर्वारः स्यात् । किं च क्रियावाचित्वाभावादत्राप्रत्युदाहरणत्वं तुमुनन्तं भवतीत्यस्यान्याय्यत्वात् । कैयटोक्तरीतिस्तु "अनुपसर्जनात्" (४।१।१४) "येनविधिः" (१।१।७२) "समर्थः पद" (१।२।१) इत्यादि सूत्रभाष्यविरुद्धा । तत्र हि निष्कृष्यैकार्थीभावं विनापि समासतद्धितादिप्रवृत्तेरङ्गी-

---

तेन प्रयवतीत्यादौ तिङन्तेन समासो न । अतिङ्ग्रहणाच्च सुपेति इतीयान्तं निवर्तते । तथा च गतिकारकोपपदानां कृद्भिः सह समासवचनं प्राक्सुबुत्पत्तेरिति प्राचां परिभाषा एकदेशानुमतिद्वारा सामान्यापेक्षज्ञापक-

---

समासस्तेनतेन लक्षणेन स उत्तरपदात्सुबुत्पत्तेः प्रागेव कार्यः पूर्वपदन्तु सुबन्तमेव समस्यत इति, गतीनां तावत्, व्याजिघ्रतीति व्याघ्री, 'पाघ्राध्माधेट्दृशः शः' इति प्राप्तस्य जिघ्रतेः संज्ञायां प्रतिषेधो वक्तव्य इति निषेधा 'दातश्चोपसर्गे' इति कः, व्याङोर्ग्रशब्देन गतिसमासः स यद्युत्तरपदे सुबन्ते जाते पश्चात्स्यात्ततः सुबुत्पत्तये संख्याकर्मादियोगो विवक्षितव्यः,

कारात्। न चैवमपि कारको व्रजतितरामित्यत्र समासाभावार्थं प्रतिषेध आवश्यकः। अनभिधानेन तत्र तादृशप्रयोगाभावादिति भाष्याशयः॥

उपसंहृतक्रमरूपाम्। (कै)

उपसंहृतक्रमत्वसमानाधिकरणवैजात्यविशेषरूपाम्॥

प्रधानमिति। (कै)

प्रत्ययार्थवैजात्येन लिङ्गाद्यनन्वयरूपप्रकृत्यर्थवैजात्यकार्याभिभवात्तस्य प्राधान्यमिति भावः। एवं चात्रापि न लुभिति तात्पर्यं भाष्यस्येति बोध्यम्॥ भाष्ये

एवं तर्हि सिद्धे इति। (भा)

तादृशप्रयोगाभावादतिप्रसङ्गनिरासे सिद्ध इत्यर्थः॥

एवं तर्हि योगविभाग इति। (कै)

अत्रातिङिति पूर्वसूत्रे गतिरिति चेत्यर्थः॥

अतिङ्ग्रहणेन चेति। (कै)

---

भूतेन अतिङ्ग्रहणेन लभ्यते। गतीनां कारकाणामुपपदानां च कृद्भिः सह यः समासः स उत्तरपदात्सुबुत्पत्तेः प्रागेव कार्य इत्यर्थः। पूर्वपदन्तु सुबन्तमेवेत्युक्तम्। गतीनां तावत्। व्याजिघ्रतीति व्याघ्री। आतश्चोपसर्गे इति

---

तद्योगाच्च प्रागेव लिङ्गयोगः स्वार्थमभिधाय शब्द इति न्यायात्, ततश्च लिङ्गनिमित्तः प्रत्ययो भवन् घ्राशब्दमात्रस्याजातिवाचित्वादाप् स्यात्, ततश्च व्याङोर्घ्राशब्देन समासस्ततो व्याघ्राशब्दस्य जातित्वेऽप्यकारान्तत्वाज्जातिलक्षणो ङीष् न स्यात्, प्राक् सुबुत्पत्तेः समासो भवन् लिङ्गयोगमपि नापेक्षत इत्यन्तरङ्गत्वात्स एव तावद्भवति पश्चात्स्त्रीप्रत्ययो भवन्ङीषेव

अतिङित्यस्य प्रथमान्ततया समास एव विशेष्यते। अतिङिति बहुव्रीहिः ॥

## गतिकारकेति। (भा)

प्रपचतितरामित्यादौ नित्यसमास इष्ट एव। "तिङि चोदात्तवती" त्यनेन गतेर्निघातेऽन्तोदात्तत्वमेव। तच्च एतत्सिध्यर्थमेव तिङ्ग्रहणं प्रत्याख्यायते भाष्ये। स्वरस्य तु नात्र प्रवृत्तिः कृद्ग्रहणात्। कृद्ग्रहणप्रत्याख्यानं तु न भाष्यारूढमिति तत्रैव वक्ष्यामः। एतेन तत्र नित्यसमासवारणायातिङिति तद्घटितप्रतिषेधायावश्यकमिति कथं तत्र तन्निवृत्तिज्ञापकं प्रपचतितरामित्यादौ च "गतिकारकोपपदादि"ति "तिङि चोदात्तवती"ति सूत्रभाष्यप्रामाण्येन "उदात्तवते" त्यादिवार्त्तिकोक्तो वैकल्पिकसमास एवेष्यते इति परास्तम् ॥

## सुप्ग्रहणं त्विति। (कै)

उपपदमित्यन्वर्थसंज्ञया सुबन्तस्यैव पदत्वेनोपपदत्वात् गतेः सुबन्तत्वाद्राजयुध्वेत्यादौ पूर्वपदेन लोपादिपदकार्यसिद्धेः॥ तिङ्-

---

कः। पाघ्राध्मेति शप्रत्ययस्तु न भवति। जिघ्रतेः संज्ञायां प्रतिषेधो वक्तव्य इत्युक्तेः। व्याङोर्घ्रशब्देन गतिसमासः। स च यदि घ्रशब्दस्य सुबन्ततामपेक्षेत तर्हि सुबुत्पत्तये संख्याकर्मादियोगो विवक्षणीयः। तद्योगाच्च प्रागेव

---

भवति, पूर्वपदस्य तु सुबन्तत्वात्पदकार्याणि भवन्ति, निर्गत इति सत्वं, संयन्तेति परसवर्णविकल्प इत्यादीनि। कारकाणाम्, अश्वेनिताऽश्वनिती, 'कर्तृकरणे कृता बहुल'मिति समासः, यद्युत्तरपदस्य सुबन्तत्वं स्यात्पूर्ववट्टाप् स्यात्ततः 'क्रीतात्करणपूर्वात्' 'क्तादल्पाख्याया'मिति ङीष् न स्याद्

घटित इति समासविशेषणेन कारको अजतीत्यादिव्यावृत्तिसिद्धेः प्रथमान्तसुबनुवृत्तेरपि फलाभावेन चिन्त्यमेतत् ॥

कृदन्तावस्थायामेवेति। (कै)

काष्ठैः पचतितरामित्यादिवारणाय कृद्ग्रहणस्यावश्यकत्वेन चिन्त्यमिदमिति कश्चित्तन्न बहुलग्रहणेन श्वानजम्बादिभिरिव तेनापि समासस्य वारयितुं शक्यत्वात् परिभाषायाः प्रयोजनवत्त्वे श्रुतिकृष्टपं प्रयोजनवत्त्वादत आह

अस्याश्चेति ॥ (कै)

तन्निबन्धनः स्वर इति। (कै)

"गतिकारकोपपदात् कृदिति" विहित इत्यर्थः ॥ स्वरासिद्ध्यपेराह

यद्वेति ॥ (कै)

सुपेत्यस्य निवृत्ताविति। (कै)

सुपैवेति नियमाभावाद्यथेष्टं समाससिद्धिरितिभावः ॥ लध्या-

---

लिङ्गयोगः स्वार्थमभिधायेत्यादिन्यायात्। ततश्च लिङ्गनिमित्तः प्रत्ययो भवन् टाबेव स्यात् न तु ङीष्। अश्वशब्दमात्रस्य अजातिवाचित्वात्। ततश्च व्याङोर्श्वशब्देन समासः। ततो व्याघ्राशब्दस्य जातिवाचित्वेऽप्यनकारान्त-

---

अत इत्यधिकारात् वचनसामर्थ्याद्वा पूर्वशब्दं व्यवस्थावचनमाश्रित्य वाक्यावस्थायामेव स्यात्, अत इत्यधिकारो वा व्यवच्छिद्येत, प्राक् सुबुत्पत्तेः समासे पूर्ववत्सिद्धमिष्टम्। अत्रापि पूर्वपदस्य सुबन्तत्वाच्चर्मक्रीतीत्यादौ णत्वोपादिकार्याणि भवन्ति। उपपदानां कच्छेन पिबतीति 'सुपि स्थ' इत्यत्र सुपेति योगविभागात्कः, कच्छपी, व्याघ्रीतुल्यं, मायाव्यपति 'सुप्य-

नुसारेण च व्यवस्थेति बोध्यम् । तत्र सुबुत्पत्तेःप्रागित्युपलक्षणं लिङ्ग-बोधकप्रत्ययोत्पत्तेः प्रागपीति बोध्यम् ॥

## सुबुत्पत्तेरिति । (कै)

सुबुत्पत्तेरनन्तरमित्यर्थः ॥

## धनक्रीतेति । (कै)

सुप्टाबुत्पत्तेः पूर्वं समासे "क्रीतात्करणे"ति ङीप् स्यात् । सुबन्तेन तु समासेऽन्तरङ्गत्वाट्टाप् सिध्यतीति भावः ॥ यत्र सुबुत्पत्तेः पूर्वं समासस्तत्र स्वराप्राप्तेराह

## उत्तरपदशब्द इति ॥ (कै)

## सुबित्यस्येति । (कै)

तदनुवृत्तावपि प्रागुक्तरीत्या पदविधित्वं बोध्यम् ॥ सुपेत्यस्या-ननुवृत्तावतिप्रसङ्गमाह भाष्ये

## यद्येवमिति । (कै)

---

त्वाज्जातिलक्षणो ङीष् न स्यात् । सुबुत्पत्तेः प्रागेव जायमानस्तु समासो लिङ्गयोगानपेक्षत्वेन अन्तरङ्गत्वाद्भवति । ततो ङीप्पूर्वपदस्य तु सुबन्तत्वा-त्पदकार्याणि स्युरेव । निर्गत इति णत्वं सर्यन्तेति परसवर्णविकल्प इत्यादि ।

---

जातौ 'प्रातिपदिकान्तनुम्विभक्तिषु' माषवापिणी, ङीपः प्राक् समासे प्रातिपदिक-स्यान्तो नकार इति णत्वं भवति, सुबन्तस्य तु समासे ङीप्समासस्यान्तो न तु नकार इति न स्यात्, अत्रापि पूर्वपदस्य सुबन्तत्वाच्चर्मकारादौ नलो-पादिपदकार्यं भवत्येव । अत्रोपपदग्रहणं गतिकारकव्यतिरिक्तोपपदपरि-ग्रहार्थं माषवापिणी,। इभदर्भाया अपत्यं ऐभदर्भेयः, अत्र दर्भशब्देन समासे सति समुदायात्स्त्रीभ्यो ढकं बाधित्वा दर्भशब्दात् स्त्रीप्रत्यय-

"कुगती"त्यनेनेति भावः॥ "अतिङि"त्यनेन तिङन्तस्यैव प्रतिषेध इति तात्पर्यम्॥

## ऐकस्वर्यादीति। (कै)

आदिनैकपद्यं किं च तयोः समासे प्रातिपदिकतया परत्वात्सुबुत्पत्तिरेव स्यान्न तिङित्यपि बोध्यम्॥

## पूर्वं धातुरुपसर्गेणेति। (भा)

तत्संज्ञकशब्देनेत्यर्थः॥ पूर्वं साधनेन योगेऽपि उपसर्गस्य क्रियाविशेषकत्वाविशेषात्सामर्थ्यस्य दुर्वारत्वमित्यत आह

## ततश्च पूर्वमिति। (कै)

साधनसंसृष्ट एवोपसर्गेण युज्यत इति केवलेन सामर्थ्याभाव इति भावः॥ न च निष्कृष्यैकार्थीभावो न समासादिप्रयोजक इत्युक्तम्। एवं च विशिष्टेनैकार्थीभावेऽवयवानामपि तत्सत्त्वात्स दुर्वार इति वाच्यम्। तिङन्तेनैकार्थीभावाभावात्। अतिङिति निषेधात् तदवयवेन तु प्रत्ययार्थासंसृष्टेन नैकार्थीभावः साधनसंसृष्टार्थस्यैवोपसर्गेण योगादित्यदोषात्॥ भाष्ये

---

कारकाणाम्। अश्वैः क्रीता। अल्पैरभ्रैर्लिप्ता। कर्तृकरणे कृताबहुलमिति समासः। स यद्युत्तरपदस्य सुबन्तस्य स्यात्तर्हि पूर्ववट्टाप् स्यात्। ततश्च क्रीतात्करणपूर्वात् क्तादल्पाख्यायामिति ङीष् न स्यात्। अत इत्यधिका-

---

च्छणो ढक् स्यात्, स्त्रीप्रत्यये तदादिनियमाभावेऽपि दर्ग्भशब्दादपि कदाचित्स्यादित्येवा दिक्, जातान्यस्याः परिभाषायाः प्रयोजनानि। कथं पुनरतिङ्ग्रहणेनायमर्थः साधयितुं शक्यः, यावता प्रथमान्तमतिङ्ग्रहणं प्रथमान्तस्यैव सुबग्रहणस्य निवृत्तिं सूचयेदिति पूर्वपदे पदकार्याणि न स्युः,

साधनं हि क्रियां निर्वर्त्तयतीति । (भा)

क्रियां तत्प्रतीतिं साध्यत्वेन प्रतीतेः । तत्संबन्धाधीनत्वात् साध्यत्वेन प्रतीतार्थकयोगे च तेषामुपसर्गत्वादिति भावः ॥

अभिनिर्वृत्तस्य । (भा)

अभिनिर्वृत्तज्ञानविषयस्येत्यर्थः ॥

अनिष्पन्नस्येति । (कै)

अज्ञातस्येत्यर्थः ॥ नन्वेवमुपसर्गसम्बन्धात् प्राक् केवलभ्वादेः अकर्मकत्वाभावेन कर्मणि लादयो न स्युरत आह

अनुभूयते सुखमिति ॥ (कै)

धातुरेवेति । (कै)

केवलधातुरेवेत्यर्थः ॥

उपसर्गस्तु द्योतक इति । (कै)

स च द्योत्यबोधाय पश्चादेव सम्बध्यते इति भावः ॥ एतेनोप-

---

दात् । वचनसामर्थ्यात्स्यादिति चेत्तर्हि वाक्यावस्थायां स्यात् । पूर्वप्रत्ययस्य अवस्थावचनत्वसम्भवात् । अत इत्यधिकारो वा व्यवच्छिद्येत । तथा च सति हि तस्य धनक्रीता प्राणेभ्योऽपि गरीयसीति भट्टिप्रयोगे न सिध्येत् ।

---

उत्तरपदे कोलमित्यं न सिध्यति तदेतत्क्रियमाणमतिङ्ग्रहणं विपर्ययमेव साधयति तदपि गत्युपपदयोरेव कारकेषु तु 'कटंकः ये क्षता वजल-मि"त्यादावस्याः कक्षाया अप्रसङ्ग एव, उच्यते । योगविभागेनातिङ्ग्रहणं मतिनापि संबध्यत इत्युक्तम्, एवं स्थिते योगद्वयविहितसमासमतिङ्ग्रहणेन विशेषविन्यासः, गतिः समस्यते अतिङ् समासो भवति उपपदं समस्यते अतिङन्त समासो भवतीति, तदेवं 'मासि लुङ्' मासापौंदिनादौ

सर्गाणां द्योतकत्वेऽपि तद्द्योत्यार्थस्य साधनसम्बन्धात् पूर्वमेव धातुना बोधनावश्यकत्वेन धातूपसर्गयोः सामर्थ्यसत्त्वेन समासो दुर्वार इत्यपास्तम्। एतच्च "सुड्डादि"त्यत्र विस्तरेणोपपादयिष्यते। "विपराभ्यां जेरि"त्यादौ व्यादिद्योत्यार्थप्रतिपादकस्येत्यर्थः। विपराभ्यां परत्वयोग्यस्येत्यर्थो वा॥

विरोधसद्भाव इति। (कै)

इत्यभिमान इति शेषः। अभिमानत्वं वा ऽस्यानुपदमेव स्फुटीकरिष्यते॥ ननु कर्मण्युपपदे ऽण् कर्मत्वं च विभक्त्या गम्यं तच्चाणुत्पत्तेः पूर्वं कृदन्तत्वाभावात्षष्ठ्या अप्राप्तौ द्वितीययैव भाव्यमिति जातेऽपि अणि तन्निवृत्तौ मानाभाव इति कुतः षष्ठीसमासप्राप्तिरत आह

पञ्चके इति। (कै)

प्रातिपदिकस्य पदत्वाभावादुपपदत्वं कथमिति चिन्त्यमेतत्॥

सुबन्तमेवोपपदमिति। (कै)

---

सिद्धान्ते तु कर्तृकरणे कृतेत्यत्र बहुलग्रहणात्क्वचित्सुबन्तेन समासः, अतो न ङीष्। उपपदानाम्। कच्छेन पिबतीति कच्छपी। व्याघ्रीवत्। सुपीति योगविभागात्व इत्यादि। यत्त्वतिङ्ग्रहणमुपपदविशेषणमिति। तन्न।

---

तिङन्तेन समासो मा भूदित्येवमर्थं क्रियमाणमतिङ्ग्रहणं सुपेति तृतीयान्तस्य निवृत्तिं साधयतीति गत्युपपदयोस्तावत्सिद्धमिष्टं, कृत्तावपि सुप् सुपेति न संबध्यत इति समुदायस्य निवृत्तिर्विवक्षिता न केवलस्य सुब्ग्रहणस्य प्रत्युदाहरणमपि दिङ्मात्रं प्रदर्शितं न हि तत्र तिङन्तेन समासः किं तर्हि तिङन्तस्य सुबन्तेन, 'कर्तृकरणे कृता बहुल'मित्यत्रापि कृतेति न वक्तव्यं, कथं, कर्तृकरणयोः क्रियापेक्षत्वात्क्रियावचनेन तावत्समासः

"तत्रोपपदमि"तिसूत्रे भगवान्वक्ष्यति स्वयं च। किं च पञ्चकपक्षेऽपि सकलकारकशक्तिमानर्थः संमुग्धाकारेणैव प्रातिपदिकेनोच्यते न तु विविच्य इतिकर्मोपपदत्वप्रयुक्ताणोऽप्राप्तिः। अन्यथा करणाद्युपपदेऽपि कर्मोपपदप्रसंगः। तस्मादस्तुतः कृत्प्रकृत्यर्थकर्मत्वसत्त्वेन कृदनुत्पत्तावपि भाविनत्त्वं गृहीत्वा षष्ठीप्रवृत्तिरित्येव भाष्याशय उचितः॥

## अतरङ्गत्वादिति। (कै)

षष्ठीति सूत्रे सुपेति तृतीयान्तस्य संबन्धादिति भावः। अत एव मातुः स्मरतीत्यादौ न षष्ठीसमासः। अत एव च षष्ठ्यन्तस्यानेक सुबन्तेन न समास इति बोध्यम्॥ एतद्वार्त्तिकद्वयमपि प्रत्याचष्टे।

## अथवेति। (भा)

भाष्ये "विप्रतिषेधे परमि"त्यस्य तु न प्रवृत्तिः। युगपदुभयविहिततत्पुरुषसमाससंज्ञयोः प्रवृत्तिसंभवेनासंभवरूपविप्रतिषेधाभावात्। उपपदसमासो भविष्यतीत्यस्य "उपपदमि"ति सूत्रविहितसमाससंज्ञा तत्पुरुषसंज्ञा च स्यास्यतीत्यर्थः। अन्यादृशविरोधस्य तत्प्रवृ-

---

तथा सति प्रथमान्तसुबग्रहणस्य निवृत्त्यापत्त्या बहुविप्लवापत्तेः। एतेनातिङ् किम् एधानाहारको व्रजतीति प्रत्युदाहरणमपि प्रत्युक्तम्। यदपि कौमुद्यां कुगतीति सूत्रे उक्तं, अत्र सुप्सुपेत्यनुवृत्तेस्तिङापि समासः ऊरी-

---

धातुश्च क्रियावचनो, धातोश्च द्वये प्रत्ययाः कृतस्तिङश्च तत्र सुबधिकारात् तिङन्तेनाप्रसङ्गः, तदेतत्कृद्ग्रहणं कृदन्तावस्थायामेव यथा स्यादित्येवमर्थमिति केचित्, नेति वयं, काष्ठैः पचतितरां दध्ना भुक्तपूर्वीत्यादौ तद्धितान्तेन समासो माभूदित्येवमर्थं कृद्ग्रहणं कर्तव्यं कष्टश्रितादिषु प्राक सुबुत्पत्तेः समासो न साधित इति कष्टश्रितेत्यादि न सिद्ध्यति एवं तर्हि

तिनिमित्तत्वे न मानमिति तात्पर्यम् । न च नित्यत्वानित्यत्वज्ञानयोर्विरोधः । बोधे बाधज्ञानस्याप्रतिबन्धकत्वात् । एवं च षष्ठीसमासोऽपि नित्य एवैतद्विषये फलितः । तद्बोधिताभावांशस्यैतद्विरोधेनैतद्विषये त्यागात् । "नित्यं क्रीडे" त्यादिविषये तस्य कृत्स्नबाधत्वाद् "गतिकारकोपपदादि"त्यच प्रकृतपरिभाषायां च लक्षणप्रतिपदोक्तपरिभाषा न प्रवर्तते इति षष्ठीसमासोऽपि सुबुत्पत्तेः पूर्वमेव स्वरश्च । तथापि समासे इत्यन्तरङ्गत्वमेव नास्तीति भावः । परिभाषायां सामान्यतः कारकपदोपादानेन कारकविभक्त्यन्तसमासमासस्य सुबुत्पत्तेः प्राक्प्रवृत्त्यभावाद् इति बोध्यम् । कैयटे "विभित्यसमासयोरि"त्यादिर्यथाश्यादित्यन्तो ग्रंथो बहुषु पुस्तकेष्वनुपलम्भात्तनित्यग्रहणप्रत्याख्यानाच्च ॥

## उत्तरपदेति । (कै)

एवं चाग्निचितेत्यादौ विभक्त्युदात्तत्वमपि स्यादिति भावः ॥

---

करोतीत्यादि । तदप्यसत् । तत्र शेषोक्ततेनातिङ्ग्रहणेनैव विरोधात् । तिङ्समासस्तु सहेति योगविभागबललभ्यो वार्त्तिकोक्तविशेषविषयत्वान्न्याय्यस्तेति प्रागेव प्रपञ्चितम् ॥

---

गतिकारकोपपदानमिति परिभाषा पूर्वाचार्यैः पठिता सूत्रकारेणाप्यतिङ्ग्रहणेन तद्देश आश्रिता, तत्र सामान्यापेक्षं ज्ञापकमिति कृत्स्नमेव परिभाषार्थं ज्ञापयतीति सिद्धमिष्टम् ।

तदेतत्प्रतिपदयन्तां भाष्ये कृतपरिश्रमाः ।
भाष्ये सहस्रमप्यन्याः स्वयं पश्यन्ति नाञ्जसा ॥

# अमैवाव्ययेन । २ । २ । २० ॥

नन्वेवं वचनवैयर्थ्यमतस्तत्सामर्थ्यात्सुबुत्पत्त्यनन्तरमपि समासो ज्ञाप्यते इत्यत आह

नियमान्तरे इति । (कै)

वक्ष्यमाणे इत्यर्थः ॥

---

अमैवाव्ययेन ॥ अमैव तुल्यविधानं यदुपपदं तदेवाव्ययेन सह समस्यते । स्वादुङ्कारं भुङ्क्ते । संपन्नंकारं लवणंकारम् । स्वादुमि णमुल् स्वादुमीत्यत एव निपातनात्पूर्वपदस्य मान्तत्वम् । स्वादुमीत्यर्थग्रहणं सम्पन्नलवणशब्दावपि स्वादुपर्यायौ येन वाक्येनामेव केवलो विधीयते न तु प्रत्ययान्तरसहितः । तस्मिन् वाक्ये सप्तमीनिर्देशबलेन यस्योपपदसंज्ञा तदमैव तुल्यविधानमित्युच्यते । सूत्रे च तुल्यविधानमित्यध्याह्रियते । नियमान्त-

---

“अमैवाव्ययेन” ॥ ‘स्वादुंकारमिति’ । ‘स्वादुमि णमुल्’, स्वादुमीत्यत एव निपातनात्पूर्वपदस्य मान्तत्वम् । स्वादुमीत्यर्थग्रहणं तेन संपन्नंकारमित्यत्रापि भवति । ननु सिद्धे विधिरारभ्यमाणो नियमाय भवति एवकारः किमर्थः, इष्टतोऽवधारणार्थः, एवं यथा विज्ञायेत अमैवाव्ययेनेति, मैवं विज्ञायि अमाव्ययेनैवेति, अनव्ययस्यासम्भवादेवायं नियमो न भविष्यति, ननु चायमस्ति खशयं ब्राह्मणकुलमिति, ‘अधिकरणे शेते’रित्यच्, ‘अतोमिति’ सोरम्भावः । अनेनानव्ययेन समासो माभूदित्येवमर्थो नियमः स्यात् न, अत्र ह्यन्तरङ्गत्वादसुत्पन्न एव तावदुपपदसमासेन भाव्यं पश्चात्सुपेति विधानवेलायामनव्ययस्यामोऽसम्भवान्नियमान्तरेण वचनस्य

अमेत्यस्यावृत्तिरिति । (कै)

चिन्त्यमेतत् । आवृत्तौ मानाभावात् । अमैव तुल्यविधानं यदुपपदं तदमाव्ययेन समस्यते इत्यर्थे अग्रेभुक्त्वा इत्यत्र समासापत्तिरव्ययग्रहणवैयर्थ्यापत्तिश्च । किं च कालो भोक्तुमित्यत्र समासापत्तिस्तस्मादमैव तुल्यविधानं यदुपपदं तदमाव्ययेनेति नियमेन सर्वेष्टसिद्धिः । अत एव भाष्ये ऽग्रेभुक्त्वेत्यप्युदाहृतम् । [1]"अग्रादिषु

१ अग्रादिष्वप्राप्तविधेः समासप्रतिषेधं चोदयिष्यति स न वक्तव्यो भवति (अत्रैवभाष्ये)॥ अथाप्राप्ते अग्रादिष्वप्राप्तविधेः समासप्रतिषेधः (वा)॥ ३ । ४ । २४ ॥

भूतस्त्वेवकारो नियमस्वभावादेव लभ्यते न तु सूत्रारूढः । अमैव च यत्तुल्यविधानं तस्य प्रत्ययान्तरं प्रति उपपदत्वमेव नास्तीति अव्ययान्तरेण सह समासो नाशङ्कनीयः । सूत्रस्य प्रयोजनन्तु कालसमयवेलासु तुमुन्, कालः समयो वेला वा भोक्तुमित्यत्र समासनिवृत्तिः । अमैवेति किम् । अग्रेभोजं अग्रेभुक्त्वा, विभाषाग्रेप्रथमपूर्वेष्विति क्त्वाणमुलौ । अमाचान्येन च तुल्य-

चरितार्थत्वाद्विपरीतनियमो न भविष्यतीत्यत आह । 'एवकारकरणमिति' । अमैव यदुपपदं तत्समस्यते तदेव समस्यत इत्यन्तरार्थो न पुनरमैव समस्यत इति, तत्रामैव यदुपपदमित्यत्र तुल्यविधानमिति वाक्यशेषः, किं चामैव तुल्यविधानं येन वाक्येनामैव केवलो विधीयते न प्रत्ययान्तरसहितस्तेन वाक्येन यदुपपदं विधीयत तत्र सप्तमीनिर्दिष्टत्वादमैव तुल्यविधानं, नियमाङ्गभूतस्त्वेवकारो नियमस्वभावादेव लभ्यते अमैव यत्तुल्यविधानं न तु प्रत्ययान्तरोत्पत्तौ निमित्तमिति तदपेक्षया ऽनुपपदत्वाद

"अप्राप्ते"ति वार्त्तिकप्रत्याख्यानं च सङ्गच्छते इत्याहुः॥ "अप्राप्त-विधेरि"ति विशेषणव्यावर्त्त्यमुपपादयति

**प्राप्तविभाषायां त्विति।** (कै)

आभीक्ष्ण्य इत्यनुवृत्या हि सा तस्मिंश्च सत्येव प्रत्यय इत्याद्युक्तेः प्रत्ययोत्पत्तिसन्नियोगेनैवोपपदसंज्ञास्वीकारादिति भावः॥

---

विधानपेतम्। अव्ययेनेति किम् कुम्भकारः। असति ह्यव्ययग्रहणे अमैव यत्तुल्यविधानन्तदेव समस्येत। न च पूर्वसूत्रस्यानवकाशत्वादव्ययविषय एव नियम इति वाच्यम्। तथासत्यमैव नियमापत्तेः। अमन्तेनोपपदस्य यस्समासः सोऽमैव तुल्यविधानस्येति। तथा चाग्रेभोजमित्यत्र मा भूत। अग्रे-भुक्त्वा कालो भोक्तुमित्यत्र तु स्यादेव॥

---

अव्ययान्तरेण समासो नाशङ्कनीयः। 'अग्रभोजमिति'। 'विभाषाग्रे-प्रथमपूर्वेष्वि'ति क्त्वाणमुलौ, अव्ययग्रहणं किम्। असत्यव्ययग्रहणे अमैव तुल्यविधानं तदेवोपपदं समस्यत इत्युच्यमाने कुम्भकारादावपि न स्यात्, अथ पूर्वसूत्रस्यानवकाशत्वादमैव तुल्यविधानस्योपपदस्याव्ययविषयत्वात्त-द्विषय एव नियमो विज्ञास्यत इत्युच्यते एवं त्वमैव नियमः स्याद् अमन्ते-नोपपदस्य यः समासः सोऽमैव तुल्यविधानस्येति, तत्र को दोषः, अग्रेभोज-मित्यत्रैव न स्यात्, अग्रे भुक्त्वा कालो भोक्तुमित्यत्र तु स्यादेव, अव्यय-ग्रहणेतु सति अव्ययेनोपपदस्य यः समासः सोऽमैव तुल्यविधानस्येति विज्ञानान्न कश्चिद्दोषः॥

# शेषो बहुव्रीहिः। २। २। २३॥

उपयुक्तादन्यः शेषः। सामान्यं "सह सुपे"त्यादिः। विशेषो "द्वितीयाश्रिते"त्यादिः॥

पूर्वोत्तरेति। (कै)

यद्यप्यन्यपदार्थवत् पूर्वोत्तरपदार्थयोस्तद्विधानं नास्त्यक्षरतस्ते तथाप्यव्ययीभावादिमहासंज्ञाबलेन पूर्वाचार्यपरिगृहीतार्थस्य निमित्तत्वमस्त्येवेत्यभिप्रायः॥ [1]"विशेषणं विशेष्येणे"त्यादौ प्रथमाया अप्युपयुक्तत्वमित्यत आह

[1] अ २। पा। १। सू ५७।

शेषो बहुव्रीहिः॥ अधिकारोऽयम्। शेषः किम्। उन्मत्तगङ्गम्। प्राक्कडारात्परङ्कार्यमिति पाठे परत्वाद्बहुव्रीहिसंज्ञा मा भूत। उपयुक्तादन्यः शेषः। शिष असर्वोपयोगे। कर्मणि घञ्। येषां पदानां यस्मिन्नर्थेऽव्ययी-

"शेषो बहुव्रीहिः"। 'उपयुक्तादन्यः शेष इति'। शिष असर्वोपयोग इत्यस्मात्कर्मणि घञ्। 'कस्य शेष इति'। ननु सोपयुक्तादन्यः शेष इत्युक्तं, सत्यं, सर्वेषामेव पदानां सामान्यविशेषरूपेणोपयोगात्सर्वेषु च पूर्वोत्तरान्यपदार्थेषु यथायोगं तत्पुरुषाव्ययीभावयोर्विधानादुपयुक्तादन्यो न सम्भवतीति पुनः प्रश्नः, उक्तं च शेषग्रहणं पदतश्शेषाभावादर्थतश्शेषविशिष्ट-

द्वितीयादीनामिति । (कै)

"गतार्थप्रथमये"त्यादि तु व्याख्यानभूतं न स्वतन्त्रविधायकमिति भावः ॥ यद्वा "शेष" इत्यस्य प्रथमान्तत्वात्प्रथमान्तगृहीतत्रिकस्य प्रतिपदमुच्चरितस्यैव ग्रहणमिति सर्वेष्टसिद्धिः ॥

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते महाभाष्यप्रदीपोद्द्योते द्वितीयाध्यायस्य द्वितीयपादे प्रथमाह्निकम् ॥

---

भावादिसंज्ञा नोक्ता स बहुव्रीहिरित्यर्थः । एकसंज्ञाधिकारे तु त्रिकतः शेषो ग्राह्यः । तथाहि । सप्तसु सुपां त्रिकेषु यस्य त्रिकस्य षष्ठ्याह्निकया समासो नोक्तः स शेषः ॥ प्रथमेति यावत् । ततश्च प्रथमान्तानां बहुव्रीहिरित्यर्थात्समानाधिकरणानां भवति । कण्ठेकाल इत्यादौ तु सप्तमीविशेषणे इति ज्ञापकात्सिद्ध इति ॥

---

मिति । 'यत्रान्यः समासो नोक्त इति' । येषां पदानां यस्मिन्नर्थेऽव्ययीभावादिकः समासो न विहितः स शेष इत्यर्थः । यद्येवं कस्मान्न विज्ञायते सप्तसु सुपां त्रिकेषु यस्य त्रिकस्य षष्ठ्याह्निकया समासो नोक्तो यथा प्रथमायाः स शेष इति, कण्ठेकाल इत्यादावप्रथमान्तानामपि समासेष्टत्वात्, शेषग्रहणं प्राक्कडारात्परं कार्यमित्यस्मिन्पक्षे कर्तव्यम्, एकसंज्ञाधिकारपक्षे न कर्तव्यमित्याकडारसूत्र एव प्रतिपादितम् ।

## महाभाष्यप्रदीपोद्योतः ।



पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ।



कृते ऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ॥



# अनेकमन्यपदार्थे ।२।२।२४॥



भाष्ये क्रमोल्लङ्घनेऽभिप्रायमाह

अनेकेति ॥ (कै)

---

चित्रगुः । चित्रा गावो यस्येति विग्रहः । चित्र गोसम्बन्धीति समासार्थः । यत्सम्बन्धिनाश्चित्रा गाव इति विग्रहे बोधः । वृत्तौ विशेष्यविशेषणभावव्यत्यासः । यत्तु बहुव्रीहौ अन्यपदार्थे उत्तरपदस्य लक्षणाऽपि च गोपदेनैव गोस्वामिलक्षणायां तत्र चित्रपदार्थानन्वय एकदेशत्वादिति वाच्यम् । चित्रपदस्य तात्पर्य्यग्राहकतया गोपदेनैव चित्रगोस्वामि-

---

अनेकमन्यपदार्थे ॥ अनेकं सुबन्तमन्यस्य पदस्यार्थे वर्तमानं वा समस्यते स बहुव्रीहिः । पदेन प्रकृत्यर्थोपसर्जनः प्रत्ययार्थोऽभिधीयत इति स्थिते चिकतः शेषस्योक्ततया अप्रथमाविभक्त्यर्थे बहुव्रीहिरिति फलितं चिकतः

---

"अनेकमन्यपदार्थे" । 'अनेकं सुबन्तं सह समस्यत इति' । परस्परमित्यर्थः । यदनेन सुबित्येतदत्रानुवर्त्तते न सुपेत्येतद्, उत्तरपदस्याप्यनेक-

## अन्यपदार्थो लभ्यते इति। (कै)

"अन्यार्थे" इत्यस्य भिन्नेऽर्थे इत्यर्थः। भेदप्रतियोगी चोपस्थितः स्वपदार्थ एव पर्युदासविधया च स पदार्थ एवेति भावः॥ वाक्यव्यावर्त्तकं युक्त्यन्तरमाह

## वर्त्तीति। (कै)

तेषां सुबन्तत्वादित्यभिमानः॥

## एतानि पदानीति। (कै)

समानाधिकरणानामित्यनपेक्ष्येदम्। वस्तुतोऽर्थपरमेतत्। यथा मदीया मातेत्यत्र समासप्रसङ्ग इति बोध्यम्॥ सुस्नातं भो इति पाठे आह

---

लक्षणान्न दोषः। एवं प्राप्तोदकग्राम इत्यादौ उदककर्तृकप्राप्तिकर्मीभूतो लभ्यते ग्रामपदं तात्पर्य्यग्राहकम्। प्राप्तिकर्त्रभिन्नमुदकम् इति बोधोत्तरं स्वकर्तृकप्राप्तिकर्मत्वसम्बन्धेन तत्सम्बन्धिग्रामे लक्षणेति तु न युक्तम्। उदककर्तृकप्राप्तिकर्मग्राम इति विवक्षितार्थानिर्वाहात्। प्राप्तेऽति क्तस्य कर्त्रर्थकस्य कर्मणि लक्षणा प्राप्तौ चोदकस्य कर्तृतासम्बन्धेनान्वय इत्यपि

---

र्थो हि प्रथमा तदन्यपदार्थस्य कर्मादिरिति। प्राप्तमुदकं यं प्राप्तोदको ग्रामः। उदककर्तृकप्राप्तिकर्मीभूत इत्यर्थः। यद्यपि क्तप्रत्ययार्थस्य कर्तुर्धात्वर्थं प्रति विशेष्यतोचिता तथापि व्यपेक्षानादिभिरगत्या समासे भिन्नैव

---

मित्यनेनैव प्रतिपादितत्वादिति दर्शयति। 'सर्वेषु विभक्त्यर्थेष्विति'। पदेन प्रकृत्यर्थोपसर्जनः प्रत्ययार्थोऽभिधीयत इति विभक्त्यर्थस्य प्राधान्यात्तस्यैवान्यपदार्थग्रहणेन ग्रहणमिति भावः। अत एव प्राप्तोदकोऽयं ग्राम इति ग्रामशब्दानुप्रयोगः, अन्यथा यावानेवार्थो ग्रामपदस्य तावतो ऽभिधाने गतार्थ-

अथवेति। (कै)

अथ सर्वचान्योऽर्थो वक्ष्य इति बोध्यम्॥

अभिजनशुद्धिरपि (कै)

इत्यपिरेवार्थे॥ भाष्ये वाक्यशब्देन पदसमूहमात्रम्॥

व्याप्तिसमाश्रयणेति। (कै)

पदार्थग्रहणसामर्थ्याद् व्याप्तिन्यायस्यैवानुसरणे नान्तरङ्गन्यायस्येत्यर्थः। राजानं पुरुषमित्यत्र सावकाशस्तत्पुरुषः। बहुव्रीहिरपि बहुपदे सावकाश इति प्रथमान्तपदद्वयेन विग्रहे परत्वात्षष्ठ्यर्थेऽपि

---

न युक्तम्। उदकरूपकर्तुरनुक्तत्वेन ततस्तृतीयायां वैयधिकरण्याद् बहुव्रीह्यनापत्तेः। उदककर्तृकप्राप्तिरिति बोधोत्तरं तत्कर्मनाम्नो लक्ष्यत इत्यपि न युक्तम्। प्रत्ययार्थप्राधान्यस्य नाम्नः सत्त्वप्राधान्यस्य च भङ्गापत्तेः। विशेषणे कर्तरि एकदेशत्वेनोदकान्वयासम्भवाच्च इति नव्यन्यायविदः तन्न। उत्तरे पदे एव लक्षणायां विनिगमकाभावात्। न च प्रत्ययानां सन्निहितपूर्वपदार्थगतस्वार्थबोधकत्वव्युत्पत्तिरुत्तरपदे तत्करणे विनि-

---

व्युत्पत्तिः स्वीकरणीया। सिद्धान्ते तु एकार्थीभावाभ्युपगमात्सर्वं सममित्युक्तम्। ऊढरथोऽनड्वान्। उपहृतपशू रुद्रः। उद्धृतौदना स्थाली। चित्रगुः। वीरपुरुषको ग्रामः प्रथमार्थे तु न भवति। वृष्टे देवे गतः।

---

त्वान्न स्यात्यथा द्वन्द्वे चशब्दस्य, यदा तु समासेन विभक्त्यर्थ एव सम्बन्धादिरभीप्स्यते तदा विभक्तिर्मानुप्रयोजि, द्रव्यस्यानभिहितत्वात्तद्वाचिनोऽनुप्रयोगः कस्मान्न स्यात् यदि विभक्त्यर्थोऽभिधीयते कथं ग्रामादिभिः सामानाधिकरण्यं तल्लिङ्गसंख्यायोगे वा बहुव्रीहिर्भवति प्राप्तोदको ग्राम उद्धृतौदना स्थालीति। उच्यते। विभक्त्यर्थस्य सम्बन्धादेराश्रितत्वेन गुणत्वाद-

बहुव्रीहिः प्राप्नोतीति तद्व्यावृत्त्यर्थमन्यग्रहणं विकल्पस्तु शेष इति भावः ॥ भाष्ये एकदेश्याह

नैतदस्तीत्यादि ॥ (भा)

तत्पुरुषः । (भा)

समानाधिकरणतत्पुरुषः । राजपुरुष इत्यादिरपि कर्मधारय एव ॥ इतर एकदेश्याह

भवेदित्यादि ॥ (भा)

स्वरसमासान्तेति । (कै)

पर्यायेणेत्यर्थः । यदा कस्य चित्स्वरः कस्य चित्समासान्त इत्यर्थः ॥ भाष्ये

---

गमिका राज्ञः पुरुष इत्यादौ षष्ठ्यर्थस्य पुरुषे ऽन्वयवारणाय पूर्वपदार्थेन वाच्यम् । सर्वक इत्यादौ व्यभिचारात् । दधीयद्ददाति इत्यादौ दधि-वस्त्वार्थान्वयापत्तेश्च । दधिबहुपटुर्ददाति इत्यादौ दधि बहुत्वार्थान्वया-पत्तिः । पटावनन्वयापत्तिश्च । किं चैवमन्यपदार्थे वर्तमानानेकसुबन्ता-भावेन बहुव्रीहेरेवानापत्तिः । अपि चैवं घटादिपदेष्वपि चरमवर्णस्याच्-प्रत्ययरूपस्य लक्षणयैवोपपत्तौ विभक्तिप्रकृतिकयोच्छेदापत्तिः । अवयव-

---

अनेकोक्तेर्बहूनामपि, चित्रा जरतीगुः । तन्वीदीर्घाजङ्घः । इह प्रथमो न पुंवत् । उत्तरपदत्वाभावात् । द्वितीयोऽपि न । अपूर्वपदत्वात् । उत्तर-पदे नित्यसमासस्य तु नायं विषय इत्युक्तम् । एतच्च केषां चिन्मतम् ।

---

भेदोपचारात्सामानाधिकरण्यमाश्रयतश्च लिङ्गवचनानि भविष्यन्ति शुक्लादि-वत्, तथा शुक्लं वस्त्रं शुक्ला पटी शुक्लः कम्बलः शुक्लाः शुक्ला इति । नन्वेवं यथा शुक्लशब्देन कदा चिद्गुण उच्यते कदा चिद्गुणी तथा बहुव्रीहावपि प्राप्नोति । नैषोऽस्ति नियमो गुणशब्देन कदा चिद्गुणमात्रमभिधीयतइति

**अशेषत्वान्न भविष्यतीति ।** (भा)

पदतोऽर्थतो वा शेष इत्यभिमानः ॥ एतदर्थकं शेषग्रहणं प्रत्याख्यातमित्याह

**प्रत्याख्यानमिति ।** (कै)

[१]"आकडार"सूत्रोक्तमित्यर्थः । पदतोऽर्थतश्च शेषे द्वीरावतीके दोषः । पदत एव शेषे वीरपुरुषकादौ दोषः ॥

**समासविधाविति ।** (कै)

[२]"संख्यावंश्येन" [३]"नदीभिश्च" [४]"अन्यपदार्थे च संज्ञायां"

---

१ अ १ । पा ४ । सू १ ॥ २ अ २ । पा १ । सू १९ ॥
३ अ २ । पा १ । सू २० ॥ ४ अ २ । पा १ । सू २१ ॥

---

तल्लक्षणाद्यज्ञानतामपि बोधात् तत्र सा चेत् प्रकृतेऽपि तुल्यम् । कस्यचिदवयवलक्षणाज्ञानाद् बोधेऽपि न तत् तत् साधुत्वं सूत्रविरोधात् । सूत्रे लाक्षणिकार्थान्वाख्यानस्यादृष्टत्वात् । व्याकरणस्य शक्तिग्राहकत्वभङ्गापत्तेश्च । किं चैवं प्रातिपदिकात् कर्मत्वादौ स्वादय इति शास्त्रतः प्रत्यासत्त्या लब्धायाः प्रत्ययानां प्रकृत्यर्थान्वितस्वार्थबोधकत्वव्युत्पत्तेर्लक्षणस्य परस्परं प्रकृतिप्रत्ययार्थान्वये एव तयोः साधुत्वस्य च भङ्गः । उत्तरपद-

---

परमार्थस्तु भाष्यभाष्यादिपर्यालोचनया नेह पूर्वपदमाक्षिप्यते । आनङ् ऋत इत्यत्र यथा । इष्टसिद्ध्यनुरोधेन पूर्वपदं क्वचिदाक्षिप्यते न तु सर्वत्रेति ओजःसहोम्भ इति सूत्रे हरदत्तेनोक्तत्वाच्च । तेनोपान्त्यस्य पुंवद्भाव ।

---

पट्वादिष्वदर्शनात्, नहि भवति देवदत्तस्य पटुरिति तद्वदिहापि नित्यमेव गुणिनिष्ठता भविष्यति, एवमपि बहुव्रीहिणा यथा विभक्त्यर्थस्याभिधानात् षष्ठ्यादयो न भवन्ति तथा लिङ्गसंख्ययोरप्यभिधानात्तयोर्वाचकाः प्रत्यया

"मध्यमध्यमवीरास्थ" ""नञि"त्यचेति भावः॥ पदतोऽर्थतस्य शेषार्थकस्य तस्य प्रत्याख्याने परंकार्यमिति पाठे ऽन्यग्रहणमावश्यकमित्याह

तत इति॥ (कै)

## नीलोत्पलं सर इति। (कै)

इदमुपलक्षणं बहुपदकबहुव्रीहेः। स्वपदार्थेऽपि स्यादित्यपि बोध्यम्। परिनिष्ठितविभक्त्या समासमज्ञानतो भाष्ये ऽक्रियमाणे इत्याद्युक्तिरिति बोध्यम्॥

---

१ अ २। पा २। सू ६॥

---

मात्रस्य प्रकृतत्वात्। प्रकृतित्वं च प्रत्ययविधानावधित्वम्। तच्चान्यस्थानविशेष्यत्वं च प्रकृत्यर्थत्वे। एतेन प्रासादको ग्राम इत्यादौ यदुक्तन्तदप्यपास्तम्। किं च स्ववाच्यार्थघटितलक्षणायां तात्पर्यग्राहकत्वस्य चित्रगुरित्यादौ क्रमस्य भङ्गापत्तिः। व्युत्पत्त्यन्तरस्वीकारे विशिष्टशक्तिरेवोचिता। एवम् ऊढरथादावपि विशिष्टशक्त्यादिनास्तु न कश्चिद् व्युत्पत्तिविरोधः सर्वव्युत्पत्तीनां भिन्नोपस्थितिजनकशब्दविषयत्वात्। तत्र विशेषविशेषणभावत्रैपरीत्यान्तर्भाविनैव संसर्गे ऽन्यपदार्थे च शक्तिकल्पना।

---

चित्राजरद्गुरित्यादि। अत एव चित्राजरत्यौ गावौ यस्येति विग्रहेऽप्येवमेव। अदृष्टसदृशप्रजमिति तु कर्मधारयोत्तरपदो द्वयोरेव बहुव्रीहिः। अपि च परमस्वधर्मः। स्वशब्दस्य निरपेक्षपूर्वपदत्वाभावात्ततो धर्मशब्दपरो न तु केवलादिति नानिच्। कर्मधारयपूर्वपदे तु भवत्येवेति वक्ष्यते। किञ्च

---

न प्राप्नुवन्ति, नैष दोषः। स्वार्थिकाष्टाबादयः स्त्रियां यद्वर्तते तस्मात्स्वार्थिकाष्टाबादयो भवन्तीति तेन बहुव्रीहिणाऽभिहितेऽपि स्त्रीत्वे भविष्यन्ति एवं च कृत्वा 'ङ्गो बहुव्रीहे' रित्यद्युपपन्नं भवति, समासेन च बाह्यक्रियापेक्षा या कर्मादिशक्तिस्तद्रहितसमासप्रातिपदिकार्थमात्रस्यैवैकत्वादेरुक्त-

कंठेकाल इत्यादिश्चेति। (कै)

बहुपदके बहुव्रीहिविधानं सावकाशमिति वक्तुं युक्तम्॥

ततश्चेति। (कै)

न चैकसंज्ञाधिकारात् बहुव्रीहिसंज्ञया कर्मप्रवचनीयत्वबोधे पत्वं स्यात्। किं च कर्मप्रवचनीयत्वस्य निरवकाशत्वेन तया बाधा- द्बहुव्रीहिसंज्ञैव न भविष्यतीति वाच्यम्। उपसर्गसंज्ञाया अपि तद्रीत्या बाधात् परं कार्यत्वपक्षे समावेशसंभवाच्चेत्यभिमानः॥

---

चित्रगुरित्यादौ स्वामिभावादिसम्बन्धेन चित्रगोविशिष्टः समासार्थस्तत्रा- न्वयः स्वस्वामिभावादिः सम्बन्धस्तेत्युभयं समासार्थः। यद्वा संसर्गरूपो- विभक्त्यर्थ एव बहुव्रीहिप्रत्ययः। न च विभक्त्यर्थस्यासत्त्वरूपतया लिङ्गसंख्या- कार्य्यानुपपत्तिरिति वाच्यम्। गुणवचनवत् यत् द्रव्याश्रितो ऽसौ सम्बन्धः तल्लिङ्गसंख्याभ्यां तस्य योगाङ्गीकारात्। एवं समासेनाभिधीयमानः सम्बन्धः सम्बन्धितादात्म्येनैवाभिधीयते। तत्र द्विष्ठत्वेऽपि सम्बन्धस्य सम्बन्ध्यन्तरस्य विशेषणतया शब्देनैवोपात्तत्वात् प्राधान्याच्च स्वामिन एवाश्रयत्वं व्यवस्था- प्यत इति तद्गतलिङ्गसंख्या भवतः॥

---

सुसूक्ष्मजटकेशेन सुनताजिनवाससा।

समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिध्यति॥

अयं श्लोकः समर्थसूत्रे भाष्ये पठितः। सुष्ठु सूक्ष्मा जटाः केशा

---

त्वादिति कर्मादिगतैकत्वादिप्रतिपादनाय वचनानि भविष्यन्ति चित्रगुं पश्य चित्रगुणा कृतमिति, एवमपि प्रथमा न प्राप्नोति समासेन संख्याया अभिधानात्, वचनग्रहणादेको द्वौ बहव इतिवद्भविष्यति, अथवा लिङ्ग- मात्रं संख्यामात्रं बहुव्रीहिणाभिहितं न विशेषस्तत्रावश्यं विशेषार्थिना

केचिदिति । (कै)

अथाहश्चित्तु स्यादित्यनेन अपेक्षासत्त्वेऽप्येकार्थीभावाभावः स्यादिति ॥

पदमिति । (कै)

प्रकृतिप्रत्ययार्थयोरप्येकार्थीभावः स्यादित्यभिमानः । अत्र व्याख्याने एकसंज्ञाधिकारेऽप्युक्तदोषो न संज्ञयोर्भिन्नाश्रयत्वात् ॥

विच्छिन्नत्वादिति । (कै)

अतिङ्ग्रहणं तु नानुवर्त्तते व्याख्यानादिति भावः ॥

योगद्वये एवेति । (कै)

तत्रैवातिङ्पदसंबन्धादिति भावः ॥

---

सम्बन्धसम्बन्धिनोः स्वरूपातिरिक्तसम्बन्धाभावेन सम्बन्धितादात्म्ये एव पर्यवसानं बोध्यम् । शब्दशक्तिस्वभावाच्च । पटस्य शुक्ल इत्यत्रेव न भेदेनात्र विवक्षा । वाक्ये तु भेदेनैव विवक्षेत्यन्यत् । पक्षद्वयमपीदं भाष्ये स्पष्टमितिबहवः । परे तु एवं सति प्रासादि पदेऽपि विशेषणविशेष्यभाव-

---

यस्येति चतुर्थ्यां बहुव्रीहौ "ङ्यापोः संज्ञाछन्दसोर्बहुलमि"ति बहुलवचना-द्ध्रस्वत्वम् । यद्वा जटावन्तो जटाः । अर्श आद्यच् जटाः कृता जटा इति

---

तदाची शब्दः प्रयोक्तव्यः । एवं च कृत्वा सह प्रकृत्यर्थेन विभक्त्यर्थे बहुव्रीहिणाऽभिधीयमाने ऽपि न कश्चिद्दोषः । कथं सामान्यमभिहितं विशेषस्यानुप्रयोगः सामान्यस्य तर्हि न प्राप्नोति देवदत्तः कश्चिदिति । सामान्यमपि विशेषो यथा विशेषेण विशेषान्तरं व्यावर्त्यते तद्वत्सामान्येन विशेषो व्यावर्त्यते । अन्यथा सन्देहः स्यात्सामान्यमत्र विवक्षितं विशेषो वेति । प्रासोदको ग्राम इत्यादीनि द्वितीयाद्यर्थेषु यथाक्रममुदाहरणानि । ऊढो

गुणे संख्याया इति । (कै)

सुबन्तत्वस्य प्रत्येकसमाप्तत्वादिति तु वक्तुं युक्तम् । समासविधानं चेति पाठे चस्त्वर्थे ॥

द्यहजातादाविति । (कै)

१"कालाः परिमाणिनेति" सूत्रस्थेन "उत्तरपदेन परिमाणिना द्विगोः सिद्धय" इति वार्त्तिकेन सिद्धे बहूनां तत्पुरुषे इत्यर्थः । तदपि वचनमेतज्ज्ञापकसिद्धमेव नापूर्वमित्याशयेन भाष्ये द्विगुग्रहणम् । तत्पुरुषोऽपीत्यस्य "कालाः परिमाणिने"त्येतद्विषयेऽपि तत्पुरुष इत्यर्थ इत्यन्ये ॥

---

१ अ २ । पा २ । सू ५ ॥

---

व्यत्यासकल्पने गौरवं बहुव्रीह्युपजीव्यस्यैकधर्मिबोधकत्वरूपसामानाधिकरण्याभावात् पुंवत्त्वानापत्तिश्च । किं चालौकिकविग्रहे एकार्थीभावरूपसामर्थ्यकल्पनया तत्र तन्मूलके विशेषणत्वव्यत्यासे पदयोः सामानाधिकरण्याभावेन समासशास्त्राप्राप्तिः । स्वघटकार्थघटितैकार्थीभावस्य चित्र-

---

वा तत्करोतीति ण्यन्तादेरच् । एवं सुष्ठु नतम् अजिनं वास आच्छादनं यस्य तेन समन्तानि शितीनि रन्ध्राणि यस्येति विग्रहः । द्वयोर्वृत्तौ हि

---

रथो येन । उपहृतः पशुर्यस्मै । उद्धृत ओदनो यस्याः । चित्रा गावो यस्य । वीराः पुरुषा यस्मिन्निति विग्रहाः । 'प्रथमार्थे तु न भवन्तीति' । अनभिधानात् । एवमनन्तरादिषु न भवति चित्रा गावो यस्यानन्तरा इति । 'अनेकमिति किमिति' । सुप्सुपेत्यधिकारादेव तत्पुरुषवद्बहुव्रीहिरप्येकस्य न भविष्यतीति प्रश्नः । 'बहूनामपि यथा स्यादिति' । 'अन्यथा सुप्सुपेति संख्याया विवक्षितत्वाद्यथा तत्पुरुषो बहूनां न भवति महत्कष्टं श्रित इति

ज्ञापकफलस्येति । (कै)

संख्याऽविवक्षारूपस्येत्यर्थः। यद्वा यथाकथंचित्सुबन्तत्वादिग्रहणरूपस्येत्यर्थः॥ सर्वत्रापि समासस्य ग्रहणेन विधानादाह

विशिष्टेति॥ (कै)

संख्याविवक्षेति। (कै)

मुख्यसुबन्तत्वपर्याप्त्यधिकरणग्रहणाविवक्षेत्यपि बोध्यम् ॥

संख्याया अविवक्षेति। (कै)

यथाकथंचिद् द्वितीयान्तग्रहणविवक्षेत्यपि बोध्यम् ॥

---

त्वादौ लक्षणस्य भङ्गश्च। तस्मात् प्राप्तिकर्तृ-उदककर्म इत्यादि प्रकारेण बोधः। उदके तन्निरूपकत्वबाधेन तु विशेषणभूतप्राप्तौ तत्पर्यवसानम्। स्वर्गो ध्वस्त इतिवत्। अत एव विशेष्यविशेषणभावव्यत्यासस्यैकार्थीभावकृतविशेषेऽनुक्तिर्भाष्ये विभक्त्यर्थस्य प्राधान्येऽपि धर्मिबोधकत्वमुक्तरीत्यैव।

---

केशवासो रन्ध्रेभ्यः पूर्वं उदात्तः स्यात्। इष्यते तु सुसमन्तयोः प्रकृतिस्वर इति भावः। एवं नीलोज्ज्वलवपुः। इहापि नीलशब्दस्य प्रकृतिस्वरः। न

---

तथा बहुव्रीहिरपि न स्यादिति भावः। ज्ञापकात्सिद्धम्। यदयं तद्धितार्थेत्युत्तरपदे द्विगुं शास्ति तज्ज्ञापयति बहूनामपि समास इति। यद्येवं तत्पुरुषेऽपि प्रसङ्गः। अथ चित्रगुरित्यत्रोत्तरपदस्याप्युपसर्जनसंज्ञा प्रयोजनं कस्मान्न भवति सत्यनेकग्रहणे सुपेत्यस्य निवर्तितत्वादुत्तरपदमपि तेनैव प्रत्याय्यते तदपि समासशास्त्रे प्रथमानिर्दिष्टं भवति नान्यथा। एवं मन्यते चित्रगुस्तिष्ठति चित्रगुं पश्येति प्रधानस्यान्यपदार्थस्य नानाविभक्तियोगेऽपि वर्त्तिपदयोर्नित्यप्रथमान्तत्वादेकविभक्तीत्येव सिद्धमुपसर्जनत्वमिति। 'सुसूक्ष्मजटकेशेनेति'। सुष्ठु सूक्ष्मा जटाः केशा अस्येति चतुर्णां बहुव्रीहौ 'इगापोः

अबाध इति । (कै)

अन्यत्र मुख्यद्वितीयाद्यन्तग्रहणं "सुप्सुपे"त्यत्र तु ज्ञापकेन यथाकथंचित्सुबन्तग्रहणमिति तत्त्वमत्र तदापि द्वन्द्वबहुव्रीहि-विधायके एवेष्टानुरोधात् । परिमाण्युत्तरपदकसमासविधौ चेति बोध्यम ॥ "ग्रहणेन तत्पुरुष" इत्यत्र तत्पुरुषपदमव्ययीभावस्याप्युपलक्षणम् ॥

---

*यत्तु मीमांसकाः । बहुव्रीहौ "चित्राणां गवाम् अयम्" इति विग्रह उचितो न तु "चित्रा गावोऽस्य" इति । वृत्तिविग्रहयोर्भिन्नार्थत्वस्यानौचित्यात् । ग्रामोदक इत्यादेरपि ग्रामस्योदकस्यायम् इति विग्रहः । ग्रामोदकसम्बन्धीतिबोधः । सम्बन्धस्य स्वकर्तृकप्राप्तिकर्मत्वादिरिति तन्न । एवं

---

च चित्रगुरित्यत्र उत्तरपदस्याप्युपसर्जनसंज्ञार्थमनेकग्रहणमिति वाच्यम् । प्रथमानिर्दिष्टत्वं विनापि एकविभक्तीत्यनेन तत्सिद्धेः । प्रधानस्यान्यपदा-

---

संज्ञाछन्दसोर्बहुलमि'ति बहुलवचनाद्ध्रस्वत्वम् । यद्वा सुष्ठु सूक्ष्मा जटा येषु ते सुसूक्ष्मजटास्तादृशाः केशा अस्येति पुनर्बहुव्रीहिः । एवं सुष्ठु गजाजिनं वास आच्छादनं यस्य तेन सुगजाजिनवाससा तृतीयान्तोदाहरणं श्लोके तथा पठितत्वात् ॥

---

• अरुणाशब्दो गुणवचनः पिङ्गाक्ष्येकहायनीशब्दौ द्वावपि सामानाधिकरण्यादेकद्रव्यवचनौ । तत्र गुणे संदेहः । किमेकवाक्यगतेनैव द्रव्येण सह संबध्यते । उत प्रकृतेन द्रव्यमात्रेणेति । ननु च पिङ्गाक्ष्येकहायनीशब्दयोरपि गुणवचनत्वान्नैवात्र वाक्ये द्रव्यमस्ति कथं गुणवचनत्वमिति चेत् । उच्यते

बहुव्रीहिसमासोऽयं मत्वर्थे विधीयते ।
सोऽस्यास्तीति च संबन्धे मत्वर्थीयः प्रवर्तते ॥

तन्निवृत्त्यर्थत्वादिति। (कै)

इदं चिन्त्यम्। तदनुवृत्तावपि द्वयोः समासाभावार्थतदित्यस्यापि वक्तुं शक्यत्वात् तन्निवृत्तिं विना सर्वेषामुपसर्जनत्वासंभवो द्वयोः समासाभावश्चेति व्याख्यानात्तन्निवृत्तिरिति तत्त्वम्॥

वृत्तिपदानामेकविभक्तित्वादिति। (कै)

समासापेक्षयेति शेषः॥

---

विधविग्रहस्य मत्वर्थे बहुव्रीहिः कर्तृकर्मवचनेनाप्रथमायाः अप्रथमाविभक्त्यर्थे बहुव्रीहिः शेषो बहुव्रीहिः निकतः शेष इति मुनिवचनविरुद्धत्वात्। नचालौकिके प्रथमान्तानामेव प्रवेशेन न तद्विरोध इति वाच्यम्।

---

र्थस्य नानाविभक्तियोगेऽपि वर्तिपदयोर्नित्यं प्रथमान्तत्वात्। न चैवं राजकुमारीं पश्येत्यादावप्यतिप्रसङ्गः। तत्र द्वितीयाद्यन्तेनापि कुमारीशब्देन

---

सुसूक्ष्मजटकेशेन सुनग्नाजिनवाससा।
समन्तशितिरन्ध्रेण द्वयोर्वृत्तौ न सिध्यति॥

इति भाष्ये श्लोकः पठितः। तत्र तु श्लोकपूरणार्थं तृतीयानिर्देशः। अन्यग्रहणं बहुव्रीहितत्पुरुषयोर्विषयविभागार्थमसति तस्मिन् कण्ठेकाल

---

गोमानित्येवमादिषु हि गोषु प्रातिपदिकेनाभिहितासु तद्वत्यर्थे मतुपाभिधातव्ये अवश्यं तावत्संबन्धः पूर्वतरमभिधातव्यः। कुतः

न हि गोभिरसंबद्धो गोमानित्यभिधीयते।
तस्माद्विशेषणं तत्र संबन्धः पूर्वमिष्यते॥

विशेषणं तावत्सर्वत्र पूर्वतरमभिधीयत इति स्थितम्। इह च संबन्धो विशेषणमिष्यते न गोमात्रम्। असंबद्धेषु प्रत्ययानुत्पादात्। यदि गोमात्रं विशेषणं भवेत् ततस्तासु प्रातिपदिकेनाभिहितासु विशेष्यं प्रत्ययोऽभिदध्यात्॥ संबन्धे पुनर्विशेषणे नियोगतः सोऽभिधातव्यः केन

## यदपेक्ष्येति। (कै)

विग्रहे यदेकविभक्तिकमित्युक्तौ प्रत्यासत्त्या विग्रहीयपदान्तरापेक्षया यत्तादृशमिति लभ्यते। नहि चित्रा गाव इत्येतत्तथेति भावः॥

## अर्थेति। (भा)

यथाकथं चित्पर्यायेण। अन्यस्य समासस्य समासपदाद्यत्किञ्चिदेकविभक्तिकमित्यर्थ इति भावः॥ भाष्ये

---

अलौकिके प्रविष्टानामेव पक्षान्तरे समासाभावे परिनिष्ठितानां तदर्थबोधनाय प्रयोगसम्भवे उपस्थितपरित्यागेनानुपस्थितपदघटितलौकिकविग्रहवाक्यकल्पनाया अनौचित्यात्। किञ्च न केवलमर्थबोधनायैव तद्वाक्य-

---

विग्रहाभ्युपगमात्। अन्यग्रहणं किम्। बहुव्रीहितत्पुरुषयोर्विषयविभागो यथा विज्ञायेत। स्वपदार्थे हि सावकाशं तत्पुरुषं परत्वादन्यपदार्थे बहुव्री-

---

इत्यादौ व्यधिकरणपदे सावकाशं बहुव्रीहिं स्वपदार्थ इव नीलोत्पलं सर इत्यादौ समानाधिकरणे तत्पुरुषो बाधेत। अन्यग्रहणे तु सति स्वपदार्थे

---

चित्। न चास्य प्रातिपदिकमभिधायकमाकृतिमात्राभिधायित्वात्। न च प्रातिपदिकार्थो गमकः। विनापि संबन्धेनोपपद्यमानत्वात्। केवलगोशब्दोच्चारणेऽपि चाप्रतीतेः। गोमत्पदोच्चारणेऽपि प्रत्ययवेलायामेव संबन्धबुद्धिः। अतश्च तदागमे हि तद् दृश्यत इत्यपि प्रत्ययार्थत्वम्। यच्च विशेष्ये वर्त्तते तेन तत्प्रत्यासन्नं विशेषणमुपादातव्यम्। न च प्रातिपदिकं विशेष्ये वर्त्तते यतस्तद्विशेषणभूतं संबन्धमुपाददीत। प्रत्ययस्तु तत्र वर्तत इत्युपादत्ते। स चेदुपात्तस्तेनैव संबन्धिप्रत्ययसिद्धेरभिधानशक्तिप्रतिबन्धाद् विशेष्यानभिधानम्। न च विशेष्यप्रत्ययात्संबन्धप्रत्ययो भवति। प्राक् संबन्धाद्विशेष्यत्वाभावात्सिद्धे च विशेष्यत्वेन संबन्धे न पश्चात्किंचित्प्रयोजनमस्तीत्य-

**कुतश्चिदेव ।** (भा)

**समासार्थविग्रहे इत्युक्तिरूपहेतोः किंचित्पदं समासरूपमध्याहृत्येत्यस्य ज्ञानविषयीकृत्येत्यर्थः । तदपेक्ष इति च शेषः ॥ अनेनोक्तेऽप्यर्थे** *प्रत्यासत्तिमूलकत्वं दर्शितम् ।* **अत एव सभार्य इत्यादावुपसर्जनत्वेन ह्रस्वसिद्धिः । अन्यथा विग्रहीयसप्तपदे विभक्तेरेवाभावेन तदपेक्षया नियतविभक्तित्वाभावात्तदप्राप्तिः । मम तु अनियतविभक्तिकसमासान्तत्वं सूपपादं लुका विभक्त्यनुत्पत्तेरेवाव्याख्यानाच्च ॥**

---

प्रयोगः । किन्तु समासादेर्वैकल्पिकत्वप्रदर्शनायापि तद्दर्शकं चोक्तरीत्या चित्रा गावो यस्य इत्यादेव न त्वदीयम् अत एवाविग्रहो नित्यसमास

---

हिर्बाधते । असति त्वन्यग्रहणे कण्ठेकाल इत्यादौ व्यधिकरणपदे बहूनां समुदाये च सावकाशं बहुव्रीहिं स्वपदार्थे इवान्यपदार्थेऽपि नीलोत्पलं सर

---

सावकाशं तत्पुरुषं परत्वाद्बहुव्रीहिर्बाधत इति न कश्चिद्दोषः । पदग्रहणं किं पदार्थे यथा स्याद्वाक्यार्थे माभूत् कश्चित्कंचिद्दयां सिष्णासुमाह गवां

---

प्रतीतिरिवास्य प्राप्नोति । तस्मात्प्रथमतरप्रत्याय्यत्वात्प्रत्ययार्थः संबन्धः । इतश्च प्रत्ययार्थः संबन्धः ॥

शब्दवृत्तिनिमित्ते हि भावप्रत्यय इष्यते ।
देवदत्तस्य गोमत्त्वं संबन्धश्च प्रतीयते ॥

यथैव शाबलेयस्य गोत्वं विशेषणं यथा च विशेषणभूता जातिर्भावप्रत्ययेन निष्कृष्टाभिधीयत इति गोपदस्य सैव वाच्यत्वेनेष्टा । तथा देवदत्तस्य गोमत्त्वमित्युक्ते गवि प्रतिपत्त्यभावात्संबन्धनिष्कर्षप्रतीतेश्च स एव भावप्रत्ययार्थोऽध्यवसीयते ॥ यश्च भावप्रत्ययार्थः स प्रातिपदिकस्य विशेष्ये वर्तमानस्य निमित्तम् । यच्च निमित्तं तद्विशेषणत्वान्मुख्यमभिधेयं सात्त्विकं

राज्ञो या कुमारीति। (भा)

प्रथमान्तेनैव समास इति दूषणम् ॥

किं तर्हीति। (कै)

वाक्यसंस्कारे परिनिष्ठितविभक्त्यापि समास इति समाधानम् ॥

ततश्चेति। (कै)

तस्य चेत्यर्थः ॥

---

इति वृद्धाः। अन्यथा कुम्भकार इत्येतत्समानार्थकस्य कुम्भस्य कर्ता इत्यस्य सम्भवेन तस्य नित्यसमासत्वं भज्येत। कर्तृपदस्य न समासघटकतेति चेद-

---

इत्यादौ समानाधिकरणे तत्पुरुषो बाधेत। पदग्रहणं किम्। ग्राहवती नदी। इह हि तत्र मा स्नासीदिति वाक्यार्थो गम्यते। अर्थग्रहणं किम्

---

ग्राहाः सन्तीति। एतानि पदानि तस्मात्तत्र मास्नासीरिति वाक्यार्थं गमयन्तीति तेषां बहुव्रीहिसंज्ञा प्राप्नोति। अर्थग्रहणं किं यावता पदे

---

विशेष्यम् ॥ यदि च मतुपा संबन्धोऽभिहितः ततः प्रकृतिप्रत्ययौ प्रत्ययार्थं सह ब्रूत इति गोमत्प्रातिपदिकादुत्पन्नो भावप्रत्ययः संबन्धमभिधातुमर्हति नान्यथा। तस्मादपि संबन्धोऽर्थः। एतेन सर्वे यौगिकाः कृत्तद्धितसमासेषु व्याख्याताः। सर्वत्र हि भावप्रत्ययः संबन्धमभिधत्ते। राजपुरुषत्वमौपगवत्वं पाचकत्वमित्यत एवैते यौगिकाः यतस्तेन निमित्तेन वर्तन्ते। तस्मान्मत्वर्थ-विषयत्वाद्बहुव्रीहेरेकहायन्यादिशब्दैः संबन्धोऽभिधीयते। किं च

यस्मिन्नन्यपदार्थे च बहुव्रीहिर्विधीयते।

तत्रापि प्रत्ययार्थत्वात्संबन्धस्य प्रधानता ॥

एकं हायनमस्या इति षष्ठ्यन्तेनान्यपदार्थः प्रदर्श्यते। षष्ठ्यर्थस्य च प्रत्ययार्थत्वादिह प्राधान्यम्। तद्रूपदर्शनार्थमेव सर्वनामप्रयोगः केवलाया विभक्तेरप्रयोगात्सर्वनामार्थप्रतीत्यभावाच्च। षष्ठ्याश्च स्वस्वामिसंबन्धसमूह-

पर्यायेणेति । (कै)

प्रयोगभेदेनापि यत्रैकविभक्तित्वमेव तत्र यथा स्यादित्यर्थमिति भावः ॥ तदेवं प्रत्यासत्त्यनाश्रयणेन समासापेक्षया विग्रहे ऽनियत-विभक्तिकमित्यर्थमाश्रित्यानेकग्रहणं भगवता प्रत्याख्यातं ज्ञापकक्लेश-परिहारार्थमनेकग्रहणं सूत्रकृता कृतमिति दिक् ॥ वाक्यमुपन्यस्य समासप्रवृत्तेस्तस्यापि वृथात्वमस्तीत्यत आह

---

लौकिकसमासवृत्त्या चित्रागामित्यादेरपि तदघटत्वं तुल्यम । न च चित्रा गावो यस्य इत्यपि विग्रहोऽस्तु तदेकल्पिकत्वबोधकः । अर्थनिर्णयार्थं तु

---

यावता पदे पदान्तरस्य वृत्त्यसम्भवादेव पदार्थे भविष्यति । सत्यम् । कृत्स्ने पदार्थे यथा स्यात् । अन्यथा चित्रगुरिति षष्ठ्यर्थसम्बन्धमात्रपरं स्यात् ।

---

पदान्तरस्य वृत्त्यसम्भवादेव पदार्थे भविष्यति । कृत्स्ने पदार्थे यथा स्यात् । अन्यथा प्राधान्याद्विभक्त्यर्थ एव स्याद् न प्रकृत्यर्थे इत्थं तत्र यदुक्तमभेदोप-

---

विकारावयवादिसंबन्धो वाच्य इत्येतत्प्रसिद्धम् । अतोऽपि संबन्धाभिधानं बहुव्रीहिणा ।

न चाप्यन्यपदार्थत्वं जातेरध्यवसीयते ।
न हि पिङ्गाक्षिसंबन्धस्तस्या नाप्येकवर्णता ॥

व्यक्तिधर्मा ह्येते पिङ्गे अक्षिणी अस्याः । एकं हायनमस्याः चित्रा गावोऽस्येत्येवमादयः । तासां च व्यक्तीनामनन्त्येन संबन्धानुपपत्तेः । व्यभि-चाराच्चावाचकः शब्द इत्युक्तम् । न ह्यत्र जातायां पिङ्गाक्ष्यां प्रथमः प्रयोगो भवेत् । अतोऽवश्यं सामान्यं किंचिद्वाच्यमाश्रयितव्यम् । न च तदिह संबन्धादन्यदुपपद्यते । किं च ।

यथोऽवस्थाभिधीयेत यद्यपि त्वेकहायिनी ।
तथापि गुण एवासौ न द्रव्यमिति गम्यते ॥

## लौकिके प्रयोगे इति। (कै)

लोके सर्वेषां चित्रगुपदशक्यत्वेन तस्य सामान्यशब्दत्वमिति सामान्येनैव विग्रहः कार्यं इति विशेषवाक्यं न बुद्धिस्थमिति। यदा समासः सामान्येन तदा वृत्तिरिति भाष्यार्थ इति भावः॥

## स तद्विशेष एवेति। (कै)

इतरभेदकत्वमेव विशेषत्वमिति भावः। अविश्वमित्यस्यासर्वमित्यर्थः॥ चित्रा गावो देवदत्तस्येति विग्रहेऽपि न देवदत्तः समासशक्यः किं तर्हि विभक्त्यर्थ एवेति भाष्ये पचान्तरमाह

## अथवा विभक्त्यर्थ इति॥ (भा)

---

मदुक्तोऽपि समासघटकपदघटितवाक्यासम्भव एव नित्यसमासत्वमिति न बहुव्रीहेस्तत्त्वमितिवाच्यम्। पक्षद्वयार्थं युगपद्वाक्यद्वयप्रयोगापत्तेः। किञ्च

---

तथा च देवदत्तादिभिः सामानाधिकरण्यं न स्यात्। समानाधिकरणानामेव बहुव्रीहिः। चिकतः शेषस्योक्तत्वात्। तेनेह न। पञ्चभिर्भुक्तमस्य

---

चाराद्धर्मिणोऽभिधाने सिद्धेऽपि शुक्लादिवद्धर्ममात्रस्यापि कदाचिदभिधानं प्राप्नोति तदनेनापाक्रियते पट्वादिशब्दवन्नित्यं धर्मिनिष्ठो बहुव्रीहिरिति

---

तस्मान्न द्रव्यशब्दः कश्चिदत्र विद्यत इत्यनुदाहरणत्वम्। न चान्यदुदाहरणं संभवति साक्षाद् द्रव्यवचनशब्दाभावात्। सर्वत्र हि रूढिशब्दानां जातिवचनत्वं यौगिकानां च संबन्धाभिधायित्वम्। यस्त्वेकान्तेन द्रव्यवचनः स्याड्डित्थडवित्यादिशब्दः स नैव वेदे प्रयुज्यते। तस्माज्जातिगुणयोर्गुणयोरेव वा नियमः स्यादिति सिद्धान्तोक्तावपि योजयितव्यम्। अथवाधिकरणमेव निर्विषयत्वान्नारब्धव्यमिति॥ उच्यते॥

सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते।
न हि संबन्धवाच्यत्वं संभवत्यतिगौरवात्॥

तद्व्याचष्टे

कृत्स्नेति॥ (कै)

गृह्यत इति। (कै)

स्वतन्त्रः सन् समासघटक इत्यर्थः॥

प्रकृत्यर्थोपसर्जनः प्रत्ययार्थ इति। (कै)

स च संबन्धरूपः सांसर्गिकविषयतानिरूपिता च तन्निष्ठा प्रकारतेति भावः॥

अव्ययेनापीति। (कै)

अन्यथा 'पूरणगुणेति निषेधः स्यादित्यर्थः। अव्ययशब्देन कृदव्ययमेव गृह्यत इति युक्त्यन्तरमप्युक्तं तत्रैव मयेति दिक्॥

१ अ २। पा २। सू ११॥

समसनम् एकीभाव इत्यर्थकसमासे पदप्रतिद्वन्द्विविग्रहपदस्य समासघटकपदानां विभिन्नत्वेन ग्रह इत्यर्थकस्य त्वदुक्ते प्रयोगासम्भवात्। अनेन

पञ्च भुक्तवन्तोऽस्येत्यादौ तु न भवत्यनभिधानात्। अव्ययानां वाच्यः॥ उच्चैर्मुखः। उच्चैःशब्दस्याधिकरणप्रधानत्वाद्वैयधिकरण्याद्वचनमित्याहुः।

प्रतिपादनेन बहुव्रीहिः समानाधिकरणानामित्यादिरभिधानसिद्धस्यार्थस्य प्रपञ्चः। 'उच्चैर्मुख इति'। उच्चैसोऽधिकरणप्रधानत्वाद्वैयधिकरण्याद-

यद्येकहायन्यादिभिः शब्दैः संबन्धोऽभिधीयेत ततो नोदाह्रियेरन्। न त्वेतैः संबन्धोऽभिधीयते। कथम् अतिगौरवात्। इह हि संबन्धमात्रं वाभिधेयं कल्प्येत तद्विशेषो वा। यदि तावत्संबन्धमात्रं ततः सर्वयौगिकानामेकविषयोपनिपातात्पर्यायत्वप्रसङ्गः॥ अथ संबन्धविशेषः ततस्तस्य स्वतो विशेषाभावादवश्यं संबन्धिकृत एव भेदोऽभ्युपगन्तव्यः। संबन्ध्यपि चानभि-

**लिङ्गसंख्याभ्यामिति ।** (भा)

इदमुपलक्षणं चित्रगुर्देवदत्त इति समानाधिकरण्येन व्यवहारो न स्यादित्यपि बोध्यम् ॥

**न्यायसिद्धानीति ।** (कै)

अत्र चेदमेव भाष्यं मानमन्यथा [1]"गुणवचनेभ्य"स्य वाचनिकतया समासस्य [2]आकडारसूत्रोक्तरीत्या गुणवचनत्वाभावेन वचनाप्रवृत्तावसंगतिः। गुणवचनत्वे तु यथातथाशब्दासंगतिः स्पष्टैव ॥

---

१ सिद्धं तु यथा गुणवचनेषु । २ अ १ । पा ४ । सू १ ॥

---

षि वृत्तिघटकपदानां भेदेन स्वरूपज्ञापकस्य विग्रहत्वं लभ्यते। न च त्वदुक्ते तदस्तीत्यलम् । वृत्त्यर्थप्रदर्शनार्थे कल्पिते चित्रागावो यस्य इत्या-

---

त्रिकतः शेष इत्युक्तरीत्या प्रथमान्तस्यापेक्षितत्वात्तस्य चेहापि सत्त्वाच्छक्य-मकर्तुमिदं वचनम् । अत एव वाक् च दृषच्च प्रिया यस्येति त्रिपदबहु-

---

चनम् । 'सप्तम्युपमानेति'। सप्तम्यन्तमुपमानवाचि च पूर्वपदं यस्य तस्य शब्दान्तरेण समासस्तत्रस्थस्योत्तरपदस्य लोप इत्यर्थः । 'कण्ठेस्थ इति'।

---

धीयमानो न शक्नोत्यभिधीयमानं संबन्धं व्यवच्छेत्तुमित्यवश्यं सोऽप्यभिधातव्यः। न चैकस्मिन्संबन्धिनि संबन्धोऽवस्थितः। न च तन्मात्रेणान्यस्माद्व्यवच्छिन्नः प्रतीयत इत्युभावप्यभिधातव्यौ । तत्र गोमानित्येकः संबन्धो गोशब्देनाभिधीयते। द्वितीयस्य कश्चिदभिधाता दृश्यते। तेन मतुपा विशिष्टं संबन्धमभिदधता तद्वन्तं सन्तं संबन्धिनमेकमनुक्त्वाभिधातुमशक्नुवता नियोगतः सोऽप्यभिधातव्यः ॥ ततश्च तमभिधाय संबन्धाभिधायामतिगौरवं स्यात् ॥ अपि च ॥

संबन्धिनैव संबन्धः प्रत्येतुं यदि शक्यते ।
पुनस्तस्याभिधाशक्तिं कः श्रुतेः परिकल्पयेत् ॥

**अभेदोपचारादिति । (कै)**

आश्रयाभेदमापन्नविभक्त्यर्थ एव चित्रग्वादिपदैरुच्यत इति भावः ॥

**संबन्ध्यभिधीयत इति । (कै)**

विशेष्यतयाऽऽश्रीयते चित्रगुर्देवदत्त इत्यादावित्यर्थः ॥ ननु गवामपि संबन्धित्वात्तद्गतलिङ्गसंख्ये किं न स्यातां तत्राह

**तत्र द्विष्ठत्वेऽपीति । (कै)**

गवादिरूपस्वनिरूपितसंबन्धस्यैव बोधनेन स्वामिन एवाश्रयत्वात्तद्गतलिङ्गसंख्ये एव भवत इत्यर्थः। एवं च बहुव्रीहेः सामान्य-

---

दावपि विशेष्यविशेषणभावव्यत्यासात् चित्रगोसम्बन्धीत्येव बोधः। व्यत्यास-बोधनार्थैव चित्रा गावो यस्य स चित्रगुः इति प्रदर्श्यते वृद्धैः। सर्वनामसंज्ञा-

---

प्रोक्तौ कृते अवान्तरद्वंद्वोऽभ्युपगतः। प्रादिभ्यो धातुजस्य बहुव्रीहिर्वक्तव्यः ॥ वा चोत्तरपदलोपः ॥ प्रपतितपर्णः प्रपर्णः। नञोऽस्त्यर्थानां बहुव्रीहिर्वा

---

'सुपिस्थ' इति कः। अमूर्द्धमस्तकादित्यलुक्। कण्ठेस्थित इति पाठे तु सप्तमीति योगविभागात्समासः। समानाधिकरणत्वात्समासे सिद्धे वचन-

---

यदा च पूर्वतराभिहितसंबन्धिप्रतीत्यैव संबन्धोऽप्याक्षिप्तः तदा नैव प्रत्ययेनापि सोऽभिधीयत इति शक्यं वक्तुम् ॥ तस्मादर्थाक्षिप्तेनैव संबन्धेन भवितव्यम्। यत्त्वप्रतीते संबन्धे विशेष्यं न प्रतीयत इति। तत्र ब्रूमः।

विशेषणाद्विना नेष्टो विशेष्यप्रत्ययोद्भवः।

विशेषणं च गावोऽत्र न संबन्धः कथं चन ॥

देवदत्तो हि गोभिरवच्छिन्नो विवक्षितः॥ ताश्च प्रातिपदिकेनोपात्ताः सन्त्येव। यत्तु न संबद्धाभिरवच्छिद्यत इति। सत्यं नावच्छिद्यते तेनैव ताभिः

शब्दत्वमेवेति विशेषज्ञानायानुप्रयोग आवश्यक इति भावः॥ ननु बहुव्रीहेः संबन्धिपरत्वस्योक्तत्वेन "यदि तर्हीति" भाष्यानुत्थान-माशङ्क्याह

यथेति। (कै)

एवं च "कथमभिहित" इति भाष्यस्य सर्वदेत्यादिर्बोधः॥

द्रव्यशब्देनेति। (कै)

तदेव दर्शितं भाष्ये "सलिङ्ग" इत्यादिना॥

अर्थस्यैव लाभादिति। (कै)

स चार्थः प्राधान्यादिभक्त्यर्थ एव गृह्यत इति भावः। अर्थ-ग्रहणसामर्थ्याच्च संबन्धादिर्विभक्त्यर्थ आश्रयाभिन्न एव बुध्यत इति तत्त्वम्॥ एवं च पद्मादिशब्दवन्नियमेन गुणिपर एवायं न कदा

---

सूत्र (१।१।२७) भाष्येऽपि सर्व आदिर्येषां तानि इति विग्रहो दर्शितः। "सर्वनाम्नामुत्सर्गतः प्रधानपरामर्शित्वात् स चित्रगुः इत्यनेन स्वामिप्राधान्यं

---

घोत्तरपदलोपः। अविद्यमानपुत्रः अपुत्रः। अस्तिक्षीरादीनामुपसंख्यान-मसुबन्तत्वात्॥ अव्ययत्वात्सिद्धम्। तथाहि। विभक्तिप्रतिरूपकत्वान्नि-

---

मुत्तरपदलोपार्थम्। तेन वैयधिकरण्येऽप्यत्र गमकत्वमस्तीति प्रदर्श्यते। 'उष्ट्रमुखमिवेति'। अवयवधर्मेण समुदायव्यपदेशादुष्ट्रस्योपमानतेत्युपमान-

---

संबन्धाक्षेपोऽर्थाल्लभ्यते सर्वथा तावद्गोमच्छब्देन गोविशिष्टोऽर्थमित्येतद-भिहिते कथमवस्थितास्ता गावस्तं विशिंषन्तीति तासामेवैष व्यापारो न शब्दस्य। तथा हि॥

न विशिंषन्ति गावोऽर्थं पृथिव्यामनवस्थिताः।
तत्र किं शक्यते वक्तुं पृथिव्यप्यभिधीयते॥

चिदपि गुणपर इति भावः ॥ "यदितर्हीं"त्यादिभाष्यमेकदेशिनो घटादिशब्देष्विव तदुपपत्तेः । पंचकस्य सर्वत्र प्रातिपदिकार्थत्वात् ॥

## न प्राप्नुवन्तीति । (कै)

उक्तार्थानामप्रयोगादिति भावः ॥

## कर्मादिगतैकत्वेति । (कै)

द्व्यादिनिरूपितकर्मादिशक्तिविशिष्टप्रातिपदिकार्थगतैकत्व इत्यर्थः ॥

---

प्रदर्श्यते" इति कैयटः । अत एव मासजात इत्यादेर्मासजातस्य यस्य स इति विग्रहं प्रदर्शयन्ति । चित्रा गावो यस्य स चित्रगुः इति वाक्ये चित्रगुपदं

---

पातसंज्ञा निपातो ऽव्ययमित्यव्ययसंज्ञा । इह द्वौ द्रोणौ अर्द्धद्रोणश्च अर्द्धतृतीया द्रोणा इति व्यवह्रियते तत्र अर्द्धतृतीयो येषामिति बहुव्रीहिः ।

---

पूर्वपदमुष्ट्रमुखशब्दः । अत्रोपमानोपमेययोर्वैयधिकरण्यवद्वचनमुत्तरपदलोपार्थं च । 'उष्ट्रमुख इति' । उष्ट्रो मुखमस्येति विग्रहः । न च प्राणी

---

न हि येन विनार्थात्मलाभो नास्ति तत्तदभिधातव्यं किं तर्हि यावता विना विशिष्टबुद्धिर्नोत्पद्यते । गोभिश्चाप्रतीताभिः तद्वति बुद्धिर्नोत्पद्यते न सबन्धेनापि । किं च ॥

वक्तृव्यापारमाधं च संबन्धप्रत्यवेक्षणम् ।
स हि गोभिरसंबद्धं न गोमन्तं विवक्षति ॥

सर्वत्र हि वक्तृक्रमविपर्ययेण श्रोतुः क्रमो भवति । स हि प्रथमं तावत्किं चिद्विशेष्यं विवक्षति ततस्तस्य केन चिद्विशेषणेन विनाभिधातुमशक्तेः विशेषणविवक्षां करोति ततः शब्दोच्चारणम् । श्रोता पुनः प्रथमं तावच्छब्दं शृणोति ततो विशेषणं ततो विशेष्यं ततस्तदुपपत्त्यर्थानि वस्त्वन्तराणि प्रपद्यते । तेन यद्यपि वक्त्रा पूर्वं संबन्ध आलोचितः तथापि श्रोता

समासेनेति । (कै)

प्रथमा हि प्रातिपदिकार्थगतसंख्यामात्राभिधायिनीति तत्सूत्रानुवृत्तमनभिहित इति तस्या एव विशेषणमिति भावः ॥ नियोग इत्यस्यार्थो

नियमेनेति ॥ (कै)

नियमाभावमुपपादयति

प्रतिनियतैवेति । (कै)

समयो हि सामान्यतो विभक्तिं बोधयति न प्रतिनियतां कांचिदिति भावः ॥

---

तत्पदबोध्यपरम् । चित्रगोसम्बन्धी यो भवति स चित्रगुपदो बोध्य इति बोधः । पचतीति पाचक इत्यादेः पाचकपदं पचतीत्येतत्समानार्थमिति बोधः ।

---

उद्भूतावयवभेदः समुदायः समासार्थ इति बहुवचनं शोणशब्दस्य शोणयोरश्वशोणे च लक्षणया वर्तेत इति सामानाधिकरण्यम् ॥

---

प्राण्यन्तरस्य मुखमुपपद्यत इति सामर्थ्यात् सादृश्यावगतिः । मुखेन च मुखस्य सादृश्यं प्रसिद्धमित्युष्ट्रमुखमिव मुखमस्येत्ययमर्थो भवति तस्मा-

---

पश्चादेवैनं ग्रहीष्यति । न त्वत्र वक्त्राप्यसौ पूर्वतरमवधारितः ॥ संबन्धेनोद्गृहीतयोर्ग्रहीतुमशक्यत्वादतस्तदीयेनापि क्रमेणोत्तरकालमेव प्रतीयमानः संबन्धो नार्थान्तिमत्वं परित्यजति । वस्तुधर्मस्त्वेषः यदसंबद्धा गावो न विशिंषन्ति स तासां व्यापारो न शब्दस्य । तेन यं यथावस्थितं शक्नुवन्ति विशेष्टुं स तथाव्याख्यायते । संबन्धस्त्वासौ विशेष्यत्वं प्रतिपद्यत इत्यर्थात्संबध्यते ॥

विशेष्यत्वेन संपन्नं तद्विशेषणसंगतम् ।
गोविशिष्टोऽयमित्येवं गोमच्छब्दोऽभिधास्यति ॥

यदीति। (कै)

यत इत्यर्थः। यतः प्रतिनियतैव समया न भवति तद्घटितसमयाभावादित्यर्थः॥

द्वितीयादयोऽपीति। (कै)

अर्थाभावेऽपि नियमपरिपालनाय विभक्तिस्तेऽप्रथमैवेति नियमाभावादिति भावः॥

प्रातिपदिकेति। (कै)

कर्मादिप्रातिपदिकार्थव्यतिरिक्तो हि शेष इत्यर्थः॥

---

पचति पाकं करोति इत्यतोऽपि पचतिपदमेककर्तृकपाकक्रियाबोधकमिति बोधः। एवमन्यत्रापि। एवं च वृत्तिविग्रहयोः समानार्थता स्फुटैव। विग्रहस्य वृत्त्यर्थवृत्तिवैकल्पिकत्ववृत्तिघटकपदस्वरूपबोधनोद्देशेन प्रवृत्तं

---

दुत्तरपदलोपो न वक्तव्यः। 'समुदायविकारषष्ठ्या इति'। समुदायावयवसंबन्धे प्रकृतिविकारसंबन्धे च या षष्ठी तदन्तात्परं यदुत्तरपदं तदन्तस्य समासस्य शब्दान्तरेण सह बहुव्रीहिरित्यर्थः। 'केशचूड इति'। इदमपि

---

तस्मादप्यनभिधेयः संबन्धः॥ किं च

विभक्तिवाच्यरूपेण संबन्धो नावगम्यते।

रूपान्तरेण वक्तव्य इति नास्ति च लक्षणम्॥

षष्ठीसप्तमीभ्यां हि यादृक् संबन्धः स्वप्रधानोऽसत्त्वभूतस्य प्रत्याय्यते न तादृक् मत्वर्थीयेन। न च कृदभिहितो भावो द्रव्यवत् भवतीत्येवमिव रूपान्तरोपादानं केचिदभिदधति॥ तत्र किमसत्त्वभूतसंबन्धाभिधानमाश्रीयताम् उत संबन्ध्येवार्थलभ्य तद्विशिष्टोऽभिधीयतामिति तदुच्यताम्॥

प्राक्प्रतीतिकसंबन्धिविशिष्टेऽभिहिते परे।

संबन्धिन्येव संबन्धः प्रतीत इति नोच्यते॥

व्यतिकरो (कै)

व्याख्यः॥ अर्थाभावेऽपि समयाद्भविष्यतीत्युक्त्वा ऽर्थतो व्यवस्थेत्युक्तिरसंगतेत्यत आह

यथान्यचेति। (कै)

विरुद्धविभक्त्यपेक्षयानुवादकविभक्तेर्न्याय्यत्वमिति भावः॥ भाष्ये

अथवा सख्या नामेयमिति। (भा)

इयं यदेशिष्येन प्रातिपदिकार्थः प्रतिपिपादयिषितः सापरप्रधाना इतरपरिच्छेदिकैव। तदेवाह

संख्येयमनया विशेष्यमिति। (कै)

संख्येयं द्रव्यं प्रातिपदिकार्थो ऽनया संख्यया विशेष्यं परिच्छेद्यतया बोधनीयमेवं च यावत्संख्यं संख्येयं तावत्संख्याप्रतिपादिका विभक्तिरुचिता विभक्त्यन्तरा तस्या अप्रतिपत्तेरिति भावः॥

---

वाक्यम्। तेन लोके स्वातन्त्र्येणार्थबोधार्थं प्रयुक्ते यथास्थित एव विशेष्यविशेषणभावः॥ तदुक्तं हरिणा—

"क्वचिद्गुणप्रधानत्वमर्थानामविवक्षितम्"।

---

केशसमाहारे केशशब्दस्य वृत्तेः सिद्धम्। एवं स्वर्णविकारे स्वर्णशब्दस्य वृत्तेः स्वर्णालङ्कार इति सिद्धम्। वचनं तु केशसमाहारचूडः स्वर्णविकारालङ्कार

---

यत्तु सिद्धे विशेष्ये न पश्चात्संबन्धप्रत्ययेन कार्यमिति। सत्यं नास्ति। विनापि तु तेन नान्तरीयकत्वात्प्रतीयत इति किं क्रियताम्। यच्च भावप्रत्ययेनाभिधानादस्य मत्वर्थत्वमित्यत्रापि ब्रूमः॥

यदा स्वसमवेतोऽत्र वाच्यो नास्ति गुणोऽपरः।

तदा मत्यन्तराभावात्संबन्धो वाच्य आश्रितः॥

यदि चात्र प्रथमा न स्यादिति । (भा)

असंकरेणेत्यर्थः ॥ तदाह

यदा चित्रगुरिति । (कै)

द्वावित्यादौ यथानुवादकं वचनं नियमेन तथात्रापीति भावः ॥ भाष्ये

अथवा वक्ष्यतीति । (भा)

एवं चोक्तेषु तेष्वसंकरेणैव सेति भावः ॥

षष्ठ्यर्थस्येति । (कै)

अयं भावः । प्रथमायाः समभिव्याहृतप्रातिपदिकस्य चित्रगोरूपस्य प्रवृत्तिनिमित्ततदाश्रयरूपस्वार्थबोधनसामर्थ्येऽप्यतथाभूतसंबन्धबोधे सामर्थ्यं नेति तद्बोधाय सम्बन्धस्योक्तत्वेऽप्यनुवादिका षष्ठ्येव स्यान्न प्रथमा प्रातिपदिकार्थमात्राभावादिति ॥

---

इत्युपक्रम्य

"आख्यातं तद्धितार्थस्य यत्किञ्चिदुपदर्शकम् ।
गुणप्रधानभावस्य तत्र दृष्टो विपर्ययः" ॥

---

इत्युत्तरपदस्य श्रवणं मा भूदिति । 'प्रादिभ्यो धातुजस्येति' । इदं न वक्तव्यमेव प्रादयो हि ससाधनां क्रियां प्राद्वर्थया निष्कौशाम्बिर्निर्वाराणसिः

---

गोमतो भावो गोमत्त्वमिति हि

यन्निमित्तमपेक्ष्यायं गोमच्छब्दः प्रवर्तते ।
स एव गोमतो भाव उच्यते त्वतलादिभिः ॥

तत्र यस्मात्प्रातिपदिकार्थो विशेषणं गावस्तासां तद्वतः पुरुषादत्यन्तभेदाद्भावप्रत्ययेनाग्रहणम् ॥ समवेतगुणग्राही हि भावप्रत्ययः । न चान्यो-

लिङ्गान्तरेति। (कै)

एवं च षष्ठ्यर्थस्य चित्रगुरित्येवं रूपे बहुव्रीहावव्यभिचरितत्वेन नियमेन षष्ठ्यत्र प्राप्नोतीत्यर्थ इति भावः॥

प्रातिपदिकार्थरूपत्वादिति। (कै)

तत्र चाभिहितत्वं हेतुः। एवं च प्रातिपदिकार्थत्वात्तद्बोधिका प्रथमेति भावः॥ एतद् ध्वनयितुमेव

अभिहितः सोऽर्थ (भा)

इत्युक्तम्। तेन च षष्ठ्यप्राप्तिबीजमप्युक्तम्। अनभिहिते शेष एव षष्ठीविधानात्। अत एव घटशब्दान्न षष्ठी। अन्यथा तत्रापि घटत्वसंबन्धस्य नियमेन भानात्षष्ठी स्यात्।

---

इति दीव्यतीत्याद्यर्थविहिततद्धितानां साधनप्रधानत्वेन। सूत्रस्थ-दीव्यतीत्यादौ विग्रहवाक्यस्थे च गुणप्रधानभावो विपरीतो दृष्टोऽन्यथा

---

प्राचार्य इति, एवं नञोऽस्त्यर्थानामित्येतदपि। 'सुबधिकार इति'। अस्तीति तिङन्तमिति मत्वा वचनं निपातत्वात्सिद्धम् उपसर्गविभक्तिप्रति-रूपका निपाताः स्वरादिषु चास्तिशब्दः पठ्यते। इह किं सब्रह्मचारीति।

---

ऽभिधीयमानस्तत्र गुणः संभवति यो निमित्तभावाद्धात्र इत्युच्येत। न च पुरुष एव तस्य भाव इत्येवं व्यपदेशभेदं लभते। तेन भावप्रत्यय आनर्थक्या-त्तदङ्गेष्विवर्थप्राप्तं संबन्धमवलम्बते। निमित्तत्वमपि च तस्य वस्तुलक्षण-मस्तीत्यभिधेयनिमित्तासंभवे तदपि तावद् ग्रहीतामित्येवमाश्रीयते। तस्मादकारणमेतत्। यौगिकानां सम्बन्धाभिधानशक्तिकल्पनायाम्

अतश्च दण्डिशब्देन संबन्ध्येवोच्यते तथा।

तथैव यौगिकैः शब्दैः पिण्डाद्यादिपदैरपि॥

**अन्तर्भूत** (भा)

इत्यस्य प्रवृत्तिनिमित्तत्वं तदाश्रयत्वं वा प्रतिपन्न इत्यर्थः ॥ ननु षष्ठ्या एवापत्तिः। कथम् प्राप्तोदक इत्यादौ द्वितीयादीनामपापत्तेरिति चेन्न। तेषु प्राप्तोदककर्मत्येव बोधस्तत्र विशेष्ये तन्निरूपकत्वबोधेन विशेषणमादाय पर्यवसानमिति द्वितीयादिप्रयोजककर्मत्वादेरबोधेन तदप्राप्तेः। षष्ठ्यर्थस्य तु षष्ठीप्रयोजकरूपेणैव भानमित्याशयात् ॥

**वचनेनेति।** (कै)

[1]समानाधिकरणानाम् [2]अप्रथमार्थे इति वचनाभ्यां विकृतः शेषपचौयोऽर्थः प्रतिपाद्यत इत्यर्थः। शेषग्रहणं तु पदतोऽर्थतो वा शेषबोधकं स्यात्तत्र फलाभावो दोषश्चेति वार्त्तिकतात्पर्यम् ॥

१ बहुव्रीहिः समानाधिकरणानाम् ॥

२ कर्मप्रवचनेनाप्रथमायाः ॥

वृत्तिविग्रहयोः समानार्थत्वं भज्यतेतितदर्थः। यत्तु तत्र तद्धिते विपर्ययो दृष्ट इत्यर्थ वर्णनं भावप्रधानम्। अतिङन्तार्थविहितस्यापि सत्त्वप्रधानते-

बहुव्रीहिरयं के सब्रह्मचारिणस्तव। किं सब्रह्मचारीत्वमिति पूर्वपदप्रकृतिस्वरो ह्यन्वेष्यते तत्र कठसब्रह्मचार्यं हमिति सम्भावितम्रतिवचनम्।

संबन्धस्य च भावत्वं व्याख्येयं तेषु पूर्ववत्।
बहुव्रीहेरतो द्रव्यमभिधेयं न तद्गुणः ॥

यदप्येकं हायनमस्या इत्यन्यपदार्थे षष्ठ्यर्थप्राधान्यात्संबन्धे बहुव्रीहिरिति। तत्राभिधीयते

अभिधेयो बहुव्रीहेर्यद्यप्यस्येति कथ्यते।
तथापि प्रथमान्तेन तुल्योऽसौ संप्रतीयते ॥

## अमूर्धेति । (कै)

[1]"स्त्रे च भाषायामि"ति तु "अनन्तरस्येति" न्यायेन [2]"तत्पुरुषे कृती"त्यस्यैव बाधकमिति भावः ॥

## उत्तरपदलोपार्थमिति ॥ (कै)

कण्ठेस्थकालनिवृत्त्यर्थमित्यर्थः ॥ मुखस्यैवोपमानत्वेनोष्ट्रमुखशब्दस्योपमानपूर्वत्वं कथमत आह

## अवयवधर्मेणेति । (कै)

मुखगतोपमानत्वेनोष्ट्रस्यापि व्यवहारादिति भावः ॥

## वैयधिकरण्यमिति । (कै)

वाक्ये समासे च सादृश्यसंबन्धेनान्वयः ॥ इवशब्दस्तया संबन्धेनान्वयस्यैव द्योतक इत्यभिमानः ॥ [3]उपमानानीति सूत्रभाष्योक्तरीत्या सामानधिकरण्यमस्त्येवेत्यत आह

---

१ अ ६ । पा ३ । सू १० ॥ २ अ ६ । पा ३ । सू १४ ॥
३ अ २ । पा २ । सू ५५ ॥

---

त्याश्रय इति तन्न । अन्तरङ्गत्वादस्यानुगुणं यत्पदपरामृष्टस्य प्रधानस्यैव तच्छब्देन परामर्शात् । एकत्राधिकरणे पूर्वदृष्टगुणत्यागपूर्वकं गुणान्तरा-

---

यत्तु कठोऽहमिति न तस्माच्चात्मतिवचनं किं तर्ह्यार्थिकम् अहं तावत्कठ इत्युक्ते गम्यत एतन्ननुतेऽपि कठा इति । कठस्य हि कठा एव सब्रह्म-

---

यदि त्वन्यपदार्थः षष्ठ्यन्त एव संबन्धी स्यात् ततो यथैव राज्ञः पुरुष इत्यत्र षष्ठ्यन्तत्वाद्राजा पुरुषविशेषणं भवति । प्रथमान्तत्वाच्च पुरुषः प्रधानमपेक्ष्य समासार्थो भवति । एवमेव चित्रम्वादिशब्दैर्देवदत्तादिविशिष्टा गाव एव प्रतीयेरन् न चित्रगोविशिष्टो देवदत्तादिः । तस्मात्

**उत्तरपदेति ॥** (भा)

समुदायविकारवाचकपदस्य षष्ठ्यन्तस्योत्तरपदेन समास इत्यर्थ-भ्रमं वारयति

**समुदायावयवसंबन्ध इति ॥** (कै)

भाष्ये

**यथा पञ्च भुक्तवंतोऽस्येति ।** (भा)

अनेन चिकतः शेष इत्यर्थेऽपि शेषग्रहणं प्रत्याख्यातं तुल्यन्यायादिति बोध्यम् ॥ इदानीमनभिधाने सत्यपि "समानाधिकरणानामि"त्यादिवचनारम्भे ऽन्यस्यापि कर्त्तव्यत्वमापादयति । भाष्ये

**अथैतस्मिन्** (भा)

इत्यादिना ॥

---

कीकारस्यैव विपर्य्ययपदार्थत्वाच्च । अत एव एतद्व्याख्यायां "तेन दीव्यति" ( ४ । ४ । २ ) इत्यादौ निर्देशे गुणप्रधानभावो न विवक्षित इत्याह

---

चारिणो भवन्ति नान्ये समाने ब्रह्मणि व्रतचार्य्येव सब्रह्मचारी भवति । के सब्रह्मचारिणस्तवेति वाक्येन तु प्रश्ने कठा इति प्रतिवचनं समासेन तु प्रश्ने कठा इति प्रतिवचनं कदाचिदपि न भवति वर्तिपदार्थानामुपसर्जनत्वात्

---

**"चित्राणां गवामयमिति"** ईदृशेऽर्थे बहुव्रीहिर्वर्त्तते ॥ यद्यप्यन्यथा विग्रहः तथाप्युत्तरकालमीदृशार्थदर्शनादेवमेव विग्रहोऽपि कर्तव्यः ॥ ततश्च संबन्धविशिष्टाभिर्गोभिर्देवदत्तादिर्विशिष्ट इति समासार्थो विज्ञायते । यथैव च राज्ञः पुरुष इत्यत्र षष्ठ्यां प्रयुज्यमानायां संबन्धः प्रधानभूतोऽभिधीयते कृते च समासे निवृत्तायां विभक्तौ पूर्वोत्तरपदयोः प्रत्येकप्रयोगदृष्टार्थापरित्यागात्संबन्धाधिक्यस्य च सामीप्यावगतविशिष्टार्थप्रत्ययादेव सिद्धेर्न संबन्धपरः समासो भवति । एवमेव षष्ठ्यप्रयोगादेव

## वृत्तिपरिगणनम्। (भा)

वृत्त्याश्रयाणां परिगणनम् ॥

## कष्टं श्रितमनेनेति। (भा)

[1]गत्यर्थेति वा [2]आदिकर्मणीति वा भावे क्तः। यदि कर्त्तरि कर्मणि वा क्तः स्यात् तदोत्तरवचनाभ्यामत्रसमासः स्यादेव। ऊढरथादाविवेति बोध्यम्। मत्वर्थे वर्त्तमानमनेकमित्युक्ते सामानाधिकरण्यमपि लब्धमेवेति बोध्यम ॥

## तथा चोत्तरस्येति। (कै)

वाक्यं केन [3]विभाषयेति सूत्राभिप्रायतया व्याख्यातम्॥ तन्नि-बध्नाति भाष्ये

१ अ १। पा ३। सू ११॥ २ अ ३। पा ४। सू ७१॥
३ अ २। पा २। सू २५॥

**पुञ्जराजः।** अनेन तुल्यन्यायात् सर्वत्र वृत्त्यर्थप्रदर्शनाय प्रवृत्ते वाक्ये वृत्तिवाक्ययोः समानार्थत्वाय विशेषणत्वादिव्यत्यास इति सूचितम्। तथा

किं सब्रह्मचारीति समासेन सब्रह्मचारिणामभिधानात्। 'इह द्वौ द्रोणा-वर्द्धद्रोणश्चार्द्धतृतीया द्रोणा इति'। अर्द्धस्तृतीयो येषामिति बहुव्रीहावु-द्भूतावयवभेदः समुदायः समासार्थ इति बहुवचनं द्रोणशब्दस्य द्रोणयो-रर्द्धद्रोणेऽपि लक्षणया वर्त्तत इति सामानाधिकरण्यं च भवति ॥

बहुव्रीहावपि न संबन्धप्राधान्यम्॥ तच्च न पूर्वोत्तरपदार्थयोर्नाप्यन्यत-रस्येत्यन्यपदार्थभूतद्रव्यप्राधान्याध्यवसानम्॥ स चान्यपदार्थः संबन्धी योग्यता-वशेन जातिद्रव्यगुणक्रियाणामन्यतमः परिगृह्यते। तद्यथा

चित्रव्यक्तिरियं जातिर्द्रव्यं नानागुणं त्विदम्।
गुणोऽनेकाश्रयः कश्चिदियं त्वेकाश्रया क्रिया ॥

केचिदिति। (भा)

अत्र प्रथमान्तसंख्यापदं समानाधिकरणानामित्युक्तावपि व्यर्थं स्यात्। द्वौ वा त्रयो वेत्यादावेकत्रैव समुदाये भिन्नभिन्नविकल्पप्रतीतेर्यथाकथं चित्सत्त्वात्। एवं द्विदशा इत्यत्राप्यूह्यम्। अत्र पक्षे उत्तरस्य योगस्य यद्वचनं करणं तस्यार्थः फलमुपपन्नमित्यक्षरार्थः॥ अस्य कवभावार्थमावश्यकत्वमभिप्रेत्य स्वयमाह

---

च "तद्वहति" (४।४।७६) इति सूत्रे भाष्ये "वहत्यर्थे रथादिभ्यः प्रत्ययविधिरनर्थकः "तस्येदम्" (४।३।१२०) इति विहितत्वात्" इत्युक्त्वा "वहती"त्यस्य क्रियाप्रधानत्वेन "वोढे"त्यस्य सत्त्वप्रधानत्वेन शब्दभेदान्न प्राप्नोति "अन्यः शब्दो रथं वहति अन्यो रथस्य वोढा" इत्याशङ्क्य "अर्थसामान्यात् सिद्धं य एवार्थो रथं वहति स एवार्थो रथस्य वोढेति" इति तद्वैयर्थ्यं दृढं कृत्वा "द्विगोः" इत्यादौ "यतोलुगभावार्थं तद्" इति सिद्धान्तितम्। "य एवार्थः" इत्यादेः रथ्य इत्यस्य विग्रहभूते रथं वहति इत्यत्र योऽर्थः स एव तद्विग्रहभूते "रथस्य वोढा" इत्यत्रेत्यर्थः। एवं च तद्वाक्यासत्त्वेव स्पष्टमुक्तः। एवं च वृत्तिविग्रह-

---

सर्वत्र च योग्यत्वात्समानाधिकरणपदान्तरोपनीतो ऽन्यपदार्थविशेषो गम्यते। तदिदमैकं शायनमस्या इति जातेरनादित्वान्न विशेषणं संभवतीति व्यक्तिराश्रीयते। ननु व्यक्तीनामानन्त्यव्यभिचाराभ्याममनभिधानमुक्तं नैष दोषः

आनन्त्येऽपि हि भावानामेकं कृत्वोपलक्षणम्।

शब्दः सुकरसंबन्धो न च व्यभिचरिष्यति॥

यत्र तावज्जात्यैवान्यपदार्थ उपलक्ष्यते तत्र तयैवैकया सकलव्यक्तीनयोपलक्षिता व्यक्तयो देशादिभिन्ना अप्यभिधास्यन्त इति सुज्ञान संबन्धः॥ न

यद्वार्तिके इति ॥ (कै)

तदेव दर्शयति ।

कर्मवचनेनेति । (भा)

कर्मवचनेनेत्यस्यायमर्थः । प्रथमाभिन्नविभक्त्यर्थे कर्मबोधकेन शब्देन प्रत्यासत्त्या कर्मवाचकस्य समास इति तेन व्यधिकरणे न दोषः । अन्यथा मत्वर्थे इत्यस्याभावे ।

---

योर्विषयतापि समाना । अत एव समर्थसूत्रे भाष्ये "महत् कष्टं श्रितः" इति विग्रहे कष्टश्रितयोः समासः कुतो न इत्याशङ्क्य "इह समानार्थेन वाक्येन भवितव्यं यश्चेहार्थो वाक्येन गम्यते महत् कष्टं श्रित इति न जातु चित् समासेनासौ गम्यते" इत्युक्तम् । तत्र पदार्थानां वाक्ये समासे च प्रतीतिस्तुल्यैव । तथापि महत् कष्टं श्रित इति वाक्ये कष्टपदार्थो विशेषणत्वानाक्रान्त स्वनिष्ठ विशेष्यतया बुध्यते । समासे तु श्रितनिरूपितविशेषणत्वाक्रान्त तयैवेति न महत्पदार्थस्य तत्र विशेषणत्वम् । एवं च विषयता विशेषस्य वाक्ये भासमानस्य समासेन कथमपि भानमिति तदर्थः एतदेवाभिप्रेत्य कैयटः । यः कष्टं श्रितः स महत्कर्म्मकरोतीत्यादि

---

च तदुपलक्षिताभ्योऽन्यत्र प्रयोग इत्यव्यभिचारः ॥ यत्र तु व्यक्तिभिरे व्यक्त्यन्तराणि विशेष्यन्ते तत्रापि मूलोपलक्षणं जातिरेवाभ्युपगम्यते ॥ सर्वं दूरमपि विशेषणमालायामनुवर्तमानायां प्रथमोपलक्षणस्याभेदात्संबन्ध दर्शनमुपपद्यते । सर्वप्रथमसर्वान्त्ययोश्च शब्दार्थत्वम् । आन्तरालिकाः तु लक्षणासिद्धज्ञानत्वादनभिधेयत्वम् । अतश्च पिङ्गत्वाच्छित्वाभ्यां लक्ष्यन्ते गुणावयवात्मिका लक्ष्यन्ते ताभिरवयवि द्रव्यमुपलक्ष्यते ॥ तच्च समासार्थं भवति । स पुनः किमभिधेयो लाक्षणिक इति । प्राधान्येन प्रतीतेः सामान धिकरण्याद् "अनेकमन्यपदार्थे" इति च स्मरणाद्देवतातद्धितमत्वर्थीया

अवक्तव्यमिति। (कै)

सूत्रेणैव सिद्धेरिति भावः। "आद्यमेव लि"त्यादि "उपन्यस्यती"त्यन्तः कैयटग्रन्थस्तु चिन्त्यः। अस्यान्यवार्त्तिककारीयत्वात् "[1]लुप्ताख्यातेषु च" "वचनप्रामाण्यादि"ति समर्थसूत्रस्य वार्त्तिकस्य "[2]वार्त्तिकवचनप्रामाण्यादि"ति भाष्ये व्याख्यानाच्च। एवं च सर्वथा

१ समर्थः पदविधिः ( २ । १ । १ ) इति सूत्रस्थवार्त्तिकम् ॥

२ किं तर्हि वार्त्तिकवचनप्रामाण्यादिति । २ । १ । १ ॥

प्रतीयेत न तु महतः कस्यचिद्विशेषणत्वमिति। एवं चालौकिक इव वृत्तिविग्रहभूते लौकिके एकार्थीभावारोप एतद् भाष्येण बोधित इत्यपि केचित्। युक्तं चैतत्। अन्यथा कष्टं श्रित इत्यस्यापि विग्रहत्वं न स्यात् तद्वदेव विषयता भेदात्। विशेषणसमभिव्याहारे तु तत् सम्बन्धानुपपत्त्या न श्रितादिरूपप्रधाननिरूपितविशेषणतयोपस्थितिः तदसमभिव्याहारे तु तथैवोपस्थितिरेवं सर्वत्र द्रष्टव्यम्। समासतद्घटकपदमात्रघटितविग्रहयोः समानार्थत्वे एतद्भाष्यतात्पर्यम् अत एव "कालाः परिमाणिना" ( २ । २ । ५ ) इतिसूत्रे "किंप्रधानोऽयं समास उत्तरपदार्थप्रधानम्"

भिरिवाभिधीयत इति केचित्। अपरेत्वाहुः॥ युक्तं देवतातद्धितादावनन्यप्रयोजनत्वाच्छब्दाधिक्यस्यान्यपदार्थाभिधानम्॥ न च तत्र प्रातिपदिकार्थेन सोऽर्थः शक्यो लक्षयितुं व्यभिचारात् केवलाच्च प्रातिपदिकादप्रतीतेः। बहुव्रीहौ तु पूर्वोत्तरयोः पदयोर्विद्यमानस्वार्थत्वादन्यस्य चाभ्यधिकस्य शब्दावयवस्याभावात् पिङ्गत्वाच्चित्वाभ्यामेव च द्रव्यप्रत्ययसिद्धेर्न शक्यमभिधेयत्वं कल्पयितुमिति। न त्वेतद्व्यापित्वेन शक्यमाश्रयितुम्। कर्मधारये ह्येतद्व्यापित्वेन स्यात्सर्वथा लक्षणानिमित्तोपपत्तेः। इह तु चित्रगुरित्येवमादिषु चित्रगोशब्दयोरत्यन्तव्यतिरिक्तार्थाभिधायित्वात् देवदत्तादिशब्देष्य न अथा लक्ष-

"पञ्च भुक्तवन्तोऽस्य" इत्यत्र समासवारणायानभिधानस्यावश्यकतया "पञ्चभिर्भुक्तमस्य" "वृष्टे देवे गतः" "तत्र गतं पश्य" इत्यादावप्यनभिधानमाश्रित्य वार्त्तिकानां शेषग्रहणस्य च प्रत्याख्यानमेव युक्तमिति भाष्याशयः ॥

## अव्ययानां च (कै)

---

इत्युक्तं नायं प्रश्नः समासमात्रविषय उचितः । तत्पुरुषस्योत्तरपदार्थप्रधानतया "अव्ययं विभक्ति" (२।१।६) इत्यादिषु सूत्रेषु भाष्ये उक्तत्वेन मासजातो दृश्यतामित्यादौ जातस्यैव कार्यसम्बन्धदर्शनात् प्राधान्यनिश्चये न च तन्मात्रविषयप्रश्नानुपपत्तेः । तस्मात् वृत्तिविग्रहयोः समानार्थत्वनिर्वाहमपश्यतो विग्रहसमासोभयविषयः प्रश्न उत्तरं चेति विभाति । समासपदं च समासविग्रहोभयपरम् । न च विग्रहेऽपि जातस्य प्राधान्येऽजातस्य मास इति षष्ठ्यनुपपत्तिर्विशेषणादेव षष्ठीविधानादिति वाच्यम् । वृत्तिविग्रहयोः समानार्थत्वानुरोधेन तस्य वाक्यस्य वृत्त्यर्थ-

---

णया वा सामानाधिकरण्यमवकल्पते । प्रागपि च देवदत्तादिशब्दादन्यपदार्थप्रतीतेः न वाक्यार्थत्वकल्पना । न च केवलं समासवेलायां यौ पदार्थाववधारितौ तौ देवताद्यर्थसंबन्धिनौ यतो वाक्यार्थो देवदत्तः स्यात् । तस्मादवश्यं प्रतीतेः स्वरूपाच्चान्यपदार्थोऽस्य वाच्य इत्यभ्युपगन्तव्यम् । एवं च प्राधान्यमविरुद्धं भविष्यति । अतस्त्वेवमादिषु बहुव्रीहेरन्यपदार्थाभिधानशक्तिर्दृष्टेति यत्रापि कथं चिल्लक्षणा संभवति तत्रापि पूर्वक्लृप्तशक्त्यनपायादभिधेयत्वमेवाध्यवसीयते । तस्मादुपपन्नं पिङ्गाक्ष्यादीनां द्रव्यवचनत्वम् । यत्त्वेकहायनीति वयोवचन इति तदनुपपन्नम् । वयसो लक्षणयावगतेः । उक्षादिशब्दानां हि वयोवचनत्वम् । एकहायन्यादिशब्दाः पुनः कालविशेषयुक्तद्रव्यवचनाः सन्तो वयो लक्षयन्तः प्रवर्तन्ते । न ह्येकं हायनमस्या इत्येव वयो निर्दिश्यते

इत्यपि न कार्यम् । षष्ठेरादीनां वृत्तिविषये शक्तिमत्प्रधानत्वाङ्गीकारेण सूत्रेण सिद्धेः । अन्यान्यपि निष्ठांशेऽनभिधानमाश्रित्य प्रत्याख्येयानीति दिक् ॥

## अस्तीति (कै)

तिङन्तमेवेति मत्वा भाष्ये

---

बोधकत्वरूपविग्रहत्वविवक्षायां विशेषणविशेष्यभाववैपरीत्येऽपि पूर्वजात-संस्कारानिवृत्तेः । एवं च विग्रहे तदुत्तरषष्ठ्येव मासविशेषणकसम्बन्धप्रतीति-वत् समासेऽपि विशिष्टोत्तरषष्ठ्या तत्प्रतीतिसम्भव इत्याशयेन यथैव-मन्येषूत्तरपदार्थप्रधानेषु यैवासावुत्तरपदे प्रधानेऽन्तर्वर्तिनी विभक्तिस्तस्याः समासे श्रवणं भवति यथा राज्ञः पुरुषः राजपुरुष इति इह पुनर्वाक्ये षष्ठी समासे प्रथमा केन एतदेवं भवति इत्याशङ्क्य योऽसौ मासजातयो-रभिसम्बन्धः समासे निवर्तते । अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदि-कार्थः सम्पन्न इति प्रातिपदिकार्थे प्रथमा इति अन्यथा विशेषणविभक्तेः षष्ठ्याः प्रधानबोधकसमासादापत्त्यसंगतेः । कैयटोऽपि वृत्तिविग्रहयोः

---

किं तर्हि द्रव्यम् । तस्य ह्येकं हायनं जातस्य न वयसः । तस्मादुभाभ्यामप्ये-ताभ्यामात्मैकदेशोपात्तगुणविशिष्टद्रव्यप्रत्यायनादुपपन्नोऽयं संशयः । किम-वयिमा कृत्स्नप्रकरणागतक्रियाकृद्रव्यविशेषत्वेन निर्दिश्यते । अथवा समानवाक्य-स्थाख्यातपदप्रत्यायितक्रिय एवैकहायन्यामिति । अत्राप्युद्गमनादिवदाक्षेपः संयुक्तश्रवणादसार्वत्रिकत्वे प्राप्ते तं परिहरति । एष गुणः क्रयेणैकहायन्या वा समानवाक्योपादानात्संबध्येत । तत्र तावत्कारकविभक्तिनिर्देशादनाश्रयणी-यतरे सति द्रव्यसंबन्धे क्रयसंबन्धः श्रुतिबलीयस्त्वाद्भवेत् । न चासावमूर्तत्वा-न्निष्क्रियस्य गुणस्योपपद्यते । यदि त्वगत्या पुनर्द्रव्ये संबन्ध आश्रीयते तत्रा-प्येकहायन्यामेकशब्दे परार्थत्वादित्येवं क्रयावयिमानौ प्रति वैरूप्यं स्यात् ।

**सुबधिकारे इति ॥** (भा)

**अनपेक्ष्येति ।** (कै)

सोऽप्रामाणिक इति तत्त्वम् । एवं च तस्यातिङन्तत्वात् प्रातिपदिकत्वेन सुबन्तत्वमिति सूत्रेणैव सिद्धमिति भावः ॥

---

समानार्थत्वं न्याय्यमत्र तु वाक्ये जातो विशेषणं समासे तु मासजातो दृश्यतामित्यादौ जातस्यैव कार्यसम्बन्धावगमात् प्राधान्यमन्योत्तरपदार्थप्रधानवैधर्म्यं च लक्ष्यते इति मत्वा पृच्छतीति प्रश्नद्वयाशयं वदन्नुत्तरेण तयोः समानार्थत्वमभिप्रैति । तत्र सम्बन्धस्य समासे निवृत्तिः षष्ठीनिमित्तत्वेन तत्र हेतुः अभिहितः समासेन । अत एवान्तर्भूतः सम्बन्धिविषयकोपस्थितिविषयत्वमन्तर्भावः । अत एव प्रातिपदिकार्थः सम्पन्न इति प्रथमोत्पत्तिनिमित्तकथनं षष्ठ्यभावनिमित्तकथनं च कारकप्रातिपदिकार्थव्यतिरिक्तस्य शेषत्वात् । न च मासस्य जात इत्येव विग्रहोऽस्तु । एवं च वृत्तिवाक्ययोः समानार्थतापि भवति षष्ठीप्रसक्तिश्च न । "षष्ठी"

---

भिन्नविभक्त्यर्थयोगश्चासन्नभ्युपगन्तव्यः । क्रियासंबन्धस्य कारकविभक्तिसाध्यत्वाद् गुणसंबन्धस्य च षष्ठ्यधीनत्वात् । अतश्च वाक्यगतेन संबन्धिना योग्यत्वाभावादसंबध्यमानः प्रकरणिना गृहीतः सर्वार्थः स्यादित्याशङ्क्यते ॥ तेन तर्ह्ययमेवार्थो निश्चीयत इति क्रयसंबन्धो नाशङ्कितव्यः । तदर्थमाह । न चाशङ्कनीयमर्थं प्रमाणभूतः शब्दोऽभिधास्यतीति । यदेतत्समानवाक्योपादानकरणविभक्तिनिर्देशस्तेनापि क्रयैकहायनीविशेषणत्वबुद्धिर्दृढा जायते । तेन शब्दप्रामाण्याद्वस्तुविसंवादाच्च किं समञ्जसं किमसमञ्जसमिति जायते सन्देहः । तत्र प्राथम्याच्छब्दानुरोधेन तावत्क्रियासंबन्धमुपन्यस्यति । वैदिकशब्दस्यातिभाराभावात् । तत्र विनियोगबलेनास्य वस्तु सामर्थ्यसद्भावान्वेषणे यतिष्यामहे । तद्यदि केन चित्प्रकारेणोपपत्स्यते ततः क्रय

अन्यपदार्थविशेषणेनेति । (कै)

अन्यपदार्थो विशेष्यते विशेषेऽवस्थाप्यतेऽनेन तादृशेन कट इति-शब्देनोत्तरं नोपपद्यत इत्यर्थः ॥

---

(२।२।८) इति सूत्रेण सिद्धे "कालाः परिमाणिना" इत्येतत्तु कालाः परिमाणिना समस्यन्ते न तु परिमाणकालेन इत्यर्थेन जातमास इत्येतन्निवृत्त्यर्थमिति वाच्यम। एतद् भाष्यप्रामाण्येन परिच्छेद्यपरिच्छेदकसमभिव्याहारे परिच्छेद्यादेव षष्ठी स्वीकारेण तथा विग्रहासम्भवात्। एवमवयवावयवि समभिव्याहारेऽवयवत्वादिसम्बन्धेऽवयविवाचकादेव षष्ठीति बोध्यम्। तन्तूनां पट इत्यादौ तु अन्यजनकभावसम्बन्धे षष्ठी-विशेषणत्वादिव्यत्यासे च शब्दस्वभाव एव बीजम्। यत्त्वेकार्थीभावबलाद् वृत्तौ विशेषणत्वादि व्यत्यास इति तन्न। एकार्थीभावफलेषु भाष्येऽस्यागणनाद् वृत्तिविग्रहयोः समानार्थत्वभङ्गापत्तेश्च। एवमेव बहुव्रीहिवाक्येऽपि षष्ठीस्थितिर्बहुव्रीहौ प्रथमादीत्यपि बोध्यमित्यन्यत्र विस्तर इत्याहुः ॥

---

एव निवेशमङ्गीकरिष्यामः। अथ तु न कथं च नोपपत्स्यते ततो वाक्यभेदमभ्युपगम्यप्रकरणधर्मेणेनमध्यवस्यामः। न चात्र वाक्यभेदः प्रत्ययाद्यन्यतमावृत्तिलक्षणः। कस्तर्हि विभागरूपः। अयवाक्यस्याभेदं विभागलक्षणमभ्युपगम्येत्यर्थः ॥

यदा भिद्यत इत्येवं यगयं कर्मकर्तरि ।
अयवाशब्द एवं च भेदो वाक्यस्य गम्यते ॥

पृथक् भवद्वाक्यं भेदयतीति वाक्यभेदः। तादृशं चाभ्युपगम्य प्रकरणधर्माध्यवसानम्। एतदुक्तं भवति यावच्छ्रुतिवाक्ये व्याप्रियेते तावत्प्रकरणधर्मत्वं नास्ति। यदा तु वस्तुविसंवादाद्विहतशक्तिनी ते निर्व्यापारे भविष्यतः तदा प्रकरणविनियोग इति ॥

दिगन्तराणि । (कै)

प्रकारान्तराणि ॥

विशेषणविशेष्यभावाभावात्त्विति । (कै)

परिच्छेद्यपरिच्छेदकभावा विशेष्यविशेषणभाव इत्यभिमानः । वस्तुतो विषयताविशेषवत्त्वरूपमेव तच्च तन्निविष्टमिति तेनापि समास इति चिन्त्यम् ॥

व्यधिकरणप्राप्नोतीति । (कै)

प्रश्नविषयेणेति शेषः ॥ तत्र हेतुमाह

---

बहुव्रीहिः द्विधा । तद्गुणसंविज्ञानः (१) अतद्गुणसंविज्ञानश्च (२) ॥ लम्बकर्णमानय इत्यादौ आद्यः । तस्यान्यपदार्थस्य गुणानां विशेषणानां कार्यान्वयितया संविज्ञानं यत्र इत्यर्थात् ॥ चित्रगुमानय इत्यादौ अन्त्यः । विधेयानन्वयित्वघटकावयवार्थकत्वं च तत्त्वम् । लम्बकर्णं भोजय इत्यादावप्ययमेव । यदि विधेयान्वयित्वमेव विधेयक्रियाकाले संनिहितत्वमपि तद्गुणसंविज्ञानत्वमित्युच्यते तदा लम्बकर्णं भोजय इत्यादावप्याद्यमेव । संयोगसमवायान्यतरसम्बन्धेन सम्बन्धो यत्रान्यपदार्थस्तत्र तद्गुणत्वं प्रायोऽन्यत्रान्य इत्यलम् ॥ बहुव्रीहौ विप्रतिपत्तिस्वीकारादेवारुणाधिकरणमुपपद्यते । तत्र हि "अरुणया पिङ्गाक्ष्यैकहायन्या सोमं क्रीणाति" इतिवाक्ये ज्योतिष्टोमप्रकरणपठिते किमरुणिमावाक्याद् भित्वा प्रकरणे सर्वद्रव्येषु निविशते उतक्रीणातिना सम्बध्यतदङ्गमेकहायन्या निविशत इति संशयः । तत्र गुणस्यामूर्तत्वात् क्रयरूपक्रियासाधनत्वासंभवेन पृथग् भूतोऽविशेषात् प्राकरणिकद्रव्यमात्रे निविशते । अरुणादिशब्दाश्च गुणवचना एव । ननु तदाश्रितद्रव्यस्य क्रयसाधनत्वसम्भवेऽन्यथाप्रकरणेऽपि निवेशो न स्यात् ।

**अहं कठ इति।** (कै)

यतोऽहमित्यनेन सामानाधिकरण्यमतस्तेन व्यधिकरणमित्यर्थः॥

**विशेषाभावमिति।** (कै)

प्रतिवचनानुपपत्तिपरिहाररूपस्य विशेषस्याभावमित्यर्थः॥

**अनुकरणमिति।** (कै)

एवं च तद्विषयो न्याय इति मध्यमपदलोपी समासः।

- - -

अमूर्त्तत्वात् क्रियाभिः कारकत्वाच्च द्रव्यैः सम्बन्धासम्भवादिति चेन्न। श्रौतैकहायन्यवरोधेन क्रये तदन्वयासम्भवात्। न च सत्यपि बलाबले द्रव्यस्य वस्तुन एकत्वेन विरोधाभावादयुक्तमेतत्। अन्तरङ्गबहिरङ्गभावेन क्रमेणान्वये द्रव्यैक्यस्यैवाभावात्। एवं चाविशेषादरुणापदलक्षितन्तदर्थाक्षिप्तं वा द्रव्यं प्राकरणिकं सर्वमेवेति पूर्वपक्षः सोऽयुक्तः स्यात्। एकहायनीतिसमस्तस्यापि लाक्षणिकत्वेनश्रौतत्वाभावात्। **निरपेक्षो हि रवः श्रुतिः।** इतरपदार्थान्वयानुपपत्तिज्ञानसापेक्षप्रतीतिकं लाक्षणिकम्। अन्यथारुणोपलक्षितं द्रव्यमपि श्रौतमेव स्यात्। न च लक्षणादिकं विनैव प्रकरणकल्पितश्रुतानुमितैकदेशनिष्पन्नेनारुणया ज्योतिष्टोमापूर्वसाधनीभूतद्रव्यपरिच्छेदं भावयेदित्याकारेण वाक्येन प्राकरणिकसर्वद्रव्याङ्गत्वमिति वाच्यम्। द्रव्यपरिच्छेदं भावयेद् इत्यंशस्य प्रकरणतोऽप्यलाभात्। तस्मादरुणया प्रकरणे निवेश इति वृद्धोक्तमेव न्याय्यम्। तत्र चानुपपत्तिरेव अरुणयेति टाब् निर्देशस्तु छान्दस इति पूर्वपक्षीमन्यते। आश्रयलिङ्गग्राहित्वादि च गुणवचनानां पूर्वपक्षीन् जानीते। आश्रयानिर्णयाच्च। न च स्त्रीद्रव्यलक्षणायां टाप्। अरुणापदलक्षिताद्रव्यमित्यस्य असंगतेः। प्राकरणिकद्रव्यमात्रे निवेश इत्यसंगतेश्च। यत्तु टापसाधुत्वार्थ इति। तन्न। एकवचनान्तत्वार्णिकप्रत्ययानिश्चप्रत्ययानां साधुत्वमान्नार्थनाया भाष्यकारा-

यत्त्वनुकरणस्य गतित्वात्समास इति तन्न छन्दसियोग एव तत्प्रवृत्तेः ॥ भाष्ये

**अग्नौ करवाणि ।** (भा)

इत्यस्याग्नौ हविः करवाणीत्यर्थः ॥

**कर्त्रर्यनुज्ञात इति ।** (भा)

"कुरु" इत्यत्र कर्त्तरि लोट् । एवं च तात्पर्यतः प्रधानस्य कर्त्तुरेवानुज्ञा भवति इति भावः ॥

---

त्रिभिरनभ्युपगमात् किंच **समासशक्त्यनङ्गीकारे एकहायनी पिङ्गाक्षी पदयोरप्यरुणा पदतुल्यतया तत्र पूर्वपक्षाद्यकरणे वीजानापत्तिः ॥** मीमांसावार्त्तिककृतोऽप्येवमेव—

"सर्वत्र यौगिकैः शब्दैर्द्रव्यमेवाभिधीयते ।
न हि सम्बन्ध वाच्यत्वं सम्भवत्यतिगौरवात् ॥"

इति तदुक्तेः । तन्मात्रवाच्यत्वमित्यर्थः । सम्बन्धस्य सांसर्गिकविषयतयैव वाच्यत्वे तस्य सम्बन्ध्यन्तरभानं विना भानायोगात् । विशेषणं च गावोऽत्र न सम्बन्धः कथं च नेति तदुक्तेः । अत्र चित्रगुरित्यादौ सम्बन्धस्य सखण्डत्वेन तत्र वाच्यत्वकल्पं सम्बन्धिनस्वाक्षेपात् भानं श्लोकार्थमित्यर्थोऽतिगौरवादित्यस्य शक्तिमदवयवकत्वे सति संसर्गबोधकशब्दत्वं यौगिकशब्दत्वम् । शक्तिमदवयवत्वं च राजपुरुषादौ लोकसिद्धम् । पाचकादौ शास्त्रसिद्धम् । जातेस्तु शक्यभेदेन गोपदादिभ्यो भानमिति । अजा इत्यादौ टाप् सिद्धिः । अत एव शावलेयस्य गौरिति कदापि न । सिद्धान्तस्तु अस्य गुणितादात्म्येन गुणबोधकत्वम् । गुणिद्रव्यं च वाक्ये श्रुतत्वेन सन्निहितत्वादेकहायन्यैवेतिविशिष्टविधिपरम् । अत एव टाप् न्यायेन तस्मिन् सम्भवति छान्दसत्वकल्प-

**कर्मापीति ।** (भा)

कर्मकारकमित्यर्थः ॥ तदाह

**सकर्मकत्वादिति ।** (कै)

दृष्टान्तान्तरमप्याह भाष्ये

**यथैव खल्वपीति ॥** (भा)

दार्ष्टान्तिकमाह

**एवमिति ॥** (भा)

---

नाया अयुक्तत्वात् । अत एव "गुणे शुक्लादयःपुंसि गुणिलिङ्गास्तु तद्वती" इति कोशःसंगच्छते । भेदेन भानेऽप्याश्रयलिङ्गग्राहिता वा "गुणवचनानामाश्रयतो लिङ्गवचनानी" त्युक्तेः । एक हायनी च गौरेव क्रमप्राप्तत्वात् गवा ते क्रीनातीतिमन्त्रलिङ्गात् । एतदभिप्रायेणैव वार्त्तिके उक्तं "गुणस्यैवास्य द्रव्यपरिच्छेदद्वारा क्रयसाधनत्वमित्यरुणादीनां योग्यत्वाद्द्रव्यपरिच्छेद एव व्यापारस्तत्रैषां कर्त्तृत्वादितरत्रकरणत्वं भविष्यति तत्रारुणापदादेतदवगतम् । किंचिद्द्रव्यं परिच्छिन्दतारुणगुणेन क्रयः साधयितव्य इति एकहायन्यपि केनचिद्गुणेन मे परिच्छेदः कार्य्य इत्येतावदपेक्षते । उभयापेक्षालक्षणश्च सम्बन्धः शीघ्रतरं निवर्त्तते । तेन नष्टाश्वदग्धरथवत्तयोरेव विनापि षष्ठीसम्बन्ध इति संनिहितातिक्रमे कारणाभावाच्चैवमेव ज्ञायते इति । परिच्छेदस्य स्वतादात्म्येन ग्रहणं स्वाश्रयत्वेन ग्रहणं वा एतदधिकरणसिद्धान्तसूत्रमपि कटं भीष्मं कुरु इत्येतद्धात्पादनावसरे तत्पुरुषप्रकरणे उक्तं व्याख्यातं च इतिदिक् । अत एव इन्द्रपीताधिकरणं संगच्छते । तथाहि । प्रातःसवनस्य गायत्रच्छन्दस इन्द्रपीतस्योपहूतस्योपहूतभक्षयामीतिमन्त्र इन्द्रदेवत्य सोमभक्षण एव नान्यदेवत्य सोमभक्षणे । इन्द्रं पीतस्येति लिङ्गात् । न च "ऐन्द्राग्ने तु लिङ्गाभावात् स्याद्" ( मीमांसाद–अ ३-पा २-सू ३९ )

नहि तेषामिति। (कै)

"कठ" इत्यस्य कठशाखाध्येतेत्यर्थादिति भावः॥ चरणं शाखा। तथा च तस्य प्रश्नस्यार्थमिदमुत्तरमिति बोध्यम्। नन्वसमासेन प्रश्न इव समासेन प्रश्नेऽपि बहुवचनान्तमुत्तरं कुतो नेत्यत आह भाष्ये

न खल्वपीति। (भा)

"सब्रह्मचारिणः" समासेन प्रतिनिर्देष्टुं प्राधान्येन बोधयितुमशक्या अतः समासेन प्रश्ने कठा इत्युत्तरम् इत्यर्थः॥ प्रश्नवाक्ये यत्प्रधानं तद्विषयं यथाकथञ्चिज्जिज्ञासानिवर्त्तकमुत्तरमिति तात्पर्यं तदाह

---

इति छन्दाद्दिष्य कपित्थयोर्मातरि डित्यमाटत्ववद् इन्द्राग्निपीते इन्द्रपीतत्वरूपलिङ्गस्यसत्त्वेन इन्द्राग्निदेवत्यसोमभक्षणे मन्त्रापत्तिरितिवाच्यम्। अग्नौभस्मीकृतस्य पानासम्भवेन इन्द्रपीतशब्दस्य तृतीयातत्पुरुषेण सोमपरत्वस्यायुक्तत्वेन दानलक्षणया साधनं कृतेति चतुर्थीतत्पुरुषेण सोमपरस्येन्द्रोद्देशेन दत्तस्येत्यर्थकतया इन्द्राग्न्युद्देश्यकस्येन्द्रोद्देश्यकत्वाभावेनादोषात्। यत्तु इन्द्राग्निविषये इन्द्रस्याग्निसापेक्षत्वेनासामर्थ्यादिन्द्रपीत इति समासो न स्यादिति शबरस्वामिनोक्तं तन्नोच्या। उपात्तपदजप्रतीतिविषयसापेक्ष एव "सापेक्षमसमर्थवत्" इत्यस्यप्रवृत्तेः पतञ्जलिनोक्तत्वात्। विशेषणस्यायोगान्ययोगव्यवच्छेदफलकत्वेन व्रीहिभिर्यजेत इत्यादाविवेन्द्रायैव दत्त इत्यर्थेनेन्द्राग्निदैवत्ये मन्त्राप्रवृत्तेश्च। तथा च सूत्रम् "एकस्मिन् वा देवतान्तराद्विभागवत्" ( मीमांसाद—३-२-४० ) इति। एकेन्द्रदैवत्य एवायं मन्त्रः। यथादेवतान्तरसोमादस्य विभागोऽसम्बन्धस्तद्वदित्यर्थ इति पूर्वपक्षे सोमपरत्वे हुतशिष्टस्य भक्षणार्थमुद्धृतस्येन्द्रपीतत्वाभावेन तत्सम्बन्धिलक्षणया सोमपरोपहूतशब्देन व्यधिकरणान्वयो वा स्यात्। एतच्चावन्तस्यैव देवतायै दानेन सर्वस्येति भाष्यमते स्पष्टमेव। इन्द्राय

**वर्तिपदेति॥** (कै)

**कः समासार्थ इति।** (भा)

वाक्यं न कोऽपीत्यर्थाभिप्रायेण भगवान्विवृणोति

**समासार्थो नोपपद्यत इति।** (भा)

वर्त्तिपदार्थस्याप्यन्तर्भावादिति बहुलान्वयानुपपत्त्या क्रियायां वर्तिपदार्थस्याप्यन्वयादित्यर्थः॥

वसुमते गृह्णामीति मन्त्रलिङ्गादिन्द्रस्य समुदायसम्बन्धबोधनात् सर्वस्यैव दानं प्रत्येकस्वं गतस्यांशान्तरस्येत्यन्यो विनियोगो वचनबलादिति वार्त्तिकमतेऽप्येतदावश्यकम्। अवशिष्टमात्रस्य तद्वत्त्वाभावात्। न च समुदायदानेऽवयवस्यापि दानान्नलक्षणादि। अन्यथा समुदायदाने ततः पुनर्दातुरेकदेशस्वीकारे प्रत्यवायो न स्यादिति वाच्यम्। इन्द्राग्न्यादौ दानोद्देश्यत्वस्य समुदाये पर्याप्तिवत् तत् कर्मत्वस्यापि समुदाये एव सत्त्वात्। स्वस्वत्वध्वंसपरस्वत्वोत्पत्त्याश्रयत्वेन क्रियोद्देश्यतायाः समुदाये एव सत्त्वात्। नान्तरीयके पुनः स्वत्वनिवृत्तिस्वत्वोत्पत्ती अवयवेष्वपीत्येकदेशस्वीकारे प्रत्यवायोपपत्तिः। नान्तरीयकमादाय श्रौतव्यवहारस्तु नान्तरीयकदानोद्देश्यत्वस्यापि प्रत्येकं सत्त्वेनेन्द्राग्निदेवत्ये सोमभक्षणे तव मन्त्रापत्तेः। यत्तु स्वीकारे पाधातोर्लक्षणा स च लाघवादैन्द्राग्न्यादिविषये उभयनिरूपित एक एव न प्रत्येकनिरूपित इति। तन्न। इदं मम इत्याद्याकारकबुद्धिविषयत्वरूपस्य तस्य बुद्धेःप्रत्येकवृत्तितयोभयनिरूप्यत्वाभावात् निर्वापप्रभृतिप्रतिपत्तिपर्यन्तममुकदेवतासम्बन्धीदमिति याज्ञिकव्यवहारस्तु देवतोद्देशेनोपकल्पितत्वमात्रेण। उपकल्पननिरूपितोद्देश्यता च प्रतिपत्तिनाश्येति न तदुत्तरं तथा व्यवहारः। तस्माद् बहुव्रीहिः इन्द्रेण पीतो यस्मिन्निति प्रातःसवनस्येत्यधिकृतं प्रातःसवनमन्यपदार्थः। न च कर्मसमुदायाधायकाल-

अन्यपदार्थशब्दस्य । (भा)

अन्यपदस्यैव योऽर्थः । न तु स्वपदस्यापीत्यर्थ इति भावः ॥ अत्र अर्धतृतीया इत्यत्र द्विवचनं स्यादिति कुतो नोक्तमत आह

समासस्येति ॥ (कै)

अवयवेन विग्रह इति । (कै)

अवयवार्थेन वाक्यमित्यर्थः । वृत्तिपदार्थोऽवयव इति यावत् । नन्वर्धस्य द्वयोश्चेत्यनुपपन्नं समुदायस्यावयवानतिरिक्ततया अर्द्धं द्वे च समुदाय इत्येवोचितम्

---

वपस्य तस्य भक्षणासम्भव इति वाच्यम् । तेन तत् सम्बन्धि हविषो भक्षणा उपहूतस्येत्याद्यन्वयाय तवाप्यावश्यकत्वात् । सवनीयं हविरन्यपदार्थ इति तु न युक्तम् । तस्मिन् कृतग्रिस्ते इन्द्रपीतस्याभावेन तस्य तदधिकरणत्वाभावात् । अतीतासु गोषु चित्रगुरितिव्यवहाराभाववत् इन्द्रेण पीतस्य नष्टत्वेन तमादाय हविष इन्द्रपीत इति बहुव्रीहिणाऽव्यवहाराच्च न च पूर्वपदप्रकृतिस्वरेणैव बहुव्रीहित्वनिर्णय इति तदर्थमधिकरणारम्भो वृथेति वाच्यम् इन्द्रेण पीत इति तृतीया तत्पुरुषेऽपि "तृतीयाकर्मणि" ( ६ । २ । ४८ ) इत्यनेन पूर्वपदप्रकृतिस्वरस्यैव सत्त्वात् । देवानामभिमुखत्वेन इन्द्राय स्वाहा इत्यादिमन्त्रेणाग्नौ दाहस्यैवेन्द्रकर्तृकपानत्वान्न तदनुपपत्तिः । अतः पाधानोर्दानेन भक्षणेत्याश्रयात् । पूर्वपक्षे दानभक्षणायामपि चतुर्थ्यर्थे बहुलं छन्दसीति तृतीयान्तेनैव समासाच्च प्रकारान्तरेणापि पूर्वपक्षोपपादनस्य कृतत्वाच्च । किंच दानभक्षणायामपि इन्द्राय पीत इति चतुर्थी समासो दुर्लभः । "चतुर्थी तदर्थार्थ" इति समासस्य प्रतिपदोक्ततादर्थ्यचतुर्थ्यैव प्रकृतिविकृतिभाव एव च प्रवृत्तेर्भाष्यसम्मतत्वात् । साधनं कृतेत्यपि न । चतुर्थीतदर्थार्थेति सूत्रे रक्षितग्रहणेन चतुर्थ्यन्तस्य तेन

[1] **अवयवेन विग्रहः समुदायः समासार्थ इति** (भा)

चायुक्तमत आह

**समुदायावयवानां चेति।** (कै)

समुदायस्यान्यपदस्यैवार्थो नतु समस्यमानपदस्य स चावयवेभ्योऽभिन्नोऽन्यपदार्थः। अवयवगतबाहुल्यस्य च तत्रारोपाद्बहुवचनमिति भावः॥

---

१ असिद्द्वितीयोऽनुससार पाण्डवम्।
संकर्षणाद्द्वितीयस्य बलं कृष्णोऽस्य वर्धताम्॥

---

समासाभाव बोधनात्। तादर्थ्यचतुर्थ्याः कारकविभक्तित्वाभावेन तत्र तेन समासस्य दुर्लभत्वाच्च। किंच तेन समासपूर्वपदप्रकृतिस्वरेणैव बहुव्रीहित्वनिर्णयेऽधिकरणोच्छेदः। न च चतुर्थी तदर्थ इत्यनेन तत्रापि पूर्वपदप्रकृतिस्वर इति वाच्यम्। तस्य स्वरस्यापि प्रकृतिविकृतिभाव एव प्रवृत्तेर्भाष्यसम्मतत्वात्। प्रतिपदोक्ततादर्थ्यचतुर्थ्यन्तसमास एव तत्प्रवृत्तेश्च। प्रकृते तु न तादर्थ्यचतुर्थी उपपदविभक्तेरिति न्यायात्। "क्तेच" इत्यत्रापि तदर्थ इत्यनुवर्त्तते गोरक्षितमित्येव तदुदाहरणं न तु गोहितम् इत्यन्यत्र निरूपितम्। अत एव चतुर्थी तदर्थे इत्यस्य प्रकृतिविकृतिभाव एव प्रवृत्तौ "क्तेच" इति ज्ञापकं भाष्योक्तं संगच्छते। समासे शक्तिमनङ्गीकुर्वतां बहुव्रीहावप्यस्य पदार्थे लक्षणाद्यधिकरणत्वात्। त्वद्रीत्या पूर्वपदस्य विभक्त्यर्थान्तर्भावेण लक्षणेति तत्पुरुषादविशेषः। न च दानार्थकपाधातोर्भावक्तान्ताद् अर्श आद्यचि पीत इन्द्रो यस्येति बहुव्रीहिर्दानसम्बन्धीन्द्रसम्बन्धिन इति बोधः। "आहिताग्न्यादि"त्वात् पीतशब्दस्य परनिपात इति न बहुव्रीहौ लक्षणाद्वयमिति वाच्यम्। धातोः सकर्मतया भावे क्तस्यासम्भवात्। अनुपपत्तिप्रतिसन्धानमूलकतयैवं विधे वृत्तिद्वयकल्प-

द्विवचनप्रसङ्ग इति। (कै)

उद्भूतावयवभेदस्य समुदायस्य समासार्थत्वात्। तत्र बहुवचन-मित्राचापि द्विवचनं स्यादिति भावः॥

स्वस्वामीति। (कै)

साक्षात्संबन्धोपलक्षणं क्वचिदस्तिशब्दस्य युक्तपर्यायत्वदर्शनादाह

असारेति। (कै)

अनेकार्थोऽयमिति भावः॥

---

गाया लक्षणातोऽपि दुष्टत्वाच्च। तदुक्तं जैमिनिना "सर्वेषां वैकमन्त्र्य-मैतिशायनस्य भक्तिपानत्वात् सवनाधिकारो हि" (३ अ। २ पा। सू ४३। मीमांसादर्श-) इति "भक्तिपानत्वादि"त्यनेन तत्पुरुषनिराकरणं दान-लक्षणा निराकरणं च। "सवनाधिकारो हि" इत्यन्यपदार्थप्रदर्शनमतस्तत् सवनसम्बन्धिनां सर्वेषामैन्द्राणाम् अनैन्द्राणां च हविषां समन्त्रकं भक्षणं यथा अन्नानामेक एव च मन्त्रः सर्वत्र इति तदर्थ इति तद् भाष्यादौ स्पष्टमित्यलम्* ॥

* लिङ्गविशेषनिर्देशात् समानविधानेष्वनैन्द्राणाममन्त्रत्वम्। यथा देवतं वा तत् प्रकृतित्वं हि दर्शयति॥ मीमांसादर्श—३। १। २७-२८॥

इन्द्रपीतस्येति भक्षमन्त्रांशः किमिहैन्द्रके।
केवलेऽन्यत्र वोहाच्च सर्वत्रोत यथाश्रुतम्॥
ऐन्द्र एव समर्थत्वात्तस्यैमेवास्य भक्षणम्।
ऊह्यो वाऽन्येषु कर्मैकेऽप्यसूह्यो भक्षभेदतः॥
इन्द्रेण यस्मिन् सवने सोमः पीत इतीरणात्।
सवनस्थेषु सर्वेषु मन्त्रो नूहेन पक्षणाम्॥

## अवस्थानादिर्निमित्त इति। (कै)

सर्वंच संबन्धस्य क्रियाकारकभावपूर्वकत्वमिति उभयथापि काल्पनिकोऽवयवावयविभावो व्यवहारनियामक इति भावः। यद्वा सम्बन्धित्वेन सम्बन्धोऽसन्नपि विकल्पात्मकज्ञानविषयः। पुरुषस्य चैतन्यमितिवत्षष्ठीप्रयोगनिमित्तमिति भावः॥

## नार्धस्येति। (कै)

एवं च द्विवचनप्रसङ्गोऽपि नोदित इति बोध्यम्॥ भाष्ये

---

उपदशाः दशानां समीपे ये सन्ति इति विग्रहः। अत्रायं समीपसंख्यावत्परो दशपदार्थस्य स्ववृत्तिदशत्वसमीपसंख्यासम्बन्धेनान्वयः। दशसमीपसंख्यावन्त इतिबोधः। ईदृशसम्बन्ध एवास्य साधुत्वं शब्दशक्तिस्वभावात्। "संख्ययाव्यया" इत्यादिसूत्रबलाच्च। अत एव नवैकादशवाचेन प्रत्याय्यन्ते न तु दशानां वृक्षादीनां समीपे ये गवादयः ते प्रत्याय्यन्ते। एतेन "आसन्नविंशा" "अदूरविंशा" इति व्याख्यातम्। द्वौ वा त्रयो वा द्वित्राः। अत्र वा शब्दो विकल्पार्थकः। अत्र कार्ये विकल्पो न तु शब्दाद् बोधेऽतः शब्दान्नियमेन बहूनामुपस्थितेर्नित्यबहुवचनान्तता। अत्रापि एककालं समभिव्याहृतान्वयिपदार्थासम्बन्धत्वरूपो विरोधो भासते प्रायोऽयमेव सर्वत्र विरोधो वार्थः। क्वचिदेकाधिकरणावृत्तित्वरूपः। यथा शब्दो नित्यो न वेति विप्रतिपत्तिवाक्ये। तस्य शब्दो नित्यत्वविरुद्धानित्यत्ववान् इत्यर्थः। क्वचिदेककालावृत्तित्वरूपो विरोधो यथा "व्रीहिभिर्यजेत" "यवैर्यजेत" इत्यादौ वा शब्दं विनापि तात्पर्यवशाद् देवदत्तो वामेनाक्ष्णा पश्यतीतिवदेकविशेषविधेर्विशेषान्तरनिषेधफलकत्वात् निरपेक्षत्वलाभेन समुच्चयासम्भवाद् विकल्पो बुध्यते स च समभिव्याहृतकारकविशिष्टक्रियायां भिन्नकालिकत्वरूपः। अत्र व्रीहिभिर्यवैर्वा यष्टव्यमिति प्रश्नवाक्यं

**अस्ति सहायेति।** (भा)

एवं चैकस्यैवान्यपदार्थत्वं न तु द्व्यवयवसमुदायस्येति भावः॥

**संयोगसमवायेति।** (कै)

एवं च प्रकृते तद्गुणसंविज्ञानस्य वक्तुमशक्यत्वाल्लोहितोष्णीष-मानय इत्यादौ उपलक्षणार्थमाहित्यप्रयुक्तवचनादर्शनेन द्विवचन-प्रसङ्गाच्च दुष्टोऽयं पक्ष इति भावः॥

---

यागत्वावच्छेदेन यवनिरपेक्षव्रीहिकरणकत्वसंशयपरमुत्तरमपि तथैव परन्तु तद्यागत्वसामानाधिकरण्येन तत्परमित्याहुः॥ अन्ये तूत्तरे वा शब्दोऽन्यत-रार्थः। एवं च द्वयोरपि यागसाधनत्वादिच्छयैकतरग्रहणादैच्छिको विकल्पः। इदमेवाभिप्रेत्य प्रश्ने वाशब्दः सर्वात्मना पक्षान्तरप्रतिक्षेपार्थः। उत्तरे तु स्वप्राप्तिपक्षे तत्प्रतिबोधार्थ इति प्रवादः। द्वित्रा इत्यत्रापि द्वित्र्यन्यतर इत्यर्थः। अन्यतरत्वमुपात्तेतरव्यावृत्तैकत्वरूपं तच्च क्वचिद्व्यक्तिगतं क्वचिद्धर्मगतं तात्पर्यवशात्। यत्तु स्वभिन्नभेद एवान्यतरत्वमिति तन्न। घटपटान्यतरमानय इत्यादितः कदाचिदुभयस्याप्यानयनापत्तेः। तद्भिन्न-भेदस्य प्रत्येकं घटपटयोरिव समुदितयोरपि सत्त्वाद् इत्याहुः॥ तत्र धर्म-गतमेकत्वमिति पदार्थः पदार्थेन इति न्यायविरुद्धमिति द्वित्र्यन्यतरेत्यर्थकथ-नमसङ्गतम्। किं च द्वित्रा इत्यादौ नित्यबहुवचनान्ततानापत्तिः। अन्यतरत्वे-नानेकबोधे तु घटपटान्यतरमानयेत्यादौ द्विवचनाद्यापत्तिरित्यन्ये। क्वचित्तू-द्देश्यतावच्छेदकावच्छेदेन पाक्षिकः समभिव्याहृतार्थप्रतियोगिकाभावोऽपि वार्थः। यथा "दीर्घात्" "पदान्ताद् वा" (६। २। ७५—७६) इत्यादौ। शास्त्रीयव्यवस्थितविकल्पे तु उद्देश्यतावच्छेदकसामानाधिकरण्येन भावाभावबोधो लक्ष्यानुसाराच्च व्यवस्था। स्थाणुर्न वा इत्यादौ संशयात्मक-ज्ञानजनके एकाधिकरणावृत्तित्वरूपो विरोधो वार्थः। अन्यतरकोटेः

**अयमर्थ इति ।** (कै)

प्राग्व्याख्यात एतद्भाष्याक्षरार्थः । एवं च विग्रह उद्भूतावयवभेदस्य समुदायस्यान्यपदार्थत्वात्तादृश एव समासशक्य इति तत्प्रत्यायनाय बहुवचनमेवेति तात्पर्यम् ॥ भाष्ये

**कर्त्तव्यमर्धतृतीया इति ।** (भा)

प्रयोक्तव्यमित्यर्थः ॥

---

सर्वथा बाध्यत्वात् । अनेककोट्युपस्थितिरपि वा शब्दसमभिव्याहारादेव । स्थाणुर्न इत्युक्ते स्थाणुभिन्न इत्येव प्रतीतेः। क्वचित्तु एकाधेयाधिकरणत्वरूपो विरोधो वार्थः। यथा घटे पटे वा सौन्दर्यमित्यत्र। केचित्तु द्विवा इत्यादौ संशयविषयत्वं वार्थः। सन्देहविषयद्वित्वत्रित्ववन्त इतिबोधः। त्रित्वेनापि सन्देहविषयत्वाद् बहुवचनं शब्दो नित्यो न वा इत्यस्यापि नित्यत्वादिसंन्देहविषय इत्यर्थः। संशयत्वापनाय च तथोक्तिरित्याहुः। अपरे तु वाशब्दसमभिव्याहारे परस्परप्रतिक्षेपकानेकधर्मवत्त्वं धर्मिणि गम्यते। तदेव विषयनिष्ठं संशयत्वं तदेव वाशब्दवाच्यमिदमेव विकल्पितरूपतद्विषयकत्वाच्च ज्ञानं संशयः। एवं च स्थाणुर्न वा इत्यादौ स्थाणुतदभावरूपः संशय इतिबोध्यम् ॥ द्वित्रा इत्यादौ द्वित्रिरूपसंशयसाधनिका क्रिया इत्यादिरीत्या बोधः। अत एव भवेद् यदा बहूनामानयनं तदा बहुवचनमुपपन्नम्। यदा द्वावानीयेते तदा न सिध्यतीत्याशङ्क्य द्वौवेत्युक्ते त्रयो वा इति गम्यते। त्रयो वा इत्युक्ते द्वौवेति गम्यते। "नैषापशाधिष्ठाना वाग्" इति भाष्ये उक्तम्। अन्यतरार्थो वा शब्द इत्याशयः। कैयटोऽपि विकल्पो वार्थ इति द्वित्रशब्दः कदाचिदयोर्वाचक इति शङ्काशयमुक्त्वासंशयोऽत्र वार्थः। न तु विकल्पः। विरुद्धानेकविषयत्वादिमर्शस्य पर्यायस्थितद्वित्वत्रित्वाधारवस्तुसंकलनया पशाधिष्ठा-

## योऽवयवस्तं समुदायं न व्यभिचरतीति । (भा)

यदवयवबुद्धिस्तद् बुद्धिं न व्यभिचरतीत्यर्थः। अन्यथा द्रोणाभाववद्वृत्तित्वरूपो व्यभिचारोऽर्धद्रोणेऽप्यस्त्येवेति तदसंगतिः स्पष्टैव॥

## अर्धाढकं पुनर्व्यभिचरति (भा)

इत्यस्य द्रोणमिति शेषः॥

---

नित्वमुच्यते इति आह। अनेकविषयत्वाद् अनेकविषयरूपत्वात्। विमर्शस्य संशयस्य इत्यर्थः। तत्र क्वचिद्दलवत् प्रमाणेनैककोटिर्बाध्यैव। यत्र तु न तथा बाधकं तत्रैच्छिकं पाक्षिकानुष्ठानं क्वचित्। यथा व्रीहियवविषये। क्वचिद् व्यवस्थया इत्यूह्यं संशयत्वस्य विषयनिष्ठत्वादेव संशयलक्षणपरे गौतमीये सूत्रे तद्वार्त्तिककृता संशयपदे विरुद्धत्वात् संशय्यते विषयोऽनेन इति करणव्युत्पत्तिर्दर्शिता। विषयोऽत्र विशेष्यभूतः। अत एव "प्रमाणप्रमेय" इति सूत्रे विषयभूतपदार्थेषु संशयस्य पाठः। अत एव प्रमादयो भावभेदा न तत्रोक्ताः।

"मात्सर्य्यमुत्सार्य्य विचार्य्यकार्य्यम्।
आर्य्याः समर्य्यादमुदाहरन्तु॥
सेव्या नितम्बाः किमु भूधराणाम्।
किम्वा स्मरस्मेर विलासिनीनाम्॥"

इति पद्ये च संशयो वाच्यो निश्चयो व्यङ्ग्य इति प्रकाशे उक्तम्। स सन्देहालङ्कारादिकस्यालङ्कारस्य न तेन पृथगुक्तः। निश्चयान्तसन्देहालङ्कारेण गतार्थत्वादित्याहुः॥

द्विरात्रस्तादृशा द्विदशाः। अत्र सुजर्थान्तर्भावेणावृत्तिक्रियान्तर्भावेण च द्विशब्दस्य वृत्तिविषये वृत्तिः। आवृत्तिजन्मगणने च द्विशब्दो द्वित्वसंख्याविशिष्टोत्पत्तिकावृत्तिविषया दशेति बोधः। अन्यथाद्वित्वान्वयो न स्यात्।

**अर्धाढकं कर्तृद्रोणेन विनेति (कै)**

द्रोणबुध्या विनेत्यर्थः ॥

**द्रोणेन । (कै)**

द्रोणबुध्या ॥

**एकाढकसद्भावे । (कै)**

तद्बुद्धिसद्भावे ॥

---

दशत्वसंख्यायाः संख्येयं प्रत्युपसर्जनत्वादेकत्वाच्च न तस्यां तदन्वयः संख्येऽपि न । विरोधात् न हि दशद्वौ भवन्ति । तदुक्तं हरिणा—

न संख्यायां न संख्येये द्वौ दशेत्यस्ति सम्भवः ।
भेदाभावान्न संख्यायां न विरोधात्तदाश्रये ॥

केशेषु केशेषु गृहीत्वेदं युद्धं प्रवृत्तं केशाकेशि । अत्र क्त्वाप्रत्ययोऽध्याहृतस्थित्यादिक्रियामादाय बोध्यः । ग्रहणकर्मत्वं च प्रत्यासत्त्या केशादिविशिष्टपुरुषयोरेव । परस्परग्रहणादिरूपः । कर्मव्यतिहारः । समुदायप्रवृत्तो युद्धादिरूपक्रिया च । एवं च परस्परकेशाधिकरणकतरत् । पुरुषकर्मकं ग्रहणोत्तरकालिकस्थितिकर्तृपुरुषकर्तृकाक्रियेति बोधः । क्रिया युद्धादिरूपेति क्वचित् प्रकरणात् क्वचिद् युद्धादिवाचकपदसमभिव्याहाराग्निर्णेयम् । यथा—

"कथं किमन्धकदण्डताण्डवम् ।
भुजाभुजिस्तोणिभृतां दिदृक्षसः" ।

इत्यादौ । एतेन

"कर्णाकर्णि प्रथितमयशः"

इति व्याख्यातम् । कर्णाभ्यां कर्णाभ्यामाकर्ण्येदं प्रथितमित्यर्थः । एतेनायं समासो युद्धक्रियायामेव इत्यपास्तम् ॥

# संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये। २। २। २५॥

आत्वाभावाच्चेति। (कै)

सुचेति इत्यालस्य बहुव्रीहौ निषेधात्सोऽपि बहुव्रीहित्वनि-श्चायक इति भावः॥

कोऽयमिति (भा)

भाष्यस्य किंविषयकोऽयमित्यर्थ इति तात्पर्यम्॥

कदाचिद् द्वयोर्वाचक इति। (कै)

बोधविषयत्वस्यैव विकल्पं वाशब्दो द्योतयतीत्यभिमानः॥

---

संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये॥ संख्येयार्थया संख्यया अव्ययादयः समस्यन्ते स बहुव्रीहिः। दशानां समीपे ये वर्तन्ते त उपदशाः। नव एकादश वेत्यर्थः। सामीप्यप्राधान्ये त्वव्ययीभाव इत्युक्तम्। उपविंशाः। बहुव्रीहौ संख्येय इति डच्। तिविंशतेर्डिति। आसन्नदशाः। अदूरदशाः।

"संख्ययाव्ययासन्नादूराधिकसंख्याः संख्येये"॥ 'उपदशा इति'। 'बहुव्रीहौ संख्येये डजबहुगणादि'ति डचि टिलोपः, दशानां समीपे ये भवन्ति त उच्यन्ते ते पुनर्नवैकादश वा, पूर्वपदार्थप्रधानोऽयं समासः, उपशब्दोऽयमाराच्छब्देनैकार्थत्वात्समीपे समीपिनि च वर्तते तत्र समीपि-प्राधान्येऽयं बहुव्रीहिः सामीप्यप्राधान्येऽव्ययं विभक्तिसमीपेत्यव्ययीभावः। 'उपदशं दन्तोष्ठा इति'। अत्र धर्मधर्मिणोरभेदोपचारात्सामानाधिकर-

**बहूनामानयनम् ।** (भा)

इत्यस्य बहूनामानयनान्वय इत्यर्थ इति तात्पर्यम् ॥ भाष्ये

**यदा द्वावानीयेते इति ।** (भा)

द्वावेवानयनान्वयित्वेन बुध्येते इति भावः ॥

**अनिर्ज्ञाते इति ।** (भा)

परस्परं प्रतिक्षेपकद्वित्वत्रित्ववन्त इति बोधे ऽनिर्णीतसंख्यात्वाद्बहुवचनं भवतीति भावः । तदाह

**केचिदिति ।** (कै)

परस्परप्रतिक्षेपकत्वं हि वार्थः । कदा चिद् द्वयोर्बोधः कदा चित्त्रयाणामिति । अनिर्णीतसंख्यार्थकत्वाद्वचनेन बहुवचनं साध्यमिति तदाशयः ।

---

अधिकदशाः । द्वौ वा त्रयो वा द्वित्राः । वार्थेऽयं समासः । ततश्च वैकल्पिकौ द्वौ त्रयश्चेति पञ्च अस्माच्छब्दादुपतिष्ठन्ते । अत एव बहुवचनम् । उक्तं च "सैषा पञ्चाधिष्ठाना वागिति"। कार्यान्वये हि विकल्पो न त्वेतच्छब्दजन्यबोधविषयत्वेऽपीति भावः । त्रिचतुराः । चतुरोऽच्प्रकरणे व्युत्पादितामुपगम्यम् । 'उपविंशा इति'। 'ति विंशतेर्डिती'ति लोपः, आसन्ना दशानामासन्नदशास्तेऽपि नवैकादश वा, अधिकदशास्त्वेकादश, द्वौ वा त्रयो वा द्वित्राः, वार्थेऽयं समासः, वार्थश्च यदि विकल्पः स्यात् ततो यदि द्वौ भवतस्तदा बहुवचनं न स्यात् तस्मात्संशयोऽत्र वार्थः, स चानियतसंख्याविमर्शः, तत्र तु त्रयोऽपि सर्वदा परिस्फुरन्तीति तदपेक्षं बहुवचनम्, अथ वा पञ्चैवात्र सर्वदा भवन्ति कथं विमर्शज्ञानमुभयपक्षालम्बि एकं

अन्येत्विति । (कै)

संशयोऽपीति । (कै)

अनिर्ज्ञात इत्यस्य निश्चयेनाविज्ञाते इत्यर्थ इति भावः । तथा च संशयविषये इति फलितम् ॥

अर्थशब्देनापीति । (कै)

प्रकरणादिति भावः ॥

अन्तर्भावितेति । (कै)

संख्यान्तो बहुव्रीहिः । अत एवैको द्वावित्यप्युत्तरम् । अन्यथा बहुविषयप्रश्ने तदुत्तरासंगतिरिति भावः ॥

विरुद्धानेकेति । (कै)

विकल्पार्थ एव वाशब्दः । क्रियाविषयत्वस्यैव च विकल्पो न तु बोधविषयत्वस्यापि स इति भावः ॥

---

संख्यातमि"त्यच् । द्विराहृत्ता दश द्विदशाः । अत्र वृत्तौ द्विशब्देन दशत्वा-वृत्तिगता द्वित्वसंख्योच्यते । ननु द्विधा इत्यत्र वार्थः । द्विदशा इत्यत्र सुजर्थस्यान्यपदार्थ इति पूर्वेणैव सिद्धम् । न च मत्वर्थे पूर्वयोगः अमत्वर्थार्थं चेदमिति वाच्यम् । प्राप्तोदकादिषु मत्वर्थं विनापि तत्स्वीकारात् । सत्यम् । अन्यपदार्थप्राधान्ये पूर्वयोगः । इह तु वार्थसुजर्थौ न प्रधानम् ॥

---

च तत्र यथा द्वौ वा त्रयो वा पुरुषा आनीयन्तामित्यत्र पुरुषशब्दे तिङन्ते च बहुवचनमेव भवति, कस्य हेतोः मिश्रितेषु तयोर्वृत्तेः, एवं द्वित्रिपद-मपि मिश्रितेषु वर्तत इति सैषा पक्षाधिष्ठाना वाक्, अतो बहुवचनमेव भवति, आनयनादिकार्यं तु द्वयोस्त्रयाणां वा यथारुचि भवति, वाक्यवदेव

## विमर्शः। (कै)

परस्परप्रतिक्षेपः॥

## विकल्पे। (कै)

इयत्तानिर्धारणसंशये त्वनिर्धारणमिति भेदः। यद्वा संशय एव वार्थः॥

## अनेकविषयत्वात्। (कै)

अनेकविषयरूपत्वात्॥

## विमर्शस्य। (कै)

संशयस्येत्यर्थः। संशयत्वं च विषयनिष्ठमित्यन्यत्र निरूपितम्॥

## पञ्चाधिष्ठानत्वमुच्यते इति। (कै)

वाच इति शेषः। द्विचशब्दजन्यो बोधो नियमेन पञ्चविषय इति भावः॥ भाष्ये

## द्विदशा इति। (भा)

अत्रापि उक्ताल्लाभावाभ्यां बहुव्रीहित्वस्य निश्चयः। द्वौ दश एषामुन्मुग्धानामिति विग्रहे ऽअनुपपत्तिः। संख्येये समासावर्त्तनात्। तस्माद्विपदविषय एवात्रापि प्रश्नः। तत्र स्वपदविग्रहपरित्यागेनाऽस्वपदविग्रहः कस्मादित्यत आह

---

समासस्य चैषा हि व्यापदतस्तेषु मिश्रितेषु वृत्तिः, तेन द्वौ वा पञ्च वा आनीयन्तामिति वाक्ये द्विशब्दाद् द्विवचनमेव भवति। 'त्रिचतुरा इति'। चतुरोऽच्प्रकरणे त्र्युपाभ्यामुपसंख्यानमित्यच। 'द्विदशा इति'। अत्र द्विशब्देन दशत्वावृत्तिगता द्वित्वसंख्या प्रतिपाद्यते न दशत्वसंख्या, एकत्वात्, नापिसंख्यायुक्ताः, बहुत्वात्, तत्र वाक्ये मुच्यमानैकाभ्यामर्थ

अयं भाव इति॥ (कै)

नापि संख्येयानामिति। (कै)

तेषां बहुत्वात्॥

दशत्वावृत्तीति। (कै)

यद्यपि [1]"क्रियाभ्यावृत्तिगणने कृत्वसुच्" एवं च दशत्वावृत्तीत्यसंगतं तथाप्यावृत्तिक्रियाजन्मगणनमेवाचेति बोध्यम्। दशत्वावृत्तीत्यस्य दशत्वावृत्तिजन्मगतेत्यर्थः। यद्यपि सुजन्तोऽप्यावृत्तिगतसंख्याबोधकस्तथापि संख्या संख्येयस्य वा प्राधान्येन बोधकः संख्याशब्द उच्यते नायं तथा द्वित्वसंख्यावृत्तिकदशत्ववन्त इति प्रतीतेरित्याह

सुजन्तस्येति॥ (कै)

शब्दान्तरत्वात्। (कै)

संख्या संख्येयातिरिक्तबोधकत्वात्॥

वर्गाविति। (कै)

[2]"पञ्चद्दशतौ वर्गे वेति" निपातनात् वर्गगतद्वित्वप्रतिपादकतया द्विशब्दः सख्यावाचीत्यर्थः॥

---

१ संख्यायाः क्रियाभ्यावृत्तिगणने कृत्वसुच्। ५। ४। १७।
२ अ ५। १। सू ६०॥

---

एवगमात्सुच् भवति, ततस्तस्यपदविग्रहः क्रियते द्विर्दश द्विदशा इति, वृत्तौ तु स्वभावादेव सुचमन्तरेणाभ्यावृत्तिसंख्यां द्विशब्द एवाहेति संख्यावाचित्वात्समस्यते। नन्वत्र वार्थः सुजर्थस्यान्यपदार्थ इति पूर्वेणैव सिद्धं तन्न, सुचः स्वार्थिकत्वात्तदर्थोऽपि पदार्थ एव। मत्वर्थे पूर्वयोगो-

अभ्यावृत्तिसंख्याभिधायीति । (कै)

आवृत्तिर्जन्मगतसंख्याभिधायीत्यर्थः ॥

आवृत्तिश्च समासशक्येति । (कै)

द्विशब्दस्तद्गतसंख्यायामेव वर्त्तत इति भावः॥ भाष्ये

[1]सुजन्तत्वादित्युच्यते इति । (कै)

तथा सुजन्तत्वात्संख्येयप्रसिद्धिरित्युच्यते। न च वृत्तौ सुजन्तमस्ति तस्मात्केवलेनैव समासः ॥

सुजन्त इति । (कै)

संख्येति । (कै)

प्रसिद्धिरित्यर्थः ॥

सुजर्थमिति । (कै)

यदुत्पत्तिगणने द्विशब्दस्तामुत्पत्तिविशिष्टां क्रियामित्यर्थः ॥

नहि शब्दैरिति । (कै)

तत्तत्तदर्थविशेषोपादानमबुधबोधनायाव्याख्याननिमित्तत्वेनाश्रीयते नतु शक्याधानाय न ह्येतावता सर्वत्र तदुपादानमावश्यकमिति भावः ॥ भाष्ये समासेन तत्प्रतीतौ बीजमाह

१ उपलब्धभाष्यपुस्तके "असुजन्तत्वात्। सुजन्तेत्युच्यते" इत्येवं पाठोऽस्ति ॥

ऽमत्वर्थार्थोऽयमारम्भः। ननु प्रासादकादिप्रथमार्थं वर्जयित्वा सर्वविभक्त्यर्थेषु यथाभिधानं भवतीत्युक्तम् एवं तर्हि प्रथमार्थेऽपि यथा स्यादित्ययमारम्भः, अथ प्रथमार्थं वर्जयित्वेत्येतदनादृत्य यथाभिधानं भवतीत्युच्यते, एवं तर्हि तस्यैव प्रपञ्चः संख्यायाः समासः, अव्ययानां तु चतुर्दशादिभिः

यावता संख्येयो यः संख्ययेति । (भा)

संख्येयत्वयोग्यो यः संख्यया संख्यायते गण्यते । संख्येयस्य पूर्वपदार्थसंख्यायाः प्रकृतेनोत्तरपदार्थः स च संख्यारूपः संख्येयरूपो वा । उभयथापि न द्व्यादिसंख्येयः । आद्यस्यैकत्वाद्द्वितीयस्य द्वित्ववत्त्वात् । अतः सामर्थ्यात् क्रियाजन्मरूपः सोऽर्थो वाच्य इति सामर्थ्यादेव स समासेनोक्त इति भावः ॥ तद् ध्वनयन् व्याचष्टे

क्रियाभ्यावृत्तीति ॥ (कै)

भाष्ये

स च क्रियाभ्यावृत्त्यर्थः (भा)

इति कर्मधारयः । संख्येयस्य क्रियाजन्मरूपोऽर्थः ॥

स चोक्त इति । (भा

क्रियातज्जन्मरूपोऽर्थस्य समासेनोक्त इत्यर्थः । अनेन पञ्चकृत्वः पचतीत्यादौ क्रियोत्पत्तिः सुजाद्यर्थमिति बोधितम् ॥

अनोक्तत्वादिति । (कै)

वदताव्ययीभावकृतत्वं नेति सूचयति । अपृथगुपस्थितिर्हि सः न तत्कृतत्वमस्य । एवमन्यपदार्थादयोऽपि न तत्कृता इति बोध्यम् ॥ ननु अनया युक्त्या वाक्येऽपि सुच्प्रयोगो न स्यादत आह

---

संख्येयवाचिभिः समासो विधेय एव । केचित्तु ये विंशत्यादयः संख्याने वर्तन्ते तैः पूर्वेणैव सिद्धम् अधिका विंशतिर्येषां त इमे ऽधिकविंशाः, विंशतिसंख्या आसन्ना येषां ते आसन्नविंशा इति, तत्र सर्वनामसंख्ययोरिति विंशतिशब्दस्य पूर्वनिपातः प्राप्नोति, तस्माद्विंशत्याद्यर्थमव्ययादीनां ग्रहणं कर्तव्यमेव ॥

वाक्येत्विति । (कै)

शब्दशक्तिस्वाभाव्यादिति भावः ॥

अनेनैवेति । (भा)

वृत्तौ दशशब्दो दशदर्थकः सामर्थ्यात् । उद्भूतावयवभेदो वर्ग एव समासार्थ इति नित्यबहुवचनान्तत्वमिति भावः। अधिका विंशतिर्यासामिति किंचिदधिका विंशतिः संख्या यासामित्यर्थः ॥

भाष्ये

वार्थश्चेति । (भा)

सुजर्थस्तु विशेष्य इति स नोक्तः ॥

संख्यानेति । (भा)

द्वौ दशतौ विंशतिरिति दशतौ परिमाणमस्य विंशतिरित्युभयथा तद्व्युत्पत्तेरिति भावः ॥

संख्येयाभिधायित्वादिति । (कै)

"द्विदशा" इत्यादावपि द्विरावृत्तदशत्वसंख्यावन्त इत्यर्थात्संख्येयमेवान्यपदार्थ इति भावः॥ "द्वित्रा" इत्यत्रापि द्विवान्यतरा इति बोधाद्वार्थस्य प्राधान्यम्।

अधिकविंशा । (भा)

इत्यादौ सर्वनामसंख्ययोरिति विंशतिशब्दस्य पूर्वनिपातः स्यादिति न शङ्क्यं तत्प्रकरणस्यानित्यत्वात्तत्र द्वि त्रा इत्यत्र वार्थान्यपदार्थः। अधिकविंशा इत्यादौ च संख्येयमिति सर्वत्रान्यपदार्थ इत्येवं सिद्धं तत्रापि संख्येये वर्त्तमानबहुव्रीहेरित्यर्थेन सिद्धः

अतिप्रसंगस्त्वनभिधानान्नेत्याशयेन पूर्वपक्षे विंशत्यादीनां संख्यासंख्येयोभयपरतया सिद्धावपि दशादीनां संख्येयमात्रपरतया अधिकदशा इत्यादिपूर्वेण न सिध्यतीत्याह भाष्ये

भवेत्सिद्धम् (भा)

इत्यादि। यद्यपि १"बहुषु बहुवचनमि"ति सूत्रे एकद्विबहुशब्दानां संख्यासंख्येयोभयपरता भाष्ये उक्ता तथापि सौत्रप्रयोगविषयमेव तदिति बोध्यम् ॥

सप्तम्येति। (कै)

तया च सन्तीति। (कै)

क्रियाक्षेपाद्धि समीपे सन्ति ते लभ्यन्ते अन्यथा प्रथमान्तमेव पठेदित्यर्थः। एवं च पूर्वपदार्थप्रधानोऽयमिति पूर्वेण न सिद्धिरितिभावः॥ समासस्य समीपिप्रधानताया उक्तत्वेन कस्य सामीप्यमर्थ इति अयुक्तमित्यत आह

धर्मेणेति । (कै)

समीपिशब्दाद् "ब्राह्मणा" दित्वात् ष्यञ् इत्याशयः ॥

आराच्छब्दवदिति। (कै)

अनेकार्थत्वमात्रे दृष्टान्तः। अत्र निपातस्याप्युपमावाचकत्वं द्रष्टव्यम्। अत एव तदर्थस्य विशेष्यतया न भानम् ॥

---

१ अ १ । पा ४ । सू २१ ॥

वार्थस्येति । (कै)

संख्येयस्योपलक्षणमेतत्। अधिकदशा इत्याद्यर्थं तदितिभाष्य-कृतोक्तम् ॥ इदानीमिकेकार आह

मत्वर्थे इति । (भा)

एवं च पदानामसामानाधिकरण्याद्द्विका द्विदशा इत्याद्य-सिद्धिरितिभावः। द्विकान् पश्य इत्यादौ परिनिष्ठितविभक्त्या समासे शेषग्रहणबोधितप्रथमान्तत्वाभाव इत्यपि बोध्यम् ॥

कबभावार्थं वेति । (कै)

अनन्तरबहुव्रीह्यधिकारापेक्षानुक्तसमासान्तत्वरूपशेषत्वस्यैव वक्ष्य-माणत्वादितिभावः। अनेन समासे तु शेषाधिकारस्तु समासा-भावाय्चेति तात्पर्य्यम् ॥

शेषाधिकारेति । (कै)

न च समानाधिकरणानाम् इत्यादिवार्त्तिकप्रत्याख्यानरीत्या शेषग्रहणमपि प्रत्याख्यातमेव स्पष्टं च "आकडार" ( १।४।१) सूत्रादावुक्तम्। तत् कथमेतदर्थलाभ इति वाच्यम् अनभिधानस्य दुर्ज्ञेयतया तदर्थमेतदर्थं च शेषग्रहणमावश्यकमित्याशयात्, प्रत्या-ख्यानं च प्रौढ्या। अनभिधानम् अगतिकगतिरिति "सत्" (३।२।१२७) सूत्रे उक्तत्वात् ॥

---

# दिङ्नामान्यन्तराले।२।२।२६॥
# तेन सहेति तुल्ययोगे।२।२।२८॥



"तत्र तेने"ति (२।२।२७) मध्यपतितसूत्रमतिक्रम्य योगद्वयस्य सहविचारे कारणमाह

तुल्यन्यायत्वादिति॥ (कै)

भाष्ये

सहयोगयोरिति। (भा)

सहेन योगोऽस्येतिविग्रहेण स पुत्र इति समास उच्यते। तत्रापदार्थ इत्येवेति सहशब्दस्य साहित्यमेवार्थस्तद्वान् पित्रादिस्तु

---

दिङ्नामान्यन्तराले॥ दिशो नामान्यन्तराले वाच्ये समस्यन्ते स बहुव्रीहिः। दक्षिणस्याः पूर्वस्याश्च दिशोरन्तरालं दक्षिणपूर्वा। सर्वनाम्नो

---

तेन सहेति तुल्ययोगे। सहेत्येतत्तुल्ययोगे वर्तमानं तृतीयान्तेन सह वा समस्यते स बहुव्रीहिः। सपुत्र आगतः। सह पुत्रः। वोपसर्जनस्येति

---

"दिङ्नामान्यन्तराले"॥ 'दक्षिणपूर्वेति'। अन्तरालस्यान्यपदार्थत्वात्पूर्वेणैव सिद्धे वचनमिदं त्वमत्वर्थेऽपि यथा स्यात्प्रथमार्थेऽपि यथा स्यादित्येवमधि-

---

"तेन सहेति तुल्ययोगे"॥ तुल्ययोगइति'। 'तुल्ययोगः समानसम्बन्धः' 'सपुत्र इति'। 'वोपसर्जनस्ये' ति सभावः। नन्वत्र पिता प्रधानम-

समासार्थं इतिभावः ॥ "समानाधिकरणानाम्" इत्यस्य "शेष" इत्यस्य चापरामर्शेनेदम् । अत एव वक्ष्यति मत्वर्थे "वा पूर्वस्ये"ति नारब्धव्यम् इति कर्मधारयेणैव पुंवत्त्वमपि सिध्यति इतिभावः ॥

**बहुव्रीहिसंज्ञैवेति ।** (कै)

द्वन्द्वकरणार्थं बहुव्रीहौ इत्यावश्यकं तच्च एतदभावप्रतिपदोक्तत्वा-भावात् । प्रतिपदोक्तत्वार्थमेव वा इदं कार्य्यमित्याशयः ॥

**प्रवृत्तिनिमित्तलक्षण इति ।** (कै)

भाषितः पुमान् यस्मिन् अर्थे इति व्युत्पत्तेरिति भावः ॥

**न शब्द इति ।** (कै)

तत्र अन्यपदार्थे यत्किंचिदर्थमादाय स्यादेव भाषितपुंस्कत्व-मिति भावः ॥

---

वृत्तिमात्रे पुंवद्भावो वक्तव्य इति भाष्यम् ॥ अत एव ठक्छसोश्चेति वार्तिकस्योक्तिसम्भवः । यद्यपि तत्र शसा साहचर्याद्भवतष्ठगेव गृह्यत इति "नकोपधायाः" इति सूत्रे कैयटहरदत्ताभ्यामुक्तम् । युक्तं चैतत् । गत्या चरति धावन्त्या चरतीति प्राग्वहतीये ठकि गान्तिको धावन्तिक इति

---

सभावः । नन्वत्र पिताप्रधानमन्यपदार्थः । सत्यम् । व्यधिकरणयोः प्रथमार्थे च यथा स्यात् । कपच मा भूदित्येवमर्थं वचनम् । तुल्ययोगेति किम् । स

---

करणेऽपि यथा स्यात्, किं च 'विभाषा दिक्समासे बहुव्रीहौ' इत्यत्र दिशां प्रतिपदोक्तस्य बहुव्रीहेर्ग्रहणं यथा स्यात् या पूर्वा श्रोत्तरास्योन्मुखस्य तस्मै

---

न्यपदार्थोऽभिधेयः, सत्यं, व्यधिकरणयोः प्रथमार्थेऽपि यथा स्यादित्ययमारम्भः, कबभावार्थं च. [illegible] कबभावः, । 'वपुभि पुत्रेण ति' । इत्यसूतत्यर्थः ।

## विना प्रवृत्तिनिमित्तेनेति । (कै)

शब्दातिरिक्तप्रवृत्तिनिमित्तेनेत्यर्थः । यद्वा व्यक्तिमात्रबोधस्ततो लब्धेति। दक्षिणादिशब्द एव तत्र प्रवृत्तिनिमित्तं तदभाव एव वा। न तु व्यवस्थाविषयं प्रवृत्तिनिमित्तमित्यर्थः ॥

## व्यवस्थाशब्दौ । (भा)

इति भाष्यस्यापि व्यवस्थाविषयप्रवृत्तिनिमित्तकावित्यर्थः। न हि स्वाभिधेयापेक्षावधिनियमरूपव्यवस्था कस्यापि प्रवृत्तिनिमित्तं भवति। दिक्शब्दानां सर्वनामत्वमवश्यमेष्टव्यमिति तात्पर्यकस्य "यदि पुनर्दिक् शब्दा अपि व्यवस्थाशब्दाः स्युरि"तिभाष्यस्य तर्हि तद्भावितं पुंस्कत्वमिति शेषः। दिग्वाचकपूर्वादीनां पृथ्वीमध्यभागावधिकोदयाचलादिपर्य्यन्तदेशरूपोपाधिविशिष्टदिशि प्रवृत्तिरितिभावः ॥

---

यथा स्यादृान्तकौ धावतो मा भूदिति। तथापि भाष्यं दृष्ट्वा वार्तिककृतोऽप्रवृत्तेः। अत एव हि "एकतद्धिते चे"ति सूत्रस्याप्युक्तिसम्भवो लभ्यत इति दिक्। भवन्मयः। सर्वकाम्यति। सर्वकभार्यः। सर्वप्रिय इत्यादिवृत्तौ पूर्व-

---

चैव दशभिः पुत्रैर्भारं वहति गर्दभी। विद्यमानतावाची सहशब्दः दशसु पुत्रेषु विद्यमानेष्वित्यर्थः। तुल्ययोगवचनं प्रायिकम्। ज्ञापकात्। यदयं

---

उत्तरपूर्वाय देहीत्यत्र मा भूदित्येवमर्थम्, अतस्तदर्थोऽप्ययमारम्भः, कत्रभावार्थं च 'शेषाद्विभाषे' त्यत्र शेषाधिकारविहितस्य बहुव्रीहेर्ग्रहणम्

---

'प्रायिकमिति'। ज्ञापकात्, यदयं 'विभाषा साकाङ्क्षे' 'छन्दस्यनेकमपि साकाङ्क्षं', 'पूर्वादिभिः, 'सपूर्वाच्च' 'सपूर्वायाः प्रथमाया विभाषा' 'विभाषा

**व्यवस्थाकृताविति ।** (कै)

व्यवस्थाविषयप्रवृत्तिनिमित्ते समाने इत्यर्थः॥

**न तु रूढ्येति ।** (कै)

शब्दातिरिक्तप्रवृत्तिनिमित्तनिरपेक्षरूढ्येत्यर्थः। प्रवृत्तिनिमित्त-विशेषानपेक्षदिग्रूढशब्दत्वं हि तत्त्वमितिभावः ॥

**विषयवशादिति ।** (कै)

दिगादिरूपविषयवशादित्यर्थः। अस्य दिक्शब्दत्वमित्यनेना-न्वयः॥ भाष्ये

**यदादिश इति ।** (भा)

यदादिग्वृत्तिव्यवस्थाविषयप्रवृत्तिनिमित्तं वक्ष्यन्तीत्यर्थः। आका-शवदेकस्यैव दिक्पदार्थस्यौपाधिकाभेदः। उपाधिश्च पृथिवीमध्यं

---

भागतया प्रविष्टस्यैवायं पुंवद्भावः। मत्वन्यस्या "भस्त्रैषादे"ति लिङ्गात्। तेनाकचि एकशेषवृत्तौ च न। सर्विका सर्वाः। न चान्तरालस्यान्यपदार्थ-त्वात्पूर्वेणैव सिद्धमिति चेन्न। अप्रथमार्थे तदित्युक्तत्वात्। वैयधिकरण्याच्च

---

"विभाषासाकांक्षे" "विभाषासपूर्वस्ये"त्यादिनिर्देशात्। तेन सकर्मकः सलोमक इत्यादि सिद्धम् ॥

---

'अनेकमन्यपदार्थे' इत्यत्रैव शेषग्रहणमनुवर्तते तेनात्र कप् न भवति, सर्व-नाम्नो वृत्तिमात्र इति मात्रग्रहणा"द्विभाषा दिक्समासे" इति यदा सर्व-नामसंज्ञा नास्ति तदापि भवति ॥

---

सपूर्वस्येति, विद्यमानार्थेपि समासो निर्दिश्यते तज्ज्ञापयति प्रायिकं विशेषणमिति-॥

तत्प्रान्तस्थाश्च चत्वारः पर्वताः। एवं च तत्राप्युदयाचलसंनिहित-त्वादिकमेव प्रवृत्तिनिमित्तम्। अवधिस्तु परं पृथ्वीमध्यमेकमेव। एवं चावधित्वं सिद्धं दिक् शब्दत्वं च विशेष्यतया दिक् बोधकं शब्दत्वमेवेति अभिमानः॥

**दिशि दृष्ट इति।** (भा)

दिशि दृष्ट्वा दृष्ट इत्यर्थः॥

**यो दिशमिति।** (भा)

दिगतिरिक्तमर्थं प्रवृत्तिनिमित्ततयापि यो नाश्रयत इत्यर्थः। एवं च तत्र शब्दस्यैव प्रवृत्तिनिमित्तत्वेन व्यक्तिमात्रशक्ततयाचा-समानायामाकृतौ भाषितपुंस्कत्वाभाव इतिभावः। सर्वनामत्वं तु भवत्येव पृथिवीमध्यान्तरान्त पर्य्यन्तदेशरूपोपाधिविशिष्टदेश एव पूर्वादिशब्दवाच्यत्वेन व्यवस्थाविषयत्वाचतेतिदिक्॥ भाष्ये

**कबभावार्थो वेति।** (भा)

शेषाधिकारस्थकपश्शीलावेव तद्विधेरितिभावः॥

---

"विभाषादिक्समास"इत्यत्र प्रतिपदोक्तस्यास्यैव ग्रहणार्थमपीदम्। तेन या पूर्वा सोत्तरा यस्य मुग्धस्य तस्मै उत्तरपूर्वायेत्यत्र न विकल्पः। कब-भावार्थं च। तथा हि "शेषाद्विभाषे"त्यत्र तत्वाह्वयासाश्रयणेन एकः शेष उपयुक्तादन्यः अपरः शेषाधिकारः। तेनोत्तरपूर्वादौ न कप्। इह शेषग्रहणमनुवृत्तः। द्वितीयशेषग्रहणात्तु प्रियपथः प्रियधुर इत्यादौ न कप्। यत्तु तत्र तेनेदमिति सूत्रे कैयटेनोक्तं शेषाधिकार एव गृह्यते न तूपयुक्तादन्य इति। तत्तु तत्रत्यभाष्यस्योक्तिसम्भवमात्रपरम्। नामग्रहणं स्पष्टार्थम्। इह मा भूत्। ऐन्द्र्याश्च कौबेर्याश्चान्तरालमिति॥

# तत्र तेनेदमिति सरूपे । २ । २ । २७ ॥

युद्धक्रियायामेवेति । (कै)

इदं च लोकोदाहरणविशेषाभिप्रायम् । अत एव "कर्णाकर्णिप्रथितमयश" इत्यादिप्रयोगाः संगच्छन्ते । अत एव भाष्ये

क्रियाभिधानाद् (भा)

इत्येवोक्तम् ॥

सिद्धः समास इति । (कै)

पूर्वसूत्रेण क्वचित्तु पूर्वेणेति पाठोऽपि । "सरूपत्वादिति" विरूपाणां त्वनभिधानात् समासो नेति भावः ॥

---

तत्र तेनेदमिति सरूपे ॥ सप्तम्यन्ते ग्रहणविषये सरूपे पदे तृतीयान्ते च प्रहरणविषये इदं युद्धमित्यर्थे समस्येते कर्मव्यतिहारे स बहुव्रीहिः । इतिकरणाल्लौकिकविवक्षातात्पर्यकात् ग्रहणप्रहरणकर्मव्यतिहारयुद्धानि लभ्यन्ते । गृह्यतेऽस्मिन्निति ग्रहणं केशादि प्रहरणं दण्डादिकर्मव्यतिहारः ।

---

"तत्र तेनेदमिति सरूपे" । 'इतिकरण इत्यादि' । ततः समासा-लौकिकस्य यदि विवक्षा भवति एवमर्थं समासो भवति नान्यार्थमित्येवमर्थं सूचयितुमितिशब्द इत्यर्थः, तेन किं सिद्धं भवतीत्याह । लौकिकमर्थमिति' । कः पुनरसौ लौकिकोऽर्थ इत्याह । 'ततश्चेत्यादि' । एतदेव विवृणोति

**समूहान्यथानुपपत्त्येति । (कै)**

"सुप्सुपा" इत्यधिकारात् तस्मात्पदसमूहवृत्तित्वादिति भावः॥

**अन्यपदार्थापेक्षत्वादिति । (कै)**

सुबुत्पत्त्यपेक्षत्वादित्यपि बोध्यम् ॥

**पूर्वदीर्घार्थं चेति । (कै)**

भाष्ये इतिशब्दादिदमपि लभ्यमित्येके ॥

**पक्षान्तरेत्विति । (कै)**

प्रत्याख्यानपक्षेत्वित्यर्थः ॥

---

परस्परग्रहणं परस्परप्रहरणं च । केशेषु गृहीत्वा युद्धं प्रवृत्तं केशाकेशि । मुष्टीमुष्टि । दण्डैश्च दण्डैश्च प्रहृत्य युद्धं प्रवृत्तं दण्डादण्डि । "इच्कर्मव्यतिहार" इतीच्समासान्तः । तदन्तमव्ययं तिष्ठद्गुप्रभृतिष्विच्प्रत्ययस्य पाठेन अव्ययीभावत्वात् । "अन्येषामपि दृश्यत" इति पूर्वपदस्य दीर्घः । अत एव मुष्टामुष्टीति प्रामादिकम् । न च सूत्रे इदंशब्दात् प्राक् आकारः प्रश्लिष्यतामिति वाच्यम् । भाष्यकैयटाद्यसम्मतत्वात् । अस्यसीत्यादावतिप्रसङ्गाच्च । परिशिष्टे तु आच्च गुणिन इति सूत्रितम् । गुणोऽस्त्यस्येति गुणी नामीति व्याख्याय मुष्टामुष्टीत्युदाहृतं तदपाणिनीयम् । सरूपग्रहणं किम् । हलैश्च

---

'यसत्रेत्यादि' । गृह्यतेऽस्मिन्निति ग्रहणं केशादि, प्रहरणं दण्डादि, कर्मव्यतिहारः परस्परग्रहणं परस्परप्रहरणं च । 'स चाव्ययमिति' । तिष्ठद्गुप्रभृतिषु पाठेनाव्ययत्वात् । नन्वत्र युद्धस्यान्यपदार्थत्वात्पूर्वेणैव सिद्धं न वैयधिकरण्यादेकशेषप्रसङ्गाच्च । तथाहि । ग्रहणप्रहरणे च केशादीनां सह विवक्षितत्वादेकविभक्तित्वाच्चैकशेषः प्राप्तोऽनेन वचनेन बाध्यते कथं न

## न तूपयुक्तादिति । (कै)

इत्यभिमान इति शेषः॥ उपयुक्तादन्यः शेष इत्यर्थस्य "शेषा"-दिति सूत्रे भाष्यकृतैव ख्यापयिष्यमाणत्वात् । आवृत्त्या शेषाधिकारस्यादित्यप्यर्थ इति पूर्वसूत्रस्य "कबभावार्थं वेति" वार्त्तिकाद् ज्ञायते तस्मात् "कबभावार्थं वेति" अत्रैकदेश्युक्तिः । वैयधिकरण्यात् पूर्वेण न सिध्यतीति अस्य सूत्रस्यावश्यकत्वेऽनेनापि कबभावः सिध्यतीत्याशयेन ॥

---

मुसलैश्च युद्धम् । इदमपि सूत्रे वैयधिकरण्यार्थं प्रथमाविभक्त्यर्थं एकशेषबाधनार्थं च । कबभावार्थं चेति तु भाष्येऽभ्युच्चयमात्रम् । शेषग्रहणस्य प्रागनुक्तपरतायाः पञ्चमे स्पष्टत्वात् ॥

समूहविवक्षायां बहुव्रीहिसंज्ञा समुच्चयैकशेषे नोपपद्यते, ननु चासत्यस्मिन्पूर्वयोगेनैव परत्वादेकशेषो बाधिष्यते, न शक्यते बाधितुम् अन्तरङ्ग एकशेषो बहुव्रीहिश्चान्यपदार्थापेक्षत्वाद्बहिरङ्गः ।

# चार्थे द्वन्द्वः। २। २। २९॥

भाष्ये

चार्थ इत्युच्यते। (भा)

उभयत्रापि साहित्यसमूहो विशेषः स च समाहारेऽनुद्भूतावयवभेदः। अन्यत्र तु विपरीत इत्याशयेनेदम्। यद्यपि चार्थोऽसत्त्वभूतो विशेषणं च तथापि चार्थे इत्यस्य तत्सदृशे इत्यर्थ इति बोध्यम्॥

पूर्वपक्ष्याह

---

चार्थे द्वन्द्वः॥ धवखदिरौ इत्यादौ इतरेतरद्वन्द्वे उद्भूतावयवभेदः समूहः समासार्थः। अत एव "चार्थे द्वन्द्वः" इति सूत्रे भाष्ये चार्थे विधीयमानस्य द्वन्द्वस्य तद्वदेवालिङ्गसंख्यतामाशङ्क्य शब्दशक्तिस्वभावेन गुणवचनानामिवाश्रयतो लिङ्गवचनानीत्यनेन वा परिहृतम्। बहुव्रीहौ अन्यपदार्थस्येव अत्रापि चार्थस्यैव प्राधान्यौचित्यात् अत एव "गोस्त्रियोः"

---

चार्थे द्वन्द्वः॥ प्रागनुक्तसमासमनेकं सुबन्तं चार्थे वर्त्तमानं वा समस्यते स द्वन्द्वः। समुच्चयान्वाचयेतरेतरयोगसमाहाराश्चार्थाः। परस्परनिरपेक्षस्यानेकस्यैकस्मिन्प्रति सम्बन्धिन्यन्वयः समुच्चयः। यथा "अहरहर्नयमानो गामश्वं पुरुषं पशुं वैवस्वतो न तृप्यति सुराया इव

---

"चार्थे द्वन्द्वः"। 'समुच्चयेत्यादि'। यदा परस्परनिरपेक्षाः पदार्था एकस्मिन्प्रतिसम्बन्धिनि समुच्चीयन्ते तदा समुच्चयः, यथा "अहरहर्नयमानो गामश्वं पुरुषं पशुं वैवस्वतो न तृप्यति सुराया इव दुर्मदी"ति, दुर्मदी यथा सुराया न तृप्यति तथा यमो गवादीन्नयमान इत्यर्थः। अत्र

## पाठेनापीति । (भा)

अपिना पाठेन तस्याः कर्तृमशक्यत्वसूचितम् । स्वरादिषाद्यो-राकृतिगणत्वात् । अभिधेयवद् विशेष्यवल्लिङ्गादिकं वक्तव्यं विशेष्यस्य चार्थस्य लिङ्गादिराहित्यात् तदवमशक्यमिति भावः ॥ नेदं भाष्यं समाहारविषयं तत्र नपुंसकत्वैकवचनयोर्नियतत्वात् । तस्मादितरे-तरयोगविषयं तच्च तत्र चार्थस्य विशेष्यत्वे संगच्छते नान्यस्येति बोध्यम् ॥

## समुच्चितद्रव्याश्रये इति । (कै)

समाहारे तु लिङ्गं वाचनिकम् । वचनमपि द्वन्द्व इत्यादौ एकवचनशब्देन योगतः समाहारस्य निर्देशो ज्ञापकमिद्धमिति । इतरेतरयोगविषये एव पूर्वपक्षसिद्धान्तावित्ति भावः । एवं चेतरे-तरयोगे समाहारे द्रव्येणाभेद एवोच्यते इत्याहुः ॥

---

इति सूत्रे भाष्ये "कुक्कुटमयूर्यौ" इत्यत्र स्त्रसमासक्ष "द्वन्द्वे प्रतिषेधो वक्तव्यः" इत्युक्तम् । समासार्थे अवयवार्थस्याप्राधान्यात् प्रथमानिर्दिष्ट-त्वाचोपसर्जनत्वम् इति कैयटेनोक्तम् । "प्रमाणप्रमेय" इत्याद्यसूत्रे न्याय-भाष्यकारोपि "चार्थे द्वन्द्वः समास" इति । अतः "सर्वे एते प्रमाणादयो विज्ञेया इति सिद्धम्" इति वार्त्तिकं च ॥ तेन हि समासस्य चार्थे वृत्तिः

---

दुर्मद इति, अत्र नयतिक्रियायामेकस्यां गवादीनां समुच्चयः । गम्यमा-नत्वा तु चशब्दस्याप्रयोगः । यदा तु एकस्य प्राधान्यमितरस्यानुषङ्गिकता

---

नयतिक्रियायामेकस्यां गवादीनां समुच्चयः, गम्यमानत्वाच्च चशब्दस्याप्रयोगः, एवं राजा गौश्चाश्वश्चेति द्रव्ययोः, रक्तः शुक्लश्चेति द्रव्ये गुणयोः, रक्तः पटः

चार्थसद्भावादिति। (कै)

अत एव तद्विग्रहे चस्य प्रयोगः। याज्ञिकत्वसमानाधिकरणवैयाकरणत्ववान् याज्ञिक इति बोधः इति भाव। स च वाक्ये चशब्दबलात् समासे समासबलादिति बोध्यम्॥

वैयाकरणशब्दस्यैवेति। (कै)

अभ्यर्हितत्वात् समायां तु अल्पात् चाद् याज्ञिकशब्दस्यैव स स्यादिति बोध्यम्॥

विशेषेति। (कै)

चार्थे इति व्यधिकरणधर्म्मवाचके सात्काशम्॥ भाष्ये

अशेषत्वादिति। (भा)

उक्ता। तेन च समूहस्य छेयत्वलाभः। अन्यथा समासान्तरे इव चकारघटितवाक्ये इव चात्रापि समासे कथं सर्वेषां छेयत्वलाभः स्यात्। एवं च पदाबोध्ये अर्थे समासस्य शक्तिरियुक्तमिति दिक्। पाणिपादम् इत्यादिसमाहारे त्वनुद्भूतावयवभेदः समूहो विशेष्य इति बोध्यम्। उद्भूतावयवभेदत्वं चावयवगतसंख्याद्यारोपवत्त्वं तद्विपरीतमनुद्भूतावयवभेदत्वम् उभयत्रापि द्वन्द्वे समूहोनावयवव्यतिरिक्तः। धवखदिरं धवखदिरौ इति शब्दैरेवाभिधानात्। अवयवातिरिक्तस्तु यूथं वनम् इति शब्दा-

तदान्वाचयः। यथा भिक्षामट गां चानयेति। अत्र हि अदर्शनाद्गामानयन्नपि भिक्षामट इत्येव। अनटंस्तु भिक्षां न। गामानयति तथा

---

कुण्डलं चेति गुणो द्रव्ययोः समुच्चय इत्यादि द्रष्टव्यं, यदानेकस्य प्राधान्यात्तदनुरोधेन त्वितरदन्वाचीयते तदान्वाचयः, यथा भिक्षामट गाश्चानयेति.

समासघटकपदबोध्यप्रधानार्थस्यैव चार्थसम्बन्धित्वे द्वन्द्वः। प्रधानाप्रधानयोरिति न्यायादित्याशयोऽत्र गूढः॥

सुकृतदुष्कृते इति। (कै)

[1]कृताकृतशब्दयोस्तयोरूढिरिति भावः॥ नन्वत्र वैयधिकरण्यात् कथं केन नञित्यस्य प्राप्तिरत आह

कर्मसामान्यं चेति। (कै)

कर्मसामान्यस्य विशेषाश्रयत्वादिति भावः॥

भिन्ने। (कै)

धर्माधर्मलक्षणे॥

---

१ उपयातं स्थूलसिक्तं तूष्णीं गङ्गं महाह्रदम्।
श्रोणां चेदशक्तो गन्तुं मात्वा तासां कृताकृते॥

---

न्तरेणैवोच्यते। एतेनेतरेतरयोगे तदनतिरेकेण इति भेद इत्यपास्तम्। यत्तु इतरेतरयोगे साहित्यं विशेषणं तच्च समुदायलक्ष्यम्। उत्तरपदलक्ष्यम् इति तु बहुव्रीह्युक्तरीत्या निरसनीयम्। समुदायलक्ष्यम् इति तु न युक्तम्। उपपत्तिप्रतिसन्धानं विनापि प्रतीतेः। समाहारे तु तद्विशेष्यं साहित्यस्य इतरेतरयोगद्वन्द्वेऽभावे तु द्वित्वाद्यन्वययोग्यतावच्छेदकसाहित्यमन्तरा तदन्वयो दुर्लभः स्यात्। ननूपस्थिते योग्य एव तदन्वय-

---

अटन्नपि नान्विष्य गामानयति। मिलितानामन्वय इतरेतरयोगः। समूहः समाहारः। तत्र समुच्चयान्वाचययोर्न समासः। असामर्थ्यात्।

---

अत्र सुख्यत्वेनादनानयन्नपि गामटेत्येव भिक्षाम्, अनटस्तु भिक्षां न गामानयति, अटन्नपि नान्विष्य गामानयति, इतरेतरयोगस्तु परस्परापेक्षाणा-

[१]समुच्चिते इति । (कै)

क्रियायां समुच्चिते । केचित्तु कृताकृते इत्यस्य पापपुण्ये क्रमेण कृताकृत इत्यर्थमाहुः ॥

अतिप्रसङ्ग इति । (कै)

द्वन्द्वसंज्ञातिप्रसङ्ग इत्यर्थः ॥

[२]गामश्वं पुरुषं पशुम् । (भा)

इति वाक्येऽपि परस्परसाहित्यरूपेतरेतरयोगे पदानां वृत्ते-र्द्वन्द्वसंज्ञास्यादिति भावः ॥

---

१ "समुच्चिते प्राप्तिमिति" इंलण्डीयविवरणे पाठोऽस्ति ॥

२ अहरहर्नयमानो गामश्वं पुरुषं पशुम् ।
वैवस्वतो न तृप्यति सुराया इव दुर्मदी ॥

---

नियमो न तु योग्यतावच्छेदकोपस्थित्यपेक्षा । अत एव घटेन जलमाहर इत्यादौ छिद्रेतरस्यैव योग्यतयान्वयो न तु छिद्रेतरत्वप्रकारको बोधः । न च घटाकाशद्वित्वादेः । प्रत्येकावृत्तेः समुदायावृत्तित्वेनाकाशेऽपि सत्त्वेन आकाशपदाद् द्विवचनाद्यापत्तिवारणाय संख्याया अन्वयितावच्छे-दकव्याप्यत्वविशिष्टसमवायसम्बन्धेन प्रकृत्यर्थेऽन्वये तेषां साधुत्वमवश्यं बोध्यम् ॥

---

एकार्थीभावे हि सति पुष्पवन्तौ पश्येत्यादाविव एकपदोपात्तौ मिलि-तावेव अन्वियातां न तु प्रत्येकम् । धवखदिरौ । वाक्त्वृषदम् । शेषः

---

मवयवभेदानुपगमेन समुदायरूपतामापन्नानामेकस्मिन्नर्थेऽन्वये सति भवति, यथा देवदत्तयज्ञदत्ताभ्यामिदं कार्यमिति, तथैकापायेऽपि तद्भवति, तद्भूता-

दुःखेनेति ॥ (कै)

क्लेशेनेत्यर्थः। अल्पपाने न मदोत्पत्तिर्यस्येति फलितम् ॥

[1]सुराया इति। (भा)

शेष षष्ठी। सुरया इत्यर्थः ॥

इन्द्रादीनामिति ॥ (कै)

भाष्ये लोकानां पालका इत्यध्याहार्य्यमितिभावः ॥ धवखदिरयोरिव अत्रापि विवचा स्यादत आह

अर्था इति ॥ (कै)

१ "सुरया" इत्यपि भाष्ये दृश्यते ॥

अत एव एकोन द्वावित्याद्युपपद्यते। द्वित्वान्वययोग्यतावच्छेदकोभयवृत्तिधर्मव्याप्यसमवायस्य प्रतियोगितावच्छेदकसम्बन्धत्वात्। अन्यथा केवलसमवायस्यैकस्मिन्नपि सत्त्वेन तदनुपपत्तिः। समवायस्तु नाना। तस्यैकत्वे तु तद्व्याप्यत्वविशिष्टापर्य्याप्तिः सम्बन्धोऽस्तु। एवं च धवखदिरावित्यादौ साहित्यभानमावश्यकम्। अन्यथान्वयितावच्छेदकधवखदिरत्वादिव्याप्यद्वित्वद्वयादिप्रतीत्यापत्तिः। तथाचैकैकखदिरादित्वात् पर्यायेण तथाप्रयोगानुपपत्तिरितिवाच्यम्। घटद्वयवृत्तिद्वित्वस्य घटत्वव्याप्यसम्बन्धेनान्वये एक-

किम्। गौणोत्पलम्। इह हि एकस्मिन्धर्मिणि अनेकधर्मसमुच्चयात् द्वन्द्वः स्यात्। न चेष्टापत्तिः। पटश्चासौ खञ्जश्चेत्यादावपि द्वन्द्वे सति

वयवभेदत्वाच्च द्विवचनबहुवचने भवतः, तादृशानामेवावयवतिरोधानसंहतिरूपेणान्वये तत्समाहारो यथाच्छत्रोपानहमिति, संहतिप्रधानत्वात्त्वे-

**युगपदनुभवाभावादिति ।** (कै)

परस्य स्वज्ञानसदृशज्ञानसमर्पणाय शब्दप्रयोग इति भावः ॥ विप्रतिषिद्धत्वादेव युगपदेव युगपदभिधानानुपपत्तौ प्रश्नानुपपत्तिरत आह

**आरादिति ॥** (कै)

तच्च दूरसमीपयोर्वर्त्तते ॥

**पुरेति ॥** (कै)

चिरातीतभविष्यदासन्नयोर्वर्त्तते ॥

**सुखप्रतिघातेन** (भा)

---

घटाभिप्रायेणापि घटौ इत्यापत्तेः । तस्माद् द्वित्वं द्वयोरेव पर्य्याप्तमेको न द्वावित्यादिप्रतीतिबलात् पर्य्याप्तेः । प्रत्येकावृत्तेरपि समुदायवृत्तित्वं स्वीकार्य्यं प्रत्येकावृत्तेरपि वनत्वादेः समुदाये वृत्तित्ववत् । अन्तःकरणविशिष्टब्रह्मरूपजीववृत्तिजीवत्वस्य प्रत्येकावृत्तेरेव विशिष्टवृत्तित्ववच्च । यद्वा द्वित्वादिसमवायस्यैव तादृशत्वमेको न द्वाविति प्रतीतेः समवायविषयताया एवानुभवाद् द्वित्वादिसमवायस्यैव च पर्य्याप्तिरिति नामान्तरम् । अन्यथा साहित्यभागाङ्गीकारोऽपि तत्र प्रत्येकधर्मयोरेव सम्बन्धितावच्छेदकतया साहित्यद्वयबोधापत्तिरिति चेन्न । घट-

---

द्वन्द्वे घौत्यादिनियमापत्तेः । विशेषणमित्यादिना तत्पुरुषे तु काणखञ्जवदनियमः सिद्ध्यति । परं कार्यमिति पाठे चेदम् । एकसंज्ञाधिकारे तु

---

त्ववचनम् । 'तत्रेत्यादि' । स्यादेतत् । समुच्चये परस्परानपेक्षत्वेऽपि गवादीनामेकक्रियाद्वारकं सामर्थ्यं दध्योदनादिवदस्त्येवेति, तत्र [illegible] दध्योद-

इत्यादिना सुखप्रतिवर्धिकायास्तन्नाशिकायाश्च सामग्र्या। दुःखजनकत्वं दुःखप्रतिवर्धिकायांस्तन्नाशिकायाश्च सुखजनकत्वं सूचितम्। एवं दुःखसुखजनकसामग्र्योर्नियमेन सुखदुःखप्रतिबन्धकत्वादि च सूचितम्। एतेन भारोत्तीर्णे गौणः सुखव्यवहार इत्यपास्तम्॥ षष्ठीसमासे कथं सामानाधिकरण्यमत आह

वृत्ताविति॥ (कै)

अयं भावः। सामानाधिकरण्यं नामत्विष्यतयैकद्रव्योपस्थापकत्वं तच्चापि पृथक् पूर्वपदेन स्वार्थानुपस्थितेरिति॥

न दोष इति। (कै)

अनयैव रीत्या विरूपाणामपीत्येक शेषोऽपि करणीयः। द्वन्द्वारम्भसामर्थ्येन वाक्यीयस्य समासार्थस्यैवाश्रयणादिति बोध्यम्॥ ननु

---

इत्यादौ विभक्त्युपस्थाप्य संख्यायाः प्रकृत्यर्थावच्छेदकव्याप्यत्वदर्शनात्तदुपस्थाप्य संख्यात्वावच्छेदेनेव तत्त्वकल्पनेन द्वन्द्वे तद्व्यापकस्य पदार्थतावच्छेदकस्य साहित्यस्यावश्याभ्युपेयत्वात्। किं चान्वययोग्यतावच्छेदकधर्मवत्त्वेनोपस्थिते एव द्वित्वादेः साकाङ्क्षत्वात्तज्ज्ञानमावश्यकम्। किं च दत्तचैत्रौ पचत इत्यादौ आख्यातोपात्तद्वित्वान्वयेऽन्वयितावच्छेदकलाभाय तज्ज्ञानमावश्यकम्। सुबुपात्तद्वित्वमेव तथेति तु न युक्तं चैत्रो मैत्रश्च

---

विशेषविहितत्वात्तत्पुरुषसंज्ञैव भवति। सामानाधिकरण्याभावे तु द्वन्द्व एव। यथा प्रमाणप्रमेयेत्यादौ साधर्म्यवैधर्म्याभ्यामित्यत्र च न स्वनामि-

---

नादावेकत्वात्क्रियायाः, इह तु कर्मभेदात्क्रिया भिद्यते, तथा च 'समुच्चयेऽन्यतरस्या' मित्यत्र आड्मट मठमटेत्यादिकं कर्मभेदनिबन्धनं क्रियाभेद-

अत्र पक्षे इत्येव वाक्यसमासार्थमिति तत्रापि सामानाधिकरण्यमस्त्येव इत्यत आह

लौकिकं चेति ॥ (कै)

स्वतन्त्रेणार्थबोधाय प्रयुक्तमित्यर्थः । इदं त्वलौकिकवृत्तिसमानार्थकमेवेति भावः ॥ शब्दानां स्वरूपतो विप्रतिषिद्धत्वाभावादाह

विप्रतिषिद्धार्था इति ॥ (कै)

तदप्युपपादयति

परस्परेति ॥ (कै)

भाष्ये

निवर्त्तयतीति । (भा)

---

गच्छत इत्यादावनन्वयापत्तेः । च शब्दस्तु न द्वित्वबोधकः कोशभाष्याद्यनुक्तेः । चार्थे द्वन्द्वविधानेन द्वन्द्वात् च शब्दस्येव द्विवचनस्याप्यनापत्तेश्चेति तन्न । प्रकृत्यर्थतावच्छेदकानेकधर्मावच्छिन्नान्वयेऽपि द्वित्वादेराकाङ्क्षायोग्यतयोः सत्त्वेनाप्तेः । क्वचित् संख्यायाःप्रकृत्यर्थतावच्छेदकत्वाप्यत्वेऽपि सर्वत्र तत्त्वकल्पने मानाभावाच्च । मम तु न दोषः । द्वित्वादिसम्बन्धस्य प्रत्येकाव्यक्तेरेव समुदायवृत्तितास्वीकारात् । समूहस्य विशेष्यतयाभा-

---

दान्वयो विवक्षितः । यद्यपि सामान्यविशेषयोर्वाचनिको द्वन्द्वनिषेधस्तथाप्यनित्यः स इति त्वदाद्येकशेषसूत्रएवोपपादितम् । अनेकं किम् ।

---

माश्रित्योदाहरिष्यते, अन्वाचये त्वप्रधानमेव चार्थे वर्त्तते न प्रधानमित्यनेकस्य पदस्य चार्थे वृत्त्यभावादपि समासाभावः, इह पटुश्वासौ स्वश्चे-

बुद्धिरित इति शेषः ॥ ननु निवृत्तौ तात्पर्य्यभेदात् तदितरभेदस्तदान् वा न चेन्निवृत्तिदुर्लभोऽत आह

एकस्मिन्निति ॥ (कै)

विरुद्धानामिति । (कै)

न हि सहानुभवासम्भवः शब्दात् सहबोधे प्रतिबन्धक इति भावः ॥

एकासंज्ञेति । (कै)

---

नाङ्गीकारेण द्वित्वादेः समूह एव भानात् । पटावित्यादावेकशेषेऽपि द्वन्द्ववत् समूहे एव विशेष्ये तदन्वयः । किंच साहित्यस्य विशेषणत्वे प्रमाणप्रमेय इत्यादौ सर्वस्य ज्ञेयत्वासिद्धिरेव सहितद्वित्वादिज्ञानेऽपि शाब्दार्थसिद्धेः । परस्परसहितानां सर्वेषां ज्ञेयत्वमित्यस्य समूहस्य विशेष्यत्व एव सिद्धेः । एकस्याप्यज्ञाने समूहाज्ञानात् । समूहस्य विशेषणत्वेऽपि एवमेव । न ह्यनेकघटपटराशौ अस्य राशेर्घटं पटम् आनय इत्युक्ते इमं राशिमानय इत्यत इव सकलघटाद्यानयनं नियमेन प्रतीयते । अत एव समासस्यालिङ्गासंख्यत्वादिशङ्कापरमुक्तभाष्यं संगच्छते । तच्च नैतद्भाष्यसमाहारविषयं तत्र वाचनिकलिङ्गैकवचनयोः सत्त्वात् । तस्याश्चपगत-

---

होतृपोतृनेष्टोद्गातारः । न ह्यत्र द्वयोर्द्वयोर्द्वन्द्वं कृत्वा पुनर्द्वन्द्वः कर्तुं शक्यः । होतृपोत्रोरप्यानङापत्तेः । वाक्त्वक्स्रग्दृषदमित्यादौ त्वगादेरपि टजापत्तेश्च । न चोत्तरपदे नित्यसमासोपसंख्यानात्तथापि तदापत्तिः । सकलसमुदाये

---

त्वेकस्मिन्धर्मिण्यनेकधर्मसमुच्चयाख्यार्थसद्भावात्समानाधिकरणयोरपि द्वन्द्वसंज्ञाप्रसङ्गः, ततश्च 'द्वन्द्वे घी'ति नियमः स्यात्, विशेषणमित्यादिना तु तत्पुरुषसंज्ञायां खञ्जपटुरित्यपि सिद्ध्यति, नैष दोषः । एकसंज्ञाधिकारा-

एको वाचकः शब्द इत्यर्थः॥ ननु वाचः क्रमो न वाच्यप्रतीति-यौगपद्यविरोधीत्यत आह

**अभिधानक्रमेति॥ (कै)**

**अभिधेयक्रमः। (कै)**

अभिधेयज्ञानक्रमः॥

**क्रमवदर्थावगमादिति॥ (कै)**

क्रमवतोऽर्थावगमस्य सत्त्वादित्यर्थः॥ भाष्ये

**प्लक्षशब्दः सार्थको निवृत्त इति। (भा)**

---

लिङ्गसंख्याद्याश्रयाहित्वाभावाच्च। इतरेतरयोगपदेन च समूह एव तस्याश्रयगतलिङ्गसंख्याद्याश्रयाहित्वोक्त्याऽवयवतादात्म्येन भानं स्पष्टमेवोक्तम्। एतावतैवोभयपदार्थप्रधानो द्वन्द्व इति व्यवहारः। समूहस्यावयवेभ्यो भेदेनाप्रतीतेः। किंच दण्डसाध्योत्थापनकभावोत्थापनक्रिया तत्कर्तृत्वं च प्रत्येक सम्बन्धमपि इतरसाहित्येनैव बुध्यते। तत्र चैकेनोत्थापयति समूह उत्थापयतीति च प्रयोगः। तत्राद्ये एकशब्दोऽसहायपरः। एवं द्वित्वादिकमपि प्रत्येकसम्बन्धमेव। इतरसाहित्यरूपसमूहबुद्धिस्तु तद्व्यञ्जिका

---

प्रवृत्तस्य द्वन्द्वस्य एकाज्द्विर्वचनन्यायेनावयवे पुनरप्रवृत्तेः। उपसंख्यानस्यान्यत्रोपक्षयात्। न चैवं वाक्चत्वग्दृषद होतापोतानेष्टोद्गातार इत्यादि न स्यादेवेति वाच्यम्। द्वयोर्द्वयोरेव सहविवक्षायां द्वन्द्वे समुदाययोः

---

विशेषविहितत्वात्तत्पुरुषसंज्ञैव भविष्यति, अन्यथा नीलं च तदुत्पलं चेत्यादावपि द्वन्द्वः स्यात् यदा शेष इति वर्त्ततेऽतो विशेषणमित्यत्रोपयुक्तत्वान्न भविष्यति, सामानाधिकरण्याभावे तु द्वन्द्व एव पटुखञ्जावागताविति।

अर्थेन सहनिवृत्त इत्यर्थः। स्वार्थे कः॥ ननु तस्य निवृत्तावपि एकेन शब्देन समासरूपप्रातिपदिकेन द्वौ बोधितौ इति द्विवचनं भविष्यति इति चेन्न। समासस्य समूहे शक्तावपि शक्तादीनाम-वयवत एव बोधेन एकप्रातिपदिकजन्यबोधविषयत्वाभाव इत्यभि-मानात् "तस्माद्" इति विनिगमनाविरहादुभयोरप्यनेकार्थत्व-मित्याशयः। आगमेन अनाशङ्कनीयप्रमादवेदवाक्येन। एतेन द्यावा इत्यादावपि द्विवचनानुपपत्तेस्तुल्यत्वात् पूर्वस्मात् को विशेषः इत्य-पास्तम्॥ भाष्ये

---

इतरसाहित्यबुद्धिरेवापेक्षाबुद्धिः। अपेक्ष्यते सापेक्षासमूहस्तद्विषया-बुद्धिरित्यर्थः। लोके द्वावित्यादिप्रयोगे चैकशेषं विनापि द्व्यादिशब्दानां समूहबोधकत्वम्। अत एव द्वन्द्वैकशेषयोस्सार्थसमूहभानाङ्गीकारस्तद-स्थाने तद्बोधात् स्पष्टं चेदं "सरूप" सूत्रे भाष्ये॥ "तस्य पूरणे" इति सूत्रे भाष्येऽप्युक्तमन्योऽन्यं वाच्यमाश्रित्य सर्वस्मिन् द्व्यादयः प्रवर्त्तन्ते इति। अन्योऽन्यम्। अन्योन्यसापेक्षम्। वाच्यं संख्येयमाश्रित्यपूरणप्रत्ययान्त-पञ्चमादिप्रकृतयः पञ्चादयः सर्वस्मिन् प्रत्ययवाच्यसहिते वर्त्तन्ते। तत्र तत् संख्याश्रयसमूहस्य प्रकृतिवाचकत्वात् तदन्तर्गतस्यैकदेशस्य प्रत्ययो

---

पुनः सहविवक्षायां तदुपपत्तेः। पूर्वत्राप्यनेकग्रहणफलं दत्तमेव। तस्मा-द्यथायथं समासान्तपुंवद्भावस्वरानुग्रहणं प्रवृत्तिरप्रवृत्तिश्चानेकग्रहणफलं स्थितम्। अनेकस्य चार्थे वृत्तिस्तु अशक्त्यार्थायां वृत्तौ मिलितस्यैव।

---

'प्लक्षन्यग्रोधाविति'। चशब्दस्याश्रयत्वेऽपि तदर्थे विधीयमानस्य द्वन्द्वस्य सभावादेव लिङ्गसंख्यायोगः, कथं पुनरत्र द्विवचनं, यावता शब्दपौर्वा-पर्यादर्थाभिधानेऽपि पौर्वापर्यन्ततश्च प्लक्षशब्दः सहार्थेन निवृत्तः न्यग्रोध-

## द्यावाह इति। (भा)

१"द्यावा ह क्षामा प्रथमे ऋतेन" इति मन्त्रस्थमिदम्। ह शब्दो- ऽसमासद्योतकः। इतरेतरापेक्षयोभयत्रापि द्विवचनम्। द्वितीये

## चिदस्मै (भा)

शब्देन व्यवधानात् समासाभावः। प्रधाने द्यावापृथिव्यावि- त्याद्यमन्त्रार्थः॥ यथोक्तं सूचितं कैमुतिकन्याय

---

१ द्यावा ह क्षामा प्रथमे ऋतेनाभि श्रावे भवतः सत्यवाचा॥ म१०. सू१२. ऋ१.

---

वाचको यथा वार्क्षी शाखा वृक्षस्यावयव इत्यर्थः। अनेन हि तत् तत् संख्यावत्त्वेन परस्परसापेक्षसमूहप्रतीतिः स्पष्टमेवोक्ता सर्व एव द्वयाद- योऽन्योन्यमपेक्षन्ते इति च वक्ष्यते। तत्र समूह उद्भूतावयवभेद एव वाच्यः। अत एव यथादयोनित्यं बहुवचनान्ता एव। ननु

द्वित्वादियोनिरेकत्वं भेदास्तत्पूर्वकायतः।
विना तेन न संख्यानामन्यासामस्तिसम्भवः॥

एकत्वेन विना द्वित्वादीनामुत्पत्त्यसम्भवाद् द्वित्वादीनामेकत्वम्। योनिः कारणं तेन विना न्यासासम्भवं दर्शयितुः भेदा इति। तत् पूर्वकाः
*

---

पक्षान्तरे तु प्रत्येकम्। तदेतदुच्यते। युगपदधिकरणवचने द्वन्द्व इति। अधिकरणं वर्तिपदार्थः। तस्य युगपद्वचन इत्यर्थः। अत एव आहुश्च

---

द्वन्द्व उपस्थितः, एक एवार्थस्तस्यैकत्वादेकवचनमेव प्राप्नोति, तथा चा- 'धवौ टङ्किता'विति क्रमेण प्रतीतिमङ्गीकृत्य यथासंख्यमित्यस्य प्रवृत्तिः न च क्रमेण द्वयोरर्थयोः प्रतीतौ द्विवचनं भवति यथा वा वाक्ये प्रत्येक

उक्तष्टेति । (कै)

एवं च युगपदधिकरणवचनतायाः सत्त्वेदमनुमानमनुमापकमित्यर्थः ॥

साहचर्यादीति । (कै)

"द्यावा ह क्षामा" इति वाक्ये परस्परसाहचर्यात् "द्यावा चिदस्मै पृथिवी" इत्यत्र साहचर्ये द्विवचनानुपपत्त्या च तथा कल्पनाश्रीयते चेत् किं समासे वक्तव्यमित्यर्थः ॥

द्वन्द्वेनेति । (कै)

---

अभेदमूलकैकत्वपूर्विका इत्यर्थः । तस्मादेकत्वमाद्यं द्वित्वादयस्तु पदार्थान्तर संनिधौ तत् पूर्विका जायन्ते । तदेवाह

एकत्वे बुद्धिसहिते निमित्तं द्वित्वजन्मनि ।
एकत्वाभ्यां समुत्पन्नमेवं वा तत्प्रतीयते ॥

एकत्वद्वयविषयाबुद्धिर्द्वित्वादेः कारणं तत्र द्रव्यस्यैव समवायिकारणत्वात् प्रत्यासत्त्यभावाच्च । समवायिकारणत्वासम्भवेन तस्या निमित्तकारणत्वमेव । समवाय्यसमवायिकारणभिन्नसामान्यसमाख्यया निमित्तमित्युच्यते । यद्वा एकत्वाभ्यामेव द्वित्वमुत्पन्नमेकत्वद्वयबुद्ध्या तु तज्ज्ञानम् एतदेव मीमांसकमतम् । द्वित्वादिस्वरूपे मतभेदमाह

---

वाक्यस्य कार्त्स्न्येनैकत्र सह विवक्षायां तेनैव मड्ड्विति लुकि अङ्गवङ्गकलिङ्गा इति सिध्यतीति लुक्प्रकरणे भाष्य एव स्पष्टम् । यत्त्विह सूत्रे सेयं

---

न्यग्रोधस्येति, अत्र न्यग्रोधार्थप्रतीतिदशायां धवार्थस्याप्रतीतिरेव कारणम्, अस्तु तर्हि युगपदधिकरणवचने द्वन्द्वः । किमिदं युगपदधिकरणवचन इति, अधिकरणं वर्तिपदार्थः, अधिकरणे युगपद्वचनं युगपधि-

द्वन्द्वरूपसमुदायेनोद्भूतावयवभेदः समूहरूपोऽर्थः । शब्दादि-शब्दक्रमोच्चारणेन यद्यपि क्रमेण बुध्यते तथापि द्वन्द्वरूपैकप्राति-पदिकजन्यबोधविषयताया द्वयोः सत्त्वेन द्विवचनाद्युपपत्तौ युगपद्वचने-ऽभाव इति भावः । एवं च खण्डनवादी स्वमते द्विवचनादिकमुप-पाद्ययुगपदधिकरणवचनतावादं दूषयितुं तन्मतमनुवदति

**प्लक्षोऽपि द्व्यर्थः न्यग्रोधोऽपि द्व्यर्थः इति ।** (भा)

इति तव मतमिति शेषः ॥

---

एकत्वसमुदायो वा सापेक्षे वा पृथक् पृथक् ।
द्व्येकयोरिति निर्देशे प्राप्ते रामस्तथा स हि ॥

एकत्वाभ्यां नापूर्वद्वित्वमुत्पाद्यते । किन्तु तयोः समुदाय एव द्वित्वम् । तत्रावयवाश्रयो भिन्नाकारावभासः । संघाश्रयस्त्वेकाकारावभासः । यथा वृक्षसमुदायो वनशब्देनोच्यते । तथैकत्वसमुदायो द्वित्वशब्देन नोच्यते । यथा परस्परापेक्षे एकत्वे एव द्वित्वम् । अन्त्यं दूषयति एकत्वद्वित्वं परे "द्व्येकयोः" इति निर्देशे एकत्वत्रयस्य द्वन्द्वविषयत्वात् बहुवचनापत्तिस्तथा-ङ्गीकारे इत्यर्थः । अस्मादेकत्वाभ्यां जनितमन्यदेव समुदायरूपे द्वित्वम् एवं त्रित्वादयोऽपि इत्येवन्याय्यम् । ननु द्वित्वादेरेकत्वाद् "द्वयोर्द्विवचनम्" इत्याद्यनुपपन्नम् । तत्रोक्तम् ।

---

युगपदधिकरणवचनता दुःखा च दुरुपपादा चेति भाष्य उक्तम् । तस्यायमाशयः । अस्तु सहत्वार्थता तथापि धवौ च खदिरौ चेत्यादिवि-

---

करणवचनं, तत्र द्वन्द्वो भवति, केन पुनर्युगपद् द्वयोर्वचनम्, एकैकेन पदेन, एतदुक्तं भवति, यावतां पदानां द्वन्द्वो यदि तावतामन्योन्यार्थाभिधानं युगपद्भवत्येवं द्वन्द्वो भवतीति, अत्र हि द्विवचनबहुवचनान्यथानुपपत्तिरेव

## यदि तर्हीति । (भा)

यद्येवं स्वीकुरुषे इत्यर्थः । यत्तु लघुविवरणे चः चशब्दघटितो द्वन्द्वरूपः समुदाय इत्यर्थः । "चार्थे" चावयवसमुदायार्थः । एवं न्यग्रोधोऽपि इत्यपि व्याख्येयमिति तन्न । न्यग्रोधोऽपीत्यंशस्य वैयर्थ्यापत्तेः । "यदि तर्हि" इत्यादेरनुत्थानापत्तेश्च । न च प्रागुक्तान्यायमविदुषो युगपद्वचनतावादिनोऽयं पूर्वपक्ष इति वाच्यं तत्समाधानकाले पूर्वोक्तन्यायप्रकटनेनैव समाधानस्योचितत्वेन याभ्यामेवैकोऽर्थस्ताभ्यामेवापरोऽपीत्यादितत्समाधानपरग्रन्थासंगतेः ।

एकोऽपि गुणभेदेन संघो भेदं प्रकल्पयेत् ।
गुणाःसमूहावयवास्तेषां भेदेन स्वात्मनः ॥

एकस्यापि द्वित्वादभेद इति तदुपपत्तिरिति हरिणोक्तम् ॥ ननु "पंक्ति विंशति" इति सूत्रे भाष्ये विंशत्यादिषु प्रकृतिप्रत्यययोस्तदर्थयोश्चाज्ञानमितिप्रश्ने द्विशब्दादय दशदर्थदभिधायिनः शतिप्रत्ययो द्वौदशतौ विंशतिः । विंशत्यादयोदशदर्थे चेत् सामानाधिकरण्याभावेन विंशतिगवमिति समासानापत्तिः । विंशतिर्गाव इत्यस्य चासिद्धिः । दशतोर्द्वित्वाद्विवचनं च प्राप्नोतीत्युक्ते सिद्धान्तिनोक्तम् । समूदाये एते विंशत्यादयो भविष्यन्ति कथं सङ्घ इति वर्त्तते । न च प्राणिसमूहः सङ्घः इति रूढायां

यद्वा ऽसकृतः प्रक्रियादशायामपि प्रथमप्रवृत्तस्यैकवचनस्य त्यागायोगात् । अन्यथा षष्ठीतत्पुरुषादेरपि प्रथमयैव राजा चासौ पुरुषश्चेत्यादिविग्रहा-

प्रमाणं, विग्रहे चापि दर्शनात्, विग्रहे खल्वपि युगपद्वचनता दृश्यते प्रभिन्नयोर्वर्णयोः, द्यावा चिदस्मै पृथिवी नमेते इति, किं पुनः समासे यत्र चान्या चान्या च शक्तिः प्रादुर्भवति, कथं पुनः प्लक्षशब्देन न्यग्रोधाभिधानं

तत् पश्चात्स्थेन युगपदधिकरणवचनतावादिन एवैतत् पूर्वपक्षे सिद्धान्तित्वप्रतीतेः ॥ ननु प्लक्षन्यग्रोधयोरुभयार्थत्वमिति वदतोऽन्यवाचकत्वमसिद्धमत आह

**लौकिकादिति ॥ (कै)**

नन्वस्यान्यार्थत्वाभावेन प्लक्षस्य न्यग्रोधत्वादित्यनुपपन्नमत आह

**प्लक्षशब्दस्येति ॥ (कै)**

भाष्ये प्लक्षशब्दस्य न्यग्रोधार्थः ॥

---

विंशतिरिति न सिध्येत् । सङ्घः समूहः समुदाय इत्यनर्थान्तरं द्वयोर्दशतोः सङ्घो विंशतिरिति । न च विंशको गोसङ्घ इति न स्यात् । विंशतिशब्देनैव गोसङ्घस्योक्तत्वात् । तत्र परिमाणिना डुन्नोपपत्तेरिति वाच्यम् । द्रव्याणां द्रव्यसङ्घस्य दशतां दशत्सङ्घस्य दशतो गवां च पारमार्थिको भेदो नास्ति केवलं बुद्ध्या परिकल्प्यते । बुद्धिव्यवस्थापितार्थनिबन्धनाश्च शब्दा बुद्धिमेवार्थाकारामुपजनयन्तोऽसत्यपि वास्तवे भेदे भेदमुपगमयन्तीत्यदोषात् । दशतोः द्वयाद्विंशतिशब्दाद्द्रव्यसंघे परिमाणिनि डुन्नसिद्धेः वास्तवमभेदमादाय सामानाधिकरण्यं च सिद्धं विंशतिर्गाव इति गवां दशतश्च तात्त्विकभेदाभावाद् गवामपि दशत्सङ्घगुणित्वेन गुणिनां गुणविशेषणे गवां विंशतिरिति षष्ठी । समुदायाभिधाने समुदायस्यैकत्वादेकवचनं

---

पत्तिः । तत्पुरुषे तुल्यार्थैस्त्यादीनां निर्विषयतापत्तिश्च । स्यादेतत् । भूतपूर्वगत्या तन्निर्वाह उत्तरपदार्थप्राधान्यादिवत् । अलुक्समासे तु यथा

---

तेन वा तस्य, साहचर्यादिति, यद्वा तद्वा निमित्तं भवतु, यद्यपि च लोकव्यवहारे केवलस्य प्लक्षशब्दस्य न्यग्रोधाभिधायित्वं न दृष्टं न्यग्रोधशब्दस्य वा प्लक्षाभिधायित्वम्, द्वन्द्वावयवानांत्वनेकार्थाभिधायित्वं न केवलानामित्य-

प्लक्षेऽपि न्यग्रोधशब्दो दृश्यते । (भा)

इत्युक्तम् ॥ तत्र दर्शनमुपपादयति

लोकव्यवहारे प्लक्षेति । (कै)

पूर्वोक्तेन शब्दप्रयोगक्रमेणार्थज्ञानक्रमादुभयः क्रियान्वयः द्विवचनं च न स्यादित्यभिमानः॥ भाष्ये

तुल्यं हि कारणम् इति । (भा)

दर्शनरूपं कारणमपि तुल्यमित्यर्थः। तदाह

---

सिद्धम्। सामानाधिकरण्येऽपि विंशतिर्गाव इत्यादौ विंशतिसंख्यासमुदित द्रव्यसमवायिनी न तु प्रत्येकं समाप्तेति गावोधनमित्यादिवत् तद्गतैकत्वस्य विशेष्ये आरोपेणैकवचनसिद्धिरत एव द्रव्यगतलिङ्गसंख्याननुवृत्तिः। प्राक्शतादेषां स्त्रीलिङ्गत्वमेकवचनान्तत्वं च। शतस्यनपुंसकत्वम्। विंशती विंशतय इत्यादित्वेकशेषे साध्वेवेति कैयटः। तदुक्तं भाष्ये एते विंशत्यादयः समुदाये सन्तो भाववचना भवन्ति। भाववचनाः सन्तो गुणवचना भवन्ति। गुणवचनाः सन्तोऽव्ययिस्था भवन्ति। अन्यैर्गुणवचनेषु कदाचिद् गुणो गुणिविशेषको भवति यथा पटः शुक्ल इति कदाचिद् गुणिना गुणो विशेष्यते पटस्य शुक्ल इतीति भाववचनत्वं संहननक्रियावचनत्वात्।

---

आक्रोश इत्याद्यनुवादसामर्थ्यादेव निमित्तापायन्यायो नाश्रयिष्यते। नैवम्। ज्ञापकस्य सामान्यविषयतायां लाघवेन द्वन्द्वावयवेष्वपि द्विवचनाद्यलाभात्

---

दोषः, नियतविषयाश्चापि शब्दार्था भवन्ति यथा भ्रातृशब्दस्यैकशेष एव स्वसरि वृत्तिः पुत्रशब्दस्य दुहितरि, एतेनैतदपि निरस्तम्, एकेनोक्तत्वात्तस्यार्थस्य परस्य प्रयोगो नोपपद्यत इति, कथं द्वन्द्वावयवादामेव पर-

## तुल्यो लोकेति ॥ (कै)

पुनर्भाष्ये शङ्कते

## नवै लोके इति ॥ (भा)

## किं युक्तमेतदिति। (कै)

"युक्तं पुनरि"त्यत्र काका प्रश्नो व्यङ्ग इति भावः॥

## भिन्नरूपत्वादिति। (कै)

प्लक्षो दृश्यतामित्यादौ सविभक्तिसमासे निर्विभक्तिकमित्यर्थः॥

---

गुणवचना इत्यस्य तत् सादृश्यात् तच्छब्दव्यवहार्या इत्यर्थः। गुणवचनाः सन्त इत्यादिना तत् सादृश्योपपादनात्। अत एव गोविंशत्यादिषु षष्ठीसमास सिद्धिः। गुणशब्दत्वे हि "पूरणगुणेति" निषेधः स्यात्। मुख्यगुणत्वेन कैयटादिकृतो व्यवहारस्त्वसंगत एव। भाष्यविरोधात्। एवं च विंशतिद्रव्यसमुदाय एव विंशतित्वमिति भङ्ग्यान्तरेण प्रकृतिप्रत्ययविभागबोधनायोक्तम्। तथाच द्व्यादयोऽपि तत्तद् द्रव्यसमूहवचना इत्युक्तमेव। असमूह एव चैकत्वम्। "बह्वर्थात्" सूत्रे भाष्येऽपि भेदमात्रं संख्या आह इत्युक्तम्। भेदो वैलक्षण्यमिति कैयटः। एकत्वस्याभेदबोधकत्वात् तथा व्याख्यातम्। तदुक्तं हरिणा।

---

निमित्तापायन्यायस्यानित्यत्वाच्च। न चैवं तद्राजलुगसिद्धिः। तेनैवेति सौत्रमंशं बहुवचने पर इति व्याख्यां च प्रत्याख्याय बहुषु वर्त्तमानस्येत्यर्थस्य

---

स्वरसन्निधानादेषा शक्तिर्वह्निसन्निधाविव दृते द्रवता, नो खलु वह्निविगतौ भवति, यदि तर्हि प्लक्षोऽपि द्व्यर्थो न्यग्रोधोऽपि द्व्यर्थो बहुत्वाद्बहुवचनं प्राप्नोति, नात्र चत्वारोऽर्थाः किं तर्हि याभ्यामेवात्रैकोद्व्यर्थस्ताभ्यामेवाप-

भिन्नशक्तित्वादिति । (कै)

तत्र भिन्नोपस्थितिजनिका शक्तिः। समासे एकोपस्थितिजनिका सा इत्यर्थः ॥

प्लक्षेण न्यग्रोधस्य न्यग्रोधप्रयोग इति । (भा)

प्लक्षशब्देन न्यग्रोधार्थरूपस्योक्तत्वान्न्यग्रोधशब्दप्रयोगो नोपपद्यत इत्यर्थः॥ युगपदभिधानमनुक्तिश्च विरुद्धेत्यत आह

न्यग्रोधशब्देति ॥ (कै)

भारोर्यंचेति । (कै)

---

"भेदाभेदविभागोऽपि लोके संख्यानिबन्धनः"

इति द्वित्वादिभेदव्यवहारकृदेकत्वमभेदव्यवहारकृदिति हेलाराजः। विलक्षणां विलक्षणसमूहरूपत्वं च द्वादय आहुः। असमूहरूपत्वं चैकशब्द आह। एवं च हरिणा कथमेकत्वं समुदायरूपत्वमुक्तमिति चेत् सत्यम्। परमतेन तथाभिधानात्। अत एवोपक्रमे।

"संख्यावान्सत्त्वभूतोऽर्थः सर्व एवाभिधीयते।
सधर्मो व्यतिरिक्तो वा तेषामात्मैव वा तथा" ॥

इत्युक्तम्। सधर्मः संख्यारूपो धर्मः व्यतिरिक्त इति वैशेषिकमते, तेषां द्रव्याश्रिता गुणरूपा संख्या। स्वमतमाह तेषामात्मैवेति तेषां सत्त्वभूता-

---

स्थापयिष्यमाणत्वात्। अत एव जहत्स्वार्थायामपि लुक् सिध्यति। सम्प्रति प्रतीयमानं यद्बहुत्वं तदाश्रयस्य तद्व्याजेनप्रागभिधानात् भूतपूर्वगतेश्च

---

रोऽपि। स्यादेतत्। उभयोरत्र पर्यायत्वे यथा प्लक्षन्यग्रोधौ प्लक्षन्यग्रोधाविति द्विर्वचने प्रतीतिरेवं प्लक्षन्यग्रोधावित्यत्रापि प्राप्नोति, तन्न, युगपदुच्चारात्, तद्यथा द्वयोरक्ष्णोर्युगपद्विस्फारितयोः पुरोवर्तिन्यर्थद्वये युगप-

इतरसंनिधाने एव शक्त्याविर्भावो न तु केवलस्यापीति भावः ॥

## किमिमौ प्लक्षावेवेति (भा)

भाष्यस्य मुख्यौ प्लक्षावित्यर्थः ॥

## तत् कुत इति । (कै)

तस्मान्न्यग्रोधप्रतीतिरेव न स्यादतो न्यग्रोधशब्दप्रयोग आवश्यक इति बोध्यम् ॥ गौणस्याप्यस्य प्लक्षन्यग्रोधावित्यादौ लोकव्यवहारे परस्य प्रसिद्धत्वात् मुख्यसमकक्षतया भाष्ये संदेह उक्त इत्यन्ये ॥

---

र्थानां समूहस्य समूहिभिरत्यन्तभेदाभावादात्मैवेत्युक्तं तथा संख्यात्ववान् । असमूहरूपमेकत्वं समूहरूपं द्वित्वादि । तत्रैव संख्यात्वस्याप्यङ्गीकारेण समूहप्रत्ययापेक्षया विलक्षणः प्रत्यय उपपन्नः । एतेन पदार्थमात्रादनुपाधेर्विलक्षणप्रत्ययानापत्तिरित्यपास्तम् । संख्यात्वस्य समूहरूपत्वस्य चोपाधित्वाद् इति पुञ्जराजादयः । तत्र द्वादावनुद्भूतावयवभेदः संख्या तद्विपरीतस्य तदाश्रयः । यद्वा समूहत्वेन आधारताद्वित्वेन चाधेयता संख्यागतैकत्वस्य तु विशेष्येणारोपः शब्दशक्तिस्वभावात् । दशशब्दस्य दशसम्बन्धि समूहबोधकः । अनुद्भूतावयवभेदः सविशेष्यः समूहत्वेन च विशेष्यता संख्या च सर्वपदार्थ भेदिका । सत्यापि भेदिका गुणक्रियादिभेदिका च ।

---

त्वयापि वाच्यत्वात् । न हि तद्धितवृत्तौ एकशेषवृत्तौ च तद्राजोऽर्थवान् । तद्राजास्तद्राजद्वन्द्वे तु वैकल्पिको लुगिति वक्ष्यते । एवं स्थिते द्वन्द्वैकशेष-

---

देवा प्रतीतिर्गम्यते यथेत्यापि इत्थं, ननु यदा प्लक्षशब्दो न तदा न्यग्रोधशब्दो यदा न्यग्रोधशब्दो न तदा प्लक्षशब्द इति कथमत्र युगपद्व्यापारः, स्मृतिस्मयोर्युगपद्व्यापाराददोषः, पदानि हि श्रवमात्राणि स्वस्वमर्थं स्मार-

प्रतीताविति । (कै)

समुदायिन द्वयोरुपस्थितिरित्येवानुभवो न तु प्रत्येकं व्यर्थतानुभव इत्यर्थः ॥

समासस्य चानेकार्थेति । (कै)

अनेकार्थबोधकत्वादित्यर्थः ॥ उद्भूतावयवभेदसमुदायाभिधानशक्तिरूपयोः पर्य्यायाश्रयप्रयोगवद्भिरपि पदैः क्रमेणैकैव बुद्धिः समूहालम्बनवदिति भावः ॥

---

"क्रिया भेदाय कालस्तु संख्या सर्वस्य भेदिका"

इत्युक्तेः । एकविंशत्यादयोऽपि संख्यान्तराण्येव न संख्यासमूहः संख्याकार्य्यानापत्तेः । स्वाङ्गसमुदायादौ स्वाङ्गादिकार्य्याभावाद् इत्यलम् ॥ एवं चेतरेतरयोगे साहित्यं विशेषणमिति सूत्रभाष्याद्यसम्मतम् । एतेनोपस्थितधवखदिरयोरेव द्वित्वान्वयः । एकक्रियान्वयित्वस्यैकबुद्ध्यवच्छिन्नत्वरूपस्य वा साहित्यस्य पश्चादेव भानेन तत्र वृत्तिकल्पनाया अनौचित्यात् । अन्यतरस्यान्यतरत्वान्वयविवक्षायां पश्य धवखदिरौ छिन्धीति तु न असामर्थ्येन समासाप्राप्तेः । एकरूपेणैकविशेष्यान्वयित्वरूपसामर्थ्यस्यैव द्वन्द्वनिमित्तत्वात् । द्वित्वरूपैकधर्मावच्छिन्नयोरेकत्रान्वयस्यैवौचित्याच्च । अतः सर्वे

---

योरलौकिकवाक्येऽपि द्विवचनादिदुर्लभम् । लौकिके विग्रहे तु दूरापास्तं तदिति दुःखेत्यनेनोक्तम् । एतेन राजा चासौ पुरुषश्चेत्येव विग्रहन्तो

---

यन्ति पश्चादाकाङ्क्षासन्निधियोग्यत्वेषु परामृष्टेषु स्मृतिश्चान्यभिदधति, तस्यामेव स्मृतौ युगपदारोहात्सम्भवत्येव युगपद्व्यापारः, या च सा पदार्थानां स्मृतिः सा क्रमभाविनीति तत्क्रमेणैव यथासंख्यादिव्यवस्था युगप-

## द्विवचनमित्यर्थ इति। (कै)

अत एव पृथिवीत्यस्य प्रगृह्यत्वोपपत्तिरिति भावः॥ द्वितीयबोधस्तु एकत्र द्यामापदेन। अपरत्र द्यावापदेन। अत एव "समश्नेत" इति द्विवचनोपपत्तिः। देवदत्तस्य यज्ञदत्तस्य तिष्ठत इति वत्॥

## परस्परनिरपेक्षा इति। (कै)

न्यग्रोधश्छिद्यतां प्लक्षस्य इत्युक्ते न्यग्रोधस्य छेदनान्वये प्लक्षापेक्षाया अभावमात्रेण परस्परनिरपेक्षत्वमित्यर्थः॥ नन्वेतावतोक्ते "अहरहर्नयमान" इत्यादौ कथं समासप्रसङ्गो वारितोऽत आह

---

मृत्तिकयेत्यादावेवं रीत्या समासो नानभिधानात्। किं च नात्र द्वन्द्वः। एकरूपेण तथान्वयाभावात्। नापि तत्पुरुषस्तत्र तथा सामर्थ्यग्रहणे मानाभावात्। "चार्थे द्वन्द्व" इत्यस्य चार्थे सति यथा विशेष्यान्वयस्तथा विशेष्यान्वये सति द्वन्द्व इत्यर्थः। "समर्थ" सूत्रे तन्त्रेण उभयविधसामर्थ्यग्रहणं परन्तु व्यवस्थितसमुच्चयान्वाचययोस्तु न समासोऽनभिधानात्। "क्षौमे वाससावग्निमादधीयाताम्" इत्यादौ सहितयोरधिकारलाभस्तु यत् कर्त्तव्यं तदनया सह इति वाक्याद् इत्यपास्तम्। तदुक्तसूत्रस्याशब्दत्वाच्च। धवखदिरावित्यादौ प्रत्ययानां प्रकृत्यर्थान्वयित्वेन विभक्त्यर्थानन्वयापत्तेश्च। संनिहितार्थबोधकत्वमिति तु बहुव्रीहिप्रकरणे दूषितम्।

---

मीमांसकाः पराक्ता इति दिक्। इह एकविंशतिर्द्वाविंशतिरित्यादौ राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु संख्येति पूर्वपदप्रकृतिस्वर इष्टस्तस्माद्

---

दभिधानेऽप्युपपद्यते, तदेवं युगपदधिकरणवचने द्वन्द्व इति स्थितम्। इहैकविंशतिर्द्वाविंशतिरिति, यद्ययं द्वन्द्वस्स्याद् एकं च विंशतिश्चेतीतरेतरयोगे द्विवचनबहुवचनप्रसङ्गः, समाहारे च 'स नपुंसक'मिति नपुं-

तच्च येनेति ॥ (कै)

येनाप्ययेनापीति । (कै)

चं विनापीत्यर्थः॥ कश्चित्तु "विनापि चेन" इत्येव पाठः ॥ ननु समुच्चयेऽसामर्थ्यात् कथं समासप्राप्तिरत आह

सामर्थ्यं हीति । (कै)

इतः सर्वो मृत्तिकया इत्यादौ समासापत्तेः। किं च क्रियाद्वारके सामर्थ्ये दध्योदनादाविव सामर्थ्यस्य द्वारं भूतक्रियायाः

---

धवे द्वित्वानन्वयापत्तेश्च। न चानुशासनिकसन्निधानग्रहणेन यदुत्तरं यः प्रत्ययोऽनुशिष्टः स तद् घटकार्थतदर्थैतदन्यतरगतस्वार्थबोधक इति धवेऽप्यन्वयो योग्यतादेर्नियामकत्वाच्च। अर्धपिप्पलीं राजपुरुषं पश्य इत्यादौ न दोष इति वाच्यम्। व्युत्पत्त्यन्तरकल्पने गौरवाद् एकरूपेणैकक्रियान्वयित्वसमनियतसमस्यमानपदार्थसमूहभानानुरोधेन वृत्तेरावश्यकत्वाच्च। अत एवात्र विग्रहवाक्ये इव चादिप्रयोगो न इत्युक्तम्। "चार्थे द्वन्द्व" इति तु "अनेकमन्यपदार्थे" इति वत् शक्तिग्राहकमेव। एते चार्थे इत्यस्यैकक्रियान्वयित्वरूपसाहित्ये सति द्वन्द्व इत्यर्थ इत्यपास्तम्। एकक्रियान्वयित्वे च शब्दशक्तेरभावाच्च। "अग्निषोमावि" त्यादौ समुदितस्य देवतात्वादत एव संगच्छते। न च चैत्रो मैत्रश्च गच्छत इत्यादावा-

---

द्वन्द्व एवायम्। स च समाहारे। नेतरेतरयोगे। अनभिधानात्। पुंस्त्वन्तु लोकात्। यदा त्वेकाधिका विंशतिरिति शाकपार्थिवादिसमासः क्रियते

---

सकृप्रसङ्गः, अत एव एकाधिका विंशतिरेकविंशतिरिति शाकपार्थिवादित्वात्समासः क्रियते, नैवं शक्यं 'राजन्यबहुवचनद्वन्द्वेऽन्धकवृष्णिषु संख्ये'ति

पृथक् प्रयोगनिष्पत्तिः। किं चैवं सति सूत्रस्थचार्थपदविग्रहमुक्त्वा पुनस्तदर्थप्रश्ने समुच्चयोल्लेखासंगतिरेव। गर्भार्थेन सौत्रेण तदप्रतीतेः। किं च "गामश्वं पुरुषं पशुम्" इत्यत्र सर्वत्र नैरपेक्षे समुच्चयोऽपि कथं समुच्चये एकत्र सापेक्षत्वात्॥ भाष्ये

प्लक्षश्च इत्युक्ते इति। (कै)

न्यग्रोधो दृश्यतामित्युपक्रमोक्तौ तु न प्लक्षश्च इति गम्यते इति भावः॥

---

ख्यातोपात्तसंख्यान्वयाय चार्थसमूहस्य विशेष्यत्वाय च चस्य तद्वाचकत्वं वाच्यम्। एवं च चैत्रस्य मैत्रस्य च समूह इत्यत्रेव षष्ठी प्राप्तिरितिवाच्यम्। तदात्मकत्वेन समूहप्रतीत्याभेदनिबन्धनषष्ठ्यप्राप्तेः। सच समूहः क्वचिद् वास्तवः क्वचिद् बौद्ध इत्यन्यत्। पुष्पदन्तादिपदेऽपि समूहः शक्योऽत एव द्वित्वान्वयः पुष्पदन्ताविव्यस्य प्रकृतिस्तान्ताऽदन्ता वा। एकयोक्त्या पुष्पवन्तौ दिवाकरनिशाकरौ इत्यमरे द्वन्द्वेन पर्य्यायप्रदर्शनात् पुष्पवन्ता-वित्यत्र द्विवचनोच्चारणाघेकयोक्त्या इत्युक्तेश्च। समूहस्य शक्यतायाः स्पष्टमेव लाभात्। पुष्पवन्तपदं चन्द्रसूर्य्यसमूहे शक्तमित्याकारः शक्ति-ग्रहोऽतो न तत् एकतरमात्रबोधो नापि शक्त्यानन्त्यम्। यत्तु भेदस्त्वार्थ इति तन्न। तद्बोधाननुभवात्। चेन क्वापि तदर्थाप्रतीतेश्च। चार्थः साहित्यं

---

तदा समासान्तोदात्तत्वमपीष्यत इति पाश्चमिकभाष्ये बहुव्रीहौसंख्येये डजित्यत्र स्थितम्॥

---

पूर्वपदप्रकृतिस्वरो न स्यात्, तस्माद् द्वन्द्व एवायं स च समाहारे नेत-रेतरयोगे, अनभिधानात्, नपुंसकत्वन्तु लिङ्गमशिष्यं लोकाश्रयत्वाल्लिङ्ग-स्येति न भवति॥

## न्यग्रोधस्य इत्युक्ते इति । (कै)

प्लक्षो दृश्यतामित्युपक्रम्य न्यग्रोधस्य इत्युक्ते इत्यर्थः॥ अन्वाचये चलोपस्य इत्युक्ते इति पाठः॥

## सापेक्षोऽयमिति (भा)

प्रधानीभूतक्रिययेत्यर्थः॥ तदाह

## यदात्विति ॥ (कै)

इतरस्य इत्यस्य तदा इत्यादिभिन्नकचतयाभिन्नक्रियान्वयितया तत्रैव सामर्थ्याभावे युक्त्यन्तरमाह

## अनेकस्य पदस्येति । (कै)

---

परं भिन्नानामित्यन्यत्। शिवरामयोरभेद इत्यादौ तत्तदुपाधिकृतभेदवतोरेवोपाधिनिर्मोकेऽभेदप्रतिपादनान्न विरोधः। समूहस्य समूहिभ्यो भिन्नाभिन्न इति निरूपितम्। सहिताभ्यां कृतमित्यादेः समूहबुद्धिविषयाभ्यां कृतमित्यादिक्रमेणार्थः। धवखदिरौ छिन्धि इत्यादौ क्रियान्वय एव समूहस्य। क्रियोत्पत्तिस्तु समूहेऽसम्भवात् प्रत्येकमेव। एवं पित्रोः श्राद्धं कुर्य्यादित्यादावपि। इदमेवाभिप्रेत्यतुल्यवदेकक्रियान्वयित्वं साहित्यमिति प्राञ्चः। यथा तुल्ययोरेककालमेकधर्मसम्बन्धानिमित्तवं तुल्यत्वं तद्विना तुल्यत्वासंभवात्। तथैककालमेकक्रियान्वयित्वनिमितं साहित्यं समूह इत्यक्षरार्थः। समुच्चयान्वाचययोस्तु न समासः। ईश्वरं गुरं च भजस्व इत्यादौ समुच्चये। एकस्यान्यसहितस्यान्वयित्वनिमित्तसाहित्येऽप्येकस्य केवलस्यैवैकधर्मावच्छिन्नेऽन्वयेन चार्थेऽनेकसुबन्तस्य वृत्त्यभावात्। एकधर्मावच्छिन्ने इत्युक्तेर्वस्तुतो भजनस्य भिन्नत्वेऽपि न दोषः। अनेकस्य

इदं समुच्चयेऽपि बोध्यम् ॥ एवं च समुच्चयेऽप्यनेकस्य चार्थं वृत्तित्वाभावात् समासपरिहार इति प्रागुक्तमसंगतमेवेति बोध्यम् । एवं च समुच्चयेऽपि ॥

## परस्परापेक्षाणामिति । (कै)

एतेन व्यपेक्षा सामर्थ्यवादे द्वन्द्वेऽनुपपत्तिरित्यपास्तम् । परस्परान्वयित्ववत् इतरान्वये परस्परापेक्षत्वस्यापि व्यपेक्षात्वात् । सा च प्रकृतेऽस्त्येवेति भावः ॥ एतद्विपर्ययस्य समुच्चयादौ दर्शित एव । "परस्परापेक्षाणाम्" इत्यनेन समुच्चयाद् वैलक्षण्यमुक्तम् । अत एव भाष्ये "प्लक्षस्य इत्युक्ते गम्यते एतन्न्यग्रोधस्य" इति समुच्चयस्याकारः प्रदर्शितस्तेनह्येकः परसाहित्यमपेक्षतेऽपर इतरसाहित्यमित्युक्तम् ।

---

केवलस्य क्रियान्वयोत्तरमपरस्यान्यसहितस्यावृत्त्या तदन्वयः । स च विशेष्यतया विशेषणतया वा । आद्ये – देवः पचति हसति चेत्यादौ । अन्यसूक्तं समुच्चये । चैत्रो मैत्रस्य पचतीत्यादौ नित्यमेकवचनान्त्याख्यातप्रयोग एव । परहितस्य केवलस्यैवान्वयात् । च सहितेनाप्यनुद्भूतावयवभेदसमूहस्यैव प्रतीतेः । किं चात्र समासे एकपदोपस्थाप्य समूहस्यैवाकालमेवेतरान्वयस्य पुष्पवन्तादौ क्लृप्तत्वेन समूहयत्वस्यैव भङ्गापत्तिः । अत एव भिक्षामट गांचानय इत्यन्वाचयेऽपि न समासः । अत्र चकारसमभिव्याहृते आनुषङ्गिकत्वमितरसाहित्यं च भासते । आनुषङ्गिकत्वं चान्यनिष्पादकयत्ननिष्पाद्यत्वम् एवं च तद्व्याप्यत्वं फलति । एवं चानुषङ्गिकं भिक्षाटनसहितं गवानयनमिति बोधः । प्रायेणान्वाचयः चस्य क्रियान्वये भवति । यत्र तु क्रियान्वय्यपि द्वयं हसन्ति च पचन्ति च इत्यादौ तत्र परस्परसाहित्याव-गमान्नानुषङ्गिकत्वप्रतीतिः । एवं समुच्चये च समभिव्याहृतस्य किंचिद-

अपि चानेन समुच्चये साहित्यविशेषणमित्युक्तम्। न्यग्रोधसहितः प्लक्ष इति तदर्थः। अतोऽपि तत्र न समासः। चार्थप्राधान्ये एवैतत् समासप्रवृत्तेः। इतरेतरयोगस्य प्लक्षस्य न्यग्रोधस्य इत्युक्ते गम्यत एतत्। प्लक्षोऽपि न्यग्रोधसहायो न्यग्रोधोऽपि प्लक्षसहायः इति आकारः। अनेनोद्भूतावयवभेदसाहित्यस्य विशेषता इति दर्शितम्। एवं च समुच्चयान्वयाचययश्चकारो द्योतकः। अन्तयोस्तु वाचकः। तत्र तदर्थस्य विशेषत्वादिति बोध्यम्। तस्मात् "गामश्वम्" इत्यादौ न समुच्चयः। विनिगमनाविरहेण सर्व्वेषां परस्परसाहित्यावगतेः। अहरहः शब्देन तथैव प्रतीतेः। चार्थसाहित्यावगतिसद्भावेन समास प्राप्तिशंका। उत्तरं तु चशब्देन साहित्यं वाक्ये यत्र प्राधान्येन

---

प्रधान्यं प्रतीयते। त एव समकक्षयोरेकस्य समुच्चयत्वे दुःखं दृश्यते। इतरेतरयोगेन मिलितस्यैकधर्मावच्छिन्नेतरान्वयः। धवखदिरौ छिन्धि इत्यादौ तथैवानुभवात्। मेलनं च समूहरूपता। अत एव तद्विग्रहवाक्ये चद्वयप्रयोगः तेन ह्यन्योऽन्यस्मिन् अन्योऽन्यसाहित्यं गम्यते। तेन समूहरूपता सिद्धिः। अत एव चैत्रस्य मैत्रस्य पचत इत्यादौ नित्यं द्विवचनाद्यन्ताख्यातप्रयोग एव। एकैकत्वेन द्वित्वादेर्विरोधेऽपि समूहवृद्धिविषयगतनानेकत्वैरविरोधात्। एकधर्मावच्छिन्नेत्युक्तेः। अजां ग्रामं नयति इत्यादौ न समासः। क्वचिदेकचकारप्रयोगेऽपि प्रकारान्तरग्रहीततात्पर्यवशात् परस्परसाहित्यावगतिर्भवत्येव। यथा सांकाश्यकानां पाटलिपुत्रकाणां च पाटलिपुत्रका अभिरूपतमा इत्यादौ। स्पष्टं चेदं "द्विवचनविभज्योपपद" इत्यत्र भाष्यकैयटयोः। एवं क्वचिच्चकाराभावेऽपि तत् प्रतीतिर्यथा "अहरहर्नयमानो गामश्वं पुरुषं पशुम्" इत्यादौ अहरह-

भासते वृत्तौ चाभावे च समासे तत्र समासशास्त्रप्रवृत्ति चशब्दार्थे वर्त्तमानानेकसुबन्तसत्त्वात्। "गामश्वम्" इत्यादौ तु अहरहः-शब्देन साहित्यं गम्यते न तु चेनेति भाष्यार्थः। समुच्चयेऽपि शाब्द-बोधे एकत्रैव साहित्यं बुध्यते। एकोत्तरं च प्रयोगात्। इत्यनेक-सुबन्तस्य प्रधानभूतचार्थे वृत्त्यभावात् समासाभाव इत्ययमर्थश्च भगवता समुच्चयान्वयाचयस्वरूपनिरूपणेनैव तस्य प्रधानभूतचार्थे वृत्त्या दर्शितम्। अत एव सन्नियोगशिष्टपरिभाषापि न्यायसिद्धेति भाष्यतात्पर्य्यम् ॥ "इन्द्रस्त्वष्टा वरुणम्" इत्यादावपि परस्परसाहित्ये-नैव लोकपालकत्वं बुध्यते इति बोध्यम् ॥

## तथापीति । (कै)

परत्वनुभूतावयवभेदमिति भावः ॥ भाष्ये

---

पदसमभिव्याहारात् तत् प्रतीतिः। क्वचित्तु चद्वयसत्त्वेऽपि न तत् प्रतीतिः। वाक्यालङ्कारमात्रार्थत्वात् तयोः यथा "यदग्नये च प्रजापतये च" इत्यादौ। मन्त्रलिङ्गेन तत्र प्रत्येकं देवतात्वस्यैव प्रतीतेः। समाहारेऽनुद्भू-तावयवभेदः समूहो विशेषोऽत एव तत्रैकं वचनं सिद्धम्। द्वन्द्वस्य प्राण्यौ-त्यादिप्रकरणं तु नियमार्थं इति भाष्ये स्पष्टम्। पाणिपादं वादय इत्यादौ वादनकर्मत्वन्तु वस्तुतस्तस्य पाणिपादाभिन्नत्वाद् बोध्यम्। यत्तु अत्र समाहारो न भासते द्विवचनादित्यनुशासनेनासाधुत्वबोधनान्नेति तन्न। सर्वत्र तद्बोधकानुशासनाभावात्। एकवचनविधायकाभावात्। समा-हारद्वन्द्वगर्भेतरेतरयोगे द्विवचनानापत्तेश्च इत्यलम्। स्यादेतद्—"अह-रहर्नयमानो गामश्वं पुरुषं पशुम्" इत्यादौ "इन्द्रो वरुणस्त्वष्टादित्य एते लोकपाला" इत्यादौ च चार्थसंप्रत्ययात् द्वन्द्वः प्राप्नोति। चार्थे चशब्दस्य

**समाहारेति।** (भा)

पृथग्वाक्यम्। अत्र ग्रन्थोऽपि न्यग्रोधसमाय इत्याद्यनुकथ्यते। अनुद्भूतावयवभेदसाहित्यावगतिरितिविशेषोऽनुद्भूतावयवभेदमेव साहित्यं समाहारशब्देनोच्यते॥ तदाह

**क्रियते इति।** (भा)

द्वन्द्व इति शेषः॥ सूत्रारम्भे प्रयोजनान्तरमाह

**तत्रायमपीति॥** (भा)

**द्वन्द्वैकवद्भावः।** (भा)

इति ग्रन्थेन पक्षान्तरगौरवं प्रदर्श्यत इत्याह

---

द्वन्द्वश्च इत्युभयोरेव साधुतायाः शास्त्रेण बोधनात्। आद्ये "अहरहः" इत्यनेन अन्त्ये "लोकपालाः" इत्यनेनेतरेतरयोगप्रतीतेः। ननु युगपद-धिकरणवचने द्वन्द्व इति न्यासेन न दोषः। अधिकरणं वर्त्तिपदार्थौ। तयोर्युगपत् पदद्वयेनाभिधाने द्वन्द्व इति तदर्थः। एवं च रामकृष्णावित्यादौ रामपदेन रामकृष्णयोः कृष्णपदेन च तयोरभिधानाद् भवति द्वन्द्वः। गामश्वमित्यादौ तु गवादयो भिन्नैः शब्दैरेकैकरूपा एव पृथक् प्रत्याय्यन्ते इति न दोषः। विरूपाणामित्येकशेषस्तु नात्र द्वन्द्वविधिसामर्थ्येन समा-नार्थानामिति सामर्थ्येन च युगपदधिकरणतां विनापि समानार्थताया-मेवैकशेषात्। पट्वी मृद्व्यावित्यत्र पुंवत्त्वमपि न वृत्तेः प्रागपि यत्र सामानाधिकरण्यं तत्रैव तत् प्रवृत्तेः सहभूतयोरेव युगपदर्थद्वयबोध-सामर्थ्यमिति नान्यतरवैयर्थ्यं द्वन्द्वविषयं चैतद् अतः केवलरामपदाद्

युगपदिति ॥ (कै)

न च विषयेति। (कै)

नियमार्थमित्यर्थः॥ वस्तुतो "द्वन्द्वैकवद्" इत्यस्य सर्व्वो द्वन्द्वो विषयैकवदितिवचनं न कार्य्यमित्येवार्थ इति न दोषः॥

न कश्चिद्दोष इति। (कै)

एकादीनां नित्यबहुवचनान्तत्वादिति भावः॥ न केवलाप्रकृतिरिति समयाद्वचनमिष्यत एव अत आह

द्विवचनमिति। (कै)

उभयोः संख्यापरत्वे द्विवचनं संख्येयपरत्वे बहुवचनप्राप्नोति इष्यते त्वेकवचनमिति भावः॥

---

रामं कृष्णं च इति वाक्यघटकात् चेनोभयबोधः। वेदेतु क्वचिद् वाक्येऽपि सा "द्यावा ह क्षामा" इत्यादौ। एकैकेनार्थद्वयाभिधानेऽपि "तिष्यपुनर्वस्वोः" इति सूत्रस्य बहुवचनस्य इत्यनेन "सर्वो द्वन्द्वो विभाषैकवद् भवति" इति ज्ञापनात्। पक्षे धवखदिरमित्यादौ सिद्धिरिति चेन्न। "सेयं युगपदधिकरणवचनता दुःखा दुरुपपादा च" इत्यादिना भाष्ये एव तस्या दूषितत्वात्। तत्र दुःखत्वं प्रतीतावनुपारोहात्। तथाहि वृद्धव्यवहारात् हि शब्दार्थनिर्णयः। न च प्लक्षशब्दस्य न्यग्रोधाभिधायित्वं लोके दृश्यते। न च प्लक्षशब्दस्य लक्षणा न्यग्रोधशब्देनैव तल्लाभात्। द्विवचनाद्यन्तप्रयोगस्यान्यथासिद्धेश्च समूहस्यावयवापेक्षद्वित्वादिमतः समुदायात् प्रतीतेः। "दुरुपपादा" इत्यस्य "दुष्टं निःसारम् उपपादनं

## षष्ठीसमास इति । (कै)

सहस्राणां शतमिति विग्रहः। "संख्याया अल्पीयस" इति शतस्य पूर्वनिपातः। "तदस्मिन् अधिकम्" इति सूत्रे ध्वनित-मेतत्॥ भाष्ये

## अस्तु तर्हि द्वन्द्व (भा)

इत्यस्य सोऽपीत्यर्थः॥ "पूर्वसिद्धं त्विति" वार्त्तिकोक्तसद्भावकल्पने मानाभावात् ॥

## तिष्यपुनर्वस्वोरिति । (कै)

एकविंशत्यादावितरेतरयोगस्तु न। अनभिधानादिति बोध्यम्॥ द्वन्द्वतत्पुरुषाभ्यां स्वरभेदस्त्विष्यत एवेति केचित्। परे तु तत्पुरुषत्वे स्वरो न सिध्यति इत्याशङ्क्य

---

यस्याः सा निष्प्रमाणा" इत्यर्थः। न च "द्यावा ह क्षामा" इत्यादौ व्यासे दर्शनात् समासेऽपि सेति वाच्यम्। तस्य छान्दसत्वेन तत्र "सुपां सुप" इत्येव सिद्धिः। न च समासात् द्विवचनबहुवचनोत्पत्त्यर्थं तदावश्यकता पूर्वमुपपादितत्वात्। समुच्चयान्वाचययोः समासाभावार्थमपि न सा। उक्तरीत्याऽसामर्थ्येनैव तत्र समासवारणात्। अङ्गस्य वङ्गस्य कलिङ्ग-स्येति अङ्गवङ्गकलिङ्गा इत्यादौ "तद्राजस्य बहुषु तेनैवास्त्रियाम्" इति लुक् तु तद्राजप्रत्ययार्थसमूहगतबहुत्वविवक्षायां तद्राजप्रत्ययस्य लुग् इत्य-र्थात् तं विनापि सिध्यतीति चेत् सत्यम्। चेन द्योतस्यार्थस्याभावात् समासाप्राप्तेरिति भाष्ये एव समाधानात्। यत्र विग्रहे चेन बोध्यं साहित्यं

## अस्तु तर्हि द्वन्द्व इति (भा)

वाक्योक्तिः । स्वरभेदो नेष्टः । उपक्रमे "कोऽयं समास द्वन्द्व" इति सिद्धान्त्युत्तरच द्वन्द्व एवेत्येवार्थः ॥

## सिद्धन्त्विति । (भा)

सिद्धान्त्येकदेश्युक्तिरित्याहुः ॥

---

तत्रैव द्वन्द्वो न चात्र तथा अहरहरादिपदसमभिव्यवहारेण तस्य तत्र बोधेऽपि चकाराबोध्यत्वात् उक्तार्थत्वाच्च तत्र चकाराप्रयोग इति दिक् ।

"उपदशं दन्तोष्ठम्" दशसमीपोदन्तोष्ठ समाहार इति बोधः । समाहारे दशसमीपत्वं च स्ववृत्तिदशत्वसंख्या समीपसंख्यावदवयवकत्वेन । अत्र बहुव्रीहेर्नानुप्रयोगस्तस्य नित्यबहुवचनान्तत्वेन दन्तोष्ठमित्यनेन अन्वयायोग्यत्वात् ॥

# उपसर्जनम्पूर्वम् । २ । २ । ३० ॥

विपर्ययप्रयोग इति । (कै)

पदयोर्विपर्ययेण प्रयोग इत्यर्थः ॥ सूत्रप्रत्याख्याने उत्तर-ग्रन्थानुत्थानमाशङ्क्याह

इदानीमिति ॥ (कै)

न भिद्यते इति । (कै)

वाक्यापेक्षयाऽप्रधानत्वरूपभेदवान्न भवतीत्यर्थः ॥ तदाह

राजापेक्षया न व्यतिरिच्यते इति । (कै)

व्यतिरेकोऽत्र भेदमूलकसम्बन्धः । एवं च राजनिरूपितभेद-निबन्धवान्न भवतीत्यर्थः । विशेषणनिष्ठ एव सम्बन्ध इति भावः ॥ परे तु षष्ठी सुबन्तेन समस्यते इत्युक्ते प्रत्यासत्त्या येन सुबन्तेन समासस्तन्निरूपितसम्बन्धार्थकषष्ठ्येव गृह्यते इति तदेव षष्ठ्यन्तं

---

“उपसर्जनं पूर्वम्” ॥ ‘अनियमो हि स्यादिति’ । यद्यपि विपरीत-प्रयोगो लोके न दृष्टः परपुरुषापराधात्तु वाक्यवत्सम्भाव्येतेत्यर्थः इह राज्ञः

प्रथमानिर्दिष्टं न प्रधानमिति। एवं चार्थात् "पूरणगुणेति" सूत्रस्थसमानाधिकरणेनेत्यपि प्रत्याख्यातप्रायमेव समानाधिकरणेन षष्ठीसमासप्राप्तत्वे "षष्ठी" (२। २। ८) सूत्रे प्रत्यासत्त्याश्रयणाद्

**अर्थाभेदाद्** (भा)

इति भाष्यस्यायमर्थः। अर्थस्य पुरुषस्य राज्ञाभेदाभावात् राजनिरूपितभेदनिबन्धनसम्बन्धवत्त्वाभावात् किन्तु धनादिनिरूपितसम्बन्धत्वादिति सम्बन्धस्य विशेषणनिष्ठत्वादित्याहुः॥ यत्तु "अर्थाभेदाद्" इति अप्रधानपदोपसर्जनपदयोरिति शेष इत्याहुस्तन्न। "प्रथमानिर्दिष्टम्" (१। २। ४३) इति सूत्रस्थभाष्यविरोधात्। वाक्यसम्बन्धिनिरूपिताप्राधान्यस्यात्रापि सत्त्वाच्च। पूर्वकार्थ्याविधा तयोः पर्य्यायतया अप्रकृतस्वीकारत्वाच्च॥

---

पुरुषस्य पुत्रो राजपुरुषपुत्र इति षष्ठीसमासप्राप्ते द्वयोरपि प्रथमानिर्दिष्टत्वेऽप्युपसर्जनसंज्ञा ऽन्वर्थत्वादप्रधानस्यैव भवति, पुरुषस्यात्र राजापेक्षया प्रधानमिति पूर्वनिपातनियमः।

# अल्पाच् तरम् । २ । २ । ३४ ॥

तरपः श्रवणाविचारानुपपत्तिमाशङ्क्याह

किमिति ॥ (कै)

तत्रेतरनिर्देशे प्लक्षन्यग्रोधावित्यादिसिध्यर्थं यत् किं चिदपेक्षयाल्पाच्त्वमतिशयस्तूपात्तापेक्षया । अतस्तेनाल्पत्वमेवोपात्तापेक्षयेति बोध्यम् । अत एव शङ्खदुन्दुभिवीणानामित्यस्य सिद्धिस्तत्पक्षे तत्त्वात् "द्वयोः" इत्यस्याविवक्षावद् अतिशयस्याप्यविवक्षौचित्यादित्याहुः ॥ भाष्ये

---

अल्पाच्तरम् ॥ अत एव निपातनात्स्वार्थे तरप् कुत्वघुत्वयोरभावश्च । द्वन्द्वे अल्पाच् पूर्वं स्यात् । धवखदिरौ । कथं तर्हि प्रासादे धनपतिरामकेशवानामिति । धनपतेश्च रामकेशवयोश्चेति विग्रहः । पूर्वाभ्यामल्पा-

---

"अल्पाच्तरम्" ॥ अत एव निपातनात्स्वार्थे तरप् कुत्वाभावश्च, यदि तु प्रकर्षे तरप् चेत्तदा धवखदिरपलाशा इत्यादौ बहुषु सन्निहितेषु द्विवचनोपपदत्वाभावादस्याप्रवृत्तावनियमः स्यात्, द्वयोरेव तु स्यात् प्लक्षन्यग्रोधाविति । 'शङ्खदुन्दुभिवीणा इति' तूर्याङ्गानामित्येकवद्भावो न भवति, तूर्यशिल्पोपजीविनामेव तत्र ग्रहणात्, नियतद्रव्यविवक्षायां जातिपरत्वाभावा-'ज्जातिरप्राणिनामि"त्येतदपि न भवति, शङ्खवीणाभ्यां

दुन्दुभिशब्दस्यापीति । (भा)

न चैतत् प्रवृत्त्यभावेऽपि द्वन्द्वेऽपीत्यस्य प्रवृत्त्या दुन्दुभिशब्दस्यैव पूर्वनिपातः प्राप्नोतीत्यपिरसङ्गत इति वाच्यम् । पूर्वद्वन्द्वे ततो-वीणाशब्देन द्वन्द्वे तदवेतस्य पूर्वनिपातप्राप्त्या तदुक्तेः । तद्ध्वन-यन्नाह

कदाचिदिति ॥ (कै)

"अथातन्त्रम्" इति भाष्याशयमाह

अतन्त्रे इति ॥ (कै)

अल्पाच्त्वेति । (कै)

परत्वादस्यैव प्रवृत्तेरिति भावः ॥

---

घृतरं विप्रतिषेधेन ॥ वागग्नी वागिन्द्रौ । एवमग्रेऽपि । कथं तर्हि अधीतिबोधाचरणप्रचारणैरिति । अधीत्या च बोधादिभिश्चेति विग्रहे भविष्यति । यद्वा । अनित्यमिदं प्रकरणम् । लक्षणहेत्वोः क्रियायाः,

---

दुन्दुभेर्द्वन्द्वे दुन्दुभिशङ्खवीणा इत्यपि भवति, एवं मृदङ्गस्य शङ्खपणवौ च मृदङ्गशङ्खपणवाः, धनपतिश्च रामकेशवौ च प्रासादो धनपतिरामकेशवा-नामित्यादि भवति, तथा होता च पोता च नेष्टा चोद्गाता चेति बहूनां युगपद् द्वन्द्वे तृतीयस्योत्तरपदमनन्तरमिति तस्यैवानङ् भवति नेतरयोः होतृपोतृनेष्टोद्गातारः, द्वयोर्द्वयोर्द्वन्द्वे त्रयाणामप्यानङ् भवति होतापोता-नेष्टोद्गातार इति, एवमन्यत्रापि द्वन्द्वक्रियायामानुपूर्व्यविशेषाद्रूपविशेषो

**मृदङ्गशङ्खतूणवा इति ।** (भा)

पचद्वयेऽपि भाष्योक्तरीत्यैव साध्यम् । अतश्चपचेत्वारोपितत्वा-द्वयैव प्रवृत्तेरिति भावः ॥ मृदङ्गशङ्खतूणवा इत्यतिशये तरप् परापरो दृष्टार्थः । "स्वरिताद्" इति सूत्रे 'उदात्तानाम्' इति बहुवचननिर्देशवत् ॥ तच्चेतरनिर्देशे बहुषु नियमाय भाष्ये उक्तम्

**अल्पाजिति वक्ष्यामीति ।** (भा)

यतः कुतश्चित् सर्वेषामप्यल्पाच्त्वात् सामर्थ्यादतिशयप्रतीतिरेवं च द्वयोरित्यंशाभावात् शङ्खदुन्दुभीत्यादिसिद्धिः । एवं च द्वयोरित्यं-शत्यागपूर्वकमतिशयो विवचित इति तात्पर्य्यम् । मृदङ्गेत्यादौ त्रयाणां समासे तु शङ्खस्यैव पूर्वनिपात इति बोध्यमिति पाठः ॥

**नियतद्रव्येति ।** (कै)

जातिप्राधान्ये हि तदाश्रयणं व्यक्तीनां विनिगमनविरहेण नान्तरीयकत्वाद्बोध इति भावः ॥ तदाह

---

समुद्राभ्राद्घ इत्यादिनिर्देशात् । तेन ससौष्ठवौदार्यविशेषशालिनीम् । लोचनाधरकृताद्धृततरागेत्यादि सिद्धम् । ऋतुनक्षत्राणां समानाक्षरा-णामानुपूर्व्येण निपातो वक्तव्यः ॥ हेमन्तशिशिरवसन्ताः । कृत्तिकारो-

---

वेदितव्यः । पूर्वाभ्यामल्पाच्तरमित्येतत्पूर्वानुसारेण गम्यमानत्वाद्दृश्यो न पठितं, द्वन्द्वे घि' त्यस्यावकाशः पटुगुप्तौ, 'अल्पाच्तरमि' त्यस्यावकाशः प्लक्षन्यग्रोधौ, वाग्मी इत्यत्रोभयप्राप्तौ अल्पाच्तरमित्येतद्भवति । अजाद्य-दन्तमित्यस्यावकाश उष्ट्रखरम्, अल्पाच्तरमित्यस्य स एव, वाग्निश्चा-वित्यत्रोभयप्राप्तावल्पाच्तरमित्येतद्भवति । 'ऋतुनक्षत्राणामिति' । ऋतु-

लक्ष्यणेति । (कै)

एतदुदाहरणावच्छिन्नघिलजात्यवच्छिन्ने क्वचित् प्रवृत्त्याचरितार्थत्वात् । एकस्य युगपद्बध्यबध्यमद्भावासम्भवाच्च । अन्तस्यावधित्वेऽपि एवास्य व्यवधानाच्च पुनस्तत्रैवाप्रवृत्तेरिति भावः ॥

व्यक्तिपक्ष इति । (कै)

एतदुदाहरणावच्छिन्न तत् तद् व्यक्तिविषयलक्षणभेदेन तेषामचारितार्थात् पुनः पुनः प्रवृत्तिरस्यैवेति भावः । वस्तुतो वाचनिकमेवेदम् । जातिपक्षेऽप्यवृत्तिं विनैव तज्जात्याश्रयसर्वविषयकत्वसम्भवात् ॥ "उदगयनस्थौ" इत्यस्यानुपयोगादाह

---

हिरण्यौ । समाक्षराणां किम् । ग्रीष्मवसन्तौ । लघ्वक्षरं पूर्वम् ॥ कुशकाशम् । अभ्यर्हितञ्च । मातापितरौ । वासुदेवार्जुनाभ्यां वृष्णिति निर्देशेनेदं ज्ञाप्यत इति चतुर्थं भाष्यम् । वर्णानामानुपूर्व्येण ॥ ब्राह्मणक्षत्रिय-

---

णामानुपूर्व्यं प्रादुर्भावकृतम्, नक्षत्राणामुदयकृतम् । मातापितराविति । आचार्यः श्रेष्ठो गुरूणां, मातेत्येक इति स्मृतिः । पितुर्दशगुणं माता गौरवेणातिरिच्यत इति च । 'श्रद्धामेधे इति' । सत्यां श्रद्धायामर्थक्रियाकारिणी मेधेत्यभ्यर्हितत्वं श्रद्धायाः । 'दीक्षातपसी इति' । दीक्षार्थं तप इत्यभ्यर्हितत्वं दीक्षायाः, लघ्वक्षरादपि तपसो विप्रतिषेधादभ्यर्हितमित्येतदेव भवति । समानाक्षराणामित्यत्र नास्तीति' । तेन ऋतुनक्षत्राणामित्यत्रैव वर्णग्रहणं न कृतमिति भावः । वर्णानामुत्पत्तिकृत-

लौकिकेति ॥ (कै)

प्रदर्शनेति। (कै)

"ब्राह्मणोऽस्य मुखमासीद्" (ऋ—म१०. सू९०. ऋ१२.) इत्यादिवेददर्शनात् ॥ अल्पीयस इत्युचितमत आह

अर्थस्येति ॥ (कै)

एतच्चेति। (कै)

अत एव तत्पुरुषेऽप्येकादश इत्येव। बहुव्रीहौ द्वित्रा इत्यादिविधिश्च इत्याहुः ॥

---

विट्शूद्राः। भ्रातुश्च ज्यायसः॥ युधिष्ठिरार्जुनौ। संख्याया अल्पीयस्याः॥ एतच्च द्वन्द्वाद्वन्द्वविषयकम्। द्वित्राः। द्वाविंशतिः। द्व्येकयोरिति तु सौत्रो निर्देशः।

---

मानुपूर्व्यं श्रूयत एव मुखतो ब्राह्मणमसृजद्बाहुभ्यां राजन्यमूरुभ्यां वैश्यं पद्भ्यां शूद्रमिति। 'संख्याया अल्पीयस्या इति'। द्वन्द्वे चाद्वन्द्वे चेत्याहुः। अल्पीयस इति पाठे अल्पीयसोर्थस्य वाचिकाया इत्यर्थः। 'नवतिशत-मिति'। द्वन्द्वः द्व्येकयोरिति तु सौत्रो निर्देशः॥

# सप्तमीविशेषणे बहुव्रीहौ।२।२।३५॥

## यदा विश्वस्येति। (कै)

देव इत्युपक्रमे तस्य तत्त्वसम्भवः। विश्वं देवो यस्येति विग्रहः। "न संज्ञायाम्" (५।४।१५५) इति कप् निषेधः॥

---

सप्तमीविशेषणे बहुव्रीहौ॥ सप्तम्यन्तं विशेषणं च बहुव्रीहौ पूर्वं प्रयोक्तव्यम्। कण्ठेकालः। यदा कण्ठे किञ्चिदस्तीति निर्ज्ञाते काल इति विशेषणं तदेदं बोध्यम्। अन्यदा तु सप्तमीग्रहणं विनापि विशेषणत्वादेव सिद्धम्। सर्वनामसंख्ययोरुपसंख्यानम्॥ सर्वश्वेतः। द्विशुक्लः। कथं तर्हि तः परो यस्मात्स तपर इति, कथं च अहल्लार्थेति। इह हि अहत् स्वं पदं यं स अहत्स्वः सोऽर्थो यत्रेति बहुव्रीहिगर्भो बहुव्रीहिः। तथा च स्वपरशब्दयोः सर्वनामत्वात्पूर्वनिपातः स्यात्। सत्यम्। सूत्र-भाष्यादिप्रयोगाद्राजदन्तत्वं बोध्यम्। मिथोनयोः समासे तु संख्यापूर्व शब्दपरविप्रतिषेधात्॥ एतदर्थमेव हि संख्यासर्वनाम्नोरिति नोक्तम्। द्व्यन्यः। त्र्यन्यः। वा प्रियस्य पूर्वत्वम्॥ गुडप्रियः प्रियगुडः। गड्वादेः परा सप्तमी॥ गडुकण्ठः। क्वचिन्न। वहेगडुः। आकृतिगणोयम्॥

---

"सप्तमीविशेषणे बहुव्रीहौ"॥ 'कण्ठेकाल इति'। यदा कण्ठे किञ्चिदस्तीति निर्ज्ञाते काल इति विशेषणं प्रयुज्यते तदा सप्तमीग्रहणे-न प्रयोजनम्, अन्यदा तु विशेषणत्वादेव सिद्धम्। 'सम्प्रधारणायामिति'। इदमस्तु इदमेवेति निरूपणा सम्प्रधारणा 'परत्वादिति'। शब्दपरविप्रति-षेधादित्यर्थं, एवमर्थमेव च संख्यासर्वनाम्नोरिति नोक्तम्। 'गड्वादिभ्य इति'। गड्वादयः प्रयोगतो द्रष्टव्याः॥

द्विगुणक इति । (कै)

द्वौ शुक्लगुणकौ यस्य इत्यर्थः । अत्र हि द्वयोर्गुणवाचित्वाद्-नियमो विशेषणत्वस्य । पुत्रभार्याशब्दावपि गुणवचनाविति भाष्याशयः । अन्यपुंस्त्वधर्मभोग्यस्त्रीत्वयोर्गुणत्वादित्यन्ये ॥

---

## निष्ठा । २ । २ । ३६ ॥

यदयमिति । (भा)

भाष्ये बहुव्रीहौ आच्छादनभिन्नजात्यादिभ्यः परमुत्तरपदं क्तान्तमन्तोदात्तं कृतादीन् वर्जयित्वा इति सूत्रार्थः ॥

---

निष्ठा ॥ निष्ठान्तं बहुव्रीहौ पूर्वं स्यात् । कृतकृत्यः । जातिकालसुखादिभ्यः परा निष्ठा वोध्या ॥ जातिकालसुखादिभ्योऽनाच्छादनादिति ज्ञापकात् । सारङ्गो जग्धोऽनया सारङ्गजग्धी । क्तादल्पाख्यायामित्यनुवर्तमाने अस्वाङ्गपूर्वपदाद्वेति ङीष् । मासजाता । सुखजाता । कथं तर्हि कृतकटः । पीतोदकः । गड्वादेरितिवत्प्राप्तबाधमात्रे तात्पर्यमिति वृत्तिकारः । कथं पाणिस्थितमिति । नपुंसके भावे क्त इत्यस्य न पूर्वनिपातः । निष्ठाशब्दोपादानेन विहितस्यैवेह ग्रहणादित्याहुः ॥

"निष्ठा" ॥ 'अवमुक्तोपानत्क इति' । उरःप्रभृतित्वात्कप् । 'ननु चेत्यादि' । यथा चित्रगुरिति' । गुणद्रव्यशब्दयोरुपनिपाते गुणशब्दस्य विशेषणत्वं क्रियाद्रव्यशब्दयोरपि क्रियाया एव विशेषणत्वं, ततश्च पूर्वमेव सिद्धमिति भावः । 'विवक्षानिबन्धनत्वादिति' । यदा कृतं किञ्चिदनेनेति निर्ज्ञाते कट इति प्रयुज्यते तदा कटो विशेषणमिति मन्यते । 'कटे

# कडाराः कर्मधारये । २ । २ । ३८ ॥

कडारशब्दस्येति । (कै)

बहुवचनसामर्थ्यादजहत्स्वार्थलक्षणाक्वचित् इतिवदाश्रयणीया इत्यर्थः ॥

इति शिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते महाभाष्यप्रदीपोद्द्योते द्वितीयाध्यायस्य द्वितीयपादे द्वितीयमाह्निकम् ।

पादश्च समाप्तः ॥

---

कटेन कृतमिति वा विग्रहीतव्यमिति' । एवं विग्रहे कृतस्य विशेषणत्वा-प्राप्त्यैव नास्तीति भावः । क्वचित्तु वाशब्दो न पठ्यते तत्र विवक्षानिबन्धन-त्वादित्युक्तेः तामेव विवक्षां दर्शयतीति व्याख्येयम् । 'जातिकालसुखादिभ्यः परवचनमिति' । ज्ञापकात्सिद्धं, जातिकालसुखादिभ्यो नाच्छादनादित्याह, तज्ज्ञापयति जात्यादिभ्यः परा निष्ठा निपततीति । 'शार्ङ्गजग्धीति' । शार्ङ्गं जग्धमनयेति बहुव्रीहिः । 'क्तादल्पाख्यायाम्' 'अस्वाङ्गपूर्वपदाद्वे' ति ङीष् । अनाङः । निष्ठाशब्देन या विहिता निष्ठा तस्या ग्रहणं तेन सुस्थितं चावहसितमित्यादौ नपुंसके भावे क्त इत्यस्य परनिपात इति ॥

कडाराः कर्मधारये ॥ कडारादयः शब्दाः कर्मधारये पूर्वं प्रयोज्याः । कडारो जैमिनि । जैमिनिकडारः । कडार, गडुल, काण, खञ्ज, कुण्ठ, खोड, खलति, गौर, वृद्ध, भिक्षुक, पिङ्ग, पिङ्गलतनु, जठर, बधिर, मठर, कुब्ज, बर्बर, कर्मधारये किम् । कडारपुरुषको ग्रामः ॥

"कडाराः कर्मधारये" ॥ बहुवचननिर्देशादाद्यर्थोऽवगम्यत इत्याह । कडारादय इति' ॥

# महाभाष्यप्रदीपोद्द्योतः ।

पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ।

कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्य्यादुत्तान इव सौष्ठवात् ॥

## अनभिहिते । २ । ३ । १ ॥

### स्ववाचेति । (कै)

प्रयोजककर्त्रेत्यर्थः । करणभूतयेत्यर्थो वा स्वशब्देतरे भवाद्य-स्वरूपार्थयोः प्रसिद्धत्वेऽपि तस्यानेकार्थत्वात् सिद्धानभिमतमर्थं तन्मुखेन वाचयित्वा सूत्रप्रत्याख्यातुं प्रश्न इति भावः ॥

### अर्थचतुष्टयासम्भवादिति । (कै)

तद्विषयत्वासम्भवादित्यर्थः ॥ भाष्ये

---

अनभिहिते । अधिकारोयम् । तिङ्कृत्तद्धितसमासैरिति वक्त-व्यम् ॥ तेन तिङाद्युक्ते कर्मणि द्वितीया न भिद्यते हरिः ।

---

"अनभिहिते" ॥ अनभिहितशब्दोयमनेकार्थः, तथाहि । अभिपूर्वस्य दधातेर्हिनोतेश्चैतद्रूपं सम्भवति, अभिपूर्वस्य दधातिर्बन्धनेऽपि दृष्टः, अश्वा-भिधानीमादत्त इति, उच्चारणेऽपि, अभिहितः श्लोक इति, प्रतिपादनेऽपि

**विहितस्याभावादभिहिते इति । (भा)**

लौकिके प्रयोगलाघवानादरेण भवत्येव तथाप्रयोगः॥ विहितस्य तु नेत्याशयेन तदुक्तं

**न सम्भवतीति । (कै)**

ताभ्यामितिशेषः॥ कस्यापि तद्धितस्यान्यायेनोत्पत्त्यसम्भवाद् व्यर्थं विशेषणं तथाह

**उत्सर्ग इति ॥ (कै)**

**विरोधकाभावादिति । (कै)**

परदेशरोधकाभावादित्यर्थः॥

**अण इति । (कै)**

इदमुपलक्षणम् इञ् इति बोध्यं सप्तपर्णशब्दे समासे द्वित्वाभावात् कथं वीप्सावगतिस्तत्राह

**समासेन त्विति ॥ (कै)**

ननु सर्वथोक्तार्थानामप्रयोग इति न्याये सति सूत्रारम्भानुपपादनात् किं यत्नावदिति यत्नेनात आह

---

कृत्, कृतः कटः। तद्धितं, शतेन क्रीतः शत्यः शतिकः। शताच्ठन्यतावशते। समासः, प्राप्तमुदकं यं प्राप्तोदको ग्रामः। परिग-

---

अभिहितोऽर्थ इति। हिनोतिरपि गतौ वृद्धौ च वर्त्तते, इह तु वक्ष्यमाणानां कर्मादीनां वचनाद्यर्थचतुष्टयासम्भवात्प्रतिपादनवचनोऽभिहितशब्द इत्याह। 'अनभिहिते निर्दिष्टेऽनुक्त इति'। वचिरत्र प्रतिपादनवचनः।

### आरम्भवादीति। (कै)

तथा च तन्न्याये फलाभावेन तन्न्यायसत्त्वे न मानमित्यभिमानः॥ भाष्ये

### न चाचास्ति नेति। (भा)

वर्त्तिपदार्थानामन्यपदार्थेन संसृष्टत्वात् पृथक्त्वाभावेन वह्निर्भूतान्निसामानाधिकरण्याभाव इति भावः॥ यत्तु कैयटेनास्त्यर्थस्य तत्रैवान्यपदार्थे एवान्तर्भूतत्वादित्युक्तं तदनुपयुक्तबहुव्रीहावस्त्यर्थानन्तर्भावस्य "मतुप्" सूत्रे भाष्ये उक्तत्वात्। तत्र हि तद्धितार्थादावपेक्षया पञ्चगुरित्यादौ बहुव्रीहेरन्तत्वमुक्तं विशिष्टस्य षष्ठ्यर्थस्य तद्धितार्थत्वादस्त्यर्थोऽवश्यापेक्ष्यो द्विगुना षष्ठ्यर्थमात्रापेक्षस्य बहुव्रीहिरिति कैयटः॥

### स्वार्थस्य संसृष्टत्वादिति। (कै)

अन्यपदार्थेनेति शेषः। स्वार्थे वर्त्तिपदार्थः। अत्रोपसंक्रान्तत्वं हेतुः। तत्र नियमेन विशेषणत्वम्। भाष्ये

### द्वितीयमर्थमुपसंक्रान्तम् (भा)

इत्यस्य "तस्यापत्यम्" इति सूत्रस्य द्वितीयपदवाच्यमर्थमित्यर्थ इत्याशयेनाह

---

यनं किम्। कटं करोति भीष्ममुदारम्। इह विशेष्यात्कटादुत्पन्नया द्वितीयया गतार्थत्वाद्विशेषणात् द्वितीया न स्यात्। परिगणनसाम-

---

'उक्तार्थानामप्रयोग इति'। यथा सामान्येनानभिहित इत्येतावत्युच्यमाने कटं करोति भीष्ममुदारं दर्शनीयमित्यत्र कटशब्दाद्विशेष्यवाचिन उत्प-

समर्थानामिति ॥ (कै)

न चानेति। (कै)

सप्तपर्णशब्दस्तु तादृशे वृक्षविशेषे रूढ इति भावः ॥

पङ्क्त्यौ पङ्क्त्याविति। (भा)

अष्टापदं शारि फलमित्यमरः ॥

पूर्वाचार्य्येति। (कै)

स्वमते तु विकरणा द्योतका इत्यभिमानः। वस्तुतो बहुक-चोरपि द्योतकविषयेऽप्ययं न्यायः। द्योतकविषयेऽपि एकेन द्योतिते उक्तार्थानामिति न्यायेनापरद्योतकाभाव इति बोध्यम् ॥ भाष्य-कारस्तु "येन नाप्राप्ते योविधिरारभ्यते सतस्यापवाद" इति लक्षणानु-सारेण तक्रकौण्डिन्यन्यायमूलकेन सत्यपि सम्भवे बाधनमिति तद्भावः। तन्मतेऽप्ययं न्याय आवश्यकः। यथोक्तं "समासेना-भिहितः सुजर्थ" इति द्विदशा इत्यादौ सुजेति ॥

इदानीमिति। (कै)

दृष्टानामन्यथासिद्धिपरिहाराय जात इत्यर्थः ॥

अन्यस्य त्विति। (कै)

शास्त्रविहितस्येत्यर्थः। लौकिके प्रयोगलाघवानादरादिति भावः।

---

र्थात्तु भवति। स्यादेतत्। कटोपि कर्म भीष्मादयोपीति पक्षे सर्वेभ्यो द्वितीया उचितैव। अहरणैकहायनीन्यायेन हि पार्ष्णिकः

---

श्रूयमाणया द्वितीययाऽवयवेन कटगतस्य कर्मत्वस्याभिहितत्वाद्भीष्मादिभ्यो द्वितीया न स्यादिति मन्यमानः पृच्छति। 'केनानभिहित इति'।

एवमेव व्यतिलुनीत इत्यत्रापि समावेशः। ततो हि पूर्वमात्मनेपदं ततः स्पष्टं तत्प्रतीतये व्यतिप्रयोगोऽपि ॥

## अपूपौ (कै)

इत्यत्र द्विवचनं तु विरुद्धविभक्त्यपेक्षया विभक्तेः अन्योपसिद्धत्वात्तत्तं विहितो न स्यात्। न भवितुमर्हतीत्यर्थः। "अर्हे कृत्यतृचश्च' इति चादर्हे लिङ् ॥

## एकत्वादीनामिति। (कै)

संख्यावाक्यविभक्तिविधानयोरेकवाक्यत्वपक्षे एकत्वादीनां विशेष्यत्वमवश्यंवेत्यर्थः ॥ आदिना द्वित्वादि। तदाह

## कर्मणीति ॥ (कै)

## एकस्य यदिति। (कै)

एकत्वस्याश्रयो यत् कर्म इत्यर्थः। द्वेकयोरिति षष्ठीति भावः। इदं चिन्त्यम्। बहुष्वित्यत्र सप्तमीदर्शनेन द्वेकयोरित्यस्यापि सप्तमीत्वौचित्यात्। तस्मात्प्रातिपदिकार्थस्यैकत्वे सति तद्गतकर्मत्वशक्तौ द्वितीयैकवचनमित्यर्थ उचितः। अयं च चतुष्कं संख्यान्तं प्रातिपदिकार्थ इति पक्षे। त्रिकपक्षे तु कर्मणि द्वितीया भवतीत्येवार्थोऽस्य सूत्रस्य ततः कर्मण एकत्वे तदेकवचनमित्यर्थः

---

परस्परावच्छेदः। अत एव हि सङ्ख्यावित्यादौ कारकपूर्वत्वप्रयुक्तो यण् सिध्यति। परमगुणेत्यत्र समानाधिकरण्यस्याज्ञापकात्।

---

इतरोऽपि विदिताभिप्राय आह। 'तिङ्कृत्तद्धितसमासैरिति'। बहुषु प्रयुक्तेषु केषां चिद्दर्शनेन केषां चित्कार्यान्वयप्रतिपादनं परिसंख्यानं,

संख्याबोधकस्य। इदमेवाभिप्रेत्याग्रे एतस्मिते कर्मणि एकत्वे इत्यादिक्रमेणार्थं दर्शयिष्यति भगवानित्याहुः॥

नार्थ इति। (कै)

प्रधानार्थस्योक्तत्वेन विशेषणीभूतार्थानुक्तावपि तेन न्यायेनातिप्रसङ्गविरहात् तस्याचबोधनस्य प्रथमया सिद्धत्वाच्चेति भावः॥

तदभिधानायेति। (कै)

उक्तार्थानामिति न्यायस्तु प्रधानार्थविषय इति भावः॥

तेषामेवेति। (कै)

तथा च संख्याया विभक्त्यर्थत्वमसम्भावितमिति भावः॥

सप्तमीनिर्देश इति। (कै)

ननु द्वितीयायाः सूत्रे श्रुतत्वात्तदपेक्षयैव सप्तमी उचिता न त्वेकत्वापेक्षया किं च संख्यायाः प्रायेण विशेषणत्वस्यैव दृष्टत्वादेकत्वविशिष्टे कर्मणीत्येवार्थ उचित इति चेन्न। कारकस्य प्रातिपदिकार्थत्वेन तत्र विधानानुपयोगाच्छुद्धनियमार्थत्वापेक्षया एकत्वविशेषणतया विधित्वद्वारा अर्थनियमस्यापि सिद्धिरिति विधित्वाय तथैवान्वय उचित इत्याशयात्। तत्र पक्षे यथा प्रातिपदिकेनोक्ते द्वितीयादयो भवन्ति तथा तिङाद्यभिहितेऽपि

---

अभेदान्वयस्थले विशेष्यविभक्तिर्विशेषणादपि भवतीति पक्षेऽप्येवम्। सक्तू स्वाविति तु कारकेणाभेदेनान्वयतो विशेषणस्यापि कारकत्वानपा-

---

प्रत्युदाहरणेषु सर्वत्र द्वितीया न भवति। 'कटं करोतिभीष्ममित्यादि'। कटः कृतो भीष्म उदारो दर्शनीय इति, करोतेस्तत्प्रत्ययमानः क्तप्रत्ययो ऽवयवेन

स्युरित्येतदर्थं स आवश्यकः॥ एकत्वादय इत्यस्य ते एवेत्यर्थः। एवं च संख्यारहितं चतुष्कं प्रातिपदिकार्थ इति पक्षे सूत्रमावश्यकमित्युक्तं भवति। तदितरपक्षेषु च न कर्त्तव्यमिति। पञ्चकपक्षेऽपि सूत्रमावश्यकमिति "बहुष्विति" सूत्रे भाष्यकैयटयोः स्पष्टम्। पञ्चकपक्षे सुपां द्योतकत्वाद्वाचकयोर्द्योतकयोश्च समुच्चयस्य दृष्टत्वादन्याभिहितेऽपि स्यादतः स आवश्यकः। वस्तुतस्तु एकत्वादयो विभक्त्यर्था इत्यस्य सूत्रे प्राधान्येन विभक्तिद्योत्यत्वेन बोधिता इत्यर्थः। एवं कर्मादयो विभक्त्यर्था इत्यस्यापि। यद्यपि द्योतकविषये क्वचिद् द्विर्बद्धं सुबद्धमितिन्यायेन समावेशो दृष्टस्तथापि प्रकृते सञ्ज्ञानुसारादुक्तार्थानामित्येवाश्रीयते। परं तु अयं न्यायः सूत्रोक्तप्रधानविषय इति भावः। उक्तार्थानामिति न्यायस्य द्योतकविषयेऽपि सञ्चारो दृश्यतेऽधिपरी इति सूत्रे भाष्ये। अपूपौ द्वावित्यादौ व्यभिचारश्च तत्रैवोक्तः॥ ... तु प्राधान्यादेकत्वादीनामेव निमित्तत्वं न कर्मादीनामत आह

कर्माद्याश्रितानामिति॥ (कै)

माभूवन्निति। (कै)

वाक्यसमाप्ताविति शब्दः॥ भाष्ये

---

यात्समाधेयम्। तस्मान्नार्थः परिगणनेन। किञ्चानभिहिताधिकारेणापि नार्थः। नहि कटः कृत इत्यादावतिव्याप्तिः। तत्प्रत्ययेनैव

---

सर्वकर्माभिधत्ते तद्वद् द्वितीयापीति यो मन्दधीर्मन्यते तं प्रतीदं परिगणनं, सूक्ष्मदृशस्तु प्रति न वक्तव्यमेव। तथाहि। प्रातिपदिकादुत्पद्यमाना

**तेष्वभिहितेषु सामर्थ्यादिति ।** (भा)

सामर्थ्यमचोक्तार्थानामप्रयोगरूपम् ॥ स्वपक्षेनायं दोष इत्याह

**एकत्वादीनां त्विति ॥** (कै)

द्वितीयादिषु वैषम्यं दर्शयति ।

**द्वितीयादयस्त्विति ॥** (कै)

**अनभिहितैकत्वाद्यभिधानायेति ।** (कै)

"प्रातिपदिकार्थ" सूत्रे उपस्थितानभिहित इत्यस्य प्रातिपदिकार्थविशेषणत्वासम्भवेनैकत्वादिति विशेषणत्वमिति भावः ॥

**कर्तुरेकत्वमिति ।** (कै)

येऽपि क्रियायामेव तिङ्वाच्यकारकगतसंख्यामारोप्य तत्रैव तिङर्थसंख्यान्वय इति वदन्ति । तेषामपि आरोपमूलतया योक्तप्रायैवेति बोध्यम् । अन्यथा तिङर्थाश्रयगताया उक्तत्वेऽपि वैचत्वविशिष्टरूपनामार्थगताया अनुक्तत्वेन तदसंगतिरेव स्यात् । न च क्रियायाः स्वत एकत्वेन तदारोपानपेक्षत्वेन कर्तृगतैकत्वस्य कथमुक्तत्वम् । तस्यापि साधने द्वित्वाद्यभावबुद्धिनिमित्तके तदनारोपे सत्त्वात् । अन्यथा पचत इत्यादौ द्विवचनाद्यनापत्तिः।

---

कर्मत्वस्योक्तत्वात् । उक्तार्थानामप्रयोगात् ।. तद्यथा बहुपटुरित्यादौ बहुचोक्तार्थत्वान्न कल्पबादयः। किं च कटं करोतीत्यादौ सावकाशा

---

द्वितीया यदाकारविशिष्टोऽर्थः प्रातिपदिकेनाभिधीयते तदाकारविशिष्टस्यैव कर्मभावमाचष्टे, कटशब्देन कटत्वजातिविशिष्टोऽर्थो ऽभिधीयते न भीष्मा-

मम तु आरोपितयाप्युत्तरया संख्यया बाधान्न दोषः। आवृत्तिगतसंख्यारोपेण सहस्रदक्षिणत्वादिवत्। एवं च द्वित्वाद्यभाववुद्धौ द्रव्यस्य निःसंख्यत्वाभावेन साधने एकत्वमवगतमेवेति भाष्याशयात्॥ ननु तिङ्सुपोर्युगपत्प्रवृत्तेर्वक्तुं शक्यत्वेन तिङोक्ता इत्यसंगतमत आह। भाष्ये

परिगणनं चेति। (कै)

तथा च तिङ्कृदित्यादिपरिगणनबोधितापवादविषयपर्यालोचनया तिङुत्पत्तिपर्यन्तं सुप् प्रतीक्षत इत्यर्थः॥ अस्तिर्भवन्तिपर इत्यस्य न्यायसिद्धत्वमाह।

सर्वं च चेति॥ (कै)

द्व्येकयोरिति सूत्रस्यान्यत्र सावकाशत्वात्सामर्थ्यासिद्धिमाशङ्क्याह।

प्रातिपदिकार्थसूत्रेणेति॥ (कै)

अभिहिते प्रथमाभाव इति (भा)

भाष्यस्याभिहिते प्रथमाया भावस्य प्रकृतेस्त्वयाङ्गीकारादित्यर्थः॥ भीष्मादीनामपि कर्मत्वात्कथं प्रथमाप्राप्तिरत आह।

---

द्वितीया कृतः कट इत्यादिषु प्रथमया बाधिष्यते। निरवकाशत्वात्। न च कृष्णः कृत इत्यादिरवकाशः। तत्रापि प्रतीयमाना-

---

द्याकारविशिष्ट इति तत्प्रतिपादनाय यथा भीष्मादिशब्दप्रयोगो भवति तथा तदाकारविशिष्टस्य कर्मत्वाभिधानाय द्वितीया भविष्यति, कृष्णशब्दस्तु प्रकृतार्थस्य न कर्मतामाचष्टे किं तु प्रकृतार्थं प्रति यस्य

विशेषणविशिष्टस्य कटस्येति । (कै)

प्रधानगतकर्मत्वोक्तौ विशिष्टगतमपि तदुक्तमेव विशिष्टस्य तदपेक्षयातिरिक्तत्वाभावादिति शङ्कितुरभिमानः ॥ आरम्भे दोषाभावमाह ।

आरम्भवादिनस्त्विति ॥ (कै)

भाष्ये

सामर्थ्यादिति । (भा)

भीष्मादिपदानामपि द्वितीयोत्पादकसामर्थ्यसत्त्वादित्यर्थः । विशिष्टस्य कर्मत्वे विशेषणस्यापि द्वितीयोत्पादककर्मत्वशक्तिरूपसामर्थ्यवत्त्वम् । अन्यथा विशिष्टं कर्मेत्युक्तिव्याघातः । तच्च न कटपदोत्तरद्वितीययाभिहितमिति भावः ॥ तदाह ।

तत्र च यथेत्यादिना । (कै)

विशिष्टगतैककर्मत्वप्रतिपादनेच्छायामयं प्रयोगस्तत्प्रतिपादनं च शोभयत्र द्वितीयां विनेति भावः ॥ अत्र पक्षे भीष्मपदात् कर्मत्वाद्यनालिङ्गितशुद्धगुणस्यैवोपस्थितिरितरस्य तद्वैशिष्ट्यप्रतीतौ पश्चाद्विशिष्टस्यैककर्मत्वशक्तिमत्तयोपस्थितौ च भीष्माद्युत्तरद्वितीयापि सहकारिणीति तात्पर्यं तदाह

---

क्तिक्रियां प्रति कर्तृत्वेन तृतीयाप्रसङ्गात् । अथ नीलमिदं न तु रक्तमित्यादौ विशेषणान्तरनिवृत्तितात्पर्यकेऽप्युक्तिक्रियाया अनावश्यकत्वात्

---

कर्मभावस्तमिति युक्तं यदनवयवेन सर्वकर्माभिधत्ते । ननु च कर्मादयो विभक्त्यर्थास्तेषां च तिङादिभिरभिहितवचनमनर्थकम् अन्यत्रापि विहितस्याभावादभिहिते, यत्राप्यनभिहिताधिकारो न क्रियते तत्रापि

नन्यत्वदिति। (कै)

तद्विशिष्टत्वं कटस्येत्यनन्तरं विशिष्टस्य कर्मत्वं चेति शेषः ॥ यथा कटे करोतीत्यत्र विशिष्टकर्मत्वं न प्रतीयते। एवं भीष्मः कटं करोतीत्यत्रापि विभिन्नविभक्तित्वाद्विशिष्टाप्रतीत्या तन्न प्रतीयत इति भावः ॥

पश्चादिति। (कै)

तथा च न विशिष्टस्य कर्मत्वं किं तु क्रियायां कर्मत्वेनान्वितयोर्मनसा विशेषणविशेष्यभावबोध इति भाव इत्येके। परे तु साक्षात्फलाश्रयादेरपि द्रव्यद्वारा फलाश्रयादेरपि कर्मत्वादिकमेवं च भीष्मस्यापि पृथक्कर्मशक्तिविशिष्टस्यैव बोधनं भीष्मपदात्। द्रव्येणाभेदान्वयात्तु तस्याः शक्तेर्वाक्यार्थबोधे विशिष्यायशो भीष्मकटयोर्बोधस्य विशेषणविशेष्यभावेनैव। कारकाणां भावनान्वय इत्यस्य च साक्षात् स्वशक्तिनियामकाश्रयद्वारा वेत्यर्थान्नविरोधः। तदेव ध्वनयन् कैयट आह।

---

प्रथमाया अवकाशं ब्रूमे। तर्हि विप्रतिषेधात् प्रथमास्तु। न च ततोऽपि परत्वात् षष्ठीप्रसङ्गः। अशेषत्वात्। उच्यते। परिगणनं तावत्प्रत्याख्यातमेव भाष्ये। सूत्रं तु कर्तव्यं कट इत्यादिसिद्धये।

---

शब्दान्तरप्रतिपादितेऽर्थे नैव विहितं भवति तद् यथा बहुपटुरिति बहुचोक्तत्वादीषदसमाप्तेः सत्यपि सम्भवे कल्पबादयो न भवन्ति, द्विदंष्ट्र द्विदष्ट्राः समासेनोक्तत्वात्सुअर्थस्य सुप् न भवति, पटुगमौ द्वन्द्वेनोक्तत्वाच्चार्थस्य चशब्दो न प्रयुज्यते, तद्वदत्रापि तिङादिभिरभिहितत्वादेव द्वितीयादयो न भविष्यन्ति। नन्वभिहितार्थस्यापि प्रयोगो

**क्रियायां पृथक् सर्वेषां कर्मत्वे प्रत्येकं द्वितीयोत्पत्तिः पश्चात्त्वेकवाक्यतया विशेषणविशेष्यभाव इति। (कै)**

पश्चादित्यस्य द्वितीयोत्पत्त्यनन्तरमित्यर्थः। अत्रस्वारस्यात् पृथक् सर्वेषां कर्मत्वे इत्यस्य च साक्षात्परंपरया वेति शेषः। द्रव्यगुणयोः करोतिना संबन्ध इत्यत्रापि स एव शेषः पूरणीयः। संबन्धश्च तदर्थफलाश्रयत्वरूपः। एतेनाद्यपक्षे प्रथमं सर्वेषां भावनान्वयः पश्चात्पार्ष्णिकः परस्परं मनसा विशेषणविशेष्यभावबोध इति परास्तम्॥

**शाब्दद्वयकल्पनागौरवाच्चानुभवाच्चैकवाक्यतयेति (कै)**

कैयटेन शाब्दस्यैव विशेष्यविशेषणभावस्य स्वीकाराच्चेत्याहुः॥

**क्रियान्तरे। (कै)**

तद्विशेषे आसनशयनादिरूपे॥

**ईप्सिततमत्वादिति। (कै)**

साक्षात् क्रियान्वय्येव ह्यीप्सिततमम्। एवं करणसंज्ञापि साधकतममात्र द्रव्यस्यैवेति बोध्यम्॥ परेत्विदं चिन्त्यम्। अश्वेन

---

इह हि प्रथमां बाधित्वा कर्तृकर्मणोः कृतीति षष्ठी स्यात्। न च कृत्येनोक्तार्थत्वान्नेह षष्ठीति वाच्यम्। संख्याविभक्त्यर्थ इति पक्षे सूत्रारम्भात्। कर्मणि यदेकत्वं तत्र कृद्योगे षष्ठ्येकवचनमिति हि

---

वृक्षो ऽपूपौ द्वाविति, सत्यम्। अयं तु न्यायः यदुताभिहिते विहितं न स्यात् नहि व्यसनितया शब्दः प्रयुज्यते ऽपि त्वर्थाभिधानाय, स चेदर्थः शब्दान्तरेणाभिहितः किमिति शब्दान्तरं प्रयुज्यते,

यथा दीपिकया व्रजतीत्यादौ सर्वेषां करणत्वानापत्त्या कारकान्तरापेक्षयैवप्रकर्षो न तु स्वकक्षायामपीति स्वयमेवोक्तत्वात् । गां पयो दोग्धीत्याकडारसूत्रभाष्यासंगतेश्चेति दिक् ॥

## अथवेति । (कै)

सामानाधिकरण्यं नाम अनेकस्य पदस्य विशेष्यतयैकार्थबोधकत्वं यदि भिन्नशक्तित्वं स्यात्तदा शक्तिभेदेनार्थस्यापि भेदादेकार्थत्वं भज्येत तस्माद्विशेष्यसमानशक्तिकत्वं तदभिन्नविशेषणानामिति नियमात्तत्समानविभक्तिकत्वमेव फलाश्रयत्वादिवत्तत्सामानाधिकरण्यत्वमपि विभक्त्युत्पत्तौ नियामकमिति ॥ तदुपपादयति

## ततो यथेति । (कै)

यथा मैत्रीभङ्गभिया सधनो निर्धनस्य स्वधनेन स्वसमानतामीऽलङ्कारादीन् करोति । एवं सामानाधिकरण्यभङ्गभिया स्वशक्तिं तत्रारोप्य स्वसमानविभक्तिकत्वं संपादयतीति भावः ॥ नन्वेवमेव कृतः कट इत्यादावपि भीष्मादिभ्यो द्वितीया स्यादत आह । भाष्ये

---

वाक्यार्थः । तथा च षष्ठीवाच्यस्य कर्मकत्वादेः कृत्येनानुक्तत्वाद् दुर्वारा षष्ठी । कारकं विभक्त्यर्थ इति पक्षे तु मास्तु सूत्रमिति स्थितम् ।

---

र्थश्चित्तनिकोचादिभिरप्यवगतेऽर्थे शब्दो नैव प्रयुज्यते किं पुनः शब्देनवाभिहिते, अपूपौ द्वावित्यादौ तु द्वावानय कौ द्वौ ताविति सामान्योपक्रमे वाक्यमिति यथा कथंचिदुपपादनीयं, तस्मात्कार्यं एतेनैवाशङ्क्य संख्यापि विभक्त्यर्थ इति दर्शयन्नाह । 'बहुषु बहुवचनमि-

## अस्ति खल्वपीति (भा)

अभीप्सादिगुणगत इत्यस्य तद्गुणविशिष्टगतमित्यर्थः ॥

## गुणगतं कर्मत्वमिति । (भा)

भाष्ये कर्मशब्दः शक्तिपर इति भावः । अयं भावः । कस्य धातोरुत्पत्त्यार्थप्रकृतिगतधर्माभावादन्यगते तत्राभिधातव्ये यद्यत्प्रकृतिवाच्यक्रियानिरूपितकर्मत्वशक्तिमत् तत्सर्वगता साभिधीयत इति युक्तम् । द्वितीयायाः प्रातिपदिकादुत्पत्त्या स्वप्रकृतिभूतप्रातिपदिकार्थकर्मत्वलाभात्तदेव बोध्यमान्यदिति । भीष्मं कटमित्यादौ ॥ आरम्भवादे पूर्वोक्तप्रथमाप्राप्तिरूपदोषाभावादेष इत्यनुपपन्नमत आह ।

## वक्ष्यमाण इति । (कै)

तिङभिहिते वचनसामर्थ्याद्दोषपरिहारेऽपि प्रकृत्यभिहिते दोषः । तथा अनभिहितैकत्वादिके वृत्त इत्यादौ तत्साचारितार्थ्यादित्याह

## अनभिहितैकत्वादीति । (कै)

एकं पश्येत्यादौ द्वितीया तु कर्मणो अनभिहितत्वादेकत्वे उक्तेऽपि भविष्यतीति मत्वा प्रथमाभावापत्तिरेव कृता ॥ ननु

---

आरब्धे तु सूत्रे पर्युदासोऽयं न तु प्रसज्यप्रतिषेधः । असमर्थसमासापत्तेः । वाक्यभेदापत्तेश्च । प्रासाद आस्त इत्यत्र सदिक्रियाया

---

त्येवमादिनेति' । अयमर्थः । त्रिकःप्रातिपदिकार्थ इत्यस्मिन्दर्शने कर्मादिवदेकत्वादिसंख्याविभक्त्यर्थः, तत्र कर्मादीनां युगपद्विभक्तिभिरभिधीयमानानां परस्परं विशेषणविशेष्यभावमनापन्नानां केवलप्राति

कर्मादीनां विभक्त्यर्थत्वे एकत्वादीनां निमित्तत्वं कथमतस्तदुपपादयति ।

यस्यापीति । (कै)

प्रातिपदिकार्थगतैकत्वादिविशिष्टे कर्मणीति सामानाधिकरण्यसम्बन्धेनैकत्वविशिष्टकर्मशक्ताविन्यर्थः ॥

वाचिकेति । (कै)

बोधिकेत्यर्थः । द्योतकत्वपक्षेऽबोधितत्वादेकत्वादीनां विशेषणतयैव भानात् । एवं चैकत्वविशिष्टे प्रातिपदिकार्थे प्रथमेत्यर्थे तदपेक्षयातिरिक्तं यचैकत्वं वृक्ष इत्यादौ तन्नैव स्यात् न लोक इत्यादौ । इत्याह

ततश्चेति । (भा)

उक्तार्थानामित्यस्य प्रधानार्थविषयत्वादेकत्वे उक्तेऽपि प्रधानकर्माभिधानाय द्वितीयादीनामेतन्मतेऽपि सिद्धिरिति तदनापत्तिर्नाकारि । एतद् भाष्यं हरिणाप्येवमेव व्याख्यातमित्याह ।

तदुक्तमिति । (कै)

निमित्तप्रवृत्तिनिमित्तम् ॥

---

आश्रितक्रियायाश्चैकमधिकरणं प्रासादाख्यं तत्र सदेः परेण घञा अभिहितमिति सप्तमीनिषेधापत्तेश्च । पर्युदासे तु आश्रितक्रियानिरूपितम

---

पदिकार्थगतानामभिधानं वृक्ष एको वृक्षः कर्म पशुरेकः पशुः करणमिति वाभिधानं, पश्चाच्चैकक्रियान्वयबलेन परस्परसम्बन्ध इति प्राभाकरा मन्यन्ते। भाट्टास्तु परस्परासम्बद्धस्य स्वतन्त्रस्यानेकार्थ-

द्वे एकत्व इति । (कै)

द्वयोरपि तयोर्ब्राह्मणौ द्वावित्यादावविवेकरूपेणैव भानान्न बोधावृत्त्यनुभवविरोधौ । इयं च कल्पना शब्दशक्त्याश्रयेत्याह

एवं शब्देति ॥ (कै)

अत्रापि पक्षे प्रातिपदिकेनैकत्वविशिष्टद्रव्याभिधानाद्दोषस्तदवस्थोऽत आह

गुणोपसर्जनमिति ॥ (कै)

द्रव्योपसर्जन इति । (कै)

गुणगुणिनोरभेदाच्चैकः पट इति सामानाधिकरण्यम् ॥ ननु प्रातिपदिकस्यैकत्वादिविशिष्टे शक्त्या तेनैव द्रव्यं विशेषयितुं शक्यं किं तत्र विभक्त्येयत आह

केवलस्येति । (कै)

अयं भावः । वृद्धव्यवहाराच्छक्तिग्रहः वृद्धव्यवहारश्च विभक्त्यन्तेनैवेति विभक्तिसमभिव्याहृते गृहीतायाः शक्तेस्तदभावे अनुद्बोधात् पदार्थानुपस्थित्या संख्येयमविशेषितम् । एवं च पदार्थोपस्थित्यन्यथानुपपत्त्या ऽभिहितेऽपि विभक्त्युत्पत्तिरिति लोकव्यवहारे प्रयुज्य-

---

धिकरणशक्तिमनभिहितामाश्रित्य सप्तमीविधिः प्रवर्त्तते । आसने आस्ते शयने शेते इत्यादौ तु लटः प्रकृतिभ्यां क्रियोपस्थितौ तयो-

---

श्चाख्याः पादा माषा इत्यादावभिधानदर्शनेऽप्येकशेषमन्तरेणादर्शनान्नेते-त्यादौ च शक्तिकार्ययोर्युगपच्छिक्ताभिधीयमानयोरपि विशेषणविशेष्यभावस्य प्राभाकरैरप्यभ्युपगमात्तदेव विशिष्टाभिधानं मन्यन्ते । अक्षा-

मानानामेव साधूनां साधुत्वान्वाख्यायकमिदं शास्त्रमिति वृद्धव्यवहारे एव किं मूलमिति न प्रश्नम् । भाष्ये

न नियोगत इति । (भा)

न नियमत इत्यर्थः ॥ प्रातिपदिकार्थस्याशेषत्वात्कथं तत्र षष्ठीत्यत आह ।

कर्मादीति । (कै)

तावन्मात्रमेव शेष इत्यभिमानः ॥

अव्यतिरिक्तस्येति । (कै)

अतिरिक्तेन विशिष्टो व्यतिरिक्तस्तद्भिन्नस्येत्यक्षरार्थः । एवं च कारकप्रातिपदिकार्थव्यतिरिक्तः शेष इति सात्र षष्ठी तदतिरिक्तस्य कस्याप्यप्रतीतेरिति भावः ॥ अर्थाभावेऽपि समयपरिपालनाय विभक्तौ कथमर्थतो व्यवस्थेत्यत आह

सामर्थ्यादिति ॥ (कै)

तदेवोपपादयति ।

एक इत्यत्रेति । (कै)

विवक्षितविभक्त्यपेक्षयानुवादकविभक्तिर्न्याय्येति भावः ॥ पक्षद्वयेऽपि

---

त्यम् अनुद्भूतप्रक्रिकं वस्तुमात्रं सत्ता उच्यते । तस्य च वर्तमानैककर्तृक-तिङ्प्रत्ययस्याप्यक्रियानिरूपितप्रत्ययुद्भवप्रतिपादनाय समस्तीति दिक् ।

---

कमप्ययमेव पक्षः । तत्र कर्मादयो विशेष्यास्तमेकत्वादयो विशेष्याः कर्मणि यदेकत्वं तत्र द्वितीयैकवचनमिति, विपर्ययो वा एकत्वादिविशिष्टं यत्कर्म तत्र द्वितीयेति, तत्र यद्यपि कर्मादिप्राधान्यपक्षे

दोषाभावप्रतिपादनात्सङ्ख्या सुबर्थ इति दर्शने सूत्रम् । कार्यदर्शनान्तरे नेति स्थितम् । तत्रारम्भपक्षे परिगणनादिप्रवृत्तिं बोधयितुमाह

तदेवमिति । (कै)

सङ्ख्या विभक्त्यर्थ इति सूत्रे प्राधान्यात्तस्या विभक्तिद्योत्यता कारकं तु तद्विशेषणत्वेन तथेति दर्शनमित्यर्थः ॥ भाष्ये

तिङ् क्रियते कट इति ॥ (भा)

न चात्र सङ्ख्याकारकयोरुभयोरप्युक्तेः सङ्ख्या विभक्त्यर्थ इति पक्षेऽपि नेदमनभिहिताधिकारप्रयोजनमिति तिङ्ग्रहणं व्यर्थमिति वाच्यम् । संख्यायाः क्रियायामेवान्वयेन कारकगतसङ्ख्यायाः शब्देनानभिधानादित्याशयः । एवं च पचत्योदनं देवदत्त इत्यादौ तिङोक्ता एकत्वादय इति प्रथमा न प्राप्नोतीति पूर्वोक्तभाष्यमेकदेश्युक्तिरिति यथा कथं चिद् व्याख्येयमिति सूचितम् ॥ तिङ्कृतोरिव तद्धितसमासयोः कस्मिंश्चिद्विभक्त्यर्थे विधानादाह

अपत्यापत्यवदिति ॥ (कै)

तद्धितोक्तत्वादिति । (कै)

तद्धितान्तोक्तत्वादित्यर्थः ॥ नन्वेतयोः संबन्धस्य प्रातिपदिकार्थ-

---

स्यादेतत् । यद्ययं पर्युदासस्तर्हि पक्त्वौदनो भुज्यत इति न सिद्ध्येत् । भुजिप्रत्ययेनाभिहितेऽप्योदने क्त्वाप्रत्ययेनानभिधानमाश्रित्य द्वितीयापत्तेः ।

---

तिङादिभिः प्रधानभूतानां कर्मादीनामभिहितत्वादप्रसक्तो द्वितीयादीनां संख्याप्राधान्यपक्षे कर्मादिष्वभिहितेष्वपि प्रधानभूतसंख्याभिधानाय द्वितीयादयः स्युरेव । प्राभाकरे तु पक्षे कर्माद्यंशाभिधानेऽपि संख्यां-

त्वेनाशेषत्वाच्च षष्ठीप्राप्तिः। कारकप्रातिपदिकार्थव्यतिरिक्तो हि तत्र शेषः। न च कर्मादिव्यतिरिक्त एव शेष इत्याशयेनैते उदाहरणे। यद्वा। संबन्धो न प्रातिपदिकार्थः। प्रवृत्तिनिमित्ततदाश्रयभिन्नत्वादिति वाच्यम्। घटपदाद् घटघटत्वयोः संबन्धस्य भानेन तत्र षष्ठ्या दुर्वारतापत्तेः। तत्र हि नैतदन्यतमेनाभिधानमिति चेत्सत्यम्। वाक्ये ऽस्य संबन्धस्य षष्ठ्यर्थत्वं दृष्ट्वा ऽत्राप्यप्रातिपदिकार्थत्वमित्यभिमानात्। किं च का तर्हि स्यात् शेषलक्षणा षष्ठी अशेषत्वाच्च समयाच्च द्वितीयैवेत्यग्रिमग्रन्थेन कटं भीष्ममित्यादौ अभिहितत्वादप्राप्तद्वितीयासाधनार्थं परिगणनमित्येतत् खण्डनपरेण परिगणनप्रत्याख्यानवदेतयोरुदाहरणत्वाभावस्यापि कथनेन तद्धितसमासोदाहरणमधिकमित्यर्थस्यापि कथनात्। "अनेकमन्यपदार्थे" इति सूत्रे भाष्येऽप्यनयोरनुदाहरणत्वं सूचितम्। न च शतेन क्रीतः शत्यः प्राप्तमुदकं यं प्राप्तोदक इत्यादि तद्धितसमासोदाहरणमिति वाच्यम्। प्राप्तोदक इत्यादौ प्राप्तोदककर्मेत्यादिप्रकारेणैव बोधस्तच विशेष्ये तन्निरूपकत्वबोधेन विशेषणमादाय तात्पर्यावसानमिति द्वितीयादिप्रयोजककर्मत्वादेः शब्दादबोधेन द्वितीयाद्यप्राप्तेः। एवं च विशेषणत्वव्यत्यासोऽपि न। उपजीव्यस्यैकधर्मिबोधकत्वरूपसामा-

भावे हि क्वेति वक्ष्यते। प्रसज्यप्रतिषेधे तु भुजिप्रत्ययेनाभिधानमाश्रित्य प्रसज्यप्रतिषेधः सुवचः। किन्तु प्रागुक्तदोषानिस्तारः। अन्ये-

ष्वस्यानभिहितस्याभिधानाय द्वितीयादयः स्युरिति। 'अनभिहितकर्माश्रयेष्विति'। अनभिहितानि कर्मादीन्याश्रयो येषां तेष्वित्यर्थः। एतेन कर्मद्वितीयादिसप्तमीनिर्देश्य एकत्वादीनामाधारतया न पुनरभि-

नाधिकरण्यस्य च न बाधः। चित्रगुरित्यादौ चित्राणां गवामय-मित्यादौ यथा तस्य षष्ठीप्रयोजकता तथात्रापि स्यात्तेनैव रूपेण भानादिति बोध्यम्। एवं यथा क्रीतशब्दे धातुना क्रियोपस्थाप्यते न तेन रूपेण प्रत्ययशब्देनेति न तदर्थे इतरकारकान्वयः। इदं च कर्तृकर्मणोरित्यत्र भाष्ये ध्वनितम्। अतो न तदर्थकर्मणो विभक्ति-प्राप्तियोग्यता। एवं च सांप्रतमित्यादिनिपातैरपि न तेन रूपेण क्रियायाः कारकस्य चोक्तिरिति न तदन्वयिनि विभक्तिप्रसक्तिः। अतो निपातेनाभिहितत्वादिभक्त्यनुत्पत्तिरित्यपि चिन्त्यमेव। "नारद इत्यबोधि स" इत्यत्रापि नारद इतीत्यनेन श्रीकृष्णीयज्ञानाकारानु-वादात्तत्र न द्वितीयादिप्रसक्तिरित्यलम्॥ परिगणनफलमाह भाष्ये

**उत्सर्गे हीति॥** (भा)

तद्व्याचष्टे।

**सामान्येनेति॥** (भा)

**एकयोगक्षेमत्वादिति।** (कै)

एकार्थबोधकस्यैव सामानाधिकरण्यपदार्थत्वादिति भावः॥ भाष्ये

**कर्मादीनामभावादिति।** (भा)

अनभिहितकर्मादीनामभावादित्यर्थः॥

---

यते। प्रधाननिरूपितशक्त्यभिधाने प्रथमैव। अभिहिते नेति प्रस-ज्यप्रतिषेधात्। आसने आस्ते शयने शेत इत्यत्र तु न प्रधानशक्तेर-

---

भेद्यतत्रेति दर्शितम्। 'अनभिहित इति'। यदि प्रसज्यप्रतिषेधः स्यात्तदो द्वयोः क्रिययोः कारकेऽन्यतरेणाभिहितेऽपि विभक्त्यभावप्रसङ्गः, प्रासाद आस्ते इत्यत्र सदिक्रियाया आक्रियायाश्चैकमधिकरणं प्रासादाख्यं

अन्वेति । (कै)

प्रथमेत्यर्थः । एतमभिसंबन्धं सामानाधिकरण्यरूपमितरसंबन्धानवच्छिन्नविशेष्यविशेषणभावः सामानाधिकरण्यम् ॥

द्वितीया भविष्यतीति । (कै)

अस्याशय उक्तः ॥

तस्मान्नार्थ इति । (कै)

भीमादिभ्यो द्वितीयादेः प्रकारान्तरेण वारणवद्व्यावर्त्यान्तरस्याभावाच्चेति भावः ॥ यत्तु एतद्बलेन निपातेनाप्यभिधानमिति वदन्ति । तदयुक्तम् । उक्तरीत्या निष्फलं च विभक्त्यर्थे यद्व्ययं तेन समासविधायकासंगतिश्चेति दिक् ॥

तन्निराकरणायेति । (कै)

ननु परिगणनप्रत्याख्यानमूलकोऽयं दोषः । यत्नः कृत्स्नेन परिगणनेऽपि दोषतादवस्थ्यादिति भावः ॥

नास्तीति । (कै)

अभिहितत्वावच्छिन्नप्रतियोगिताको भेदो नास्तीत्यर्थः ॥ ननु क्रियाभेदे शक्तेर्भिन्नत्वात्तदर्निरूपितस्याभिहितत्वेऽपि त्यागनिरूपितस्याभिहितत्वासिद्धिरित्यत आह ।

---

भिधानं येन प्रथमा स्यात् । एतच्च स्वादुमि णमुलिति सूत्रे कैयटादौ स्पष्टम् । हरिरप्याह ।

---

तद्यान्यतरेण तद्धितप्रत्ययेन यत्राभिहितं प्रवीदव्यस्मिन्प्रासादे इति तत्राभिहिते न भवतीत्युच्यमाने सप्तमी न स्यात् पर्युदासे त्वाश्रिप्रत्ययेन यदनभिधानं तदाश्रया सप्तमी सिद्धति । ननु च प्रासादा-

द्रव्यं चेति ॥ (कै)

तद्व्यतिरेकेणेति । (कै)

गुणसमूहो द्रव्यमिति भावः ॥

नतावत्प्रत्यक्षमिति । (कै)

शक्तेरतीन्द्रियत्वादित्यर्थः ॥

स्वरूपेति । (कै)

शक्तिस्वरूपेत्यर्थः ॥ अत एव संबन्धस्य दुर्ग्रहत्वात् तत्पूर्वकमनुमानमपि नेत्याह ।

तत्पूर्वकस्येति ॥ (कै)

ननु यथा दाहके सत्यपि दाहादिकार्यस्य कादाचित्कत्वानुपपत्त्या शक्तिरवगम्यते तद्वदिहाप्यस्तु अत आह

कार्यं चेति । (कै)

द्रव्यस्वरूपेति । (कै)

नतु तद्व्यतिरिक्तशक्त्यायत्तमित्यर्थः ॥

शक्तिसाधनपक्षं चेति । (कै)

एकस्यैव परस्परविरुद्धकर्त्तृकर्मादिव्यपदेशः शक्तिं गमयति । एवं

---

प्रधानेतरयोर्यत्र द्रव्यस्य क्रिययोः पृथक् ।
शक्तिर्गुणाश्रया तत्र प्रधानमनुरुध्यते ॥

---

स्यास्य द्रव्यस्य कारकत्वादभिहितत्वादन्यत्वं नास्ति । नैष दोषः, शक्तिः कारकं तत्र सदिक्रियाशक्त्यभिधानेप्यासिक्रियाशक्तेरनभिधानं, नन्वेवं प्रसज्यप्रतिषेधेऽपि या शक्तिरभिहिता तत्र मा भूद्विभक्तिर्या त्वनभि-

चैकनिरूपितशक्तेरभिधाने तच्छक्त्यन्तरस्यानुक्तत्वमेवेत्येतदाशयः ॥ पर्युदासपक्षे कुत इति प्रश्नानुपपत्तिरत आह

प्रसज्येति । (कै)

द्रव्यं कारकमित्यपि बोध्यम् ॥

एकैवासनक्रियेति । (कै)

तथा च तन्निरूपिता शक्तिरप्येकैवेति भावः ॥ प्रत्यभिज्ञयैकत्वावगतेः कथमन्यत्वमत आह

भिन्नपदेति । (कै)

प्रत्यभिज्ञा तु साजात्यनिबन्धनेति भावः ॥ नन्वेवमनभिहित इति सूत्रं व्यर्थमत आह

एकपदेति । (कै)

अत एव गोघ्नाय हन्ति हतं कटमानय भीमादिभेतीत्यादौ चतुर्थ्यादय इति भावः । तथा च पदभेदमर्थे आरोप्य तन्निरूपितशक्तिभेदोपीत्यभिप्रायः ॥ एकस्येत्यस्यार्थमाह

---

प्रधानविषया शक्तिः प्रत्ययेनाभिधीयते ।
यदा गुणे तदा तद्वदनुक्तापि प्रतीयत इति ॥

---

हिता तत्र भविष्यति । उच्यते, अनभिहिते कर्मणीत्येकत्वादीनामाधारनिर्देशः संख्या च द्रव्यधर्मो ऽतो ऽनभिहिते कर्मणीत्यादिभिरपि शक्तिद्वारेण द्रव्यमेवोच्यते, अनभिहिता या कर्मादिशक्तिस्तदाधारभूतं यद्द्रव्यं तस्यैकत्वादिषु विभक्तय इति । एवं च यदि प्रसज्यप्रतिषेधः

**आसनमित्यत्रेति ॥ (कै)**

आसनत्वसिद्ध्यनुपपत्तिलक्षणसामर्थ्येनाऽसिसाधनत्वमाह

**आस्यत इति । (कै)**

आस्ते इति श्लोकस्य व्याख्यानम् ॥

**संनिधीयत इति । (कै)**

अस्मिन्निति प्रत्ययार्थत्वेन निर्दिष्टवस्तुन आसिक्रियासंनिधान-मन्तरेणासनत्वायोगादासिक्रियासाधनत्वं कृत्प्रकृत्यर्थस्यासेः स्वाधि-करणद्रव्यद्वारेष्टव्यं तदाह ।

**एवं सामर्थ्यादिति । (कै)**

कर्त्ता भवतीत्यस्य कारकं साधनं भवति स्वप्रकृतिकल्युडन्तार्थ-द्वारेत्यर्थः ॥

---

यत इति । पर्युदासेप्यनभिहितां प्रधानशक्तिमाश्रित्यैव विधिः प्रवर्त्तते । एतेनपक्वं भुङ्क्ते दत्तं गच्छतीत्यादिपक्षद्वयेऽपि समर्थितं भवति । वस्तुतस्तु पक्त्वा भुज्यत इत्यादौ ओदनस्य पचिभुजिभ्यां न युगपच्छाब्दोऽन्वयबोधः ।

---

स्यात्ततोऽभिहितशक्तिद्वारेण द्रव्यस्याभिहितत्वात्प्रतिषेधः स्यात्, पर्युदासे त्वनभिहितशक्तिद्वारेणाविधिरिति स्पष्ट एव फलभेदः, यत्र तर्हि शक्तिभेदो नास्ति तत्र कथम् आसने आस्ते शयने शेत इति, अत्राप्यासनशयनादिशब्देरासनादिक्रियायोग्यं वस्तुमात्रमनुद्भूतशक्तिक-मभिहितमिति तस्य शक्त्युद्भवप्रतिपादनाय विभक्तिर्भविष्यति, यदि तर्हि पर्युदासो ऽयमिति निर्णीयते इह पक्त्वा भुज्यते ओदन इति

एकस्याचासेरिति। (भा)

भाष्ये आसि शेतेरप्युपलक्षणम् ॥ नन्वेवं ल्युट्प्रकृतिभूतासिक्रियायास्तिङन्तोपात्ता आसिक्रिया साधनमिति भाष्योक्तं न सिद्धमित्याशङ्कते ।

नन्विति। (कै)

केचित्तु आसनक्रियायास्तस्मिन्नित्यासनमिति व्युत्पत्तिः। प्रकृतिभूत आसिरस्त्यर्थः। तदर्थस्यापि लोके प्रयोगदर्शनात्। एवं शेतेरपि तिष्ठत्यर्थो जलाशय इत्यादौ उभयत्राप्यासिग्रहणमुपलक्षणमेवं च भाष्यं समञ्जसमेवेत्याहुः ॥

वस्तुमात्रमिति। (कै)

नाशादिक्रियाधिकरणत्वेन तद्बोधः ॥ किं त्वासनत्वेनेत्यर्थः। तदेवाह

अनुद्भूतशक्तिकमिति ॥ (कै)

---

किन्त्वन्यतरेण शाब्दः, अपरेणार्थः। तत्र च प्रथमाद्वितीययोर्थंवस्येव। पक्त्वा भुज्यते ओदनः। अर्थादोदनमेव पक्त्वेति। न ह्येककाः पक्त्वेत्यादि सम्भवति। न चोपस्थितपरित्यागोनुपस्थितकल्पना च न्याय्या।

---

भुजिप्रत्ययेनाप्यभिहित ओदने क्त्वाप्रत्ययेनानभिधानमाश्रित्य द्वितीया प्राप्नोति भावे हि क्त्वाप्रत्ययः, प्रसज्यप्रतिषेधे तु भुजिप्रत्ययेनाभिधानमाश्रित्य प्रतिषेधः सिद्ध्यति, उच्यते, नात्रौदनस्य युगपदुभाभ्यां शाब्द एवान्वयः किं तर्हि भुजिनैव सन्निधानात्तु पचिनान्वयः, केवलशाब्दव्यापारनिरूपणे तु किमिष्टकाः पक्त्वौदनो भुज्यते उतौदनमेवेति न

शब्दव्युत्पत्तये इति । (कै)

अनुलोमादिवद्रूढा एवेत्यर्थः ॥ अत एव पक्व इत्यादौ केनेति कर्त्राकाङ्क्षावदासनमित्युक्तेन तदाकाङ्क्षा । अत एवाग्निः साधनमित्यस्य साधनान्तरनिरासे तात्पर्यमुक्तम् ॥ प्रयोजनं वदन् विचारस्य प्रकृते संगतिमाह

यदि द्रव्यमिति । (कै)

अत्र द्रव्यमित्यस्य शक्त्यनाविष्टं द्रव्यमित्यर्थः ॥ ननु वृक्षशब्दोपात्तस्याधिकरणत्वेऽपि यच्छब्दोपात्तस्य कर्तृत्वं भविष्यति शब्दभेदेन भेदाद् अत आह

अयं भाव इति । (कै)

शब्दभेदमात्रेणार्थभेदासिद्धिरिति भावः ॥ वृक्षे देवदत्तस्तिष्ठति वृक्षं पश्येत्यादौ दोषाच्च ॥

द्रव्यमिति । (कै)

शक्तिरहितं शुद्धद्रव्यमित्यर्थः ॥

---

ओदनं पक्त्वेति प्रयोगे तु भुज्यत इत्यत्रार्थे ओदनस्य कर्मता । अत एव घटं कर्तुं शक्यत इत्यपि भवत्येवेति पस्पशायां कैयटः । तस्मा-

---

ज्ञायते, अतः शब्दव्यापारापेक्षयाभिधानमेवेति द्वितीया न भविष्यति, अनभिहितवचनमनर्थकं प्रथमाविधानस्यानवकाशत्वात्, ततः कट इत्यादिषु द्वितीयादयो मा भूवन्निति सूत्रारम्भः, यदि चात्रापि स्युः तदानीं प्रथमा स्यात् । नन्वनवकाशत्वात्प्रथमा भवन्ती ततः कट

तन्निबन्धनेति। (कै)

एकरूपत्वनिबन्धनेत्यर्थः॥

नानार्थक्रियेति। (कै)

अर्थक्रियानिरूपितभिन्नकारणत्वनिबन्धन इत्यर्थः॥

नानाशक्तीति। (कै)

एवं च प्रसज्यप्रतिषेधेऽपि न दोष इति ध्वनितः। अत्र हि पक्षे अभिहितायां शक्तौ नेत्यर्थः। तत्र या शक्तिरभिहिता तस्यां मा भूत्प्रत्ययः। या त्वनभिहिता तद्बोधनाय स्यादेव प्रत्यय इति बोध्यम्॥

सूत्रं प्रत्याख्यातमिति। (कै)

एकत्वादयो विभक्त्यर्था इति पक्षेऽपीत्यर्थः॥ भाष्ये

अनवकाशत्वादिति। (भा)

नन्वेवं कृतः कट इत्यादावेव न कटं करोतीत्यादावित्यत्र किं

---

पर्युदासे एकवाक्यत्वं समाससौष्ठवं चेत्येव। शक्तिरूपन्तु पक्षद्वयेऽपि तुल्यमिति स्थितम्। एतेन विप्रतिषेधोऽपि संवर्ध्य स्वयं छेत्तममाम्नत-

---

इत्यादावेव भवतीति न पुनः कटं करोतीत्यादावपीति, कुतोऽयं नियमः, उच्यते, कृतः कट इत्यादौ यद्यपि कृतशब्दसन्निधाने कटस्य कर्मता प्रतीयते तथापि तत्र वाक्यार्थत्वादव्यतिरिक्त एव प्रातिपादिकार्थ इति प्रथमा भविष्यति यथा वीरः पुरुष इति, कटं करोतीत्यत्र तु कटशब्देनैव कर्मशक्तिमानर्थोऽभिधीयत इति व्यति-

विनिगमकमिति चेन्न। न मात्रग्रहणेनानभिहितविभक्त्यर्थाधिक्ये प्रथमाया अप्रवृत्तेः कृत इत्यादौ तद्वृटकप्रत्ययेनाभिधानेनाधिक्याभाव इति भावः॥

अस्तिर्भवन्तीपर इति। (कै)

प्रथमाया अपि कर्मणि द्वितीयेत्यादिसाहचर्येण क्रियायोग एव प्रवृत्तेरिति भावः॥

ज्ञानं च सत इति। (कै)

बुद्धिसत इत्यर्थः॥ अनवकाशत्वमुक्त्वा विप्रतिषेधोपन्यासोऽसंगत इत्यत आह

सावकाशत्वमभ्युपगम्येति। (कै)

नीलमिदं न तु रक्तमित्यादौ रक्तत्वादिनिवृत्तिपरे वाक्ये सत्ताया अनावश्यकत्वादस्तिर्भवन्तीपर इत्यस्याभावात्साहचर्यं च सर्वत्र न व्यवस्थापकमित्यभिमानः। वैतण्डिकोक्तिरियमिति तात्पर्यम्।

---

मिति व्याख्यातम्। साम्प्रतमिति निपातेनाभिहितत्वात्। युक्तमिति हि तदर्थः। परिगणनं तु प्रत्याख्यातमेव। इह हरदत्तेन भाट्टमते

---

रिक्तत्वात्प्रातिपदिकार्थस्य प्रथमा न भविष्यति। नन्वकारकेषु सावकाशा प्रथमा यथा वृक्ष इति, तन्न। अत्राप्यस्तीति प्रतीते, कर्तृत्वात्तृतीयाप्रसङ्गः, यत्र ह्यन्यत्क्रियापदं न श्रूयते तत्रान्तरङ्गत्वादस्तीति गम्यते लब्धसत्ताकस्य हि विशेषणान्तरयोगो भविष्यति, अथापि यत्र विशेषणान्तरनिवृत्तौ तात्पर्यं न क्रियासम्बन्धे यथा नीलमुत्पलं न

अनेन वस्तुतो निरवकाशत्वमेवेति सूचितम् । उक्तरीत्या तत्रापि सत्त्वाक्षेपात् । अत एव तिङ्समानाधिकरणे प्रथमेति न्यासः संगच्छत इति बोध्यम् । स्पष्टं चेदं प्रातिपदिकार्थसूत्रे भाष्ये ॥

अशेषत्वादिति । (कै)

अभिहितः सोऽर्थोऽन्तर्भूतः प्रातिपदिकार्थः संपन्न इत्यनेकमिति सूत्रोक्तरीत्या प्रातिपदिकार्थत्वेन प्रातिपदिकार्थकारकव्यतिरिक्तत्व-रूपशेषत्वाभावादिति भावः ॥

षष्ठी प्राप्नोतीति । (कै)

न च कृत्यानामिति विभक्तेन षष्ठीनिषेधात्कथं तत्प्राप्तिः । न च नात्रोभय प्राप्तिः। तदधिकाराभावेनोभयप्राप्तेरपि सत्त्वादिति वाच्यम् । एकसूत्रपक्षे दोषात् । योगविभागस्तु भाष्यकृता वक्ष्यते न वार्त्तिककारेण ॥

---

कारकविप्रिया संख्या विभक्त्यर्थ इत्युक्तं तत्तु कर्त्रधिकरणास्य यथाश्रुत-भाष्यस्वरसमनुसृत्य कथञ्चिन्नेयम् । वस्तुतस्तु भाट्टमते प्रकृत्यर्थेन संख्य-

---

रुक्तं राज्ञोयं पुरुषो न देवदत्तस्येति, नह्यत्र सौत्वमुत्पन्नमस्ति राज्ञः पुरुषोऽस्तीति प्रतीतिरतोऽस्त्येवाकारकमवकाश इत्युच्यते एवमपि विप्र-तिषेधात्प्रथमा भविष्यति, द्वितीयादीनामवकाशो यत्र प्रातिपदिका-र्थस्य व्यतिरेकः, कटं करोतीति प्रथमायास्त्वकारकमवकाशो सौत्व-मुत्पन्नमिति, अतः कट इत्यत्रोभयप्रसङ्गे परत्वात्प्रथमैव भविष्यति । ननु तामपि बाधित्वा परत्वात् षष्ठी प्राप्नोति, शेषलक्षणा षष्ठी

## यद्येकत्वादय इति । (कै)

प्राधान्येनविभक्तिद्योत्या संख्येव कारकं तद्विशेषणत्वेन तदेदं सूत्रं कार्यमित्यर्थः । एवमग्रेऽपि व्याख्येयम् ॥ उक्तार्थानामिति न्यायः शास्त्रोपात्तप्रधानार्थविषय एव । कारकस्य प्राधान्येन तत्त्वे तु व्यर्थम् ॥ ननु तदापि द्योतकसमावेशस्य दृष्टत्वात् कृतः कट इत्यादौ क्रियते कट इत्यादौ च तद्वारणाय स आवश्यक इति चेन्न । आद्ये विशेष्यत्वेन भानेन तस्य द्योत्यत्वासंभवादन्त्ये क्रियां प्रति यस्य विशेषणत्वेऽपि कटपदार्थे तत्त्वाभावेन तदुत्तरद्वितीयाद्योत्यताया असंभवाच्चेति दिक् ॥

---

या च कारकत्वादिशक्तयो विशेष्याः । अत एवैकशक्तिकोक्तावुक्तानेक-विधिस्तत्रतत्र स्वीकृत इति दिक् ।

---

प्रातिपदिकार्थमात्रस्य प्रथमाविधावुपयोगादप्रेषत्वान्न भविष्यति । इद तर्हि कर्त्तव्यः कट इति कृत्प्रयोगे प्रथमां बाधित्वा 'कर्तृकर्मणोः कृती'ति षष्ठी स्यात् तत्प्रतिषेधार्थमनभिहिताधिकारः कर्त्तव्यः, तदेवं संख्याविभक्त्यर्थ इत्यस्मिन्पक्षे कर्त्तव्यं सूत्रमिति स्थितम् ।

# कर्मणि द्वितीया । २ । ३ । २ ॥

## सामीप्यसंबन्धे इति । (कै)

समयाशब्दप्रयोगस्यापि सामीप्यस्य तत्प्रधानार्थनिरूपितसंबन्धत्व-मपि । यथा राज्ञः समित्यत्र स्वत्वञ्चेति भावः । सामीप्यान-न्तर्यादीनां न षष्ठ्यर्थत्वमिति तु समभिव्याहृतपदार्थभिन्नसामी-प्यादिपरम् ॥

---

कर्मणि द्वितीया । द्वितीयादयः शब्दाः सुपां त्रिकेषु वर्तन्ते । समं स्यादश्रुतत्वादिति न्यायात् । पूर्वाचार्यव्यवहाराच्च । इह स्वादि-सूत्रेणैकवाक्यतया विधिः भिन्नवाक्यतया नियमो वा । सोऽपि प्रकृतान-र्थानपेक्ष्य प्रत्ययनियमो वार्थनियमो वेति सर्वे पक्षाः साधवः । उक्तं च ।

सुपां कर्मादयोऽप्यर्थाः संख्या चैव तथा तिङाम् ।
प्रसिद्धो नियमस्तत्र नियमः प्रकृतेषु वेति ।

व्याख्यातं चेदं प्रथमे । इह च तिङामिति स्वरसात्सुप्स्वपि कर्मण्येव वाच्यं न तु कर्मत्वम् । न च तिङ्क्ष्वपि कर्मत्वमेवार्थ इति वाच्यम् । तयोरेवेत्युत्तरसूत्रेऽपि तथात्वापत्तौ घटः कृत इत्यादावभेदा-न्वयानुपपत्तिप्रसङ्गात् । तथा च लःकर्मणि, कर्मणि द्वितीयेति सूत्र-स्वरसोऽपि सङ्गच्छते । घटमित्यत्र च घटः कर्मतादात्म्ये आनयनादौ

---

“कर्मणि द्वितीया” । ‘द्वितीयादयः शब्दा इति’ । स्वनिकायप्रसि-द्धेरेवेत्यर्थः । ‘उभसर्वतसोरिति’ । उभयसर्वशब्दयोस्तसिलन्तयोः प्रयोग इत्यर्थः । उभयशब्दैकदेश उभशब्दोऽनुकृतः । उभशब्दस्य तसिलन्तस्याभा-

उपर्यर्थे वर्त्तते इति । (कै)

उपरि सामीप्ये वर्त्तत इत्यर्थः ॥

संबोधनेति । (कै)

संबोधनविभक्तेः पदान्तरानपेक्षत्वादित्यर्थः ॥

उभसर्व इत्येताभ्यामिति (भा)

भाष्यस्य एतत्प्रकृतिकाभ्यामित्यर्थः ॥ उभशब्दात्तसोनुत्पत्त्यास्या-
युक्तत्वं परिहरन्नुक्तस्यार्थस्य वार्त्तिकाद्यथा लाभस्तथा दर्शयति

---

कर्मत्वेन संसर्गेण विशेषणत्वम् । तथा च प्रकारतया संसर्गविधया वेति द्विधाकर्मत्वादिभानमित्येकः पक्षः । शक्तिः कारकमिति भाष्यस्वरसात्सैव वाच्येत्यपरः । अनन्यलभ्यस्य शब्दार्थतया आधार आधेयं वा द्वितीयार्थः । ओदनं पचतीत्यत्र हि ओदनरूपो य आधारस्तद्विशिष्टा विक्लित्तिर्भासते वैशिष्ट्यं त्वाधेयता ओदनाधेया वा विक्लित्तिरर्थः । आधेयरूपप्रत्ययार्थस्य प्रकृत्यर्थं प्रति विशेष्यत्वात् । आधेयत्वमेव च संसर्ग इति पक्षान्तरम् । आकृत्यधिकरणन्यायेनाधारत्वाधेयत्वे एवार्थे इति चापरम् । संसर्गा एवैते । तात्पर्यग्राहिका एव परं विभक्तय इति मतान्तरम् । सर्वेऽप्यमी पक्षा हेलाराजीयादौ तत्रतत्र स्थिता भाष्यादिसम्मताश्चेति दिक् । ओदनं पचतीत्यादौ,

उभसर्वतसोः कार्या धिगुपर्यादिषु त्रिषु ।
द्वितीयाम्रेडितान्तेषु ततोऽन्यत्रापि दृश्यते ।

---

वात् तस्य द्विवचनटाब्विषयत्वात्, धिगित्यविभक्तिको निर्देशः । 'आम्रे-डितान्तेष्विति' । कृतद्विर्वचनेष्वित्यर्थः । 'उभयतः सर्वत इति' । पञ्चम्या-स्तसिल् । 'धिगिति' । निन्दार्थोयम् । 'उपर्युपरीति' । 'उपर्यध्यधः समा-

उभसर्वयोरिति ॥ (कै)

ननु वृत्तिविषये पूर्वमेवायचः प्रवृत्तेरुभप्रकृतिकत्वं न तस्य दृश्यत आह

उभयेति ॥ (कै)

उभेति । (कै)

तद्घटितोभयशब्दलाक्षणिकमिति भावः ॥

---

अस्यार्थः। उभयशब्दसर्वशब्दयोस्तसिलन्तयोः प्रयोगे द्वितीया कार्या। उभशब्देन ह्युभयशब्दो लक्ष्यते अन्यथा तसिलसम्भवात्। उभशब्दो हि द्विवचनटाब्विषय इत्युक्तम्। धिगित्यत्र सप्तम्या लुक्। प्रकृतिवदनुकरणमित्यतिदेशात्। न त्वविभक्तिकः। गवित्ययमाहेत्यत्र यथा पदान्तत्वाभावाल्लोपः शाकल्यस्येत्यस्याप्रवृत्तिस्तथेह अशक्तावप्रवृत्ति-प्रसङ्गात्। न चायं गान्त एवेति वाच्यम्। कस्य च दइत्यस्याप्रवृत्तौ धकिदित्यस्यासिद्धिप्रसङ्गात्। आम्रेडितान्तेष्विति। कृतद्विर्वचनेष्वि-त्यर्थः। उभयतः कृष्णं गोपाः। सर्वतः कृष्णम्। धिक् कृष्णाभक्तम्। उपर्युपरि लोकं हरिः। अध्यधिलोकम्। अधोधो लोकम्। कथं तर्हि, उपर्युपरि बुद्धीनां चरन्तीश्वरबुद्धयः। उच्यते। उपरिबुद्धीनां उत्तानबुद्धी-नामुपरि चरन्तीत्यर्थः। एवं चाम्रेडितान्तत्वाभावान्न द्वितीया। यद्वा। प्रतिपदोक्तस्योपर्यध्यधसः सामीप्य इति कृतद्वित्वस्यात्र ग्रहणम्। तेन वीप्सादिर्वचने सति नास्य प्रवृत्तिः। ततोन्यत्रापीत्युक्तम्, तान्परिगणयति

---

मीप्य' इति द्विर्वचनं, ततोन्यत्रापीत्युक्तं, तानेवान्यान्परिगणयति। 'अभित इत्यादि'। 'अभितो ग्राममिति'। उभयत इत्यर्थः। 'परित इति'। सर्वत इत्यर्थः, 'पर्यभिभ्यां चे'ति तसिल्, आभिमुख्यवृत्तेरपि विभक्तिप्रति-

ननु कर्मप्रेति । (कै)

अन्यथा कर्मप्रवचनीययुक्त इत्येव सिद्धं स्यादित्यर्थः ॥

---

वृत्तिकारः, अभितःपरितःसमयानिकषाहाप्रतियोगेपीति । अभितः ग्रामम् । उभयत इत्यर्थः । परितः ग्रामम् । सर्वत इत्यर्थः । पर्यभिभ्यां चेति तसिल् । आभिमुख्यवृत्तिरपि विभक्तिप्रतिरूपको निपातो ऽभितःशब्दोस्ति सोपीह गृह्यते । समयानिकषाशब्दौ समीपपर्यायौ । ग्रामं समया निकषा वा । हाशब्दः शोकवृत्तिः । हा ग्रामभक्तम् । तस्य शोच्यत इत्यर्थः । अयमपवादो द्वितीया । सम्बोधने त्वन्तरङ्गत्वात्प्रथमैव । हा तातेति यथा । एतेन धिङ्मूर्खेति प्रयोगो व्याख्यातः । बुभुक्षितं न प्रतिभाति किंचित् । एष प्रतिशब्दः क्रियाविशेषकत्वादुपसर्गो न तु कर्मप्रवचनीयः । एवमन्येऽपि दृष्टिप्रग्रहणात्साधनीयाः । तद्यथा, चैत्रं यावत्कीर्तमिति । परमपुरुषाराधनमृते इति च । तथा च भाष्यसूत्रम्, ऋते द्वितीया चेति, चकारात्पञ्चमी । सा चास्मच्छास्त्रे अन्यारादित्यनेन विधास्यते ॥

---

रूपको निपतोभितःशब्दोस्ति सोपि गृह्यते, समयानिकषाशब्दौ समीपवचनौ गृह्येते, हाशब्दः शोकादिवृत्तिः, हा कन्ये इत्यादौ कारकविभक्तित्वादन्तरङ्गत्वात्सम्बोधनविभक्तिर्भवति । 'बुभुक्षितं न प्रतिभातीति' । प्रतिरत्र क्रियाविशेषकत्वादुपसर्गो न कर्मप्रवचनीय इति वक्ष्यते ।

# तृतीया च होश्छन्दसि । २ । ३ । ३ ॥

अस्योदाहरणेऽग्निहोत्रशब्दो हविःपरस्तत्र द्वितीया । तत्समानाधिकरणयवागूशब्दादनेन तृतीयापि । विरुद्धविभक्त्यनवरुद्धत्वाच्च सामानाधिकरण्यमिति सूत्रमतम् भाष्यमतं च । "एवं तर्हि तृतीयापि सिद्धे"त्यादेर्भाष्यस्योक्तिप्रत्युक्तिक्रमेण पूर्वपक्ष्युक्तित्वात् ॥ ननु जुहोतेः प्रीणात्यर्थत्वेऽग्निहोत्रशब्दस्याग्न्यर्थत्वे करणत्वात् तृतीया सिद्धिमाशङ्क्याह

---

तृतीया च होश्छन्दसि ॥ जुहोतेः कर्मणि तृतीया स्याद् द्वितीया च छन्दसि । यवाग्वाग्निहोत्रं जुहोति । अग्निहोत्रशब्दोऽत्र हविषि वर्तते । यस्याग्निहोत्रमधिश्रितममेध्यमापद्यते इत्यादिप्रयोगदर्शनात् । अग्नये हूयत इति व्युत्पत्तेश्च । जुहोतिः प्रक्षेपे । अस्मिन्नेव च प्रयोगे यवागूशब्दात्तृतीया । अग्निहोत्रशब्दाच्च द्वितीया । विरुद्धार्थकविभक्त्यनवरुद्धत्वात्सामार्थ्ययोरभेदान्वयः । यवाग्वाख्यं हविरग्नौ देवतोद्देशेन त्यक्त्वा प्रक्षिपतीत्यर्थः । एतत्सूत्रं भाष्ये प्रत्याख्यातम् । अग्निहोत्रशब्दो हि ज्योतिष्यपि

---

"तृतीया च होश्छन्दसि" ॥ 'यवाग्वाग्निहोत्रमिति' । क्व पुनरग्निहोत्रशब्दो वर्त्तते हविषि, तेष्वग्निहोत्रमधिश्रयेत्, अग्निहोत्रं शृतशृतायत्, तदाऽऽरयेस्याग्निहोत्रमधिश्रितममेध्यमापद्येतेत्यादिषु दर्शनात् जुहोतिरपि प्रक्षेपे एकस्मिन्नेव प्रयोगे यवागूशब्दात् तृतीया अग्निहोत्रशब्दाद् द्वितीया यवाग्वाख्यं हविर्देवतोद्देशेन प्रक्षिपतीत्यर्थः । अयं योगः शक्योऽवक्तुं, कथम्, अग्निहोत्रशब्दो ज्योतिष्यपि वर्त्तते अग्निहोत्रं प्रज्वलित-

**देवतेति।** (कै)

अग्निहोत्रशब्दो हविःपरः। तद्विशेषणं यवागूरिति भावः॥ यद्यपि अग्नौ हविरिति चिन्त्यं पदे जुहोति अग्नौ जुहोतीत्यादिश्रुतिविरोधात्। तस्मादेवश्चाधारे प्रक्षेप इत्येव युक्तं तथापि प्रकृताभिप्रायमेतत्। तत्र यवाग्वाः कर्मत्वाद् द्वितीया प्राप्तेत्यर्थः॥ चकारेण द्वितीयाविधानात् प्रश्नानुपपत्तिमाशङ्क्याह

**किमप्राप्तेति॥** (कै)

प्रयोजनान्तरसिद्धमेतस्यावश्यकत्वाद् सत्येतस्मिन्नित्ययुक्तमत आह

**नहीति।** (कै)

एवं च बुद्धावमति तस्मिन्नुपायान्तरपरमिति भावः॥ "एवं तर्हि तृतीयापी"त्यादिभाष्यं पूर्वपक्ष्युक्तिः। अर्थभेदात्मा न युक्तेति स्फुटत्वाद् भाष्ये नोक्तम्॥

---

वर्तते। अग्निहोत्रं प्रज्वलितमिति दर्शनात्। ह्वयतेश्चिदिति ग्रुत्पत्तेश्च। जुहोतिश्च। प्रीणने। तद्यदा यवागूशब्दात्तृतीया तदा यवाग्वाग्निं प्रीणयतीत्यर्थः। यदा तु द्वितीया तदा यवाग्वाख्यमग्निहोत्रं हविर्द्रव्यं प्रक्षिपतीत्यर्थ इति। मीमांसकास्त्वाहुः। अग्निहोत्रशब्दः कर्मनामधेयं तत्प्रख्यं चान्यशास्त्रमिति न्यायात्। दृश्यते च स एष यज्ञः पञ्चविधोऽग्निहोत्रं

---

मिति जुहोतिरपि प्रीणने तद्यदा यवागूशब्दात् तृतीया तदा यवाग्वाग्निहोत्रं प्रीणयतीत्यर्थः, यदा तु द्वितीया तदा यवाग्वाख्यं द्रव्यमग्निहोत्रं हविरग्नौ प्रक्षिपतीत्यर्थः। मीमांसकास्त्वाहुः। अग्निहोत्रशब्दः कर्मनामधेयमिति दृश्यते च स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासा-

अग्निष्विति। (कै)

बहुवचनेन सामानाधिकरण्यावगतेरर्थान्तरासम्भवाद्गौणात्यर्थत्वमित्यर्थः। यत्तु मीमांसका अग्निहोत्रशब्दस्य कर्मनामधेयत्वं तत्प्रख्यन्यायात् स एष यज्ञः पञ्चविधोऽग्निहोत्रं दर्शपूर्णमासाविति दर्शनाच्च। एवं च करणभूते होमे समानाधिकरणस्याग्निहोत्रस्य करणत्वात् तृतीयायां प्राप्तायां पक्षे द्वितीयार्थमिदं यवाग्वा अपि करणत्वादेव तृतीया सिद्धेति। तन्न सूत्रानुगुणं नापि भाष्यानुगुणं कर्मणीत्यनुवृत्तेः। पाणिनीयस्मृतेर्वचनरूपत्वेन जैमिनीयन्यायरूपत्वेन तद्बाधकताया अस्या उचितत्वाच्च। एवं च यवाग्वाग्निहोत्रं जुहोतीत्यादिवाक्ये नामधेयत्वाभावोऽत एव यवागूमग्निहोत्रं जुहोतीत्यादिसिद्धिरिति दिक्॥

---

दर्शपूर्णमासावित्यादि। एवं स्थिते भावार्थाधिकरणन्यायेन करणकोटिनिक्षिप्ते होमे सामानाधिकरण्यापन्नस्याग्निहोत्रस्य करणत्वात्तृतीयायां प्राप्तायां पक्षे द्वितीयार्थमिदं वचनमिति तन्तु सूत्रसन्दर्भविरुद्धम्। कर्मणीति ह्यनुवर्तते॥

---

वित्यादि तस्य वा एतस्याग्निहोत्रस्य सप्त च शतानि च एतद्वा अग्निहोत्रमन्येद्युर्हूयते अजरामर्यं वा एतदग्निहोत्रमिति च त इत्याहुः। करणत्वात् तृतीयायां प्राप्तायां पक्षे द्वितीयार्थं वचनम्, इदं च सूत्रानुगुणं न भवति कर्मणीति हि वर्तते॥

# अन्तरान्तरेण युक्ते। २। ३। ४॥

अन्तरेणेति। (कै)

तृतीयान्ताभिप्रायेण प्रश्न इत्याह

अन्तरेति। (कै)

नतशब्दोऽज्ञातार्थक इति भावः॥

बहिरङ्गत्वादिति। (कै)

अर्थकृतबहिरङ्गत्वस्य शास्त्रेनाश्रयणाच्चिन्त्यमिदम्॥ लाक्षणिकत्वेन परिहारे तेनैवान्तरेणेत्यस्य व्यावृत्तौ भाष्यानुपपत्तिस्तदवस्था पूर्वस्मादविशेषस्येत्यत आह

अथवेति। (कै)

साहचर्यमत्र सादृश्यम्॥

---

अन्तरान्तरेण युक्ते॥ आभ्यां योगे द्वितीया स्यात्। अन्तराशब्दः समभ्यन्तस्य मध्य इत्येतस्यार्थे वर्तते। अन्तरेणशब्दस्तु तत्र च विनार्थे च। अन्तरा त्वां मां च हरिः। म्याक्षसूत्रामलमन्तरेण स्थितश्चलचामरयोर्द्वयं सः। अन्तरेण हरिं न सुखम्। ननु मध्यस्यावध्यपेक्षतया यथा-

---

"अन्तरान्तरेण युक्ते"॥ 'अन्तरान्तरेणशब्दाविव्यादि'। ननु यथा गौर्नीवि बद्धा नेतरेतरत्राणाय भवति तादृगेतत् द्वयोरपि निपातत्वव्यभिचारात् सत्यं, साहचर्यात्साजात्यं लभ्यते सजातीयविजातीयभावे सजातीयप्रत्ययो भवति तद्यथा गुरुभार्गवावित्युक्ते ग्रहयोरेव प्रतीतिर्भवति न त्वाचार्यपरशुरामयोः, यदान्तराशब्देनातृतीयान्तेन साहचर्यादन्तरेणेत्यस्याप्यतृतीयान्तस्य ग्रहणं स च निपात एव, तथान्तरेण शब्देनाटाबन्तेन

## कोऽन्यः सहाय इति (भा)

भाष्यप्रयोगे इति शेषः। यथा कार्ये सदृशस्यैव सहायत्वं तथा प्रयोगेऽपीति भावः॥

## परस्परेति। (कै)

अन्तरासाहचर्यादन्तरेणेत्यव्ययतृतीयान्तं तत्साहचर्याट्टाबन्तमेवेति निपातयोरेव ग्रहणसिद्धिरिति भावः। न च परस्परसाहचर्यादनव्यययोरेव ग्रहणं कुतो नेति वाच्यम्। व्याख्यानात्। यत्त्वव्यययोः स्वरादौ चादौ वा पाठेन परस्परसाहचर्यसंभवेऽप्यनव्यययोः पाठाभावात्साहचर्यस्य वक्तुमशक्यत्वादिति। तन्न। उक्तभाष्येण सादृश्येन सादृश्यस्य सहप्रयोगे नियामकताया उक्तत्वात्। वस्तुतस्तु युक्तग्रहणात् संबन्धिनि नित्यसाकाङ्क्षयोरेवैतयोर्ग्रहणम्। न च टाबन्तान्तराशब्दस्तथा। अनावृतदेशत्वेन परिधानीयत्वेनैव च तेन बोधादिति भाष्याशयः॥

## अस्य गोर्द्वितीयेनेति। (कै)

द्वितीयशब्दोऽत्र सहायवाची मध्ये इत्यर्थकेनान्तरेणेत्यादिना कमण्डलोरपि योगात् प्रश्नानुपपत्तिरत आह

---

वधिभूताभ्यां युष्मदस्मदर्थाभ्यां चामरद्वयेन च योगस्तथा आधेयेनापि सह। तस्मादाधेयादपि द्वितीया स्यात्। नैवम्। तत्रान्तरङ्गतया प्रथमाया एवोत्पत्तेः। तस्माद्विशेषणादियं षष्ठ्यपवादभूता द्वितीया न तु विभक्त्या-

---

साहचर्यादन्तराशब्दस्याप्यटाबन्तस्यैव ग्रहणं स च निपात एव। 'षष्ठ्यपवादो योग इति'। असत्यस्मिन्योगे शेषत्वात् षष्ठी प्राप्नोति सति तस्मिन्नप्रयुक्तत्वात् षष्ठी न भवतीत्यपवादत्वमेतत्, 'मध्यमाधेयेति'। आश्रय-

**अन्तरेति। (कै)**

अन्तरेत्यादेर्मध्यवर्तीत्यर्थः॥ ननु

**कमण्डलोरिति। (कै)**

अभेदस्य सत्त्वेऽपि तस्य षष्ठीप्रयोजकत्वाभावेन तदपवादविभक्तिप्रयोजकत्वमपि नेति भावः॥

**आधारार्थत्वादिति। (कै)**

आधारस्य तन्त्रत्वादित्यर्थः। तस्य तत्परतन्त्रत्वे समानन्यायेनाधेयपरतन्त्र आधार इति कमण्डलोरपि तद्योग इति भावः॥

**नत्वाधाररूपेति। (कै)**

आधारशक्तिप्रधानेत्यर्थः॥

**तत्स्थानमिति। (कै)**

अन्यथा तत्र स्थानमिति वक्तव्यं स्यादिति भावः॥

**कमण्डलुयोगेति। (कै)**

अत्यन्तभेदप्रतिपादनद्वारेत्यर्थः॥

---

रपीति स्थितम्। अथ टाबन्तेनान्तराशब्देन तृतीयान्तेनान्तरेणेत्यनेन च योगे कुतो नेति चेत्। प्रतिपदोक्ततया तयोरेवेह ग्रहणात् परस्परसाहचर्याच्च। तद्यथा, गुरुभार्गवावित्युक्ते ग्रहयोरेव प्रतीतिर्मत्वाचार्यपरमु-

---

परतन्त्रमित्यर्थः, सप्तम्यन्तस्य मध्यशब्दस्यार्थे वर्त्तत इति यावत्। 'अन्तरा त्वां च मां च कमण्डलुरिति'। तव च मम च मध्ये कमण्डलुरित्यर्थः। अत्र यथा मध्यस्यावध्यपेक्षायामवधिभूताभ्यां युष्मदस्मद्भ्यां योगस्तथाऽधारस्याधेयपरतन्त्रत्वादाधेयेन कमण्डलुनापि योगात्ततोऽपि द्वितीया प्राप्नोति, नैष दोषः कमण्डलुरित्यत्र तिष्ठत्यस्तीति वा क्रियापदानुषङ्गात्कमण्डलुः कर्त्ता स च तिङाभिहित इति प्रथमैव भविष्यति कारकविभक्तित्वात्, तदेत'त्सह-

उद्भूताधारेति। (कै)

तस्य चाधेये आधाराधेयभावेनैवान्वये साधुत्वं न तु केनचिद्भेदान्वये इति भावः। उपपदविभक्तेरिति न्यायमूलकं न वाचनिकमित्याह

सा चेति॥ (कै)

क्रियाद्वारक इति। (कै)

सर्वत्र सम्बन्धस्य किञ्चित् क्रियाकारकभावमूलत्वाद् यथा स्वत्वं क्रयादिनिबन्धनमिति भावः। युक्तिरत्र शिथिला सर्वत्र प्रथमाया एवापत्तेर्युष्मदाद्यर्थेऽपि सत्ताकर्तृत्वस्याव्यभिचारात्। न चैवं सूत्राणां वैयर्थ्यं न्यायानुगतेऽर्थे किं कुर्मस्तस्माद्वचनमेवेदम्। अत एव नमस्यति देवानित्यत्रानेन न्यायेन द्वितीयां वक्ष्यति भाष्यकृत्। तत्र हि क्रियाकारकभावेनैवान्वयादित्यन्ये। न च विशेषणे सम्बन्धस्योद्भूततया प्रतीतेस्तत्रैव षष्ठ्यपवादत्वेन सम्बन्धार्थिकैव द्वितीयेति वाच्यम्। प्रथमापवादत्वस्यापि सम्भव इत्याशयात्। उपपदविभक्तेरिति वचनात्तु षष्ठ्यपवादत्वमेव न प्रथमापवादत्वमित्युत्तराशयः। प्रथमाया अपि कारकविभक्तित्वं क्रियाजनकेऽर्थे तस्या अपि विधानादिति बोध्यम्। तदुक्तं "कमण्डलोः कर्तृत्वं तिङाभिहितमिति"॥

---

ग्रामयोः। तेन किमनयोरन्तरेण गतेनेति सिद्धम्। किमनयोर्विशेषेण ज्ञातेनेत्यर्थः। युक्तग्रहणान्नेह। अन्तरा त्वा मां च कृष्णस्य मूर्तिः। इह कृष्णान्न द्वितीया। अन्तरेत्यनेनानन्वयात्॥

---

युक्ते प्रधान' इत्यत्रोपपादयिष्यामः। निपातयोर्ग्रहणादिह न भवति किं तेन तयोरन्तरेण ज्ञातेन, विशेषवचनोयम् अन्तरायां पुरि वसतीति स्तूपस्य प्राकार इति नात्र स्तूपस्यान्तराशब्दार्थेन योगः किं तर्हि प्राकारेण॥

# कालाध्वनोरत्यन्तसंयोगे । २।३।५॥

आद्यर्थमित्युत्तरं लादिभिरभिधानं यथा स्यादिति भाष्ये पाठमभिप्रेत्याह

**ननु कर्मणीति ।** (भा)

अकर्मकधातुभिर्योग इति तु न विधायकमिति प्रागेव निरूपितम् । आद्यर्थमित्युत्तरं भाष्ये पाठान्तरं लादिभिरभिहिते द्वितीया मा भूदिति लयुक्तं प्रकारान्तरेण लप्राप्तेरभावात् ॥ नन्विदं वार्त्तिकं सकर्मकाकर्मकविषयमकर्मकविषयं वा । नाद्यः ।

---

कालाध्वनोरत्यन्तसंयोगे ॥ इह द्वितीया स्यात् । मासमास्ते। यद्यपीह कर्मत्वादेव सिद्धम् । कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणामित्युक्तेस्तथापि सकर्मकार्थं गुणद्रव्याभ्यां योगार्थं चेदम् । मासमधीते । मासं कल्याणी । मासं गुडधानाः । क्रोशमधीते । क्रोशं कुटिला नदी । क्रोशं पर्वतः । अत्यन्तसंयोगे किम् । मासस्य द्विरधीते । कृत्वोर्थप्रयोगे कालेऽधिकरण इति षष्ठी ॥

---

"कालाध्वनोरत्यन्तसंयोगे" ॥ मासमधीत इति' । ननु कर्मत्वादेवात्र द्वितीया सिद्धा, कथं, कालभावाध्वगन्तव्याः कर्मसंज्ञा ह्यकर्मणाम्, अवश्यं कर्मसंज्ञाश्रयणीया आस्यते मास आसितव्य आसित मास इति कर्मणि लः कृत्यक्तखलर्था यथा स्युरिति, सत्यम्, इदमप्यवश्यं वक्तव्यं द्रव्यगुणाभ्यामत्यन्तसंयोगे द्वितीया यथा स्यादिति तत्र क्रियात्यन्तसंयोगेऽपि परत्वादनेनैव युक्ता द्वितीया मासस्येति 'कृत्वोर्थप्रयोगे कालेऽधिकरण' इति षष्ठी ॥

मासं पठति वेदं देवदत्त इत्यादौ मासादिकर्मण्यपि लाद्यापत्तौ मासः पठ्यते वेदं देवदत्तेनेत्यादिप्रयोगापत्तेः। मान्यः। सङ्कोचे मानाभावात्। सकर्मकार्थं कालाध्वनोरित्यस्यावश्यकत्वेन न तर्हीदानीमिदं सूत्रं कर्त्तव्यमिति भाष्यविरोधापत्तेश्चेति चेदुच्यते। सर्वविषयं वार्त्तिकं सूत्रं च न कार्यमित्येव तात्पर्यम्। न च मासं पठ्यते वेदं देवदत्तेनेत्यस्याप्यापत्तिः। उभयसन्निधौ अन्तरङ्गे मुख्ये च द्रव्यकर्मण्येव लप्रवृत्तिरिति न दोषः। द्रव्यकर्मणोऽन्तरङ्गत्वं च धात्वन्तरार्थानङ्गस्वार्थकर्मत्वेन वार्त्तिकप्रामाण्येन "गौणे कर्मणि दुह्यादेरि" त्यादिवद् भाष्यप्रामाण्येनाचार्येवं विकल्पनाश्रयणाच्च। एवं च प्राकृतमेवेति पक्षेऽपि न दोषः। अत्र पक्षे आस्यते मास इति कर्मणि ले यत्राक्रियत्वेति वक्ष्यमाणरीत्या ऽवश्यकेनाप्यनेन द्वितीया तु नात्यन्तसंयोगस्य व्याप्तिरूपस्य धातुनोक्तत्वात्॥

**यद्येवमिति। (कै)**

अकर्मणि कर्मशब्दप्रयोगेण वत्यर्थावगतौ अतिदेशस्याभाव्यादेव स्वाश्रयसिद्धेरिति भावः॥

**तद्रूपासङ्ग इति। (कै)**

कर्मशब्दरूपस्यासङ्गः सम्बन्धः संज्ञात्वमित्यर्थः॥

**धात्वर्थाङ्ग इति। (कै)**

आसनपूर्वके व्यापने धातोर्वृत्तिरित्यर्थः॥ नन्वनया रीत्या कटमास्ते इत्यपि स्यादत आह

**नियतत्वाच्चेति॥ (कै)**

भाष्ये एकदेशी वार्त्तिकाशयमाह

**एवं मन्यते** (भा)

इत्यादिना ॥ तद्दूषयति ।

**नैवं शक्यमिति** ॥ (कै)

पुनर्वार्त्तिकारम्भ आवश्यक एवमपीत्याशङ्कते

**यदि तर्हीत्यादिना** । (भा)

तर्हि तद्वक्तव्यं कर्मवदिति यदुक्तं तदित्यर्थः ॥ उत्तरयति सिद्धान्ती ।

**न वक्तव्यमिति** ॥ (भा)

**अकर्मकाणामित्युच्यते इति** । (कै)

गत्यादिसूत्रे इति शेषः । तत्र योगविभागेन सजातीयापेक्षनियमेन सिद्धे तत्सूत्रे ऽकर्मकग्रहणात्कालादिभिन्नकर्मरहितार्थबोधकानामेव शास्त्रे ऽकर्मकग्रहणेन ग्रहणमिति बोध्यत इति भावः ॥ अकर्मकग्रहणं सामर्थ्यादत्यन्ताविद्यमानकर्मकग्रहणार्थमेव स्यादत आह

**न चेति** । (कै)

एवं च तदर्थासम्भव इति भावः ॥ तस्मात्तत्सामर्थ्यान्निषेधप्रतियोगिसमर्पककर्मशब्देन मासादीनामग्रहणं तदाह

**त एवमित्यादि** ॥ (कै)

**क्वचिदिति** । (कै)

कालादीनां कर्मत्वप्रयोजकव्याप्त्यादिरहितेऽर्थे इत्यर्थः । इदं गतिसूत्रे निरूपितम् ॥

यद्यपीति । (कै)

अकर्मकाणामित्यस्य कर्मानन्वय्यर्थप्रतिपादकानामित्यर्थ इत्यभिप्रायः ॥

तथापि धातूनामिति । (कै)

धातूनामन्यपदार्थत्वात् क्वचित्कर्मसत्त्वेऽप्यकर्मकत्वहानेः । सामर्थ्यान्नविद्यते द्रव्यकर्म येषामिति विग्रह इति भावः । अर्थानामन्यपदार्थत्वेऽपि भाष्योपपत्तिस्तत्रैवेति चिन्त्यम् ॥

तदर्थानामेवेति । (कै)

अधिकार्थे वृत्तावपि तदर्थस्यात्यागादिदमुक्तम् ॥

द्रव्ये इति । (कै)

विषयसप्तमीयम् । सामर्थ्याद् द्रव्यरूपकर्मरहिता इत्यर्थ इति भावः ॥ शिष्टं भाष्यं कैयटश्च गत्यादिसूत्रे व्याख्यातौ । एतद्भाष्यस्य वास्तवार्थोऽपि तत्रैवोक्तः ॥ ननु तुल्यन्यायेन कालकर्मणा सकर्मकव्यवहारस्याप्यभावे तत्र कर्मणि क्तो न स्यादत आह

यत्र त्विति । (कै)

तत्संनिधौ तु न तेन व्यवहार इति मासःपच्यते वेदमिति न प्रयोगः ॥ तर्ह्यनयैव कल्पनया सर्वत्र द्वितीयादिसिद्धौ सूत्रं न कार्यमिति पृच्छति भाष्ये ।

न तर्हीति ॥ (भा)

उत्तरयति ।

यथाक्रियथेति । (भा)

न च मासमास्ते इत्यादौ प्राकृतकर्मणः शेषत्वविवक्षायां षष्ठी-बाधनार्थं तत्राप्यावश्यकत्वेनाक्रियथेति असंगतम् । क्रियाकारक-भावेन यथान्यायाभावस्तदर्थमित्यर्थात् ॥

---

# अपवर्गे तृतीया । २ । ३ । ६ ॥

निष्ठा । (कै)

समाप्तिः ॥

साधनापवर्ग इति । (कै)

साधनोपरमकृतक्रियात्यागेऽपीत्यर्थः ॥

क्रियाया एवेति । (कै)

स्वत एवेत्यर्थः । स च फलत्वप्राप्तावेव भवतीत्यर्थः । साधने आलस्यादिरहिते सत्यपि प्रयोजनलाभेन क्रियायाः समाप्तिः स क्रियापवर्गः प्रयोजनालाभेन क्रियाया आवृत्त्यावश्यकत्वेऽपि आल-स्यादिना क्रियातो निवृत्तिः साधनापवर्ग इति भेद इति भावः ॥

---

अपवर्गे तृतीया ॥ अपवर्गः फलप्राप्तिस्तस्यां द्योत्यायां कालाध्वनो-रत्यन्तसंयोगे तृतीया स्यात् । अह्ना क्रोशेन वानुवाकोऽधीतः । अपवर्गे किम् । मासमधीतो नायातः ॥

---

"अपवर्गे तृतीया" ॥ 'अपवर्गः फलप्राप्तौ सत्यां क्रियापरिसमाप्ति-रिति' । तत्रैवापवर्गशब्दो लोके प्रसिद्ध इति भावः । 'कर्तव्यावृत्ताविति' । आलस्यादिना कर्त्तुरुपरमादित्यर्थः, तत्र मध्ये क्रियाविच्छिन्नेति प्रवृत्त्यपायो न त्वपवृक्तेति ॥

# सप्तमीपञ्चम्यौ कारकमध्ये।
# २।३।७॥

प्रदेशादिति। (कै)

स चेह

इहेति सप्तम्या निर्दिष्ट इति। (कै)

यद्यपि तस्य स्थितिक्रियायामधिकरणत्वं न तथापि बोधक्रियायामपादानत्वमित्यभिप्रेत्य भाष्ये "यत इति" पञ्चमीति बोध्यम् ॥

क्रोशाल्लक्ष्यम् (कै)

इत्यस्येतः क्रोशादूर्ध्वं विद्यमानं लक्ष्यमित्यर्थः॥ तद्ध्वनयन्नाह

---

सप्तमीपञ्चम्यौ कारकमध्ये॥ शक्तिद्वयमध्ये यौ कालाध्वानौ ताभ्यां सप्तमीपञ्चम्यौ स्तः। अद्य भुक्त्वायं द्व्यहे द्व्यहाद्वा भोक्ता। कर्तृशक्त्योर्मध्येऽयं कालः। इहस्थोऽयं क्रोशे क्रोशाद्वा लक्ष्यं विध्येत्। कर्तृकर्मणोर्मध्येऽयं देशः। कालाध्वभ्यां विभक्त्योर्यथासंख्यं न भवति। अस्वरितत्वात् ॥

---

"सप्तमीपञ्चम्यौ कारकमध्ये"। 'कारकमध्य इति'। मध्यस्यावधिद्वयापेक्षत्वाद् द्विवचनान्तेन समासः कालाध्वनोश्चैतद्विशेषणमित्याह। 'कारकयोर्मध्ये यौ कालाध्वानाविति'। 'अद्य भुक्त्वेत्यादि'। ननु चात्र देवदत्त एकः कर्त्ता तत्कथं कारकयोर्मध्ये काल इत्याह। 'कर्तृशक्त्योरिति'। स्यादेवं यदि द्रव्यं कारकं स्यात् शक्तिस्तु कारकं सेह भिद्यत एका अद्य भुजेः साधनमपरा द्व्यहभुजेः तेनानयोर्मध्ये काल इत्यर्थः। 'कर्तृकर्मणोरिति'। इषूनस्यतीतीष्वासः पुरुषः स कर्त्ता इष्वसने व्यधने स्थाने वा कर्म

कर्मापादानयोरिति। (कै)

भाष्ये साधनशब्देन तद्गता शक्तिरुच्यते इत्याह

शक्तिरिति॥ (कै)

शक्तेरतीन्द्रियत्वादाह

क्रियानुमितशक्तीति॥ (कै)

---

## कर्मप्रवचनीययुक्ते द्वितीया। २। ३। ८॥

पुनर्द्वितीयेति। (कै)

वार्त्तिकेनेति शेषः॥ भाष्ये

तावदयुक्तमप्रतेरिति। (भा)

तत्रत्यः प्रतिलक्षणेत्यमिति सूत्रस्थप्रतिपर्यनूनामुपलक्षणमित्यर्थः॥ भाष्ये

वर्जनार्थ एवेति। (भा)

तत्रैवार्थे तस्य कर्मप्रवचनीयत्वादिति भावः॥

---

लक्ष्यम्। 'कर्मापादानयोरिति'। कर्म तदेव सामर्थ्याद्गम्यमानं धनुरपादानं यतः शरा अपयन्ति। कर्माधिकरणयोर्वेति'। कर्म तदेवाधिकरणमिहेति निर्दिष्टः प्रदेशः, इहकालाध्वानौ द्वौ सप्तमीपञ्चम्यावपि द्वे ततश्च संख्यातानुदेशः प्राप्नोति कालात्सप्तमी अध्वनः पञ्चमीति अत आह। 'संख्यातानुदेश इत्यादि'। 'अस्वरितत्वादिति'। स्वरितेन लिङ्गेन यथासंख्यमित्येतत्तत्रैव प्रतिपादितम्॥

---

कर्मप्रवचनीय युक्ते द्वितीया॥ स्पष्टोऽर्थः। हरिं प्रति पर्यनु वा॥

# यस्मादधिकं यस्य चेश्वरवचनम्।
## २। ३। ९॥

अन्यतरस्य वेति। (भा)

अधिरीश्वरे इति ईश्वरसंबन्धे ऽधेः कर्मप्रवचनीयत्वविधानेन संबन्धस्य च स्वस्वामिनिष्ठत्वेनोभयोः कर्मप्रवचनीययुक्तत्वेऽपि यस्य चेश्वरवचनमित्यस्यावृत्तौ मानाभावेनान्यतरस्यैव प्राप्नोतीति भावः॥ तात्पर्यग्राहकाभावात्। भावप्रधानत्वे ऽपरितुष्यन्नाह

अथवेति। (भा)

प्रवृत्तिनिमित्तेनैवैश्वर्येण हि ईश्वर उच्यते इति ईश्वरवचनशब्देनैश्वर्यमुच्यत इत्यर्थः। यद्गतमैश्वर्यं तद्वाचकात्सप्तमी॥

तत्रेति। (कै)

तदेतिपाठ उचितः॥

---

यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी॥ कर्मप्रवचनीययुक्ते इत्यनुवर्तते। यस्मादधिकं तदस्मिन्नधिकमिति च निर्देशादधिकशब्दयोगे पर्यायेण पञ्चमीसप्तम्यौ स्तः। प्रकृतसूत्रार्थस्तु यस्मादधिकं यस्य चेश्वर-

---

"यस्मादधिकं यस्य चेश्वरवचनं तत्र सप्तमी"॥ यस्मादधिकं तदस्मिन्नधिकमिति च निर्देशादधिकशब्दयोगे पर्यायेण सप्तमीपञ्चम्यौ भवतः। 'उपखार्यां द्रोण इति'। 'उपोऽधिके चे'ति कर्मप्रवचनीयसंज्ञा। 'यस्य

**एतत्सूत्रेति** (कै)

तदेकदेशं यस्य चेश्वरवचनमित्येतदित्यर्थः॥

**ब्रह्मदत्ताधीना इति।** (कै)

अषडक्षेत्यादिनाध्युत्तरपदत्वात्खः। अत एव परिग्रहीत्रधीनमिति वक्ष्यमाणभाष्यप्रयोगोपपत्तिः॥ नन्वेवमधिनाव्ययीभावो न स्यादत आह

**विभक्त्यर्थेति॥** (कै)

**संमन्यत इति।** (कै)

तृतीय उक्तोर्थ उपपत्तियुक्त इत्यनुमोदत इत्यर्थः॥ अनुमोदनाकारमाह। भाष्ये

**नित्यमित्यादि।** (भा)

परिग्रहीत्रधीनम् परिग्रहीत्राधारकमित्यर्थः॥

**प्रथमा चेति।** (कै)

भाष्ये तु शब्दस्यार्थे इति भावः। सूत्रारम्भे तस्य वैयर्थ्यप्रय-

---

वचनं कर्मप्रवचनीययुक्ते यत्र सप्तमी स्यात्। उपपरार्द्धे हरेर्गुणाः। परार्द्धादधिका इत्यर्थः। ऐश्वर्ये तु स्वस्वामिनोः पर्यायेण सप्तमी। तथाहि। ईश्वर इत्युच्यते येन तदीश्वरवचनं ऐश्वर्यम्। अथ वेश्वरशब्दो भावप्रधानः।

---

चेश्वरवचनमित्यादि'। इयमनेनोच्यते द्वयोरपि भवति तत्रापि पर्यायेणेति तत्र द्वयोरपि तावद्भवति कथम् ईश्वर उच्यते येन तदीश्वरवचनमैश्वर्यम्, अथ वा ईश्वरशब्दो भावप्रधानः ईश्वरत्वस्योक्तिरीश्वरवचनं यस्य स्वामिन

श्चानुपपत्तिश्चेति दोषद्वयमिति तृतीयो वदतीति तात्पर्यम्। एतत्सूत्रसत्त्वे हि अधिरीश्वरे इति कर्मप्रवचनीयसंज्ञाविधायकं कार्यम्। तथा चाधेः कर्मप्रवचनीयत्वात्तद्योगस्योक्तरीत्या स्ववाचकेऽपि सत्त्वाद् द्वितीया प्राप्नोतीति दोषः। एतत्सूत्राभावे तु ऐश्वर्यविषयोऽधेः क्रियायोगाभावेन गत्यादिसंज्ञाबाधरूपफलाभावात् कर्मप्रवचनीयसंज्ञाया अप्यभावेन कर्मप्रवचनीययोगाभावाद् द्वितीयाप्राप्तौ प्रथमा सिध्यतीति भावः॥ भाष्ये

## का तर्हि स्यात्षष्ठीसप्तम्यौ (भा)

इत्यादिरेकदेश्युक्तिः॥

## अधिपतिदायाद इति। (कै)

यस्य यो दायादः स तद्दानादिस्वामित्वात्स्वामीति लोके व्यवह्रियत इति ईश्वरपर्यायाविमाविति भावः॥

## व्यतिरेकाभावादिति। (कै)

भेदसंबन्धेनेतरान्वयित्वाभावादित्यर्थः॥ ननु ईश्वरत्वद्योतकस्येश्वरापेक्षया कर्मप्रवचनीयस्याधेः कथं पञ्चम्यर्थसंबन्धद्योतकत्वं येन ततो द्वितीया स्यादत आह

---

यस्य स्वामिन ईश्वरत्वमुच्यते इत्यर्थः। अथ वा यस्येति स्वं निर्दिश्यते यस्य स्वस्य ईश्वर उच्यते ततः स्वादित्यर्थः। पर्यायेण चेयं विभक्तिः प्रेषविषये कर्मप्रवचनीयविभक्त्यारम्भात् निर्देशादेवोत्पन्नया सप्तम्या द्विष्ठस्यापि सम्ब-

ईश्वरत्वमुच्यते ततः सप्तमीत्यर्थः। अथ वा यस्येति स्वं निर्दिश्यते यस्य स्वस्येश्वर उच्यते ततः स्वात्सप्तमीत्यर्थः। पर्यायेण वा भवति प्रेषविषये

अधिरीश्वर इत्यधेरिति। (कै)

ऐश्वर्य विषयार्थद्योतकस्याधेरिति तदर्थ इति भावः। एव च परस्परप्रतियोगिकसंबन्धस्य परस्परनिष्ठस्य तेन द्योतनादस्त्वेव तत्प्राप्तिरिति भावः। उभयगतस्य संबन्धस्येति। विशेषणादुत्पन्नया षष्ठ्यैवेति भावः॥ भाष्ये

अधेर्ब्रह्मदत्तस्य चेति। (भा)

अधिद्योत्यो ब्रह्मदत्तनिष्ठः संबन्ध इत्यर्थः। एवमग्रेऽपि। चस्तुभयत्रापि वाक्यालंकारे॥

ईशितव्यस्येति। (कै)

ऐश्वर्यविषयाधेः कर्मप्रवचनीयत्वमिति तदर्थः। षष्ठी तु विशेषणादुत्पन्नाप्युभयगतं सबन्धं सामर्थ्याद्बोधयति। परत्र तद्बोधकविभक्त्यविधानाद्‌च तु परत्रापि तद्बोधकविभक्तिप्राप्त्या विशेष्यनिष्ठसंबन्धबोधकत्वं न विशेषणविभक्तेरिति तात्पर्यम्। द्वितीया प्रथमापवादिकापीत्यभिमानः॥ सूत्रे स्वपदानुपादाने कथं स्ववचनात्प्राप्तिरत आह

---

न्धस्याभिधानात्। प्रत्ययार्थस्य प्रकृत्यर्थं प्रति विशेष्यतया विशेषणादेव प्रत्ययौचित्याच्च। विशेष्यात्तु प्रथमैव। अधिरामे भूः। सप्तमीशौण्डैरिति समासपक्षे तु रामाधीनेति भवति। अषडक्षेत्यादिना खः। विभ-

---

कर्मप्रवचनीयविभक्त्यारम्भादेकत उत्पन्नया विभक्त्याद्विष्ठस्यापि संबन्धस्याभिधानात्। 'अधिब्रह्मदत्त इति'। 'सप्तमी शौण्डै'रिति समासपक्षे ब्रह्म-

यस्येति । (कै)

तत्र द्वितीया प्राप्नोतीत्यन्तं भाष्यं पूर्ववदेव व्याख्येयम् । अत्र पक्षे द्वितीयावारणायाह भाष्ये

एवं तर्हीति ॥ (भा)

स्ववचनादिति । (कै)

वार्त्तिकमेवैतद्दोषवारकमपीति व्याचष्ट इत्याह ।

अन्यथा व्याख्यातमिति ॥ (कै)

भाष्ये

एवमपीति । (भा)

अधेः स्वंप्रति कर्मप्रवचनीयत्वादिति भावः ॥ ननु संज्ञाविधानसामर्थ्याद् द्वितीया प्रथमां बाधते इत्यत आह

कर्मप्रवचनीयसंज्ञा त्विति । (कै)

तद्योगे ऽपवादविधेस्तस्याः संज्ञाया द्वितीयाविधावनुपस्थानमित्यर्थः ॥ उपपदविभक्तेरिति न्यायेनेव षष्ठीशेष इति सूत्रे वक्ष्य-

---

क्त्यर्थवृत्तित्वे ऽव्ययीभावः । अधिरामम् । स्वादिभक्तौ अधिभुवि रामः । इह सूत्रे यस्य चेश्वरवचनमित्यंशः प्रत्याख्यातो भाष्ये । तथाहि । स्वामिन्याधारे भूः स्थिता तस्यां च स्वामी तत्र यदा यदधिकरणत्वेन विवक्ष्यते

---

दत्ताधीना इति भवति विभक्त्यर्थवृत्तित्वेऽधिब्रह्मदत्तमित्यव्ययीभावः । अयं योगः शक्योऽवक्तुं स्वामिन्याधारे पञ्चालाः स्थिताः तेष्वाधारेषु ब्रह्मदत्तः स्थितः तत्र यदा यदधिकरणं तत्र सप्तमी भविष्यति एवं च कृत्वा 'धिरीश्वर'

माणया पुरुषादिप्रधानपदात् षष्ठीवारकयुक्त्यापच द्वितीया वारयितुं शक्येति बोध्यम् ॥

## यथाधिकरणत्वमिति । (कै)

केचित्तु अधिकरणसप्तम्यां संज्ञासूत्राभावेन द्वितीयायाः प्राप्त्यभावेन सूत्रप्रत्याख्याने तात्पर्यं सति स्वंप्रति कर्मप्रवचनीयत्वं नोपन्यस्येत् तस्मात् स्वस्वामिभावविवक्षायामाधारत्वाविवक्षायां सप्तम्यर्थं "यस्य चेश्वरवचनम्" "अधिरीश्वर" इति च सूत्रद्वयं कार्यं विनिगमनाविरहेण च सूत्रद्वयस्योभयत्रार्थे तात्पर्यमित्येव भाष्यतात्पर्यं लभ्यते न तु प्रत्याख्याने । "अधिरीश्वरे" इत्येतदीश्वरत्वे द्योत्ये ईश्वरे द्योत्य इति वा व्याख्येयमन्यथे स्वं प्रतिकर्मप्रवचनीयत्वं लभ्यते किं चाधिकरणसप्तम्यां पञ्चालेषु द्वितीयावारकयुक्त्यैव पञ्चालेषु सप्तम्यां अप्युदन्तादपि वारयितुं शक्यत्वेन स्ववचनात्तु सिद्धमित्यस्यायुक्तत्वे एवं भाष्यतात्पर्यमित्याहुः ॥

---

तदा तत्र सप्तमी भविष्यति । एवं चाधिरीश्वर इति संज्ञासूत्रमपि न कर्तव्यम् । न चा गत्युपसर्गत्वबाधार्थं तत् । ऐश्वर्यविषयस्य अधेः क्रियायोगाभावेनैव तदप्राप्तेः । उत्तरार्थमिति चेत्तर्हि योगविभागो न कार्यः ॥

---

इति कर्मप्रवचनीयसंज्ञा मावश्यया ऐश्वर्यविषयस्याधिः क्रियया नैव युज्यते अतो गत्युपसर्गत्वबाधार्थापि न युज्यते ॥

# गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टा-यामनध्वनि । २ । ३ । १२ ॥

तदर्थाध्वादिभ्यो द्वितीयापि न स्यादत आह ।

द्वितीयेति ॥ (कै)

भाष्ये

वीवधमिति (भा)

"पर्याहारश्च मार्गश्च विवधौ वीवधौ च तौ" इत्यमरः ॥

"पर्याहाराध्वमार्गेषु समौ विवधवीवधौ" इति नानार्थकोशः ॥

भाष्ये

---

गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि ॥ अध्वभिन्ने गत्यर्थानां कर्मणि एते स्तश्चेष्टायां सत्याम् । ग्रामं ग्रामाय वा गच्छति । गत्यर्थेति किम् । ओदनं पचति । कर्मणीति किम् । अश्वेन व्रजति । चेष्टायां किम् । मनसा हरिं व्रजति । अनध्वनीति किम् । पन्थानं

---

"गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि" । 'चेष्टाक्रियाया-मिति' । वस्तुव्याख्यानमेतत्, सूत्रे तु सप्तमी चेष्टायामिति । 'परिस्पन्दन-क्रियायामिति' । परिस्पन्दन एव चेष्टा शब्दः प्रसिद्ध इति भावः । स्वं रूपमिति वचनात्स्वरूपग्रहणाशङ्कायामाह । 'अध्वन्यर्थग्रहणमिति' । सप्तमीनिर्देशादिति भावः, सप्तमीनिर्देशे ह्यनध्वनि कर्मणीत्यन्वयः, गम-

पथे गच्छतीत्येव तत्र भवितव्यमिति । (भा)

एवकारो भिन्नक्रमः । इति तत्र भवितव्यमेवेत्यर्थः ॥

प्रत्याख्यातमिति । (कै)

तथा चैतन्मात्रफलसाधकतद्वचनारम्भेणैतद्वचनप्रत्याख्यानं न चमत्कारकारीति भावः ॥

न्यायस्येति । (कै)

तत्फलस्यान्यथा साधनेन तद्वचनप्रत्याख्यानान्नापूर्वं तत्कर्त्तव्यं भवतीति भावः ॥ तदेव ध्वनयन्व्याख्यान्तरमाह

अथवेति ॥ (कै)

न्यायमेवं दर्शयति ।

---

गच्छति । आस्थितप्रतिषेधो वक्तव्यः ॥ आस्थितः । सम्प्राप्तः । गत्वा अधिष्ठित इत्यर्थः । तेन यदा उत्पथात्पन्था एवाक्रमितुमिष्यते तदा भवत्येव चतुर्थी । उत्पथेन पथे गच्छति । अजां नयति ग्राममित्यत्र तु न चतुर्थी । अगत्यर्थत्वात् । प्रतीयते ह्यत्र गतिः । न त्वसौ नयतेरर्थः ।

---

ध्वनः प्रकृतेरिति अर्थ एव कर्म नाध्वशब्दः, तेनाध्वपर्यायेभ्योऽपि चतुर्थी न भवति द्वितीया तु कर्मणि द्वितीयेति भवति । 'आस्थितः संप्राप्त इति'। गत्वाधिष्ठित इत्यर्थः । 'यत्र त्विति' यदोत्पथेन पन्था एवाक्रमितुमिष्यते तदा भवत्येव चतुर्थीत्यर्थः । इह कस्मान्न भवति अजां नयति ग्राममिति अगत्यर्थत्वात् प्रतीता ह्यत्र गतिर्न त्वसौ नयतेरर्थः प्रापणवाचित्वात्, इह तर्हि स्त्रियं गच्छतीति चतुर्थी प्राप्नोति, सिद्धं त्वसंप्राप्तवचनात्, असंप्राप्त

तच्च पदेति॥ (कै)

भेदे इति। (कै)

संयोगानुकूलव्यापाराद् यदा भेदो विवक्ष्यत इत्यर्थः। एतच्च "कर्त्तरि कर्मे"ति सूत्रे "संप्रदानसंज्ञा" सूत्रे च निरूपितं तत एवावधार्यम्। संयोगस्य कर्त्तृनिष्ठ एव फलत्वेन विवक्ष्यते इत्यपि बोध्यम्। अन्यथा परत्वात्कर्मत्वमेव स्यादित्याहुः॥

यदात्वभेदेति। (कै)

ग्रामनिष्ठसंयोगानुकूलत्वेनैव यदा विवक्षेत्यर्थः॥

अत एवेति। (कै)

---

प्रापणवाचित्वात्। एवं स्त्रियं गच्छतीत्यत्रापि न चतुर्थी। असम्प्राप्तेप्रेप्साभावात्। अनध्वनीति ह्यपनीय असम्प्राप्त इति पूर्यते। द्वितीयाग्रहणमपवादविषयेऽपि यथा स्यात्; तेन कृद्योगलक्षणा षष्ठी न भवति अन्यथा चतुर्थ्येव ब्रूयादिति वदन् वृत्तिकारो ग्रामं गन्तेति तृजन्तयोगे उदाजहार। इदन्तु भाष्यविरुद्धम्। तथाहि। मन्दर्शनादिभिराप्य-

यदस्तु गमनेन संप्रेप्स्यते तस्मिन्कर्मणीति वक्तव्यं स्त्री तु संप्राप्तैवेति चतुर्थ्यभावः, अध्वनस्त्वानपवादः, संप्राप्तो ह्यध्वा यदा त्वसंप्राप्तः संप्रेप्स्यते तदा भवितव्यमेव चतुर्थ्येत्युक्तं पुरस्तात्। 'न चतुर्थ्येवति'। नञः काक्काप्रयोगाद्विकल्प्येतेत्यनेनान्वयः, कर्मणि चतुर्थ्यां विकल्पितायां तथा युक्ते कर्मणि द्वितीयेत्येव द्वितीया भविष्यतीति भावः। 'ग्रामाय गन्तेति'। द्वितीया तावत्कृद्योगे षष्ठीं बाधते तया च तुल्यकक्षा चतुर्थी इत्येन

( गत्यर्थकर्मणि द्वितीयाचतुर्थ्यौ चेष्टायामनध्वनि । २ । ३ । १२ । ) ( अ. २ । पा. ३ । आ. १ )

चतुर्थी चेति वक्तव्ये द्वितीयाग्रहणमपवादकर्तृकर्मणोरिति षष्ठीविषये क्तयोगेऽपि द्वितीयार्थमिति न व्याख्यानीयं प्रत्याख्यानेन भिन्नफलत्वादित्यन्वयः । अप्रत्याख्यानीयमिति पाठान्तरे तु चतुर्थी चेति वक्तव्ये द्वितीयाग्रहणमपवादविषयेऽपि द्वितीयाविधानार्थमिति न भवति । तस्य तथात्वे हि प्रत्याख्यानेन सह भिन्नफलत्वादिदं सूत्रमप्रत्याख्यानीयं स्यादिति योजना । एवं च भाष्यमते ग्रामस्य गतेत्यादौ षष्ठ्येवेति भावः ॥

## अथवा नयतिरिति । (कै)

एतच्चगतीत्यत्र निरूपितम् ॥

---

मानत्वात्क्रियापि कृत्रिमं कर्मेति क्रिययाभिप्रेयमाणस्य सम्प्रदानत्वं सिद्धं सन्दर्शनादीनां गमनस्य च भेदाविवक्षायां तु द्वितीयापि सिद्धेति सूत्रमिदं प्रत्याख्यातं भाष्ये । एवं हि वदता क्तयोगे षष्ठ्येवेष्यते । अत एवाकेनोरिति सूत्रे ग्रामं गामीत्युदाहृतं भाष्ये ॥

---

प्रतिपाद्यत इति चतुर्थ्यपि क्तयोगे भवतीति भावः । अयं योगः शक्यो वक्तुं, कथं, संदर्शनप्रार्थनाध्यवसायैराप्यमानत्वात्क्रियापि कृत्रिमं कर्म तत्र यदा गमनस्य संदर्शनादीनां च स्वरूपभेदो विवक्ष्यते तदा संदर्शनादिकर्मणा गमनेनाभिप्रेयमाणस्य ग्रामस्य संप्रदानत्वाच्चतुर्थी, अभेदविवक्षायां तु गमनस्य कर्मत्वाभावाद्ग्रामः कर्मैव भवतीति द्वितीया सिद्धा नार्थ एतेनेति भाष्यकारस्य पक्षः तत्र क्तप्रयोगे षष्ठ्येव भवति ।

# चतुर्थी सम्प्रदाने । २ । ३ । १३ ॥

तदर्थशब्दार्थमाह ।

**तच्छब्देति ॥ (कै)**

**कार्यं प्रयोजनमिति । (कै)**

बहुव्रीहिः । कार्यप्रयोजकमित्यर्थः ॥ ब्राह्मणाय दधीत्यादौ दध्नो ब्राह्मणकारणत्वाभावादुक्तम् ॥

**विशिष्यकार्येति । (कै)**

भोजनविशिष्टो ब्राह्मणस्तत्रापि कार्यमिति भावः ॥ सो ऽर्थो यस्येति बहुव्रीहिस्तु नोक्तः । तत्पुरुषस्यान्तरङ्गत्वात् ।

**यथा षष्ठीति । (कै)**

विशेषणनिष्ठतयैव सम्बन्धस्योद्भूततया प्रतीतेरिति भावः ॥ विभक्त्याभिधानेऽपि तिङादिभिरनभिधानाद्धेतौ तृतीया स्यादेवेत्यत आह ।

---

चतुर्थी सम्प्रदाने ॥ स्पष्टम् । विप्राय गां ददाति । तादर्थ्ये उपसंख्यानम् ॥ यूपाय दारु । इह दारुशब्दाद्धेताविति तृतीया तु न भवति ।

---

"चतुर्थी संप्रदाने" ॥ 'तादर्थ्ये इति' । तच्छब्देन कार्यं प्रति निर्दिश्यते तस्मा इदं तदर्थमिति समासेन विशिष्टकार्यप्रयोजनं कारणमभिधीयते तदर्थस्य भावस्तादर्थ्यमिति ष्यञा कार्यकारणसम्बन्धोऽभिधीयते

प्रातिपदिकार्थव्यतिरेके चेति । (कै)

षष्ठीविषये हेतुतृतीयाविधानादिति भावः ॥

प्रातिपदिकार्थेति । (कै)

हेतुत्वेनेतरान्वये च तृतीया भवत्येतदर्थस्य च कश्चिदर्थं तेनान्वयाभावादिति भावः ॥ उक्तमर्थं श्लोकाभ्यां संगृह्णाति ।

तस्यापीति ॥ (कै)

उपकार्यं ह्येति । (कै)

विद्यमानमेव यत्किंचिदुपकारविशिष्टं कार्यमित्यर्थः । तेन घटाय दण्ड इत्यादि नेत्याहुः । मोक्षाय हरिं भजतीत्यादौ क्रिययायमिति संप्रदाने चतुर्थी बोध्या ॥

गम्यमानविभक्तित्वादिति । (कै)

"चतुर्थीतदर्थे"ति सूत्रेण ज्ञाप्यमानविभक्तित्वादित्यर्थः । तद्धि ज्ञापकं कार्यवाचकाच्चतुर्थ्यां सत्यामेव सङ्गच्छते इति भावः ॥

तदनुवादेनेति । (कै)

---

षष्ठीविषये हि सा । प्रातिपदिकार्थमात्रे प्रथमैव । तनूपसंख्यानस्यावश्यकत्वे सूत्रं व्यर्थमेवेति चेन्न । हरये रोचत इत्याद्यर्थं तस्याप्यावश्यकत्वात् ।

---

समासकृत्तद्धितेषु सम्बन्धाभिधानं भावप्रत्ययेनेति वचनात्, तत्र द्विष्ठत्वेऽपि सम्बन्धस्य षष्ठीवद्विशेषयादेव चतुर्थी भवति यूपाय दार्विति हेतुतृतीयापि विशेष्यान्न भवति हेतुहेतुमद्भावस्यापि चतुर्थ्यैव प्रत्यायितत्वात् षष्ठीविषये

तदर्थानुवादेनेत्यर्थः ॥ नित्यशब्दत्वेनान्यथोक्तेनाप्यीतरेतराश्रयपरिहारः सुकरस्तथापि कार्यवादेऽपि परिहर्तुमाह ।

## तत्तर्हीति । (कै)

चतुर्थीविधायकमन्यद् वचनमित्यर्थः ॥ वस्तुत इतरेतराश्रयत्वमेव नेत्याह ।

## न खल्वपीति । (कै)

यदि चतुर्थी समासं विनान्यः समासो न स्यात् स्यादेवेतरेतराश्रयः । अस्ति चात्र षष्ठीसमास इत्याशयः ॥ नन्वत्र षष्ठी कथमित्यत आह ।

## सम्बन्धसामान्येति । (कै)

तादर्थ्येन बोधे चतुर्थी सम्बन्धत्वेन बोधे षष्ठीति भावः ॥ षष्ठीसमासोऽप्येतद्विषये शब्दशक्तिस्वभावान्नित्यसमास इत्याशयेनाह । भाष्ये

## गुरोरिदमिति ॥ (भा)

भाष्ये

---

क्लृपिसम्पद्यमाने च ॥ विकारवाचकाच्चतुर्थीत्यर्थः । स हि सम्पद्यते प्रादुर्भवति । भक्तिर्ज्ञानाय कल्पते । प्रकृतिविकारयोर्भेदविवक्षायां चतुर्थी

---

च हेतुतृतीया, इह तु प्रातिपदिकार्थस्याव्यतिरेकात्प्रथमैव भवति, यदि तर्हि तादर्थ्ये उपसंख्यानं क्रियते नार्थः संप्रदाने चतुर्थ्या योऽपि ह्युपाध्यायाय गौर्दीयते उपाध्यायार्थः स भवति, अवश्यं संप्रदानग्रहणं कर्तव्यं

**यान्त्येनेति ।** (भा)

रुच्यर्थानामित्यादिना । कर्मणायमभिप्रैतीति संज्ञाविधानं तु "दाणगोप्नौ संप्रदान" इत्यर्थः । तत्संप्रदानकं दानमिति बोधार्थं च । दानकर्मणो गवादेः संप्रदानार्थत्वेऽपि दानक्रियायास्तदर्थत्वाभावे चतुर्थ्यन्तार्थस्य दानक्रियान्वयानापत्तिरिति तदन्वयार्थं चेति दिक् ॥ भाष्ये

**यदर्थमिति ॥** (भा)

यद्यपि समासः प्रकृतिविकृतिभाव एव तथापि तत्र्याप्या चतुर्थी सर्वत्रेति भावः ॥

**क्लृपि सम्पद्यमाने च ॥** (वा)

सम्पत्तिशब्देन अभूतप्रादुर्भावरूपा उत्पत्तिरुच्यत इत्याह ।

**सम्पत्तिरिति ॥** (कै)

नन्वेवं प्रकृतिविकृत्योर्भेदसत्त्वेनाभेदान्वयोनुभवसिद्धो भज्यतेत्यत आह

---

अभेदविवक्षायान्तु प्रथमैव । भक्तिर्यानां कल्पत इति केचित् । अन्ये त्वभेदविवक्षायामपि चतुर्थीत्याहुः । जनिकर्तुरित्यपादानत्वविवक्षायान्तु

---

'रुच्यर्थानां प्रीयमाण' इत्याद्यर्थम् । 'क्लृप्तिसंपद्यमान इति' । संपत्तिरभूतप्रादुर्भावरूपोत्पत्तिरिह गृह्यते तत्र यद्रूपमुपजायते ततो विकाराच्चतुर्थी । 'मूत्राय कल्पते यवागूरिति' । प्रकृतिविकारयोर्भेदविवक्षायां

**विकारस्य चेति। (कै)**

तथा च प्रकृतिवाचकसमानाधिकरणत्वात्प्राप्तप्रथमाविभक्तेरपवादोऽयमिति भावः ॥ विरुद्धार्थकविभक्तिराहित्याच्च सामानाधिकरण्येनान्वय इति बोध्यम् ॥ ननु सामानाधिकरण्यप्रकृतेरपि चतुर्थी स्यादत आह।

**यच्च रूपमिति ॥ (कै)**

**अपादानविवक्षेति। (कै)**

अपादानपदे न शक्तिः कल्पेरुत्पत्त्यर्थत्वे इदम्। अत्र वदन्ति कल्पत इत्यादेः परिणमत इत्यर्थः। परिणामस्तु रूपान्तरप्राप्तिः। तदेकदेशे रूपान्तरे मूत्रादेर्विकारस्याभेदेनान्वयेन ततो द्वितीयायां प्राप्तायां तद्बाधेन चरितार्था चतुर्थी। अभेदविवक्षायां परत्वात् प्रथमया बाध्यते। यवागूर्मूत्रं कल्पत इत्येव हि तदा। ध्वनितं चेदं हरदत्तेन। कल्पेरुत्पत्त्यर्थत्वे जनिकर्तुरिति प्रकृतेः

---

पञ्चमी। भक्तिर्ज्ञानं कल्पते इति। केचित्तु तत्रापि चतुर्थीमिच्छन्ति। उत्पातेन ज्ञापिते च ॥ प्राणिनां शुभाशुभयोः सूचको भूतविकार उत्पातः।

---

चतुर्थी, अभेदविवक्षायां तु मूत्रं संपद्यते, यवागूरिति प्रथमैव भवतीति केचिदाहुः। अन्येत्वभेदविवक्षायामेव चतुर्थीमिच्छन्ति, यदा तु 'जनिकर्तुः प्रकृति'रित्यपादानत्वं विवक्ष्यते तदा विकाराच्चतुर्थी न भवतीति, केचिदाहुः मूत्रं संपद्यते यवाग्वा इति। अन्ये तत्रापि चतुर्थीमिच्छन्ति

पञ्चम्यामपि विकृतिवाचकात्परत्वादुपपदविभक्तेरिति न्यायाच्च प्रथमैवेति दिक् । अन्येत्त्वियं चेयमेवाहर्षिः । "प्रकृत्यादिभ्य" इति तृतीयावत् प्रथमापवादोऽप्येषेत्यपरे । यद्यपि दारुयूपयोरिव यवागूमूत्रयोः प्रकृतिविकारभावोऽस्ति तथापि यवाग्वा मूत्रार्थत्वाभावाच्च तादर्थ्यचतुर्थ्याश्च गतार्थता । [1]"एवमुत्पातेन ज्ञापिते" इति वचनस्य सार्थक्यमूह्यम् ॥

## हितयोगे चेति । (वा)

इदं "तस्मै हितमि"ति निर्देशाज्ज्ञापकात्सिद्धमित्याहुः ॥ अरोचके रोगाख्यायामिति ण्वुल् लोकतो नपुंसकत्वं ततो मत्वर्थ इति । सर्वत्रामयस्योपसंख्यानमित्यामयशब्दार्दिनिः । अन्येषामपीति दीर्घः ॥

---

१ वाताय कपिलाविद्युदातपायातिलोहिनी ।
 कृष्णा सर्वविनाशाय (पीता वर्षाय विज्ञेया) दुर्भिक्षाय सिताभवेत् ॥

---

वाताय कपिला विद्युत् । हितयोगे च ॥ चतुर्थीसमासविधानज्ज्ञाप्यते । ब्राह्मणाय हितम् ॥

---

मूत्राय संपद्यते यवाग्वा इति । 'उत्पातेनेति' । प्राणिनां शुभाशुभसूचको भूतविकार उत्पातः । 'अरोचकिन इति' । अरुचिररोचक' रोगाख्यायामिति ण्वुल्, बहुलवचनादस्त्रीलिङ्गता ।

# नमःस्वस्तिस्वाहास्वधालंवषड्-योगाच्च । २ । ३ । १६ ॥

## पूर्ववीति । (कै)

पुनर्विधानार्थेन चेनेदं सिद्धमिति कश्चित् ॥

---

नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च ॥ एभिर्योगे चतुर्थी स्यात् । हरये नमः । उपपदविभक्तेः कारकविभक्तिर्बलीयसी । प्रधानभूतक्रियासम्बन्धस्यान्तरङ्गत्वात् । नमस्करोति देवान् । कथन्तर्हि नमश्चकार देवेभ्य इति, रावणाय नमस्कुर्यात् इति च भट्टिः । अत्र माधवः । साक्षात्प्रभृतिषु पाठाद्वैकल्पिकं नमःशब्दस्य गतित्वम् । तत्र गतिसंज्ञापक्षे उपसर्गवद् द्योतकतया नम एव प्रणतिरर्थः । तत्कर्मणि द्वितीया नमस्यति देवानितिवत् । अगतित्वे तु करोति क्रियाकर्मभावापन्नं विशेष्यभूतं प्रणाममाचष्ट इति देवादावकर्मणि नमःस्वस्तीति चतुर्थ्येवेति । अत्रेदं वक्तव्यम् । उक्तरीत्या चतुर्थीसमर्थनेऽपि नमसो गतिसंज्ञाभावान्नमस्पुरसोर्गत्योरिति सत्वं न स्यात् । तथा च प्रयोगानिर्वाहस्तदवस्थः । तस्मात्क्रियार्थोपपदस्य चेति चतुर्थी बोध्या । देवान् प्रसादयितुमित्यर्थात् । वर्धमानस्तु, आज्ञाय निगल्मन इति वत्क्रियाग्रहणं कर्तव्यमिति चतुर्थीत्याह । प्रजाभ्यः स्वस्ति ।

“नमःस्वस्तिस्वाहास्वधालंवषड्योगाच्च” ॥ ‘अलमिति पर्याप्त्यर्थग्रहणमिति’ । अलमित्यर्थग्रहणं तत्रापि पर्याप्तिग्रहणमित्यर्थः । तत्र तावदर्थग्रहणं तस्मै प्रभवतीति निर्देशात्, इह चालं कुरुते कन्यामित्युपपदविभक्तेः कारकविभक्तिर्बलीयसीति द्वितीया भविष्यति, एवमलमोदनेनेत्यत्रापि करणे तृतीया, ओदनेन न किं चित्साध्यमित्यर्थावगमात्, तेन भूषणप्रति-

अलं रोदनेनेति । (कै)

रोदनं मा कुर्वित्यर्थः । एवं चात्र तृतीया कथम् । तस्माद्रोदनेन साध्यं नास्ति । अतस्तन्मा कुर्वित्यर्थः ॥ भाष्ये

पर्याप्त्यर्थग्रहणमिति (भा)

वार्त्तिकस्य द्वेधा व्याख्याऽनेन प्रभ्वादियोगे षष्ठ्यपीति ध्वनितम् ॥

---

अग्नये स्वाहा । पितृभ्यः स्वधा । अलं मल्लो मल्लाय । अलमिति पर्याप्त्यर्थग्रहणं तेन दैत्येभ्यो हरिरलं प्रभुः समर्थः शक्त इत्यादि । कथन्तर्हि प्रभुर्बुभूषुर्भुवनत्रयस्येति माघः । उच्यते । पर्याप्त्यर्थस्यैवालमो ग्रहणं न तु अलं रोदनेनेत्यादौ वारणार्थस्यापीति व्याख्यानान्तरं भाष्ये स्थितम् । एवञ्च व्याख्याभेदात्प्रभ्वादियोगे षष्ठ्यपि साधुः । अत एव सूत्रकारो द्वेधा निरदिक्षत् । तस्मै प्रभवति सन्तापादिभ्यः, स एषां ग्रामणीरिति च । तथाच भट्टिः । नाप्रोषीदस्य कश्च न पुप्रोषास्मै न कश्चनेति । प्रोषृ पर्याप्तावित्यस्य रूपम् । अलं रोदनेनेत्यत्र तु करणे तृतीया । रोदनेन न किं चित्साध्यमित्यर्थावगमात् । वषडिन्द्राय । चकारः पुनर्विधानार्थः । तेनाशिर्विवक्षायामपि षष्ठीं बाधित्वा चतुर्थ्येव भवति । स्वस्ति गोभ्यो भूयात् । अन्यथा स्वस्तियोगे चतुर्थ्या अवकाशः । स्वस्तिजाल्मायास्तीति । तत्त्वकथने कुशलार्थैराशिषीत्यस्यावकाशः । स्वस्तिभिन्नाः कुशलार्थाः । उभयप्रसङ्गे परत्वात् पक्षे षष्ठी स्यात् ॥

---

मेधयोरग्रहणात्पर्याप्तेरेव ग्रहणम् । 'चकारः पुनरित्यादि' । अन्यथा स्वस्तियोगे चतुर्थ्या अवकाशः स्वस्ति जाल्माय, जाल्मत्वादाशीरभावाद्भूतकथनमेतत्, कुशलार्थैराशिषि चतुर्थी चेत्यस्यावकाशो ऽन्ये कुशलार्थाः, कुशलं देवदत्तस्य कुशलं देवदत्ताय, स्वस्ति गोभ्यो भूयादुभयप्रसङ्गे परत्वात्पक्षे षष्ठी स्यात् ॥

# मन्यकर्मण्यनादरे विभाषाऽप्राणिषु । २ । ३ । १७ ॥

भाष्ये

इहापीति । (भा)

यद्यपि प्राप्यप्राणिषु उभयत्राप्याद्येनैव सिद्धे उत्तरयोगेनाद्यस्यानित्यताज्ञापनात् क्वचिदेव प्रवृत्तिरिति । न त्वां काकमि-

---

मन्यकर्मण्यनादरे विभाषाऽप्राणिषु ॥ प्राणिवर्जे मन्यतेः कर्मणि चतुर्थी वा स्यात्तिरस्कारे । न त्वां तृणं मन्ये तृणाय वा । मन्यतिग्रहणं किम् । न त्वां तृणं चिन्तयामि । श्यना निर्देशान्नेह । न त्वां तृणं मन्ये । मनु अवबोधने । तनादिः । न च मन्येति यका निर्देशः किं न स्यादिति वाच्यम् । अनभिहित इत्यधिकारात् । न हि यका योगे अनभिहितं कर्म सम्भवति । श्यन्नपि दैवादिकधातूपलक्षणमात्रं न तु स्वयं विवक्षितः ।

---

"मन्यकर्मण्यनादरे विभाषाऽप्राणिषु" ॥ 'मन्यतेः कर्म मन्यकर्मेति' । मन ज्ञाने इत्यस्य दैवादिकस्य धातोः श्यना उपलक्षणं न तु प्रयोगस्थस्य श्यनन्तस्यानुकरणमित्यर्थः । तेन श्यनोभावेऽपि भवति तृणाय मत्वा रघुनन्दनोऽपि बाणेन रक्षः प्रधनान्निरास्थदिति । श्यना तु तानादिकस्य मनु अवबोधन इत्यस्यैव निरासः । 'अनादरस्तिरस्कार इति' । न त्वादराभाव-

त्यादौ नातिप्रसङ्गस्तथापि योगविभागं विनापि सर्वसमाधानं वक्तुमयमुपक्रमः ॥ अत्र भाष्ये

**येषु प्राणिषु नेष्यते** (भा)

इत्यत्र बहुवचनेन शुककाकातिरिक्तप्राणिन्यपि निषेधो ध्वनितस्तदभिप्रायेणैव वृत्तौ शृगाल उदाहृतः ॥ भाष्ये

**नत्वां नावं मन्ये यावत्तीर्णां न नाव्यमिति ।** (भा)

यावद् यतो नाव्यं नावा स्वल्पनौकया तार्यमपि त्वया मह- त्यापि न तीर्णमतस्त्वां नावमुडुपमपि न मन्ये इत्यर्थः ॥ नौशब्दे-

---

तेन तृणाय मत्वा रघुनन्दनोऽपि बाणेन रक्षः प्रधनान्निरास्थदिति भट्टि- प्रयोगः संगच्छते । अनादरश्चात्र नादराभावमात्रमपि तु तिरस्कारः, कुत्सेति यावत् । अधर्मान्तादिवन्नञः प्रतिपक्षवाचित्वात् । स च द्वेधा । उत्कृष्टस्यापकृष्टेनोपमानात् । यथा तृणाय मत्वेति । तृणमिव मत्वेत्यर्थः । क्वचित्तु निषेधयोगेनोपमानायोग्यत्वप्रतीतेः । यथा न त्वां तृणं मन्ये इति । तृणतुल्यमपि त्वां न मन्य इत्यर्थः । इयांस्तु विशेषः । अत्रात्यन्तमनादरः

---

मात्रं, कथम्, अन्तादिवन्नञः प्रतिपक्षवाचित्वादिति भावः । मन्यकर्मणि प्रकृष्टतुत्सितग्रहणमिति वार्त्तिकं, यदाचिनश्चतुर्थी विधीयते ततः प्रकर्षेण यदि कुत्सा प्रतिपादयितुमिष्यते तदा चतुर्थी भवति न तु सामान्यविव- क्षायां, तेन प्रतिषेधयुक्तायां कुत्सायां चतुर्थी विधानं संपद्यत इति मत्वाह । 'न त्वा तृणायेति' । मन्यकर्मण्यनादर उपमाने विभाषाऽप्राणि-

नोडुपं स्वल्पनौकोच्यते त्वां शब्दार्थस्तु महती नौरेवं ह्यनादरो भवतीत्याहुः । एवं नत्वान्नं मन्ये यावद्भुक्तं न श्राद्धमित्यस्य यतः श्राद्धं श्राद्धीयैर्विप्रैर्न भुक्तमतस्त्वामपूपरूपमन्नमोदनमपि न मन्ये इत्यर्थः ॥

प्रकर्षण कुत्सितेति । (कै)

परावरयोगे चेति क्त्वा । अतिशयविशिष्टकुत्सितत्वे प्रतिपाद्ये इत्यर्थः ॥ तदाह

---

पूर्वत्र त्वनादरमात्रम् । उभयत्रापि सूत्रेण सिद्धम् । वार्त्तिककारस्त्वाह । प्रकर्षण कुत्सितग्रहणं कर्त्तव्यमिति । यदाचिन्नश्चतुर्थी ततोऽपि यदि कुत्सा न तु साम्यमात्रं तदा चतुर्थीत्यर्थः । एवञ्च प्रतिषेधयुक्तायामेव कुत्सायां चतुर्थीविधानात् प्रागुक्तभट्टिप्रयोगो विरुध्यते सूत्ररीत्या तु सः । तथा चापि शलिरपि मन्यकर्मण्यनादर उपमाने विभाषा, प्राणिष्वित्यसूत्रयत् । अप्राणिष्वित्यपनीय अनावादिष्विति पाठ्यमिति भाष्यम् । नौकाकान्न-शुकशृगालाः नावादयः । तेन न त्वां नावमन्नं वा मन्य इत्यत्राप्राणित्वेऽपि

---

ष्वित्यापि शलिरधीते स्म, न तत्र प्रतिषेधापेक्षा, तथा च भट्टिप्रयोगो निदर्शनीयः । 'अश्मानं दृषदमित्यादि' । तद्व्याख्यानमेतत् । 'यस्य माता न पश्यतीति' । दर्शनयोग्यम् । 'व्यवस्थितविभाषा चेति' । ननु येषु प्राणिषु नेष्यते ते नावादयो भविष्यन्तीति किं व्यवस्थितविभाषया, वृत्ति-कार एवात्र साक्षात्प्रयोजनं वक्ष्यति । 'न त्वा नावमिति' । नावा नार्य-मुदकं नाव्यं तद्यदेव तीर्णं तदेव नावमपि सन्तीं त्वां नाहं नावं मन्ये प्रयो-

यद्वाचिन इति । (कै)

त्वां तृणमिव मन्य इत्यादावप्यनादरस्य सत्त्वाद् वार्त्तिकारम्भ इति भावः । आपिशलिवाक्येनोपमानवाचकात्ततोऽपि तिरस्कारे चतुर्थीत्युच्यते ॥

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते महाभाष्यप्रदीपोद्द्योते द्वितीयाध्यायस्य तृतीयपादे प्रथमाह्निकम् ॥

---

चतुर्थी न । न त्वां श्वने मन्य इत्यत्र तु प्राणित्वेऽपि चतुर्थी भवत्येवेति दिक् । अनादरेति कर्मणो विशेषणम् । अनादरद्योतकं यत्कर्मेति । तेन तृणादेरेव चतुर्थी न तु युष्मदः, व्यवस्थितविभाषाविज्ञानाद्वा ॥

---

जनस्य निष्पन्नत्वादिति भावः, एवं यावन्न भुक्तं श्राद्धमित्यत्रापि द्रष्टव्यम् । 'प्राणिषु तूभयमिति' । विषयविभागेन । 'एतदपीति' । एतदेव साक्षात्प्रयोजनमन्यत्र नावादित्वादेव सिद्धेरित्यवोचाम ॥

## महाभाष्यप्रदीपोद्योतः ।

पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ।

कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ॥

# कर्तृकरणयोस्तृतीया । २ । ३ । १८ ॥

### क्रियापदेति । (कै)

क्रियाध्याहारे विभक्त्यन्तरबाधनाय वार्त्तिकमिति भावः । अभिरूपादिकं तु गुणो न क्रियेति तात्पर्यम् ॥

---

कर्तृकरणयोस्तृतीया ॥ रामेण बाणेन हतो बाली । प्रकृत्यादिभ्य उपसङ्ख्यानम् । प्रकृत्याभिरूपः । क्रियाया अश्रवणात् कर्तृकरणयोरभावात् षष्ठीह प्राप्ता । ननु गम्यमानकरोति क्रियाकरणत्वात् सिद्धम् ।

---

"कर्तृकरणयोस्तृतीया" । 'प्रकृत्याभिरूप इति' । क्रियाया अश्रवणात्कर्तृकरणयोरभावात्षष्ठी प्राप्नोति । 'प्रायेण याज्ञिका इति' । प्रायशब्दो बह्वर्थः, बहवो याज्ञिका इत्यर्थः । 'गार्ग्योऽस्मीति' । प्रथमा षष्ठी वा प्राप्नोति' । 'समेनेति' । अत्र द्वितीया प्राप्नोति । 'द्विद्रोणेनेति' ।

**पञ्चकेनेति। (कै)**

प्रकृतिसम्बन्धोऽभिरूप इति बोधादिति भावः॥

**प्रथमा षष्ठी वेति। (कै)**

गोत्राभिन्नगर्गापत्यमिति बोधे आद्या। सामान्यविशेषभावसम्बन्धीमं गोत्रसम्बन्धिगार्ग्यत्ववानिति बोधेऽन्त्येति भावः। गोत्रशब्देनागस्त्यष्टमसप्तर्ष्यपत्यम्। परिच्छेद्यपरिच्छेदकयोरभेदोपचारेण द्विद्रोणाभिन्नमिति। अर्थात् पञ्चके संख्याया अतिदशन्ताया इति कन्॥

---

करणान्तरव्युदासाय हि प्रकृतेरेव करणत्वं विवक्षितम्। स्वभावेनायमभिरूपः कृतो न त्वलङ्कारादिनेत्यर्थात्। इदन्तर्हि प्रायेण याज्ञिकाः। प्रायशब्दो बह्वर्थः। बहवो याज्ञिका इत्यर्थः। ननु याज्ञिकशब्दाभिधेयमध्ययनं प्रति बाहुल्यं करणम्। सङ्घीभूय यज्ञमधीयत इत्यर्थात्। यत्रापि विशिष्टवेषं कञ्चिद्दृष्ट्वा प्रायेणायं याज्ञिक इत्यध्यवस्यति। तत्रापि गम्यमानज्ञानक्रियां प्रति करणत्वात् सिद्धम्। आचारादिबाहुल्येन

---

द्वयोर्द्रोणयोः समाहारो द्विद्रोणं पात्रादिः, द्वौ द्रोणौ कृत्वेत्यर्थः, अत्रापि द्वितीया प्राप्नोति। 'पञ्चकेनेति'। पञ्चपरिमाणमस्य पञ्चकः सङ्घः, तत्र सङ्घसङ्घिनोरभेदविवक्षायां पशूनित्यनेनैतत्समानाधिकरणमित्यत्रापि द्वितीयैव प्राप्नोति। 'साहस्रेणेति'। सहस्रपरिमाणः सङ्घः साहस्रः, सर्वमन्यत्पूर्ववत्, इत्युपसंख्यानमारभमाणस्याभिप्रायः, प्रत्याख्यानं तु इह तावत्प्रकृत्याभिरूप इति गम्यमानापि क्रियाकरणादिव्यपदेशस्य निमित्तम्। इह च करोतिक्रिया गम्यते, करणान्तरव्युदासाय च प्रकृतेः करणत्वं

**एष तत्र प्राय इति ।** (भा)

तत्रोदाहरणे एष प्रायपदार्थो येन हेतुना तेऽधीयत इत्यर्थः ॥

**तत्राध्ययनस्येति ।** (कै)

अधीयत इति क्रियाध्याहार इति भावः । बहुभिरध्ययने ग्रहणधारणयोः सौकार्यं भवतीति बाहुल्यं तत्त्वेन विवक्षितमिति बोध्यम् ॥

**एतेनाहं संज्ञाये इति ।** (भा)

अहं "माठर इति" गोत्रेण परैः संज्ञाये इत्यर्थः ॥

अप्रयोगे हेतुमाह

---

याज्ञिकोऽयमिति जनैर्ज्ञाप्यत इत्यर्थात् । केचित्तु प्रायेणशब्दो विभक्तिप्रतिरूपको निपातो नूनमित्यर्थे वर्तत इत्याहुः । दृश्यते च प्रायेण सामग्र्यविधौ गुणानामिति । प्रायेण निष्क्रामति चक्रपाणाविति च । इदं तर्हि गोत्रेण गार्ग्यः, प्रथमा षष्ठी वा प्राप्नोति । नन्विहापि अनेनाहं ज्ञाये इत्यर्थात्सिद्धम् । इहन्तर्हि समेन विषमेणेति, अत्र समविषमाभ्यां द्वितीया प्राप्ता । ननु पथोऽपि गमने करणत्वात् समेन पथेत्यर्थोऽस्तु ।

---

विवक्षितं स्वभावेनयमभिरूपः कृतो न वस्त्रालङ्कारादिनेत्यर्थः । प्रायेणेत्ययमर्थो ऽस्मिन् ग्रामे ये विप्राः सन्ति ते बाहुल्येन यज्ञमधीयत इति तत्र याज्ञिकशब्दाभिधेयमध्ययनं प्रति बाहुल्यस्य करणत्वं सम्भूय यज्ञमधीयत इत्यर्थः, इह तर्हि कथं विप्रिष्टेषं कं चित् दृष्ट्वाध्यवस्यति प्रायेणायं याज्ञिक इति । अत्राप्ययमर्थो ऽस्मिंस्तावद्याज्ञिकानामाचारादिबाहुल्यमुपलभ्यते ऽतोनेनाचारादिबाहुल्येन याज्ञिकोऽयं जनैर्ज्ञायत इति,

प्रतीयेति। (कै)

अत्र केचित्। एवं रीत्या कारकत्वादिव्युत्पादने "हेताविति सूत्रस्य "त्यम्भूतलक्षण" इत्यस्य च वैयर्थ्यापत्तिर्यदि तत्र द्रव्याद्यन्वयविवक्षायां सार्थक्यं तर्ह्यत्रापीति प्रत्याख्यानमत्रासिद्धान्त्येकदेश्युक्तिरेव सम्बन्धसामान्यविवक्षायां षष्ठीबाधनार्थमावश्यकत्वाद्वेत्याहुः। अनभिधानेन भगवता प्रत्याख्यातमित्यन्ये॥

---

इदन्तर्हि द्विद्रोणेन धान्यं क्रीणाति। पञ्चकेन पशून् गृह्णाति। द्वयोर्द्रोणयोः समाहार इति द्विद्रोणं पात्रादिः। द्वौ द्रोणौ क्रत्वेत्यर्थः। इह द्वितीया षष्ठी वा प्राप्ता। पञ्च परिमाणमस्य पञ्चकः सङ्घः। तत्र सङ्घसङ्घिनोरभेदविवक्षायां पशूनित्यनेन सामानाधिकरण्यात् द्वितीया प्राप्ता। एतदपि प्रत्याख्यातं भाष्ये। द्विद्रोणाद्यर्थे मूल्ये द्विद्रोणादिशब्दः तस्य च क्रयं प्रति करणत्वं द्विद्रोणादीनां च यन्मूल्यं तेन द्विद्रोणाद्येव क्रियत इत्यर्थभेदोऽपि नास्तीति॥

---

तत्र प्रतीयमानज्ञानं प्रति करणत्वं, केचित्प्रायेणशब्दो विभक्तिप्रतिरूपको निपातो ज्ञातमित्यस्यार्थे वर्त्तत इत्याहुः, दृश्यते च प्रायेण सामग्र्यविधौ गुणानामिति, प्रायेण निष्क्रामति चक्रपाणाविति च। 'गोत्रेणेति'। अनेनाहं ज्ञाये इति ज्ञानक्रियायामस्मीति भवनक्रियायां वा गोत्रस्य करणत्वम्। 'समेनेति'। पथो गमने करणत्वं समेन पथेत्यर्थः। 'द्विद्रोणेनेति'। द्विद्रोणाद्यर्थ मूल्ये द्विद्रोणादिशब्दस्तस्य च क्रयं प्रति करणत्वं द्विद्रोणादीनां च मूल्यं तेन द्विद्रोणाद्येव क्रीयत इत्यर्थभेदोऽपि नास्ति॥

# सहयुक्तेऽप्रधाने। २। ३। १९॥

ननु माषाणामिव तिलानामपि वापक्रिययेप्सितत्वादप्राधान्यमसिद्धमत आह

तथायुक्ततयेति। (कै)

वस्तुतः सहार्थविशेषणत्वमप्राधान्यमिति न दोषः॥ ननु वाक्यापेक्षया कर्मत्वेन मिश्रीकरणस्य च तदर्थत्वेनाप्राधान्यान्न्यायविरुद्धा तृतीयेत्याशङ्क्याह

अन्तरङ्गत्वादिति। (कै)

अन्तरङ्गत्वोपपादनमेव पूर्वमित्यादि। पूर्वं मिश्रणक्रियासम्बन्धे तदर्थत्वमपि न स्यादिति भावः॥

---

सहयुक्ते ऽप्रधाने॥ सहार्तेन युक्ते ऽप्रधाने तृतीया स्यात्। पुत्रेण सहागतः पिता। पितुरत्र क्रियासम्बन्धः शब्दः, पुत्रस्य तु आर्थ इति

---

"सहयुक्ते ऽप्रधाने"॥ क्रियागुणद्रव्यैर्द्वयोः सम्बन्धे सति सहशब्दस्य प्रयोगो भवति, अतः पुत्रेण सहागतः पितेत्यादीनि क्रियादिसम्बन्धे यथाक्रममुदाहरणान्युपन्यस्तानि। अन्यत्र सर्वत्र सहार्थस्वभावादेव पितुः पुत्रस्य वा गमनादिना सम्बन्धः प्रतीयते तत्कृतः पितुः प्राधान्यं, केचिदाहुः। यस्य क्रियादिसम्बन्धो विप्रकृष्टकालः प्रख्यातः स यदान्यस्याप्रख्यातविप्रकृष्टकालक्रियासम्बन्धस्य तत्प्रतिपादनार्थमुपादीयते यथायं पुरुषः कदागत इत्यपेक्षायां राज्ञा सहागत इति पुरुषागमनं विप्रकृष्टकालमुप-

न तु पुत्रस्येतीति । (कै)

तस्य सहार्थबलादनुमीयमानं कर्तृत्वमिति तृतीयाया अप्राप्तिरिति भावः ॥

एकेन शब्देन । (कै)

के॑न ॥

गुणप्रधानयोरिति । (कै)

प्रतीयमानोपात्तक्रियापेक्षत्वेन तादृशयोः कर्त्रोरित्यर्थः ॥

भाष्ये

अप्रधाने । (कै)

इत्यस्य प्रतीयमानक्रियाकर्तरीत्यर्थः ॥

प्रधानकर्त्तरि (भा)

इत्यनेनोच्चारितशब्दबोध्यक्रियाकर्त्तरीत्यर्थः ॥ तदेवाह ।

---

तस्याप्राधान्यम् । सहे ऽप्रधान इत्येव वाच्ये युक्तग्रहणादर्थग्रहणम् । पुत्रेण सार्धम् । विनापि सहशब्देन तदर्थागतौ स्यादेव, तथा च सौत्र

---

पादयितुं वाक्यं प्रवर्त्तत इति पुत्रस्य प्राधान्यं राज्ञस्तूपलक्षणत्वेनोपात्तत्वादप्राधान्यमिति, एवं तु भृत्यैः सह राजागत इत्यत्र न स्याद् नहि भृत्यागमनं प्रसिद्धकालं येन तत्कालत्वं राजागमनस्य प्रतिपाद्येत, यत्र चोभयोरप्यज्ञातः क्रियादिसम्बन्धस्तत्रापि न स्यात् पुत्रेण सहागतः पितेति, तस्मादन्यथमप्राधान्यमत आह । 'पितुरन्वेत्यादि'। पूर्वं प्रज्ञातोऽप्रज्ञातो वा यस्य क्रियादिसम्बन्धः शब्देनोच्यते तस्य प्राधान्यं यस्य तु सहार्थान्यथानुपपत्त्या प्रतीयते तस्याप्रधान्यं, कस्य पुनः शब्देनोच्यते कस्य वा प्रतीयते,

प्रतीयमानगमीति। (कै)

साहित्यानुपपत्त्यर्थः॥ प्रविश पिण्डीमित्यादौ प्रतीयमानक्रियापेक्षविभक्तेर्दृष्टत्वादिति भावः। साद्यस्तु न तथा धातोर्विधानादिति स्पष्टमेवेति ध्येयम्। एकान्वयित्वाद्धि समानाधिकरणसाहित्यं हि पुत्रस्याध्याहृतागमनसम्बन्धज्ञान एव बोद्धुं शक्येन त्वन्यथेति तात्पर्यम्॥ षष्ठ्यत्र बाधिकेत्युत्तरदर्शनाद्देवदत्ते तृतीयार्थं सूत्रमिति भाति तदनिष्ट मित्यत आह

ल्युटेति॥ (कै)

भाष्ये

षष्ठ्येति। (भा)

एवं चोभयोस्तृतीयाप्रसक्त्यभावेन नियमार्थत्वानुपपत्तिरिति भावः॥ ननु षष्ठीबाधनार्थमेव तर्हीदमावश्यकमत आह

---

प्रयोगः। वृद्धो यूनेति। प्रधानग्रहणं शक्यमकर्तुम्। न चैवं पितुरपि तृतीयापत्तिः। तत्र प्रातिपदिकमात्रापेक्षत्वादन्तरङ्गत्वेन प्रथमोपपत्तेः॥

---

यस्य विवक्ष्यते, एतदुक्तं भवति। द्वयोस्तावत्क्रियासम्बन्धे सति सहशब्दस्य प्रयोगः, तत्र यदा द्वयोरपि क्रियादिसम्बन्धः शब्देनोच्यते सहागतौ पितापुत्राविति तदा द्वयोरपि प्राधान्यान्न भवति, यदा त्वेकस्य क्रियादिसम्बन्धं शब्देन प्रतिपिपादयिषत्यपरस्य सहार्थान्यथानुपपत्त्या तदा तस्याप्राधान्यात्तद्वाचिनस्तृतीयेति, एवं च कृत्वा सह शाखया प्रस्तरं प्रहरतीति यद्यपि प्रस्तरस्य प्रहरणसम्बन्धः शब्दात: सूक्तवाक्येन प्रस्तरं प्रहरतीति शाखायास्त्वज्ञातः तथाप्युक्तेन न्यायेन शाखाशब्दात्तृतीया सिद्धतीति विभक्ति-

सा च प्रधानेति। (कै)

प्रधाने चारितार्थ्यसम्भवादिति भावः॥

भवत्येवेति। (कै)

अत्र वदन्ति। तृतीयाषष्ठ्योः को विशेषो यत् तृतीयाऽप्रधानेऽपि षष्ठी नेति। एवं च पुत्रेण सहागमनमित्यादौ षष्ठी बाधनेन तृतीयार्थं सूत्रमावश्यकमिति। अन्ये तु कृद्योगे षष्ठीकृद्योगस्य तत्प्रकृत्यर्थान्वयमात्रेण। एवं च शाब्दतत्प्रकृत्यर्थान्वयिनोः कर्तृकर्मणोरेव षष्ठी नप्रतीयमानात्। सम्बन्धयोरिति भाष्योपपत्तिमाहुः॥

क्रियाया अभावादिति। (कै)

अस्ति क्रियासत्त्वेऽपि साहित्यबलात् स्थौल्यमेव पुत्रे प्रतीयते न तु तत्क्रियाकर्तृत्वमिति भावः॥

---

व्यत्यासो न वाच्यः। ननु पुत्रेण सहागत इत्यादौ पितुरेव कर्तुः क्तादिभिरभिधानं न त्वप्रधानस्य पुत्रादेस्तस्यापि तु सहार्थसामर्थ्यात्कर्तृत्वं प्रतीयत इत्यनभिहिते कर्तरि कर्तृकरणयोरिति तृतीया सिद्धा, इह तर्हि पुत्रेण सहागमनं पितुरिति 'कर्तृकर्मणोः कृती'ति षष्ठी प्राप्नोति, इह च तिलैः सह माषान्वपति तिलान्माषान्वपतीत्यर्थप्रतीतेर्द्वितीया प्राप्नोति, इह च पुत्रेण सह स्थूलः पुत्रेण सह गोमानिति द्रव्यगुणसम्बन्धप्रतिपादन एव तात्पर्यमिति क्रियागन्धस्यैवाभावात्कर्तृगन्धोऽपि नास्तीत्यारभ्यमेवावश्यं सूत्रम्। 'सहार्थेन योगे विधानादिति'। युक्तग्रहणादर्थग्रहणं लभ्यते ऽन्यथा सहे प्रधान इत्येव वाच्यं स्यात्, विनापि सहशब्देन वृद्धो यूनेति

कारकविभक्तिरिति । (कै)

तिष्ठत्यादिक्रियानुषङ्गात् स्थूल इत्यादेरपि कर्त्तृत्वमस्तीति भावः ॥ संयोगस्य विशेष्यतया विशेषणतया वेति तात्पर्यम् ॥

अन्तरङ्गत्वादिति । (कै)

तदपवादत्ववारणायेदं वचनमेवेति चिन्त्यम् ॥

गवा सम्बन्धोऽन्तरङ्ग इति । (कै)

एकान्वयित्वादिसमानाधिकरणाखण्डोपाधिरूपसाहित्यस्य सह-शब्दार्थतया पूर्वमन्वयिज्ञानावश्यकत्वादिति भावः ॥

बाधित्वेति । (कै)

स्वामित्वमपि गोनिरूपितमेवेति स्वामिशब्दयोगोऽपि गवामिति भावः ॥

---

निपातनादिति क्व चित्पठ्यते, इहाप्रधानवचनं प्रधाननिवृत्त्यर्थं क्रियते पितुस्तृतीया मा भूदिति तत्र प्रातिपदिकमात्रापेक्षत्वादन्तरङ्गत्वात्प्रथमा भविष्यति नार्थोऽप्रधानवचनेनेति मन्यमानः पृच्छति । 'अप्रधान इति किमिति' । 'शिष्येण सहोपाध्यायस्य गौरिति' । यथात्राप्रधाने षष्ठी-विषये तृतीया एवं प्रधानेऽपि स्यादिति मन्यते । अत्राहुः । यथा ग्रामं न गच्छतीत्यादौ ग्रामगमनयोः पूर्वमभिसम्बन्धः पश्चान्नञा प्रतिषिध्यते एवमुपाध्यायस्य पूर्वं गवा सम्बन्धः पश्चात्तत्सम्बन्धविशिष्टस्य गोः सहार्थेन योगः, अन्यथा कस्य सहत्वं प्रतिपाद्येत, अतो गवा सम्बन्धस्यान्तरङ्गत्वा-दुपाध्यायात् षष्ठी भविष्यतीति नार्थ एतेन ।

# येनाङ्गविकारः। २। ३। २०॥

अङ्गशब्दस्यार्थं आद्यजन्तत्वे शङ्कानुपपत्तेराह

अङ्गशब्द इति। (कै)

अप्रसिद्धत्वात् स न गृह्यत इति भावः॥

अचि घञि वेति। (कै)

उभावपि भाव इति भावः। एरजित्यच्॥ नन्वेवं काणशब्देऽ-
क्षिसामानाधिकरण्यमनुपपन्नमत आह

---

येनाङ्गविकारः॥ येन शरीरविकारो लक्ष्यते ततस्तृतीया स्यात्।
अर्श आद्यजन्तः सूत्रे अङ्गशब्दः। तद्विकारलक्षकस्य प्रकृत्यर्थभूतोऽवयव
एव गृह्यते सन्निधानात्। स चार्थाद्विकृत एव न ह्यविकृतेनावयवेन

---

"येनाङ्गविकारः"॥ अङ्गशब्दोऽवयववाची प्रसिद्धस्ततश्चायं सूत्रार्थः
स्याद् येन गुणेनाङ्गस्याक्ष्यादेर्विकारस्ततस्तृतीयेति ततश्चाक्षिकाणमस्येत्या-
दावेव तु स्यात् काणादेर्गुणवचनादेव च स्याद् अक्ष्णा काण इत्यादावक्ष्या-
देर्न स्यादित्यालोच्यान्यथा व्याचष्टे। 'अङ्गशब्दोऽत्रेत्यादि'। अर्श आद्यच्
प्रत्ययान्तः शरीरवचनोऽङ्गशब्दः सूत्रे उपात्त इत्यर्थः। येनेति च यदपेक्ष-
मङ्गिनोऽङ्गित्वं स हेतुत्वेन निर्दिश्यते, हेतुत्वेनेतिवदन्येनेति हेतौ तृतीयेति
दर्शयति। 'विकृतेनेति'। सामर्थ्यादेवैतल्लभ्यते नह्यविकृतमङ्गमङ्गिनो
विकारं प्रति हेतुः। 'अक्ष्णा काण इति'। कथं पुनः पुरुषः काणो याव-

काणगुणेति ॥ (कै)

लुग्विधानादेति । (कै)

इदं चिन्त्यम् । गुणगुणुभयाभिधानसमर्थ एव तत्प्रवृत्तेः । नह्यक्ष्णः काणमिति कदाचिद्भवति । कर्मघञन्तः काणत्वगुणविशिष्टाद्यवाचीति परे ॥

न प्राप्नोतीति । (कै)

शब्दतोऽङ्गविकाराप्रतीतेरिति भावः ॥

अच्प्रत्ययान्त इति । (कै)

अप्रसिद्धस्यापि व्याख्यानाद् ग्रहणमिति भावः ॥

---

शरीरस्य विकारः सम्भवति । तदेतदभिसन्धाय इत्यावुक्तम् । येनाङ्गेन विकृतेनेत्यादि । अक्ष्णा काणः । पादेन खञ्जः । पाणिना कुणिः । सामान्योपक्रमे वाक्येऽक्ष्णोयुक्ते भवत्याकाङ्क्षा, निरूपयति वा काणो वेति । तत्र

---

तच्छिधर्मः काणता तेनाक्ष्येव काणं भवति न पुरुष इत्याह । 'अवयवधर्मेणेति' । तदेवं यदङ्गगतो विकारोऽवयवधर्मः समुदाय आरोपादङ्गिनः प्रतिपाद्यते तत्र यदङ्गगतो विकारस्ततस्तृतीया भवति । कथं पुनरक्षिशब्दः प्रयुज्यते यावता काणशब्दोऽक्षिगतमेव विकारमाचष्टे, तत्र काणो देवदत्त इत्युक्ते नैव संदेहो भवति किं स्वयमेव काणः किं वाक्ष्णा काणतयेति, नाप्येवं संदेहः किन्त्वक्ष्णः काणतयासौ काणः किं वा पादस्येति, तदनर्थकोऽक्षिशब्दस्य प्रयोगः, एवं पादेन खञ्जः, पाणिना कुणिरित्यादौ पादादीनाम् । उच्यते । अक्ष्याद्युपक्रमे वाक्येऽक्ष्णोयुक्ते न ज्ञायते किं निरूपयति

विकृतमङ्गमिति। (कै)

सामर्थ्यादिति भावः॥ तदेवोपपादयति।

न हीति॥ (कै)

समुदायोऽङ्गी द्योत्यते इति (भा)

भाष्ये। विकृत इत्यादिः॥

तस्यैव। (कै)

अवयवस्यैव॥

विकारप्रतिपत्तिरिति। (कै)

शाब्दीति भावः। आर्थी तत्प्रतीतिस्तु न तृतीयानिमित्त-
मिति ध्येयम्॥

---

काणः इत्यादिप्रयोगो न विरुध्यते। यद्यप्यक्ष्येव काणं तथापि तद्योगा-
च्छरीरेऽपि व्यवहारो निरूढः। मध्यमपदलोपी योगः। अक्षिसम्बन्धिकाण-
त्ववानित्यर्थात्॥

---

किं वा काण इति, तत्र निरूपयत्यादिनिवृत्तये काणशब्दप्रयोगः, यथा
दावानय कौ तौदाविव्युक्ते ब्राह्मणाविति। 'अङ्गविकार इति किमिति'।
'अङ्गग्रहणं प्रति प्रश्नः, क्वचित्तु तथैव पाठः। 'अक्षि काणमस्येति'।
नन्वत्र परत्वात्प्रथमा भविष्यति। न। असत्यङ्गग्रहणेऽत्रैव स्याद् मुख्यो
ह्यत्र विकारः, उदाहरणे तु गौणो ऽवयवधर्मस्यावयविन्यारोपात्॥

# इत्थंभूतलक्षणे । २ । ३ । २१ ॥

भाष्ये

**इत्थंभूतलक्षणे इति ।** (भा)

इत्थंभूतस्य लक्षणबोधके शब्दे तत्स्थे लक्ष्यवाचिपदघटित- तद्स्थे सति लक्षणवाचकात्तृतीयाप्रतिषेधो वक्तव्य इत्यर्थः ॥ तदाह

**यदा लक्षणवाचीति ।** (कै)

लक्ष्यवाचिनःशब्दस्य लक्षणवाचिनः समासं विना लक्षणवा- चिनस्तत्स्थत्वं न सम्भवतीत्यत आह

**लक्ष्यवाचिसमासेति ।** (कै)

लक्ष्यवाचिघटकसमासेत्यर्थः॥ कमण्डलुपाणिशब्दो बहुव्रीहिणा लक्ष्यच्छात्रवाची तत्र पाणिशब्दस्य लक्षणत्वायोगात्पारिशेष्यादाह

**कमण्डलुशब्दादिति ।** (कै)

इत्थंभूतश्छात्रत्वप्राप्तश्छात्रस्तस्य लक्षणं कमण्डलुरिति भावः ॥ बहुव्रीहौसमुदायस्य संबन्धित्वेन संबन्धो बोध्यः ॥

---

इत्थम्भूतलक्षणे ॥ कञ्चित् प्रकारं प्राप्त इत्थम्भूतस्तल्लक्षणे तृतीया स्यात् । जटाभिस्तापसः । जटाज्ञाप्यतापसत्ववान् ॥

---

"इत्थंभूतलक्षणे" ॥ इदं शब्दात्सन्निहितवाचिनः प्रकारवचने थाल्, 'इदमस्थमु'रिति थमुप्रत्यये कृते इत्थमिति भवति, न चात्र किञ्चित्सन्नि हितमस्तीतीत्थंशब्दः सन्निहितपरित्यागेन प्रकारविशेषमाचष्टे, भूप्राप्ता- वात्मनेपदी च, आ धृषादेति णिजभावपक्षे गत्यर्थत्वात्कर्तरि क्तप्रत्ययस्तदाह- 'कञ्चिदिति' । तस्येति कर्मणि षष्ठी, लक्ष्यते येनेति लक्षणं, येन श्वेत- च्छत्रादिना राजत्वादिप्रकारविशेषापन्नतयान्यो लक्ष्यते तदित्थंभूतलक्षणम् । 'तत्रेति' । वर्तमानादित्यर्थः । 'कमण्डलुना छात्रमद्राक्षीदिति' । छात्रो-

### तत्र चेतरपदार्थान्वय इति । (कै)

अपेक्षावादे शङ्केयं तत्र हि तृतीयायामपि कमण्डलोर्ज्ञाप्यत्वेनान्वयः सुवचः पाण्यधिकरणकमण्डलुज्ञाप्यश्छात्र इत्यर्थः स्यादिति भावः ॥

### ज्ञापकादिति । (कै)

एतेन लोपविषयमेव तज्ज्ञापकमित्यपास्तम् ॥

### तत्स्थे इत्थं भूतलक्षण इति (वा)

वार्त्तिकस्वारस्येनावयवात् तृतीयापत्तेः प्रतीयमानत्वात् । एतेन समुदायात्तृतीयापत्तौ तात्पर्यमिति मन्दोक्तमपास्तम् ॥

### प्रातिपदिकानवयवत्वादिति । (कै)

तन्मध्यपतितन्यायादकज्वद्ग्रहणेन ग्रहणेऽपि कुसुमादिवच्छास्त्रेणावयवत्वाबोधनादवयवत्वे मानाभावादिति भावः । पूर्वं लक्षणत्वाविवक्षया प्रथमान्तत्वेन समासे जाते पश्चाल्लक्षणत्वविवक्षायामत्र तृतीयापादनं कृतपूर्वीकटमिति वदिति बोध्यम् । केचित्तु कमण्डलुपाणिशब्दाच्च तृतीयापत्तिः । कमण्डलुपाणित्वस्यैव लक्षणत्वात्सकृदसौ कमण्डलुपाणि[illegible]छात्रो दृष्टस्तस्य तदेव लक्षणं भवतीति "अनुर्लक्षणे" इति सूत्रे भाष्यात् तदेवेत्यस्य कमण्डलुपा-

---

पाध्याययोर्गच्छतोश्छात्रस्य हस्ते कमण्डलुर्भवति, कमण्डलुना छात्रोऽयमिति ज्ञातवानित्यर्थः । यद्येवमीदृशे ज्ञाने कमण्डलोः करणत्वादेव तृतीया सिद्ध्यति, एवं तर्हि यदायं प्रमाता प्रमितिदशायामेवात्मनः प्रमितिविशेषं प्रतिपादयितु वाक्यं प्रयुङ्क्ते कमण्डलुनायं छात्र इति तदा ज्ञानक्रियाया अप्रतिभासादप्रतिपाद्यत्वाच्च करणत्वासम्भवः, उदाहरणं त्वेवं व्याख्येयं, कमण्डलुना छात्र इत्येवं रूपं ज्ञानमभूदिति, कोऽर्थो, ऽज्ञासीदिति निर्दिष्टस्य द्रष्टुर्ज्ञानविशेषोऽत्र कथ्यते न प्रयोक्तुरित्यर्थः, इह कमण्डलुपाणि-

णित्वमेवेत्यर्थो अन्यथा स एवेति वदेत् । कमण्डलुयुक्तपाणिस्थाय- स्तद्वयवत्वीति बोधः स्यात्कमण्डलुयुक्तार्थकमण्डलुपदेन समानाधि- करणो बहुव्रीहिः । अन्यथा तन्मध्यपतितन्यायेन तद्ग्रहणेऽपि तदवयवत्वं नेत्यस्यापातरमणीयत्वेन लुग् दुर्वार एव । अत एवेच एकाचोमिति सूत्रे भाष्ये

**नरमन्य इत्यादौ** (भा)

समासप्रातिपदिकसंज्ञोत्तर जातस्यायमः "सुपोधाति"ति लुग् विधिसामर्थ्येनेत्युक्तमित्याहुः ॥ भाष्ये

**पृथग्भावादिति ।** (भा)

एकार्थीभावे इतरविशेषणस्यैव कमण्डलोरुपस्थित्या तस्य लक्षणत्वेन ज्ञात्वेऽन्ययासंभव इति भावः ॥ तदेतदस्यति कैयटः ।

**नास्तिलक्षणस्य प्राधान्यमिति ।** (कै)

विशेषणत्वानाक्रान्तोपस्थितिरित्यर्थः ॥ प्रागुक्ताशयानभिज्ञः शङ्कते ।

**किं वक्तव्यमिति ।** (कै)

अचार्यं सूत्रारूढामभ्युच्चययुक्तिमयाहैकदेशी भाष्ये

**प्राधान्येनेति ।** (भा)

---

स्थात्र इति बहुव्रीहौ कृते कमण्डलुशब्दात्तृतीया प्राप्नोति, न च प्रत्यय- लक्षणेनाप्रत्यय इति प्रातिपदिकसंज्ञाप्रतिषेधः, 'न ङिसंबुद्ध्यो'रिति लिङ्गात्, न च 'सुपो धातुप्रातिपदिकयो'रिति संप्रत्युत्पन्नायास्तृतीयाया लुग्लभ्यते, तस्याः समासप्रातिपदिकं प्रत्यवयवत्वादित्यत आह । 'इह न भवतीति' । 'समासेन्तर्भूतत्वादिति' । समासार्थं प्रति गुणभूतत्वादित्यर्थः। इत्थंभूतस्य लक्षणं यत्प्रधानं तत्र तृतीया बहुव्रीहौ तु वर्त्तिपदानां स्वार्थोप- सर्जनान्यपदार्थाभिधायित्वन्नास्ति प्राधान्यम् ॥

# संज्ञोऽन्यतरस्याम् । २ । ३ । २२ ॥

अन्यपदार्थेन योगे स्वामिनः पञ्चमी स्यादत आह

भूतपूर्वेति ॥ (कै)

अन्ययुक्त इति । (कै)

अन्यत्वप्रतियोगीत्यर्थः॥ पूर्वस्वाम्यपेक्षयेदानीमन्यो गवां स्वामीत्युदाहरणार्थः। उभयप्राप्तये गवा तुल्येन च स्वामिनं संबन्धमुपपादयति।

गवां य इति ॥ (कै)

---

संज्ञोऽन्यतरस्यां कर्मणि ॥ सम्पूर्वस्य जानातेः कर्मणि तृतीया वा स्यात्। पित्रा पितरं वा सञ्जानीते। सम्प्रतिभ्यामनाध्यान इति तङ्। क्तयोगे तु परत्वात्षष्ठी। पितुः संज्ञाता। यत्तु हरदत्तेनोक्तम्, आध्याने परत्वादधिगर्थेति षष्ठी मातुःसञ्जानातीति। तन्न। तत्र शेषाधिकारात्। कर्मत्वविवक्षायां तृतीयाद्वितीययोरवश्याभ्युपेयत्वात्। भिन्नविषयता यद्या विप्रतिषेधस्यान्याय्यत्वाच्चेति दिक्॥

---

"संज्ञोऽन्यतरस्यां कर्मणि" ॥ 'संजानीत इति'। 'संप्रतिभ्यामनाध्यान' इत्यात्मनेपदं, 'ज्ञाजनोर्जेति' जादेशः। आध्याने तु अधीगर्थदयेशामिति षष्ठी भवति मातुः संजानातीति, क्तप्रयोगे त्वनाध्यानेऽपि परत्वा'त्कर्तृकर्मणोः कृती'ति षष्ठी भवति मातुः संज्ञातेति ॥

# हेतौ। २। ३। २३॥

व्यापाराभाविष्टत्वे द्रव्यगुणक्रियाविषयत्वे च हेतुः॥

योग्यतामात्रयुक्त इति। (कै)

व्यापाराविष्टं क्रियामात्रविषयं च करणं व्यापारावेशे च क्रियाविषयत्वमेव फलोपधानमेवेति ततो भेद इति भावः॥

न त्विति। (कै)

इष्मिकारवदिति भावः॥

अन्ये त्विति (कै)

मतेऽनुग्राहकाभावोऽरुचिबीजम्॥

---

हेतौ। हेत्वर्थे तृतीया स्यात्। धनेन कुलम्। विद्यया यशः। हेतुरिह लौकिकः फलसाधनीभूतः न तु तत्प्रयोजको हेतुश्चेति कृत्रिमः। तस्य चकारेण कर्तृसंज्ञाविधानात्कर्तृकरणयोरित्येव तृतीयायाः सिद्धत्वात्। न च लौकिकहेतोरपि करणत्वात्तुल्यो दोष इति वाच्यम्। लौकिकस्य द्रव्यादिसाधारण्यात् निर्व्यापारसाधारण्याच्च। करणस्य तु क्रियामात्रविषयत्वात्। व्यापारनियतत्वाच्च। आह च। "द्रव्यादिविषयो हेतुः कारकं नियतक्रियमिति। अनाश्रिते तु व्यापारे निमित्तं हेतुरुच्यत इति च"। तथा फलमपीह हेतुशब्देन गृह्यते। अध्ययनेन वसति। इदमत्र प्रपञ्च इति भाष्ये कैयटे स्पष्टम्।

# अपादाने पञ्चमी । २ । ३ । २८ ॥

ननु ल्यब्लोपविधायकस्य शास्त्रे ऽदर्शनात् ल्यब्लोप इत्यसंगतमत आह

यथेति । (कै)

वाक्यैकदेशन्यायेनेति भावः ॥ ल्यब्ग्रहणं क्त्व उपलक्षणम् । आसनात्प्रेक्षत इत्यस्यासने स्थित्वेत्यर्थः ॥

तथेति । (कै)

ल्यबन्ताभावेऽपि गम्यमानक्रियापेक्षकर्मत्वादिति भावः ॥ गम्यमानक्रियापेक्षया ऽपादानत्वं भविष्यतीत्यत आह

क्रियाया इति ॥ (कै)

यदाश्रित्येति । (कै)

यदवधित्वेनाश्रित्येत्यर्थः ॥

---

अपादाने पञ्चमी ॥ स्पष्टम् । ग्रामादागच्छति । ल्यब्लोपे कर्मण्यधिकरणे चोपसंख्यानम् ॥ प्रासादात्प्रेक्षते आसनात्प्रेक्षते । प्रासादमारुह्य आसने उपविश्य प्रेक्षत इत्यर्थः । गम्यमानापि क्रिया कारकविभक्तिनिमित्तं

---

"अपदाने पञ्चमी" ॥ 'प्रासादादिति' । अत्र ल्यबन्तस्याप्रयोगे ऽप्यर्थो गम्यत इति द्वितीया प्राप्नोति । 'आसनादिति' । सप्तम्यत्र प्राप्नोति । प्रत्याख्यानं तु प्रेक्षणं चक्षुषा पदार्थानां ज्ञानं, तैजसं चक्षुर्बहिर्निःसृत्य विषयान् प्रकाशति निःसरणाङ्गके च प्रेक्षणे धातुर्वर्त्तते तत्राङ्गभूतनिःसरणं प्रति प्रासाद उपात्तविषयमपादानं भवति । प्रासादात्प्रेक्षत इति कोऽर्थः, प्रासादप्रदेशाच्चाक्षुषं तेजो निःसार्यपदार्थान् प्रकाशतीति । 'प्रत्याख्यानयो-

तच्चेति । (कै)

तच्च वर्त्तमानाच्छब्दादित्यर्थः ॥ तद्युक्तात्काळादित्युचितमत आह

काले विषये इति ॥ (कै)

युक्तो मासादिरिति । (कै)

मासकार्त्तिक्योस्त्ववध्यवधिमद्भावः संबन्धः । आग्रहायण्यास्तु न तद्युक्तत्वमिति भावः ॥

अथवा पञ्चमीति । (कै)

तच्छब्देन पञ्चमी परामृश्यते ॥ "तद्युक्तत्" तत्प्रकृत्यर्थः ॥ "तस्मात्"परे परावयवके कालेऽभिधेये कालवाचिनः सप्तमीत्यर्थः । आग्रहायण्यास्त्वर्थं परत्वं न शाब्दं तत्तु मासस्यैवेति भावः ॥

दर्शनं चक्षुरिति । (कै)

करणे ल्युडिति भावः ॥

---

प्रविश्यपिण्डीतिवत् । तेन कुतो भवान्, पाटलिपुत्रादित्यादि सिद्धम् । इह हि प्रत्यक्षादिसिद्धमागमनमुपजीव्यावधावेव प्रश्नोत्तरे प्रवर्त्तेते । एतेन प्रश्नाख्यानयोश्चेति वार्तिकं प्रत्याख्यातम् । अपेक्षितक्रियाया दानत्वेनैव सिद्धत्वात् । अन्यथा कश्चन्द्र इत्यादावतिव्याप्तेश्च । यतश्चाध्वकालनिर्माणं

---

श्चेति' । विशिष्टे प्रश्नाख्याने गृह्येते यत्र लोके पञ्चमी प्रयुज्यते इह न भवति कस्यायमर्थो राज्ञोऽर्थ इति कुतो भवानिति क्रियाया अभावा-दनपादानत्वात् फलवद्वचनप्रत्यक्षादिप्रमाणसिद्धामागमनादिक्रियामपेक्ष्येद प्रयुज्यते तत्र प्रयोक्तुराख्यातुश्च मनसि विपरिवर्त्तमानमागमनं प्रत्यपेक्षित-क्रियमपादानं पाटलिपुत्रादीति । 'यतश्चेति' । यदवधित्वेनाध्वकाल-योः परिच्छेदस्तत इत्यर्थः । गवीधुमत्साम नगरं, सांकाश्यं तपोवनं, कृत्ति-

## तेजो रूपमिति । (कै)

अपक्रमणधात्वर्थमनेन दर्शितम् । विषयग्राहिणो नयनरश्मयः सूर्यरश्मिवत् प्रासादस्थपुरुषनयनादपक्रम्य यावद्विषयदेशं गच्छन्तीत्यर्थः । एवं प्रासादात् प्रेक्षते चक्षुः प्रासादादपक्रम्य विषयं जानीते इत्यर्थः । प्रासादस्थपुरुषाक्षिनिर्गमनं प्रासादादिति व्यवह्रियते इति बोध्यम् । प्रासादमारुह्य भुङ्क्ते इत्याद्यर्थे प्रासादाद् भुङ्क्ते इत्यादीनामनभिधानमिति बोध्यम् । प्रासादस्थपात्रानिर्गतमन्नं भुङ्क्ते इति भाष्यरीत्यार्थ इत्यन्ये ॥

## प्राप्यविषयग्राहित्वादिति । (कै)

परावरयोगे चेति क्त्वा । बौद्धो यथा कथं चिद्विभागो बोध्यः ॥ भाष्ये

## अन्या चान्या चेति । (भा)

दर्शनक्रियेत्यर्थः ॥

---

तत्र पञ्चमी तद्युक्तादध्वनः प्रथमासप्तम्यौ कालात्सप्तमी च वक्तव्या । वनाद्ग्रामो योजनं योजने वा । कार्तिक्या आग्रहायणी मासे । कृत्तिकाभिर्युक्ता पौर्णमासी कार्त्तिकी । पौर्णमास्या लुबविशेष इति लुङ् न भवति । साऽस्मिन्पौर्णमासीत्यधिकारे विभाषाफाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्य इति

---

कायुक्ता पौर्णमासी कार्त्तिकी, पौर्णमास्यां 'लुबविशेष' इति लुबन भवति 'साऽस्मिन्पौर्णमासी' त्यधिकारे विभाषा फाल्गुनीश्रवणाकार्त्तिकीचैत्रीभ्य, इतिनिर्देशात्, अग्रे हायनमस्या इत्याग्रहायणी, प्रज्ञादेराकृतिगणत्वात्-स्वार्थिकोऽण्, आग्रहायण्यश्वत्थादिति निपातनाण्णत्वम् । 'तद्युक्तादिति' । तेन पञ्चम्यन्तार्थेनावधिद्वारेण युक्तात्काले वर्तमानात्कालादित्यर्थादित्यर्थः ।

अपक्रामति तत्तस्माद्दर्शनमिति । (कै)

दर्शनपदेन वृत्तिरेवाभिमता । कैयटोक्तव्याख्याने तु चक्षुर्वृत्तिरिति विशेषं बोध्यम् । वृत्तिपरत्वेन व्याख्याने चिरं ज्ञानानुभवानापत्तिरिति पूर्वपक्षः । तावत्कालं स्थिरत्वेनाद्यमुत्तरं द्वितीयं तु स्पष्टमेवेति ध्येयम् ॥ सत्यपि द्वित्वे विभक्त्यन्तस्यैव द्वित्वापत्तेः कर्मव्यतिहाराभावेन समासवद्भावाप्राप्तेरेकशेषेण बाधाच्च द्वन्द्वाप्राप्तेश्च कथमन्यान्येतीत्यत आह

भाष्यकारेति । (कै)

तत्प्रामाण्यात्कर्मव्यतिहाराभावेऽपि बहुलग्रहणात् क्वचित्समासवद्भाव इत्यर्थः । कृतवीप्साद्विर्वचनस्यान्यस्येत्यस्य प्रादुर्भावशब्देन षष्ठीसमास इति परे ॥ प्रभृतिपदप्रयोगेऽपि तदर्थयोगेऽपि वा कथं पञ्चमीत्यत आह

---

निर्देशात् । अग्रे हायनमस्या इति आग्रहायणी । प्रज्ञादेराकृतिगणत्वात् स्वार्थिकोऽण्, आग्रहायण्यश्वत्थादिनिपातनाण्णत्वम् । तद्युक्तादिति । तेन पञ्चम्यन्तेन अर्थद्वारेण युक्तात्काले वर्त्तमानान्मासादिशब्दादित्यर्थः । अत्र

---

यदा तया पञ्चम्या युक्तो योऽर्थः कार्त्तिक्यादिस्ततः परो यः कालो मासादिस्तत्र वर्त्तमानादित्यर्थः । अथैतस्य परत्वं न प्राप्यत इति व्यवहितेऽपि भवति, कार्त्तिक्याग्रहायण्योर्मध्यवर्त्ती मासः कार्त्तिक्याः परो भवति । 'अध्वन इति' तद्युक्तादित्यपेक्ष्यते, प्रत्याख्यानं तु वाक्यैकदेशस्यात्र प्रयोगः, तदयमर्थः । गवीधुमतः निःसृत्य यदा चत्वारि योजनानि गतानि भवन्ति ततः सांकाश्यं, चतुर्षु योजनेषु गतेषु सत्सु सांकाश्यमिति, गतानीति च कर्मणि निष्ठा

भाष्यकारवचनादिति । (कै)

इदमत्र प्रयोक्तव्यं यत्र प्रयुज्यते इत्येवं रूपात्प्रभृतियोगे पञ्चमीति वचनमनुमीयते इति भावः । न प्रयुज्यते इत्युक्त्वा प्रभृत्यर्थयोगे पञ्चमीति सूचितं तदप्यवधिमादायेत्येवं रूपप्रभृत्यर्थयोगे एव प्रवर्त्तते । प्रभृतिशब्दस्य आरभ्येत्यस्य च तमादायेत्यर्थः ॥ अधिकरणत्वाभावात्कथं सप्तमीत्यत आह

ततश्चेति । (कै)

कार्त्तिकीमादाय मासे गते आग्रहायणी भवतीति वाक्यार्थ इति भावः ॥ तत्र

प्राप्तीति (कै)

एतदर्थमेव ततः सांकाश्यमिति वाक्यभेद इति भावः ॥

---

भाष्ये कार्त्तिक्याः प्रभृतीति प्रयोगात्प्रभृतियोगे पञ्चमीति कैयटः । प्रभृतीत्यर्थग्रहणम् । तत आरभ्येत्यर्थ इति कैयटात् । "स्तन्यात्प्रभृत्येव सपत्नवानीति" कुमारः ॥

---

यदा जनैर्योजनानि गतानि भवन्ति ततस्तैः सांकाश्यं प्राप्यत इत्यर्थः । यदाऽध्ववर्त्तिनां निःसरणं गमनं वाध्वन्यारोप्य निःसृत्य गतानीति ल्यपः कर्त्तरि त्तस्य च प्रयोगः, तस्य प्रतीयमाननिःसरणक्रियापेक्षयापादानत्वं, गतानीति च प्रातिपदिकार्थस्याव्यतिरेकात्प्रथमा, गतेषु सत्स्विति 'यस्य च भावेन भावलक्षण' मिति सप्तमी, आग्रहायणी मासइति कार्त्तिक्याः परत्र मासे गते सति आग्रहायणी भवतीत्यर्थः, तत्र दिग्योगलक्षणा पञ्चमी, सप्तमी पूर्ववत् ॥

# षष्ठ्यतसर्थप्रत्ययेन ।२।३।३०॥

तदर्थोपलक्षणमिति । (कै)

मध्यमपदलोपिसमासादिति भावः ॥

अतस्शब्दस्यार्थस्येति । (कै)

व्यधिकरणषष्ठ्या आश्रयणाशक्त्यले हेतुं दर्शयन् अतस्शब्दे प्रत्ययलव्यभिचारं दर्शयति

तस्यतेरिति । (कै)

न च प्रत्ययाप्रत्यययोरिति परिभाषया'कृन्मे'ति सूत्रभाष्यपठितया प्रतिपदोक्तपरिभाषया च प्रत्ययस्यैव लाभे सिद्धे प्रत्ययग्रहणेन सामर्थ्यात्तदर्थलाभे इति वाच्यम् । तदनित्यत्वज्ञापनेनापि चारितार्थ्यात् ॥

---

षष्ठ्यतसर्थप्रत्ययेन ॥ एतद्योगे षष्ठी स्यात् । दक्षिणतो ग्रामस्य । उत्तरतः । दक्षिणोत्तराभ्यामतसुच् । एवं पुरःपुरस्तादुपर्युपरिष्टात् ॥

---

"षष्ठ्यतसर्थप्रत्ययेन" । अत्र तस्यतेर्णम्पूर्वस्य क्विप्यतस्थितिरूपसत्त्वेपि प्रत्ययश्रुतत्वात्प्रत्ययाप्रत्ययपरिभाषया च प्रत्ययस्यैव ग्रहणमिति सिद्धं नार्थः प्रत्ययग्रहणेन । 'पुरस्तादिति' । पूर्वाधरावराणामसिपुरध-

संभवाच्चेति। (कै)

षो हेतौ ॥ भाष्ये

अन्यस्तेन समानार्थः। (भा)

इत्यस्य तेनापि योगे सिद्धमिति शेषः॥

अथ प्रत्ययेति। (भा)

परिभाषयैव सिद्धे इत्यर्थः॥ लुप्तेऽपि प्रत्ययलक्षणेन प्रत्ययान्तत्वमस्त्येवेत्यत आह

प्रत्ययग्रहणमिति। (कै)

अञ्चेर्लुगिति लुक् ॥

---

यस्यैषा' 'अस्ताति चे'तिपूर्वशब्दस्य पुरादेशः। 'उपर्युपरिष्टादिति'। ऊर्ध्वशब्दस्योपशब्द आदेशो रिल्रिष्टातिलौ प्रत्ययौ भवतः, ततः षष्ठ्याप्नोति भाष्यकारप्रयोगात्पञ्चमी ॥

# पृथग्विनानानाभिस्तृतीयान्यतरस्याम् । २ । ३ । ३२ ॥

नञः प्रतिषेधार्थत्वेऽसंगतिरत आह

काक्वेति ॥ (कै)

अनधिकारत्वेऽन्यारादित्यस्यासंगतिरत आह

योगात्परेष्विति । (कै)

भाष्ये

द्वितीयाषष्ठीविषये इति । (भा)

एनपा द्वितीया । ( २ । ३ । ३१ ) "षष्ठ्यतसर्थ"त्यत्र चेत्यर्थः । सौत्रक्रमत्यागे न्यायसिद्धपूर्वनिपातत्यागे च बीजं चिन्त्यम् । केचित्तु "एनपा द्वितीया" "षष्ठ्यतसर्थने"त्येवाष्टाध्यायीपाठः । एवं च 'पृथग्विने'त्यनेन द्वितीयाविधानमपीति । एनपेति योगविभागात् षष्ठ्यपीति वृत्त्युक्तं चिंत्यमित्याहुः ॥

---

पृथग्विनानानाभिस्तृतीयान्यतरस्याम् ॥ अन्यतरस्यां ग्रहणं समुच्चयार्थम् । निपातानामनेकार्थत्वात् । मण्डूकप्लुत्या पञ्चम्यनुवर्तते । एभिर्योगे

---

"पृथग्विनानानाभिस्तृतीयान्यतरस्याम्" ॥ अन्यतरस्यांग्रहणेन पक्षे यथाप्राप्तस्याभ्यनुज्ञानात् तृतीयया मुक्ते शेषत्वात्पक्षे षष्ठी प्राप्नोति, अथ स्यादनेकार्थत्वान्निपातानामन्यतरस्यांग्रहणं समुच्चयार्थं न विकल्पार्थमिति, एवमप्यनन्तरा द्वितीया समुच्चीयेत, अथापि योगविभागेनास्या अपि

अन्यतरस्यां ग्रहणमिति । (कै)

अव्ययानामनेकार्थत्वात्समुच्चयबोधनद्वारेत्यर्थः ॥ आशयानभिज्ञः पृच्छते भाष्ये

अस्त्यन्यदिति । (भा)

यद्यपि संबंधानुवृत्तौ मण्डूकानुवृत्तौ वा अनुवृत्तिसामर्थ्यादेव पञ्चम्यामपि सिद्धायाम् अन्यतरस्यां ग्रहणं चिंत्यप्रयोजनं षष्ठी तु नेष्यते भाष्यकृता तथापि तद्विना तयोर्दुर्ज्ञेयत्वात्तद्बोधनायैव तद् ग्रहणमिति बोध्यम् ॥ तद्भनयन्नेवाथवान्येत्यादिपचद्वयमाह

बाध्यते इति । (कै)

इह तु तृतीयया न बाध्यते पञ्चानीयान्यतरस्यां ग्रहणादिति भावः ॥ भाष्ये

यत्नादिति । (भा)

अत्र चान्यतरस्यां ग्रहणं यत्नोऽस्तीति भावः ॥

---

तृतीयापञ्चम्यौ स्तः । वृत्तिकारस्त्वाह । पृथग्विनानानाभिरिति योगविभागाद् द्वितीयापीष्यत इति । पृथग्रामेण रामाद्ग्रामं वा । एवं विना नाना । विनञ् नाना च वर्जन इत्यमरः । नानानारीर्निष्फला लोकयात्रेति प्रयोगः ॥

---

सिद्धिः, एवमपि तदनन्तरा षष्ठी समुच्चीयेत न कथं चन पञ्चमी सा चेष्यते तत्कथमित्याह । 'पञ्चमीग्रहणमिति'। 'इहेति'। न पूर्वयोर्योगयोः मण्डूकगतयोऽधिकारा भवन्ति, यद्यनुवृत्तिसामर्थ्यात्पञ्चमी, अन्यतरस्यांग्रहणं तर्हि किमर्थं समुच्चयार्थं तत्र किं समुच्चीयत इत्यपेक्षायां पञ्चमीग्रहण-मिहानुवर्तत इत्युच्यते । 'योगविभागः कर्त्तव्य इति'। असत्यपि मुनित्रय-वचने प्रयोगबाहुल्यादेवं व्याख्यातम् ।

# दूरान्तिकार्थेभ्यो द्वितीया च।
## २। ३। ३५॥

भाष्ये

पञ्चमीविधाने तद्युक्तादिति। (भा)

पञ्चम्यन्तदूरान्तिकार्थैर्युक्तादित्यर्थः। सामान्यतो दूरान्तिकार्थयुक्तात्प्रतिषेधे पूर्वसूत्रस्थान्यतरस्यां ग्रहणस्य वैयर्थ्यापत्तिरत एवात्र वार्त्तिके पञ्चमीविधानमिति सार्थकं दूरान्तिकार्थैरिति पूर्वसूत्रेण षष्ठीपञ्चम्योः प्राप्तिः पूर्वसूत्रेण दूरान्तिकार्थैः षष्ठीत्यनेन षष्ठ्येवेति

---

दूरान्तिकार्थेभ्यो द्वितीया च॥ एभ्यो द्वितीया स्याच्चकारात्पञ्चमीतृतीये। प्रातिपदिकार्थे विधिरयम्। ग्रामस्य दूरं दूराद्दूरेण वा। अन्तिकमन्तिकादन्तिकेन वा। उत्तरत्राप्येतदनुवृत्त्या तत्तद्विषयेऽपि द्वितीयादयः स्युः। तथा चाधिकरणेऽपि प्रयुज्यते। दूरादावसथान्मूत्रमिति। आवसथस्य दूर इत्यर्थः। असत्त्ववचनग्रहणमनुवर्तते। तेनेह न। दूरः पन्थाः। दूराय पथे देहि। दूरस्य पथः स्वमिति॥

"दूरान्तिकार्थेभ्यो द्वितीया च"॥ 'प्रातिपदिकार्थे विधानमिति'। अर्थान्तरस्यानिर्देशादिति भावः। नन्वनिर्देशेऽप्यर्थान्तरस्य शेषविषये पूर्वविभक्तिविषये च विधानमेतद्युक्तं प्रथमा विषये तु परत्वात्सैव प्राप्नोति। नैष दोषः। उत्तरत्राप्येतदनुवर्त्तते तेनोत्तरविभक्तिविषयेऽपि सर्वत्र यथाभिधानं भवति, तथा च दूरादावसथान्मूत्रमित्यधिकरणेऽपि भवति, आवसथस्य दूर इत्यर्थः। प्रातिपदिकार्थे विधानमित्येतत्तदाहृतविषयं द्रष्टव्यं, तथा च सत्त्ववचनेभ्यो यथायथं विभक्तयो भवन्तीति वक्ष्यति, प्रातिपदिकार्थ एव तु विधाने यथायथमित्यनुपपन्नं प्रथमैव भवतीति वाच्यं स्यात्॥

न तु पञ्चमी । अनेन निषेधादिति भावः ॥ १"दूरादावसथादि"-त्यनयोः सामानाधिकरण्यभ्रमं निराकरोति

आवसथस्येति । (कै)

दूरात् ग्रामस्येत्यादौ त्वनभिधानात्पञ्चमी नेति भावः ॥

---

## सप्तम्यधिकरणे च । २ । ३ । ३६ ॥

इन्विषयस्य (कै)

इत्यस्य इनो विषयस्येति समासः ॥ प्रकृतित्वेन च स इनो विषयस्तदाह

१ दूरादावसथान्मूत्रं दूरात्पादावसेचनम् ।
दूराच्च भार्यं दस्युभ्यो दूराच्च कुपितादुगुरोः ॥

---

सप्तम्यधिकरणे च ॥ चकारात् दूरान्तिकार्थेभ्यः । कटे आस्ते । दूरान्तिकार्थेभ्यः प्राग्विभक्तित्रयमुक्तम् । अनेन च सप्तमीति तेभ्यश्चतस्रो विभक्तयः फलिताः । क्तस्येन्विषयस्य कर्मण्युपसङ्ख्यानम् ॥ इनिति इन्नन्तः शब्दः । विषयो वृत्तिभूमिर्यस्य क्तान्तस्य तस्येत्यर्थः । अधीती व्याकरणे । अधीतमनेनेति विग्रहः । आद्धमनेन भुक्तमित्यतो ऽनेनेति वर्तमाने इष्टादिभ्यश्चेति सूत्रेण कर्तरीनिप्रत्ययः । ततस्तद्धितार्थेन सहैकार्थीभूतस्याधी-

"सप्तम्यधिकरणे च" । 'क्तस्येन्विषयस्येति' । इन्नन्तः शब्दो विषयो वृत्तिभूमिर्यस्य क्तान्तस्य तस्येत्यर्थः । 'अधीती व्याकरणे इति' । अधीतमनेनेति विग्रहे आद्धमनेन भुक्तमित्यतोऽनेनेति वर्तमाने 'इष्टादिभ्यश्चे'तीनिप्रत्यये कृते तद्धितार्थेन कर्त्रा सहैकीभूतस्याधीतस्य निष्कृष्य व्याकरणादिना सम्बन्धाभावात् क्तप्रत्ययेनानभिहिते व्याकरणादौ गुणभूतस्यापि

## इन्नन्तस्येति। (कै)

क्तान्तप्रकृतिकेन्नन्तस्येत्यर्थः॥

## अत्र व्याकरणस्येति। (कै)

पूर्वमविवक्षितकर्मतया भावे क्ते पश्चात्कर्मसंबन्धेन कर्मणाऽनभिहितत्वाद् द्वितीया प्राप्तेत्याशयः। कर्मणि क्तप्रत्ययान्तात्तु वा इति रथ्यविकन्यायात्। एतेन कर्मणि क्तप्रत्यये व्याकरणशब्दात् प्रथमैवेति निरस्तम्॥

---

तस्य निष्कृष्य व्याकरणादिना सम्बन्धाभावात्। क्तप्रत्ययेनानभिहितं व्याकरणम्। तत्र कृतपूर्वी कटमितिवद् द्वितीया प्राप्ता। गुणभूतयापि हि अध्ययनक्रियया कर्मणः सम्बन्धो न विरुद्धः। सहाधीतवान् व्याकरणमित्यादौ यथा। आह च, "अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः। क्रिया सम्बध्यते तद्वत् कृतपूर्व्यादिषु स्थितेति"॥ न विविच्य ग्रहो यस्याः सा अविग्रहा। गुणीभूतेत्यर्थः। ननु कालकर्मणोऽपि सप्तमी प्राप्नोति मासमधीती व्याकरण इत्यादौ। नैवम्। तस्य बहिरङ्गत्वात्। न चैवं तत्र द्वितीयापि न स्यादिति वाच्यम्। तद्विधाने लक्ष्यानुरोधेन शक्तिपक्ष-

---

प्रकृतिवाच्ययाध्ययनक्रिययाऽधीतवान् व्याकरणमितिवत् कर्मतया सम्बध्यमाने कृतपूर्वी कटमितिवद् द्वितीयायां प्राप्तायां सप्तमी विधीयते। इह मासमधीती व्याकरण इति कालकर्मणो बहिरङ्गत्वात्सप्तम्यभावः। 'साधुर्देवदत्तो मातरीति'। अत्र साधुत्वासाधुत्वयोर्मातापितृविषयत्वेऽपि क्रियाया अभावादधिकरणत्वाभावाद्वचनं, साधुनिपुणाभ्यामित्येव सिद्धेरर्चार्थमत्र साधुग्रहणं, तेन तत्त्वकथनेऽपि भवति, अर्चाग्रहणं तत्र निपुणार्थं, कथं तर्हि तत्र प्रत्युदाहरिष्यते अर्चायामिति किं साधुर्भृत्यो राज्ञ इति। उच्यते। राज्ञो भृत्येन सह शाब्दोऽन्वयो न साधुना राज्ञो भृत्यः स साधुरिति, तत्र राजनि वान्यत्र वेति नैतच्छब्देन स्पृश्यते प्रत्यासत्त्या तु

'अधिकरणत्वविवक्षायामिति । (कै)

अस्तीत्यध्याहारेण कर्तृद्वारा व्यापाराश्रयत्वविवक्षायामित्यर्थः ॥

वहिरङ्गत्वादिति । (कै)

तच्चोपपादितं "कालाध्वनोरि"त्यत्र ॥ उभयथानेनैव सप्तम्यां सिद्धायामर्चाग्रहणं तत्र व्यर्थमत आह

अर्चाग्रहणं त्विति । (कै)

तत्र साधुग्रहणं तु साधुप्रयोगेऽप्यर्चायां प्रत्यादियोगे निषेधार्थं न चानेन दुर्वारा तत्सामर्थ्येनास्याप्रवृत्तेरिति केचित् । क्रियाया एव कारकार्हत्वादसङ्गतिमाशंक्याह

१ "अधिकरणविवक्षया" इत्यपि दृश्यते ॥

स्याश्रयणात् । साध्वसाधुप्रयोगे च । साधुः कृष्णो मातरि असाधुर्मातुले । अत्र साधुत्वासाधुत्वयोर्मात्रादिविषयत्वेऽपि क्रियाया अभावेनाधिकरणत्वाभावाद्वचनम् । साधुनिपुणाभ्यामित्येव सिद्धे अनर्चार्थमत्र साधुग्रहणम् । तेन तत्त्वकथनेऽपि भवति । सूत्रे अर्चाग्रहणन्तु निपुणार्थम् । साधुग्रहणन्तु तत्र वार्त्तिकं दृष्ट्वा सूत्रस्याप्रवृत्तेरिति ध्येयम् । अर्हाणां कर्तृत्वे अनर्हाणामकर्तृत्वे तद्वैपरीत्ये च । सत्सु तरत्सु असन्त आसत इत्यादि । यद्यपीदं "यस्य च भावेने"त्येव सिद्धम् । तथापि लक्ष्यलक्षणभावाविवक्षायामपि यथा स्यादिति वचनमित्याहुः । निमित्तात्कर्मयोगे ॥ निमित्तमिह फलम् । तद्वाचिनः सप्तमी स्यात् । यदि तस्य कर्मणा सह योगो योगविशेषः संयोगसमवायात्मकः ।

राजविषयमेव साधुत्वं गम्यत इत्येतावता तत्प्रत्युदाहरणं द्रष्टव्यम् । 'कारकार्हाणामिति' । कारकशब्दो भावसाधनः, कारकत्वार्हाणामित्यर्थः । 'ऋद्धेष्विति' । ऋद्धा भोजनक्रियामर्हन्तीति कारकार्हाः, लक्ष्यलक्षणभावाविवक्षायामपि यथा स्यादिति वचनम् । 'दरिद्रेष्वासीनेष्विति' । दरिद्रा भोक्तुं नार्हन्तीत्यकारकार्हाः । 'तद्विपर्यासे चेति' । कारकार्हाणामकार-

कारकशब्द इति । (कै)

प्रक्षिपरः स इति परे । उत्तरसूत्रेण "यस्य च भावेन" इत्यनेन क्रियाफलमिति व्याख्यानादिति भावः ॥ भाष्ये "सङ्ख्या" इत्यस्य विद्यादिगुणसम्बन्धा इत्यर्थः । "संयोग" इत्यस्य व्याख्यानं "संबन्ध इति" समवायस्यापि संग्रहाय ॥

---

वायात्मकः । "चर्मणि द्वीपिनं हन्ति दन्तयोर्हन्ति कुञ्जरम् । केशेषु चमरीं हन्ति सीम्नि पुष्कलको हतः" ॥ चर्मफलकं द्वीपिकर्मकं हननमित्यर्थः । अत्र हेतुतृतीया प्राप्ता । तत्र हि फलमपि हेतुशब्देन गृह्यते । अध्ययनेन वसतीत्यादिसिद्धय इति प्रत्यय इति सूत्रे कैयटे स्थितम् । अत्र द्वीपि-चर्मणोः समवायः संबन्धः । चमरशब्दाज्जातिलक्षणो ङीष् । पुष्कलकः शङ्कुः । स सीम्नि सीमज्ञानार्थं हतो निहतः निखत इत्यर्थः । निहन्यमानेन शङ्कुना सह सीम्नः संयोगः संबन्ध इति हरदत्तादयः । दुर्गवाक्यप्रबोधे तु कुलचन्द्रस्त्वाह । सीमा अण्डकोशः पुष्कलको गन्धमृगः । उक्तं च मेदिनीकोशे, सीमा घाटस्थितिक्षेत्रेष्वण्डकोशेषु च स्त्रियामिति । अथ पुष्कलको गन्धमृगे क्षपणकीलयोरिति च । कर्मयोगे किम् । वेतनेन धान्यं लुनाति ॥

---

कालेऽकारकार्थायां च कारकत्व इत्यर्थः । 'निमित्तात्कर्मयोग इति' यत् क्रियाप्रयोजनं यदर्थः क्रियारम्भस्तत्फलमिह निमित्तं, तद्वाचिनः सप्तमी भवति यदि तस्य निमित्तस्य कर्मणा कर्त्तुरीप्सिततमेन सह समवायादि-लक्षणः सम्बन्धो भवतीत्यर्थस्तत्र हेतुतृतीयायां प्राप्तायां वचनं, तत्र हन्ति-कर्मणा द्वीप्यादिना चर्मादेर्निमित्तस्य समवायः सम्बन्धः । 'चमरीमिति' । चमरशब्दाज्जातिलक्षणो ङीष्, पुष्कलकः शङ्कुः स सीम्नि सीमाज्ञानार्थं हतो निखात इत्यर्थः, तेन च निहन्यमानेन शङ्कुना सीम्नः संयोगः सम्बन्धः । कर्मसम्बन्ध इति किं, वेतनेन धान्यं लुनाति ॥

# यस्य च भावेन भावलक्षणम् । २ । ३ । ३७ ॥

भूय इति । (कै)

अनुमापकत्वं लक्षणत्वं तत्प्रकारको बोध इति पूर्वपक्ष इति भावः ॥

यथाग्नीति । (कै)

तथा च उदयति सवितरि तमो नष्टं धूमे सति वह्निर्भवतीत्यादावेव स्यात् इति भावः ॥ भाष्ये

द्वितीयो भाव आरभ्यते (भा)

इत्यस्योच्यत इत्यर्थः ॥

---

यस्य च भावेन भावलक्षणम् ॥ यस्य क्रियया क्रियान्तरं लक्ष्यते ततः सप्तमी स्यात् । निर्ज्ञातकाला क्रिया अनिर्ज्ञातकालायाः क्रियायाः

---

"यस्य च भावेन भावलक्षणम्" ॥ इह भूयो दर्शनाश्रयो लक्ष्यलक्षणभावो यथाग्निधूमयोः, ततश्चोदित आदित्ये तमो नष्टम् उदिते चन्द्रमसि समुद्रः प्रवृद्ध इत्यादावेव स्याद् इह त्वग्निषु हूयमानेषु गत इत्यत्रिहवनं यदा गमनेन सह पुनःपुनर्न दृष्टचरं तदा न तत्तस्य लक्षकमितीह न स्यादित्याशङ्क्याह । 'प्रसिद्धा च क्रियेति' । प्रसिद्धिरेव

**लक्षणशब्द इति** (कै)

नायं शब्दोऽनुमापकत्वेनाभिमतलिङ्गपर्यायः । किन्तु वृषं प्रतिविद्योतत इत्यादाविवानिर्ज्ञातज्ञापनवृत्तिरिति भावः ॥ भाष्ये

**सकृदपि यन्निमित्तत्वायेति ।** (भा)

तत्कालादिपरिच्छेदनिमित्तत्वायेत्यर्थः ॥

**तद्देव ।** (भा)

कमण्डलुपाणित्वमेव ।

**अनिर्ज्ञातकालस्येति** (कै)

अनेन मानान्तरेण यस्य स्वरूपं ज्ञातं तस्य कालविशेषज्ञापनार्थं शब्दप्रयोगे एतस्य प्रवृत्तिं सूचयति । "राहूपरागे स्नायादि"-त्यादौ कालवाचकादधिकरण एव ॥

---

कालपरिच्छेदकत्वात् लक्षणमित्युच्यते । गोषु दुह्यमानासु गतः । एवं देशपरिच्छेदिकापि सति गुणे द्रव्यत्वमस्ति ॥

---

क्रियायाः क्रियां प्रति लक्षणत्वे उपयुज्यते न पुनर्दर्शनम्, एतदुक्तं भवति निर्ज्ञातकाला क्रियाऽनिर्ज्ञातायाः क्रियायाः सकृदपि कालपरिच्छेदहेतुत्वे-नोपात्ता भवत्येव लक्षणमिति ॥

# पञ्चमी विभक्ते।२।३।४२॥

विभागो भेदः। गोभ्यो गौरेव कथं विभक्तत्वमत आह

गोमण्डलादिति (कै)

पृथक् क्रियते भेदेन बोध्यते॥

अवधारणमाश्रीयत इति। (कै)

माथुराः पाटलिपुत्रकेभ्य इत्यादौ माथुराणां पाटलिपुत्रकेषु प्राणित्वेनान्तर्भावेऽपि शब्दोपात्ताकारापेक्षयानन्तर्भावाद्विभाग एवेति भावः॥

---

पञ्चमी विभक्ते॥ विभागो विभक्तं निर्द्धार्यमाणस्य यत्र भेद एव न तु शब्दोपात्तसामान्यरूपाक्रान्तता तत्र निर्द्धारणाश्रयात् पञ्चमी स्यात्। माथुराः पाटलिपुत्रकेभ्य आढ्यतराः। न ह्यत्र गवां कृष्णेत्यादिष्विव सामान्यविशेषभावः किन्तु शब्दोपात्तधर्मयोर्विरोध एव। इदञ्च सूत्रं बुद्धिकल्पितमपायमाश्रित्यापादानप्रकरणे प्रत्याख्यातम्। आह च। "बुद्ध्या समीहितैकत्वात् पञ्चालान् कुरुभिर्यदा। पुनर्विभजते वक्ता तदापायः प्रतीयत" इति॥

---

"पञ्चमी विभक्ते"॥ 'विभक्तमस्यास्तीति'। निर्द्धार्यमाणात्, एतदुक्तं भवति, निर्द्धार्यमाणस्य निर्द्धारणाश्रयस्य च विभागे सति निर्द्धारणं भवति ततश्च सर्वत्रैव निर्द्धारणाश्रये विभक्तमस्तीति सामर्थ्यादवधारणमाश्रीयते यस्मिन्निर्द्धारणाश्रये विभाग एव न केनचिदात्मभाव इति, तेन गवां कृष्णेत्यादौ यद्यपि गोमण्डलात्कृष्णा गौः पृथक् क्रियते तथापि गवात्मनान्तर्भावोऽस्तीति न भवति, उदाहरणे तु माथुराणां पाटलिपुत्रेषु प्राणित्वेनान्तर्भावेऽपि शब्दोपात्ताकारापेक्षयानन्तर्भावाद्विभाग एव भवति, प्रत्याख्यातं चैतत्सूत्रमपादानप्रकरणे "बुद्ध्या समीहितैकत्वात्पञ्चालान् कुरुभिः पृथग् यदा विभजते वक्ता तदा ऽपायः प्रतीयत" इति॥

# साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः । २ । ३ । ४३ ॥

**प्रतिपरीति** (कै)

कर्मप्रवचनीयसंज्ञासूचनार्थाः प्रत्यादय इति भावः ॥

---

साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः ॥ आभ्यां योगे सप्तमी स्यादर्चायां गम्यमानायां न तु प्रतेः प्रयोगे । मातरि साधुर्निपुणो वा । पुण कर्मणि शुभे । अस्मान्निपूर्वादिगुपधलक्षणः कः । अर्च पूजायामस्माद्भौवादिकाद् गुरोश्च हल इत्यप्रत्ययः । चौरादिकात्तु ण्यासश्रन्थेति युच् स्यात् । अर्चायां किम् । निपुणो राज्ञो भृत्यः । इह तत्त्वकथने तात्पर्यम् । साधुशब्दप्रयोगे त्वनर्चायामपि सप्तमी भवत्येव । साध्वसाधुप्रयोगे चेति वार्त्तिकादिति प्रागेवोक्तम् । अप्रत्यादिभिरिति वक्तव्यम् । नेह । साधुर्निपुणो वा मातरम्प्रति पर्यनु वा ॥

---

"साधुनिपुणाभ्यामर्चायां सप्तम्यप्रतेः" ॥ साधुशब्दः कृवापाजिमी-त्युणन्तः, पुण कर्मणि शुभ इत्यस्मान्निपूर्वादिगुपधेति के निपुण इति भवति, अर्च पूजायामित्यस्माद्भौवादिका 'द्गुरोश्च हल' इत्यकारः, चौरादिकात्तु युचा भाव्यम् । अप्रतेरित्यत्र प्रयोग इत्यध्याहार्यं तदाह 'न चेत्प्रतिः प्रयुज्यत इति' । 'साधुर्भृत्यो राज्ञ इति' । पूर्वमेवैतद् दूषितमुपपादितं च, निपुणः पुत्रो मातुरिति तु तत्त्वकथने न्याय्यं प्रत्युदाहरणम् ।

# प्रसितोत्सुकाभ्यां तृतीया च । २ । ३ । ४४ ॥

स्यतेरिति (कै)

"षोऽन्तकर्मणि"त्ये इति

अस्य सितमिति । (कै)

कारकं कर्मकारकव्यतिषङ्गो रज्ज्वादिभिः सम्बन्धेन गौणार्थस्य तत्परत्वरूपः । अत एव पूर्वमुत्सुकशब्दपर्यायादित्युक्तम् । तत्परे प्रसितासक्ता इत्यमरः ॥

---

प्रसितोत्सुकाभ्यां तृतीया च ॥ आभ्यां योगे तृतीया स्याच्चात्सप्तमी । प्रसित उत्सुको वा हरिणा हरौ वा । तत्परे प्रसितासक्ताविथमरः । उत्सुकशब्दपर्यायात्प्रसितोऽपि तत्पर एवेह गृह्यते तेन प्रकर्षेण सितः मुक्त इत्यर्थे न भवति ॥

"प्रसितोत्सुकाभ्यां तृतीया च" ॥ षिञ् बन्धने प्रकर्षेण बद्धः प्रसितस्तदाह । 'यस्तत्र नित्यमवबद्ध इति' । नित्यमित्यनेन प्रशब्दस्यार्थमाचष्टे, अवबद्ध इवावबद्धः, यो हि यत्र प्रसक्तः स तत्रावबद्ध इव भवतीति भावः । तेन प्रकर्षेण सितः मुक्ततर इत्यस्य ग्रहणं न भवतीति प्रदर्शितं भवति । 'केशेषु प्रसित इति' । तत्पर इत्यर्थः ॥

# नक्षत्रे च लुपि । २ । ३ । ४५ ।

एतत्सूत्रप्राप्तये प्रक्रियामाह

पुष्येण युक्त इति सर्वेति । (कै)

ततश्च पुष्यं प्रतीक्षते पुष्याय स्पृहयति पुष्यस्य समीप इत्यादि प्रयोगा नासिध्येरन्निति भाव इति सर्वं निर्मलम् ॥

---

नक्षत्रे च लुपि ॥ नक्षत्रे प्रकृत्यर्थे सति यो लुप्सञ्ज्ञया लुप्यमानस्य प्रत्ययस्यार्थस्तत्र वर्तमानात्तृतीया सप्तम्यौ स्तोऽधिकरणेऽर्थे। मूलेनावाहयेद्देवीं श्रवणेन विसर्जयेत् ॥ मूले श्रवणे इति वा। नक्षत्रेण युक्तः काल इत्यणो लुबविशेषइति लुप्। अधिकरणे किम्। पुष्यः। पुष्यं प्रतीक्षते। पुष्याय स्पृहयति। अत्र केचित् सूत्रे पञ्चम्यर्थे सप्तमी। लुबन्तान्नक्षत्रवाचिन

---

"नक्षत्रे च लुपि" ॥ नक्षत्रे प्रकृत्यर्थे सति यो लुप्सञ्ज्ञया लुप्यमानस्य प्रत्ययस्यार्थस्तत्र वर्तमानादिति सूत्राक्षरान्वयः, यथोच्यते। नक्षत्रे लुपीति पञ्चम्यर्थे सप्तमी लुबन्तान्नक्षत्रवाचिन इत्यर्थ इति, तन्नोत्तराभ्यां पञ्चमीभ्यां गोचरा गच्छेदिति विशेषणान्न स्यात्तस्यालुबन्तत्वात्, कथं तर्हि लुबन्तान्नक्षत्राभिधायिनः शब्दादिति वृत्तिः, प्रायोदृष्ट्यैतदुक्तं लुबन्तार्थाभिधायी प्रायेण लुबन्तो भवति, लुबर्थाभिधायिनः शब्दमात्रादित्यर्थः।

इति शिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते
महाभाष्यप्रदीपोद्योते द्वितीयाध्यायस्य
तृतीयपादे द्वितीयमाह्निकम् ॥

---

इति व्याचख्युः तेषां लुबन्तविशेषणान्न स्यात्, उत्तराभ्यां फाल्गुनीभ्यां नोत्तराभ्यां गच्छेदिति यथेति हरदत्तः ।

---

'लुबन्तादिति'। लुबन्ते समासाभावस्येति बहुव्रीहिः, समासनिरासकं च लुपोऽन्यावयवत्वं द्रष्टव्यम्। अधिकरण इति वर्त्ततइति'। एवं च पुष्यं प्रतीक्षते पुष्याय स्पृहयति पुष्यस्य समीपइत्यादावपि न भवति ॥

## महाभाष्यप्रदीपोद्योतः ।



पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ।



कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ॥



# प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा । २ । ३ । ४६ ।



तद्ग्रहणमन्तरा तदर्थे प्रथमा नियमालाभात् प्रश्नानुपपत्तिरत आह

ङ्याबिति ॥ (कै)

अन्तरेणापीति । (कै)

अर्थे इत्युक्तापि कस्यार्थे इत्याकाङ्क्षायां यतः स्वादिविधिस्त-

---

प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा ॥ प्रातिपदिकार्थमात्रे लिङ्गमात्रादिषु च प्रथमा स्यात् । द्वन्द्वान्ते श्रुतत्वात्प्रत्येकं मात्रशब्दः सम्ब-

---

"प्रातिपदिकार्थलिङ्गपरिमाणवचनमात्रे प्रथमा" । 'प्रातिपदिकार्थः सत्तेति' । अत्र निष्कर्षितस्येदं लक्षणं न प्रातिपदिकार्थमात्रस्य, गौः शुक्लः पाचको डित्थ इत्यादावसम्भवात् । योर्थः सन्नेव केवलं न जात्यादिरूपो न

दृर्थे इति लाभादिति भावः ॥ तत्त्वेऽपि लिङ्गविशिष्टपरिभाष- याख्यतार्थ्यं तल्लाभः ॥ नन्वव्ययानामसत्त्ववत्त्वात्तेनैव सिद्धमत आह

असतीति ॥ (कै)

यस्मादिति । (कै)

प्रातिपदिकग्रहणसामर्थ्यादस्य संख्यावाच्यैरेकवाक्यतायामपि प्रकृतार्थापेक्षनियमाश्रयणादर्थनियमाश्रयणाद्वाऽसंख्यादव्ययादवचन- सिद्धिरिति भावः ॥

अथवेति । (कै)

लिङ्गे वर्तमानात्प्रातिपदिकादिति सूत्रार्थः । सर्वत्र लिङ्गं प्रकृत्यर्थ इति भावः । इदं चिन्त्यं प्रातिपदिकार्थग्रहणाभावे लिङ्गमात्रे इत्यर्थापत्तौ स्त्रीपुमानित्यादावेव स्यात् न वृक्ष इत्यादौ जात्यादेरप्यधिकस्य भानात् । तस्मादाद्यव्याख्यैव ज्यायसी ॥

जात्यादिरिति । (कै)

आदिनाश्रयः जातिपदं च प्रवृत्तिनिमित्तोपलक्षणम् ॥

---

ध्यते । स चावधारणे । मात्रं कार्त्स्न्येऽवधारणइत्यमरः । प्रातिपदिकार्था- दीन्येव तन्मात्रमित्यस्वपदविग्रहः । मयूरव्यंसकादयश्चेति समासः । प्राति- पदिकार्थः सत्ता । उक्तं हि । तस्यां सर्वे शब्दा व्यवस्थिता इति । तां

---

लिङ्गसङ्ख्याकारकसम्बन्धियोगी स इह प्रातिपदिकार्थत्वेन विवक्षितो यथा- यथार्थ इत्यर्थः, अव्ययार्थो हि केवलमस्तीति प्रत्यते वस्तु न पुरीवृक्षस्तावृक्ष इति गौः शुक्ल इत्यादौ तु सत्त्वरूपेर्थे लिङ्गग्रहणादेव सिद्ध्यतीति भावः ।

## यस्मिन्नर्थे इति। (कै)

प्रातिपदिकार्थे प्रथमाविधानाभावात्तद्व्यतिरिक्तः शेष इति न लभ्यत इति भावः ॥

## नन्वसंख्येति। (कै)

षष्ठीविधायकस्यापि द्व्येकयोरित्यादिभिरेकवाक्यत्वादिति भावः। वस्तुतो द्वितीयादीनां विषयाभावशेषः प्रातिपदिकार्थरूपः प्रथमाया विषयः ॥

## सर्वश्चेति। (कै)

न तदपेक्षः शेष इत्याशयेनैकदेश्याह

## षष्ठ्यश्चेति। (भा)

एवं चाद्यव्याख्याने विनाश्य भाष्यस्यासङ्गतिः ॥ पर एकदेश्याह

## इदं तर्हीति (भा)

इदं सर्वमेकदेश्युक्तिरित्यग्रे स्फुटं भविष्यति। उच्चैर्नीचैरित्यप्येकदेश्युक्तिः। "अव्ययादाप्सुप" इति ज्ञापकात्सिद्धेरिति बोध्यम् ॥

---

प्रातिपदिकार्थं च धात्वर्थं च प्रचक्षते इति च। उच्चैः। नीचैः। अत्र हि परिमाणविशेषोपहितं सत्तामात्रं प्रतीयते इत्याहुः। अन्ये तु नियतोपस्थितिकः प्रातिपदिकार्थ इत्याहुः। अस्मिन्पक्षे द्रव्यः कुड्यं भित्तिरित्यादौ-

---

अन्ये त्वाहुः अन्वयव्यतिरेकाभ्यां यस्य योऽर्थः प्रतीतो यमर्थं प्रातिपदिकं न व्यभिचरति येन विना प्रातिपदिकस्याप्रयोगः सर्वः प्रातिपदिकार्थः, सत्ताग्रहणं तूपलक्षणं तेन सत्ता गोत्वं शौक्ल्यं शुक्लो गुणः पाचको द्वित्वो गौः शुक्ल इत्यादिकमप्युदाहरणमिति। नन्वत्र सर्वत्र लिङ्गग्रहणादेव लिङ्गं,

( प्रातिपदिकार्थलिङ्गपरिमाणवचन- ( अ. २ । पा. ३ । आ. १ )
मात्रे प्रथमा । २ । ३ । ४६ । )

ननु प्रातिपदिकत्वेऽव्ययानां लिङ्गाबोधकत्वेन व्यभिचारात् तत्प्रातिपदिकार्थः इत्यत आह

सत्त्वभूतेति । (कै)

प्रातिपदिकार्थ इत्यस्य हि तत्तत्प्रातिपदिकार्थ इत्यर्थो न तु प्रातिपदिकत्वावच्छिन्नार्थ इति असंभवादिति भावः ॥

अधिकविशेषेति । (कै)

द्रव्यजातिभ्यामधिकेत्यर्थः ॥

स्त्रीत्वाद्यधिकमिति । (कै)

स्त्रीत्वादिकमधिकं यत्रेत्यर्थः ॥

यमर्थमिति । (कै)

अन्वयव्यतिरेकाभ्यां यस्य प्रातिपदिकस्य योऽर्थोऽवधारितः प्रवृत्तिनिमित्ततदाश्रयरूपस्तदधिकव्यावृत्त्यर्थं मात्रग्रहणमिति भावः ॥ द्रव्यमात्रापेक्षयाधिकव्यावृत्तौ घट इत्यादावपि न स्यादिति तात्पर्यम् ॥

---

णां नियतलिङ्गानां प्रातिपदिकार्थमात्रे प्रथमेत्येव सिद्धम् । लिङ्गमात्रग्रहणं तु तटस्तटीतटमित्याद्यर्थम्, । न ह्यत्र पुंस्त्वादि नियतोपस्थितिकम् । अतः लिङ्गमात्राधिक्येपि विधीयते । परिमाणमात्रे द्रोणो व्रीहिः । इह हि

---

न, मात्रग्रहणं क्रियते तच्चावधारणार्थं प्रयोगमात्रं प्रतीयतीतिवत्, तच्च स्त्रीपुमान्नपुंसकमित्यादावेव तु स्याद् यत्र लिङ्गमेवार्थः सत्त्वादौ तु जात्याद्यधिकार्थसद्भावान्न स्यात् । अथ कन्यामात्रं वरयतीतिवन्मात्रशब्दस्य व्याप्तिवचनत्वाल्लिङ्गमात्रे प्रथमा लिङ्गसत्त्वेव प्रथमा भवतीति व्याख्यानादृचि-

न प्रातिपदिकार्थ इति । (कै)

कुमारत्वस्यैव नियमेन भानात्तदर्थता न तु लिङ्गस्येति भावः ॥

अत एव स्त्रीत्वं न प्रवृत्तिनिमित्तमिति भाव इति तत्त्वम् ॥

तटस्तटमिति । (कै)

अत्र त्रिलिङ्गत्वेन प्रातिपदिकात्कस्यापि लिङ्गस्य नियमेनानु-पस्थितत्वा तस्य प्रातिपदिकार्थत्वाभाव इति भावः ॥

जातिरेवार्थेति (कै)

अत्र प्रकृतसूत्रे जातिग्रहणं प्रवृत्तिनिमित्तपरप्रातिपदिकार्थः प्रातिपदिकार्थशब्देन विवक्षितः। जातिपदमाश्रयस्याप्युपलक्षणम्। एवं च भाष्योक्तान्यप्युदाहरणानीति तद्भावः ॥ अन्तरङ्गत्वाच्च तयो-रेव प्रातिपदिकार्थशब्देन ग्रहणं लिङ्गादीनां तु प्रायेण द्योतक-सापेक्षप्रतीतिकतया बहिरङ्गत्वमिति तदाशयः। एतदेवाभिप्रेत्य प्रातिपदिकार्थः सत्तेति वृत्तावुक्तम् उक्तव्याख्यादयं चिन्त्यमेव। अनेकलिङ्गत्वेऽपि स्त्रीपुंनपुंसकादिति शास्त्रबलेन लिङ्गे प्रातिपदि-कवाच्यत्वस्यैव सर्वसम्मतत्वेन तटादिशब्देऽपि प्रातिपदिकार्थग्रहणेन

---

द्रोणशब्दार्थं यत्परिमाणन्तत्परिच्छिन्नो व्रीहिरित्यर्थः। प्रकृत्यर्थस्य द्रोणस्य प्रत्ययार्थे परिमाणे अभेदेन संसर्गेण विशेषणता प्रत्ययार्थस्य व्रीहिषु परि-च्छेद्यपरिच्छेदकभावेन संसर्गेण विशेषणमिति बोध्यम्। वचनमात्रे, एका-

---

कार्थसङ्ख्यायामपि प्रथमा भवतीत्युच्यते इत्येवं तूक्तं यद्येतावती कर्मादिसङ्ख्या-येऽपि लिङ्गमात्रत्वेव प्रथमा स्यात्, कर्मण्येव द्वितीयेत्यादिप्रत्ययविधिमा-पेक्ष कर्मादीनां द्वितीयादिविधिनियतत्वात्। 'वचनमेकत्वादीति' पूर्वाचार्य-

सिद्धिरत एव द्वितीयाद्यन्ते लिङ्गबोधः । नहि समाने प्राति-पदिकवाच्यत्वे तृणादिशब्दवाच्यप्रातिपदिकार्थशब्देन स्पृश्यते न तटादिवाच्यमित्यत्र जातिरेवाचेत्युक्तातिरिक्तं निमित्तमस्ति । एवं चाशिंगाव्ययानि लिङ्गप्रवृत्तिनिमित्तकाः शब्दाः प्रातिपदिकार्थ इत्यस्योदाहरणानि । अन्ये तु लिङ्गाद्याधिक्यस्येति बोध्यम् । येऽपि गौर्वाहीक इत्यादौ गोसदृशे लक्षणां वदन्ति तेषां मते तदेव प्रवृत्तिनिमित्तं तदुत्तरत्वप्रत्ययेनाभिधीयमानत्वस्यैव प्रवृत्तिनिमित्त-त्वस्य विवक्षितत्वात् । अस्माकं तु शक्यतावच्छेदकारोपेणैव तत्त-द्बोधकपदे एव लक्षणेति वादिनां शङ्कैव न ॥ भाष्ये

अथ परिमाणेति । (भा)

द्रोणादयो यदि परिमाणवचनास्तदा प्रातिपदिकार्थत्वात्सि-द्धिरिति प्रश्नाशयः ॥ उत्तरन्तु लक्षणया परिमेयवृत्तिता यदा तदर्थमितीत्याह

---

द्वौ बहवः । वचनं सङ्ख्या । तथैव प्राचां व्यवहारात् । तत्र प्रकृत्या उक्तायामपि सङ्ख्यायां यथा स्यादित्येतदर्थमिदं वचनम् । इह सूत्रे अर्थ-लिङ्गयोः प्रथमेत्येतावदेवावश्यकम् । इतरत्तु व्यर्थम् । तथाहि प्रातिपदिक-ग्रहणं तावद्व्यर्थम् । ङ्याप् प्रातिपदिकाद्धि स्वादयो विधीयन्ते । तदार्थे

---

प्रसिद्धेरिति भावः । 'उच्चैरिति' । अत्र प्रथमायां सत्यां ग्राम उच्चैस्तव स्वमित्यादौ 'सपूर्वायाः प्रथमाया विभाषे'ति तेमयादिविकल्पो भवति, षष्ठ्यन्तं तु यद्यपि सिद्धं, यस्मिन् अर्थे द्वितीयादयो न विहिताः स शेषः । नन्वसङ्ख्यत्वादव्ययार्थस्य कथं षष्ठी स्यात्, एकत्वाद्यर्थनियमे यद्यपि सङ्-ख्यायामनियतत्वात्, प्रत्ययनियमेऽपि तुल्यजातीयापेक्षत्वान्नियमस्यैकत्वा-

**यदा मानमेयेति ॥ (कै)**

**व्यभिचारादिति । (कै)**

मेयस्यापि द्रोणत्वारोपेण द्रोणादिपदेभ्यो बोधे तद्बोधेऽपि परिमाणस्य भानात्स नियतः परिमाणे वृत्तौ मेयार्थत्वाभावेन व्यभिचारी च इति भावः । प्रातिपदिकेन नियतोपस्थितिविषयो हि प्रातिपदिकार्थः । परिमाणशब्दे च कर्मणि ल्युट् परिमेये इत्यर्थ इति तात्पर्यार्थः ॥ एवं हि सिंहो माणवक इत्यादौ संज्ञा न स्यात् । सिंहशब्दमुख्यार्थस्य व्यभिचारेणाप्रातिपदिकार्थत्वात् ।

**तस्मात् द्रोणः खारी आढकमित्यत्रापि**

**यथा स्यादिति (भा)**

भाष्यस्य विभक्त्यर्थस्य परिमाणस्य परिच्छेद्यपरिच्छेदकभावेन व्रीह्यादौ भेदान्वये यथा स्यादित्यर्थः ॥ प्रातिपदिकार्थे प्रथमायां तु नामार्थयोरभेदान्वयव्युत्पत्तिविरोधेन तथान्वयो न स्यात् कैयटादिमतेऽपि इत्यत्र मेयवृत्तित्वेऽपि यथा स्यादिति व्याख्याया भाष्यव्याख्याया आवश्यकत्वाच्च ॥ सूत्रभाष्यकृतोः सिंहो माणवक

इत्यपेक्षायां यस्मात्स्वादिविधिस्तदर्थ इति लभ्यते एव । परिमाणमप्यनर्थकं, गौर्वाहीक इत्यादाविव मुख्यार्थमात्रे प्रथमायां सत्यां पदान्तरसमभिव्याहारेण गौणार्थप्रतीत्युपपत्तेः । वाहीके गोत्वस्येव व्रीह्यादौ द्रोणत्वादिभिः परस्परमेव व्यावर्तनात्, विधिवाक्यपक्षे तु स्वादिसूत्रेण भिन्नवाक्यस्य 'बहुषु बहुवचन'मित्यादेः सङ्ख्यासम्भवे विध्यर्थत्वात् । ननु ङ्याप्प्रातिपदिकात्स्वादयो विधास्यन्ते तत्रार्थे प्रथमेत्युक्ते कस्यार्थ इत्यपेक्षायां यस्मात्स्वादिविधिस्तदर्थ इति विज्ञास्यते नार्थः प्रातिपदिकग्रहणेन, तत्राय-

इत्यादेरन्यानककल्पना बाधिका यदा यो नियतोपस्थितिकः स तदा प्रातिपदिकार्थ इति स्वीकृत्य तदकरणस्यैव न्याय्यत्वं च । मन्दव्याख्यायां शाब्दबोधवैलक्षण्याय सूत्रे तद्ग्रहणम् । न च परिमाणं प्रातिपदिकार्थं इति तत एव तल्लाभात्तत्र प्रथमाविधानं व्यर्थं द्रोणत्वादिना तस्य तदर्थत्वेऽपि परिमाणत्वेन तदर्थत्वाभावात् । न च तव मते द्रोणो व्रीहिमानयेत्यपि स्यात् प्रातिपदिकार्थसाहचर्याच्छाब्दोः सम्बन्धे समानविभक्तिकनामान्तरार्थेऽन्वये एव परिमाणे प्रथमायाः साधुत्वबोधनात् । अत एवाभिहिते प्रथमेत्यादिलक्षणैः समफलता । मन्मते हि सिंहो माणवक इति वत् द्रोणो व्रीहिरित्यपि लक्षणया साधुशब्दबोधकतवैलक्षण्यानादरेऽपि तत्र तत्र वार्त्तिकप्रवृत्तेर्दर्शनादिति नव्याः । प्रवृत्तिनिमित्तं मुख्यं तदाश्रयश्चेति द्वावेव प्रातिपदिकार्थशब्देनात्र विवक्षिताव-त्यन्तरङ्गत्वादतः परिमाणग्रहणं सङ्ख्यार्थोपलक्षणमिति कैयटाशयं मन्ये । अपरे तु प्रातिपदिकग्रहणं किमर्थमित्यस्य ज्ञापकाविद्धुरित्याशयः । तदजानान एकदेश्याह

---

देशारोपसंभवात् । एवं वचनग्रहणमपि व्यर्थम् । न केवला प्रकृतिः प्रयोक्तव्येति प्रत्ययः परश्चेति सूत्रे वक्ष्यमाणतया प्रत्ययस्यावश्यकत्वात् । अनन्वितवचनप्रयोगापेक्षया अनुवादकाप्रयोगस्यैव न्याय्यत्वात् । मात्रग्रहण-

---

मव्यर्थः । लिङ्गग्रहणं न कर्तव्यं भवति कुमारी स्त्रीमित्यादावप्यत एव सिद्धं प्रातिपदिकग्रहणे तु नियमार्थे स्त्र्यादिशब्दानां स्त्रीत्वाद्यर्थाव्यभिचारेऽपि प्रत्ययान्ततयेनाप्रातिपदिकत्वात्तदर्थं प्रथमासिद्ध्यर्थं लिङ्गग्रहणं कर्तव्यं स्यात् ।

## उच्चैरित्यादि। (कै)

एकदेश्युक्तित्वादेव "तिङ्समानाधिकरणे प्रथमे"ति वार्त्तिकेन महाभाष्येणैतत्सूत्रस्थेनाव्ययादाविति सूत्रस्थेन ज्ञापकादव्ययेभ्यः सर्वा विभक्तय इत्यादि भाष्येण च न विरोधस्तस्मात्प्रातिपदिकग्रहणस्य फलान्तरं न कल्प्यमित्येव भाष्यतात्पर्यम्। एवं प्रत्याख्यातप्रायं प्रातिपदिकग्रहणं ज्ञापकात्सर्वविभक्त्युत्पत्तौ प्रथमाया अपि सत्त्वेन च तत्प्रयुक्तकार्यसिद्धिः तिङ्समानाधिकरणे प्रथमैवेति च नियमात्तु वार्त्तिकमतेऽपि दोषः। अथ लिङ्गेत्यादेर्व्यर्थः कुण्डमितीत्यन्तस्य इत्यन्ये ब्रुवत इति मतेन कैयटोक्त एवार्थः। एतद्रीत्यैव च द्रोणादिशब्देन सिध्यति। ते हि द्रोणत्वादिप्रवृत्तिनिमित्तका अपि द्रव्यनिष्ठलिङ्गमिव परिमाणत्वमपि बोधयन्तीत्यधिकार्था अतः परिमाणग्रहणम्। न च तेषां तन्निष्ठपरिमाणत्वं बोधकत्वे प्रमाणाभावः। सूत्रभाष्यप्रामाण्येन। अनुभवादिना च तदङ्गीकारात्। तथोन्मानादीनामप्युपलक्षणं तद्ध्वनयन्नुदाहरति।

---

मपि व्यर्थम्। सम्बोधने चेति ज्ञापकेन कर्माद्याधिक्ये प्रथमाया अप्रवृत्तेः। ननु वीरः पुरुष इत्यादौ अभेदसंसर्गस्याधिक्यस्य भानात् प्रथमा न स्यादिति चेन्न। संसर्गस्य वाक्यार्थत्वेन बहिरङ्गत्वात् प्रथमप्रवृत्तत्वाच्चाधातु-

---

उच्यते। प्रातिपदिकग्रहणं तावदर्थपदेनासम्बद्धमित्यत्रैव वक्ष्यते, लिङ्गग्रहणमनेकलिङ्गार्थं, तटस्तटं तटी कुमारः कुमारी कुण्डं कुण्डः कुण्डिका, अन्यथा येनार्थेन विना प्रकृतेरप्रयोगस्तदर्थमात्रे विधीयमाना प्रथमा नानालिङ्गेभ्यस्तद्विशेषमन्तरेण प्रयुज्यमानेभ्यो न स्यात् अथ मात्रग्रहणमकृत्वा व्यक्तिवचनं वाक्यीकृत्याधिकार्थसद्भावेऽपि प्रकृत्यर्थस्यान्वय इति

## द्रोणः खारी आढकमिति । (वै)

अथ कैयटव्याख्याने नव्यव्याख्याने च भाष्ये ऽपि व्रीह्यादि-पदानुपादानेन न्यूनता । नव्यव्याख्याने द्रोणो व्रीहिमानञ्चेति प्रयोगापत्तिश्च । आनुमानिकसाधुत्वबोधकवचनकल्पने गौरवञ्च । प्रातिपदिकार्थलिङ्गसाहचर्येण परिमाणस्यापि प्रातिपदिकार्थत्वौचित्यं चात एव द्वन्द्वोपपत्तिः । कैयटव्याख्याने यदा यो नियतोपस्थितिक इत्याश्रित्य तदकरणापत्तिश्च । जातितदाश्रययोरेव प्रातिपदिकार्थपदेन ग्रहणेन नैयत्येऽपि सिद्धिश्च । किं च यत्रैतानि समुदितानि भवन्ति तथैव स्यादित्यनुपदवक्ष्यमाणभाष्यविरोधः । तत्र हि यत्र स्वादिविध्युद्देश्ये एतानि समुदितानि वाच्यत्वेन भवन्ति तथैव स्यादित्यर्थो ऽक्षरस्वारस्येन लभ्यते । पदस्यैव ग्रहणेति सिद्धान्ते द्रोणो व्रीहिरित्यस्य कैयटरीत्यानुदाहरणत्वाच्च । न च द्रोणादिशब्दानामियत्ताविशेषावच्छिन्नयवादिपरिमितव्रीह्यादिपरिच्छेदकद्रोणत्ववदादिबोधजनकत्वात्परिच्छेदकत्वस्यापि प्रातिपदिकत एव

---

पपत्तेः । वार्त्तिककारस्त्वाह । अभिहिते प्रथमेति । इत्याशिष्ठति कृतः कटः भुक्तः ग्रामोदको ग्राम इत्यादौ तिङादिभिरभिहिते कर्मादौ प्रथमा भवतीत्यर्थः । एवञ्च वीरः पुरुष इत्यादौ सत्यप्याधिक्येऽनभिहितत्वात्

---

स्यात्, यद्येवं वृत्तं पश्येत्यादौ कर्माद्याधिक्येऽपि स्यात्प्रत्ययनियमपक्षे, तदिह वृत्तौ कुमारी कुण्डमित्युदाहरणं वृत्तग्रन्थस्यार्थादुदाहृतः । ननु माभून्नामग्रहणं मा च भूल्लिङ्गग्रहणं मा च कारि 'संबोधने चे'ति सूत्रं सर्वत्रार्थ इत्येव प्रथमा भविष्यति, न चैवं कर्मादिष्वपि प्रसङ्गः कर्मणि द्वितीयेत्येव-

लाभात्तच प्रथमाविधानवैयर्थ्यमिति वाच्यम् । लाघवेन तत्समानाधिकरणद्रोणत्वादेरखण्डोपाधिरूपस्य जातिरूपस्यैव वा प्रवृत्तिनिमित्तत्वात् । ननु भासमानमपि लिङ्गवद्विशेष्यान्वय्येव । द्रोणः परिमाणमिति तु द्रोणादिशब्दानामनेकार्थत्वाभिप्रायाच्च द्वौ ब्राह्मणाविति वदेति वदन्ति ॥ ननु शब्दे कार्यसिद्ध्यर्थं वचनग्रहणमत आह

अर्थे इति । (भा)

प्रातिपदिकार्थादिवचनादिति सूत्रे तु प्रकृतेरधिकरणत्वविवक्षायां सप्तमीति भावः । गर्गाः शतमित्यत्र शतस्य प्राधान्यात्तद्वृत्तेरनुचितत्वेनास्तु समुदाये वाक्यपरिसमाप्तिः प्रकृते कथमत आह

प्रथमेति । (कै)

प्रथमा सिद्धैवेति । तथा चाविधीयमानत्वात्प्राधान्याऽविवक्षा पूर्वन्यायानवतार इति भावः ॥

---

प्रथमा सिद्धेति । न च सुपः प्रश्न इत्यादावव्याप्तिः । भवतीत्यध्याहारात् । अत्र भाष्यम् । अभिहितेनाभिहितेतिप्रसङ्ग इति तथाहि । प्राग्वदथा-

---

मर्थनियमस्याश्रयत्वात्, एवमपि राज्ञः पुरुष इति षष्ठ्यर्थेऽपि स्यात्, शेषलक्षणा हि षष्ठी उपपदयुक्तादन्यत्र शेषत्वम् यदि प्रकृत्यर्थस्याधिक्येऽपि प्रथमा स्यात् ततस्तस्यापि प्रथमा विधावुपयुक्तत्वात् षष्ठी न स्यात् । अथ वचनसामर्थ्यात्स्वस्वामिभावादौ षष्ठी भवति लिङ्गाधिक्येऽपि स्यात् अतो मात्रग्रहणं तावत्कर्तव्यं तस्मिंश्च क्रियमाणे लिङ्गग्रहणं 'संबोधने चेति सूत्रं' च कर्तव्यं तदाधिक्येऽपि यथा स्यादिति । 'परिमाणग्रहणं किमिति'।

नियमायेति । (कै)

कर्मण्येव द्वितीयेत्यादिनियमे ऽनियतकर्मादिषु प्राप्तप्रथमा-वारणाय प्रातिपदिकार्थमात्रेणात्तसंबन्धनमित्यर्थः ॥ ननु प्राधान्या-प्राधान्ये निर्णेतुमशक्ये विधीयमानस्योद्देश्यार्थतयोद्देश्येऽपि प्राधा-न्यस्य वक्तुं शक्यत्वात् । अत एव यागोद्देशेन विधीयमाना अपि व्रीह्यादयो गुणत्वेन व्यवह्रियन्तेऽत आह

अथवेति ॥ (कै)

नन्वनभिहिताधिकारेऽपि संख्याविधेस्तन्मध्यपतितत्वाभावोऽत आह

बहुष्विति । (कै)

इहाधिकृतेनानभिहित इत्यनेन प्रातिपदिकार्थादिः सर्वस्य प्रातिपदिकेनाभिहिततया संख्यैव विशेष्यत इति भावः ॥ ननु परिगणनाच्च दोष इत्यत आह

---

स्त इत्यत्र सदिक्रियायाश्चासिक्रियायाश्चैकमधिकरणं प्रासादाख्यं तच्च तदेव-त्यनेन चाभिहितम् । आसेर्लठा त्वनभिहितम् । तत्र सप्तमीं बाधित्वा

---

अर्थ इति वा लिङ्गइति वा सिद्धिं मन्यते । 'द्रोणः खारीति' । अयं भावः । येनार्थेन विना प्रकृतेरप्रयोगस्तस्मिन्नर्थे प्रथमा, द्रोणादयश्च लौहं दारुमयं परिमाणमेवार्थं न व्यभिचरन्ति, यदा तु द्रोणादिपरिमिते व्रीह्यादौ वर्तन्ते तदा तस्य व्यभिचारित्वान्न स्यात् । नच लिङ्गग्रहणादपि सिद्धिः, तदाधिक्य-मात्रे हि तेन स्यादिति, परिमाणग्रहणं चोन्मानादीनामुपलक्षणं, तेन घृतं पलमित्यादावपि भवति । अथ लवणेन संसृष्टो लवणः सूपो लवणं शाकमित्यत्र कथं प्रथमा, लवणशब्दो हि लवणजातीयमेव द्रव्यं न व्यभि-

परिगणनस्य चेति ॥ (कै)

वचनग्रहणादिति । (कै)

एवं चात्र सूत्रेऽनभिहित इत्यस्यासंबन्ध एवेति भावः ॥

मात्रग्रहणादिति । (कै)

मात्रग्रहणं कुर्वन्तः सूत्रकृतः प्रत्ययनियम एवाभिप्रेतः । न च प्रत्ययनियमेऽपि प्रातिपदिकार्थ एवेति नियमेन कर्मादिषु तद्वारण-संभवात्तद्वैयर्थ्यमिति वाच्यम् । यथा कर्मण्येव द्वितीयेति नियमेन कर्मत्वाभावसमानाधिकरणार्थान्तरस्यैव व्यावृत्तिर्न तु तत्समानाधि-करणार्थान्तरः स्यात् । एव गां दोग्धि पय इत्यादावपादानत्वादि-शक्तिबोधोऽपि द्वितीया भवति । एवं च कर्मणि सत्येव द्वितीया न तु तदसत्त्वे इत्येवं नियमाकारः । तथा प्रातिपदिकार्थसत्त्वे एव प्रथमा न तु तदसत्त्वे इति नियमेन निरर्थकस्यैव व्यावृत्तिर्न तु

---

परत्वात्प्रथमा स्यात् । अतिङ्समानाधिकरणे प्रथमेत्युच्येत । तदपि न । देवदत्तः पचतीत्यादिषु तिङां दौर्लभ्यापत्तेः । तथाहि । देवदत्तः पच् शट्

---

चरति व्यभिचरति तु संख्यम् । उच्यते । साधारणशब्दोऽयं लवणजाती-यस्य संख्यस्य चाक्षादिशब्दवत्, एवं च 'लवणाल्लुगि'ति वचनाद्विज्ञायते तत्र यथा दधिदाधिकशब्दयोः प्रथमा भवत्येवमत्रापि भविष्यति, इह तर्हि कथं शुक्लः पट इति, शुक्लशब्दो गुणमेव न व्यभिचरति व्यभिचरति तु तद्वन्तं पटस्य शुक्ल इति दर्शनात्, अत्रापि 'गुणवचनेभ्यो मतुपो लुग् वाच्य' इति वचनात्साधारणशब्दतैव, इह तर्हि कथं गौर्वाहीक इति, गोशब्दो हि सास्नादिमन्तमेव न व्यभिचरति व्यभिचरति तु वाही-

प्रातिपदिकार्थसत्त्व एव कर्मत्वादेरिति मात्रग्रहणस्यावश्यकत्वात् । न चैवं संख्याधिक्येऽपि प्रथमा न स्यात् । द्व्येकयोरित्यादिभिरस्यैकवाक्यतया तदाधिक्ये प्रवृत्तेऽर्थनियम इति । मम पक्षे तु तुल्यन्याया "सम्बोधने च"ति सूत्रं तिङादिग्रहणमनभिहित इति सूत्रे समर्थादेति पक्षेण वचनग्रहणं च प्रत्याख्यातमेवेति दिक् ॥

## सामानाधिकरण्यादिति । (कै)

तयोः पदयोरेकार्थवृत्तित्वात्तत्प्रवृत्तिनिमित्तयोरेकवृत्तित्वाच्चेत्यर्थः ॥

## विशेषणविशेष्यभावस्य । (कै)

विशेषणत्वविशेष्यत्वरूपस्य ॥ भाष्ये

---

इति स्थिते यावत्तिङो न कृतास्तावत्तिङ्सामानाधिकरण्याभावात् प्रथमैवेति नियमो न प्रवर्तेत । तथा च देवदत्तशब्दादविशेषोत्पन्नाः सर्वे स्वादयः

---

नम्, अत्रापि वाहीके सास्नादिमत्त्वारोपाद्गोशब्दः प्रयुज्यते तत्र यथा सास्नादिमद्वृत्तेर्भवत्येवं वाहीकवृत्तेरपि भविष्यति । यद्येवं द्रोणः खारीत्यादावप्येवमेव भविष्यति लवणादिशब्दवत्साधारणशब्दाः स्युर्गौर्वाहीक इत्यादिवद्गौणा वा गङ्गायां घोष इतिवल्लाक्षणिका वा नान्या गतिरस्ति सर्वथा सिद्धा प्रथमा । किं च परिमेयवृत्तिभ्यो द्वितीयादयो यथा भवन्ति तथा प्रथमापि भवति । अथ प्रस्थेन परिमिता व्रीहय इत्येवं प्रातिपदिकार्थव्यतिरेकेऽपि यथा स्यादिति परिमाणग्रहणं, यद्येवं प्रस्थेनेति तृतीया न स्यात्, शेषविवक्षायां च षष्ठी न स्यात्, प्रास्थिक इति तद्धितश्च न स्यात्, तदेतत्परिमाणग्रहणं चिन्त्यप्रयोजनम् । 'उक्तेष्वपीति' । अन्यथा-

## व्यतिरिक्तः प्रातिपदिकार्थ इति । (भा)

अतिरिक्तार्थेन विशिष्ट इत्यर्थः ॥ "मयूरव्यंसकादित्वा"त्स-
मासः ॥ भाष्ये

## वीरत्वमिति । (भा)

वीरशब्दाद्भावे त्वप्रत्ययः । वीरवत्त्वं वीरसम्बन्धस्तन्निरूपित-
विशेष्यतेति यावत् । यतो वीरत्वं वीरनिरूपितविशेष्यत्वं पुरुषे-
ऽधिकं भासते ऽतः पुरुषार्थोऽधिकार्थविशिष्ट इत्यर्थः । एवं वीरे
पुरुषनिरूपिते विशेषणत्वमधिकमिति बोध्यम् । तथा वीरत्वं
पुरुषे इत्युक्त्या स्वाश्रयवीरत्वपुरुषत्वयोः साहित्यरूपो वीरपुरुषयो-
र्विशेषणत्वे विशेष्यत्वनियामकः संबन्ध उक्तः सोऽपि वाक्यार्थ एव
तदेवाभिप्रेत्य कर्मधारयविषये द्वन्द्वापादनं "चार्थे द्वन्द्व" इति सूत्रे
भाष्ये कृतम् । एवं च वीरत्वपुरुषसमूहवान् वीरपुरुष इति बोधः ॥

---

सम्येवेति प्रत्ययावचौ स्याताम् । तन्निमित्तभूतस्याप्रथमान्तेन सामानाधि-
करण्यस्य सत्त्वात् । तिङ्विधेस्तु शिवादिष्ववकाशः । स एव प्रथमैवेति

---

नभिहिताधिकारा 'द्व्येकयो द्विवचन' मित्यादिनास्यैकवाक्यत्वात्तिङ्कृत्तद्ध-
ितसमासैरिति परिगणनस्य प्रत्याख्यातत्वादेकादिशब्दैरेकत्वादीनाम-
भिहितत्वादुक्तार्थत्वाद् वा न स्यादिति भावः । 'एको द्वौ बहव इति' ।
अथ कथमेकं कर्मैकेन कृतमित्यादौ द्वितीयादयो भवन्ति नहि तत्र
कर्माद्यभिहितोऽस्ति । उच्यते । तत्रार्थद्वयमस्ति कर्मादय एकत्वादयश्च, तत्रैक-
त्वादीनामभिधानेऽपि कर्मादिप्रतिपादनाय द्वितीयादयो भविष्यन्ति, इह
त्वनभिहितार्थान्तराभावान्न स्यात् । नन्वत्राप्येकादिभिः शब्दैरेकत्वादि

अनपेक्षितः शब्दान्तरेति । (कै)

अनपेक्षितशब्दान्तरार्थसंसर्गेणोपस्थितः प्रापितो विशेषणभावः स्वार्थे येन तस्मादित्यर्थः । पुरुषसंसर्गेण हि वीरार्थस्य तन्निरूपित-विशेषणतेति भावः ॥

एवमिति । (कै)

पुरुषशब्दार्थस्य तदर्थसंसर्गेण तन्निरूपितविशेष्यतेत्यर्थः । मात्रपदेनान्तरङ्गार्थकृतमेवाधिक्यं व्यावर्त्यते न तु बहिरङ्गकृत-मिति भावः ॥ भाष्ये

आधिक्यमिति । (भा)

स्वार्थे ष्यञ् ॥

वाक्यार्थः । (भा)

वाक्यशक्यः । विषयतानामपि शक्यत्वं मञ्जूषायामुपपादितम् ॥ ननु विभक्त्यन्तरान्विते ऽपि सुन्दरं कटमित्यादौ प्रथमा स्यादत आह

---

नियमस्यापि विदो लटो वेत्यादेस्तु विदिमात्रप्रयोगे चरितार्थता । यथा वेत्थ वेदेत्यादि । स्थानिन्यपि मध्यमोत्तमयोर्विधानादर्थात्प्रकरणाद्वा

---

विशिष्टं द्रव्यमभिधीयते तत्रैकत्वादिगुणस्य निष्कृष्याभिधानाय प्रथमा भविष्यति यथा गुणोपसर्जनद्रव्यवचनाच्छुक्लादिशब्दात्प्रवृत्तिनिमित्तभूतस्य गुणस्य निष्कृष्याभिधाने भावप्रत्ययः पटस्य शौक्ल्यमिति, तदेवं वचनग्रहण-मपि शक्यमकर्तुम् । प्रातिपदिकग्रहणं किमिति' । उक्तोऽत्र प्रष्टुरभिप्रायः । 'निपातस्यानर्थकस्येति' । अन्यथार्थाभावान्न स्यादिति भावः । 'प्रत्याख्यात इति' । किं पुनरत्र प्रथमया प्रार्थ्यते, यदलं, यथाप्येतत्सिद्धं, तथापि हि । कर्मादिषु द्वितीयादयो विहिताः प्रकृत्यर्थमात्रे प्रथमा तत्र प्रकृत्यर्थाभावे

## तिङ्क्षादिति । (कै)

अभिहिते इत्यत्र चार्थनियम एवाश्रीयत इति ओदनैरित्यादौ न दोषः ॥

## प्रथमा प्राप्नोतीति (भा)

परत्वादिति भावः ॥ न च शक्तिर्गुणाश्रया तत्र प्रधानमनु- रुध्यत इति न्यायेनायं दोषो वारयितुं शक्य इति वाच्यम् । क्रिययोरच गुणप्रधानभावाभावादित्याहुः ॥ भाष्ये

## तिङ्समानाधिकरणे इति । (भा)

न ओदनैरित्यादौ प्रथमानापत्तिः तिङ्समानाधिकरणे प्रथमै- वेत्यर्थः । नियमस्याश्रयणेनादोषात् ॥

## उक्तं पूर्वेणेति । (वा)

पूर्वग्रन्थेनेत्यर्थः ॥ पूर्वेणाचार्येणेति कश्चित् । अनेनानभिहित- सूत्रोक्तं "विप्रतिषेधाद्वे"ति वार्त्तिकं प्रौढ्येति सूचितम् । तिङ्-

---

निर्ज्ञातस्य प्रयोगाभावप्रयुक्तत्वाच । पाच्छिकत्वायं दोषः । प्रथमादिविधौ हि अप्रथमेत्यादिः पर्युदासः प्रसज्यप्रतिषेधो वेति द्वैतम् । तत्र द्वितीये उक्त-

स्वस्वामिभावादिसंबन्धसद्भावे चोपपत्त्यादन्यत्वात्षिद्धा षष्ठी । न च तस्या एकत्वादिषु नियमः, उक्तोत्तरत्वात्, तदेवमर्थलिङ्गमात्रे प्रथमेत्येतावदेवा- वश्यं कर्त्तव्यं, मात्रग्रहणमपि न कर्त्तव्यं, कर्माद्याधिक्ये कस्मान्न भवति, ज्ञापकात्, यदयं 'संबोधने चे'त्याह, यदि ह्याधिक्येऽपि स्यात्तदनर्थकं स्यात्, उत्तरार्थं हि संबोधने सामन्त्रितमित्येव वक्तव्यं किं योगविभागेन, इत्यत्रवार्त्यार्थमात्रग्रहणा 'संबोधने चे'ति ज्ञापकादाऽधिक्ये प्रथमया

समानाधिकरणे प्रथमाया अप्रथमासमानाधिकरणे प्रत्ययानयो-र्विधानस्य च वाक्यसंस्कारे एव प्रवृत्तिरित्याह

देवदत्तेति ॥ (कै)

ननु एकवाक्यतया विधानमिति पक्षे तिङ्समानाधिकरण्या-भावात् प्रथमाया इव कर्माद्यभावाद् द्वितीयादीनामप्यभावेन द्वितीयादिसामानाधिकरण्ये विधीयमानप्रत्ययादेरप्राप्तौ तिङ्-न्तेषु प्रथमा भविष्यतीत्यत आह

यावत्तिङ इति। (कै)

भिन्नवाक्यतया ऽविशेषेणोत्पन्नानामर्थनियम इति भावः ॥

सर्वे स्वादयः स्थिता इति। (कै)

विनिगमनाविरहेण सर्वेऽपि समूहालम्बनबुद्धिविषयतया स्थिता इत्यर्थः ॥

---

दोषस्यासङ्गतेः प्रथमाया अपि सत्त्वेन ग्रन्थादिनिषेधसम्भवात्। यत्तु भाष्ये पर्युदासपक्षे विभक्तिनियमे दोषो नेत्युक्तं तच्चिन्त्यम्। तत्र हि द्वितीया

---

न भवितव्यं ततश्च वीरः पुरुष इत्यादौ पदसामानाधिकरण्ये विशेषण-विशेष्यभावस्याधिकार्थस्य प्रतीतेः प्रथमा न प्राप्नोति, न वाक्यार्थत्वात्, पदार्थाधिक्यं स वाक्यार्थः पूर्वं स्वार्थमात्रनिष्ठाभ्यामुभाभ्यां प्रथमा विधीयते पश्चात्साकाङ्क्षवशेनान्योन्यान्वये विशेषावगतिरुपजायमाना बहिरङ्गत्वा-त्प्रथमप्रवृत्तं संस्कारं न बाधत इत्यर्थः। अपर आह। अभिहिते प्रथमेति वक्तव्यं कर्मत्वं तिङादिभिरभिहिते कर्मादौ इच्छन्ति कृतः कटः प्रत्यः प्राप्तोदको ग्राम इत्यादौ प्रथमा भवतीत्यर्थः, तत्र वीरः पुरुष

**द्वितीयाद्यन्तेति (कै)**

अप्रथमेति पर्युदासेन प्रथमाभिन्नविभक्त्यन्तसमानाधिकरणे इत्यर्थकेन षष्ठ्यादेर्विधानमिति भावः ॥ नन्वेवमपि कर्मण्येव द्वितीयेत्यादिनियमात्कथं द्वितीयादीनां स्थितिरत आह

**कर्मणीति । (कै)**

वार्त्तिककारस्यार्थनियम एव सम्मत इति भावः ॥ नन्वपवादेनोत्सर्गस्य बाधाविशेषात्पक्षद्वयोपन्यासः किमर्थोऽत आह

**दृष्टेति । (कै)**

उत्सर्गशास्त्रप्रवृत्तिबाधप्रकारविषयमिति भावः ॥ इदमिति यथैकचक्षुष्कदर्शनं तद्वदेकचक्षुष्कदर्शनमित्यर्थः । तदेवाह

**सर्वविषयस्वीकारेणेति । (कै)**

सत्येवं मन्यते शास्त्रेण सर्वत्र प्राप्तस्य विषयविशेषे ऽपवादेन

---

कर्मण्येवेत्यादि वचनव्यवस्थाश्रयणात् देवदत्ते द्वितीया मा भूत् । षष्ठी तु स्यादेव । सा हि शेष एवेति नियम्यते । यत्र च विभक्त्यन्तरस्य नियमो

---

इत्यादावाधिक्येऽप्यभिहितत्वात्सिद्धा प्रथमेति, अत्र को दोषः, यत्र क्रिया नास्ति तत्र न स्यात् वृक्षः प्लक्षः, तथापि क्रियाऽस्ति कथं वृक्षः प्लक्षः, अस्तीति गम्यते, इह तर्हि प्रासादवासी इति यदि क्रियायाः कर्ता क्रियायाश्चैकमधिकरणं प्रासादाख्यं तत्र तद्धितप्रत्ययेन यथाभिहितं प्रयोद-वसिष्यत्यासाद इति आख्यातप्रत्ययेन तिङानभिहितं तत्र तद्धितप्रत्ययेन तदभिधानं तदाश्रया प्रथमा प्राप्नोति, यत्र च विशेषणसंबन्धे तात्पर्यं नील-मुत्पलं न इष्टमिति तथापि न स्यात् क्रियाया अभावात् । अत्राह,

निष्पत्तिरिति कतिपयेति अप्येकचक्षुष्को हि शब्दप्रदर्शनात्प्रागेवो-त्सर्गस्यापवादविषयातिरिक्तं विषयं निर्णयति

विषयविभागायेति । (कै)

किं विषये निश्चिता प्रवृत्तिः किं विषये बाधकबाध्येति विषयविभागायेत्यर्थः ॥

पूर्वं ह्यपवादा इति । (कै)

अपवादशास्त्राणीत्यर्थः ॥ अभिनिविशन्त इत्यस्य बुद्धिविषया भवन्तीत्यर्थः । ततस्तद्विषयत्वाभावेन निर्णीते विषये उत्सर्गो बुद्धिविषयः सन् स्वं संस्करोतीति भावः । द्वितीये त्वपवा-दशास्त्रविषयं स्वयमेव त्यक्तोत्सर्गशास्त्रेण तद्विषयभिन्नं स्वस्य संस्करोति । शास्त्रप्रक्रियाज्ञानपूर्वकप्रयोगे एव धर्म इत्यस्मादेव ज्ञायते इति बोध्यम् ॥ भाष्ये

---

न प्रवृत्तः स शेषः । ततश्च तिङः सामानाधिकरण्यात् प्राक् शेषलक्षणा-षष्ठ्यां सत्यां दुर्वारौ प्रसङ्गावित्यावित्ति ॥

---

तिङ्समानाधिकरणे प्रथमेति तत्रायं तिङन्तेन यत्समानाभिधेयं देवदत्तः पचतीति तत्र प्रथमा प्रासादस्तत्र इत्यत्र तु वैयधिकरण्यात्तदभावः, वीरः पुरुष इत्यादौ चाधिकोऽपि तिङ्सामानाधिकरण्यं प्रति योग्यत्वाद्भवतीति अत्र को दोषः, इह देवदत्तः पचतीति देवदत्तः पच् लट् इति स्थिते यावत्तिङामुत्पत्तिर्नास्ति तावत्तिङ्सामानाधिकरण्याभावात्प्रथमैवेति विभ-क्त्यप्रवृत्तौ देवदत्तशब्दात्स्वविशेषेण विहिताः स्वादयः स्थिता इति प्रसङ्गा-न्तरोर्निमित्तस्याप्रथमासामानाधिकरण्यस्य विद्यमानत्वात्तावेव स्यातां तिङां

**प्रतीक्षत इति ।** (भा)

अपवादविषयत्वं ज्ञात्वा तत्र तिङ्बुद्धिर्निवर्त्तत इत्यर्थः ॥

**पाक्षिक इति ।** (कै)

पक्ष भव इत्यर्थेऽध्यात्मादित्वात् ठञ् ॥

**कतरस्मिं पक्षे इति** (कै)

भावः । सदोष इति शेषः ॥

**विभक्तिविषये चाप्नोति ।** (कै)

अर्थनियमोऽपि सामान्यरूपेण विभक्तिविषयो नियमो भवत्येव नियमस्यानेकाश्रितत्वादिति भावः ॥ विभक्तेरर्थान्तरसम्बन्ध-निवर्त्तको विभक्तिनियमः । अर्थस्य विभक्त्यन्तरसम्बन्धनिवर्त्तको-ऽर्थनियम इति भेदः ॥ तत्र पक्षचतुष्टयं पर्युदासार्थनियमौ पर्यु-दासविभक्तिनियमौ । प्रसज्यप्रतिषेधार्थनियमौ । प्रसज्यप्रतिषेध-विभक्तिनियमौ चेति । तत्राद्ये एव दोषोद्भावनमिति भावः ॥ पक्षद्वयेऽपि । पर्युदासप्रसज्यप्रतिषेधरूपपक्षद्वयेऽपि ॥

---

त्वभावः स्यात्, न च तिङ्विधेरानर्थक्यं, लिङादिषु सावकाशत्वात्, प्रथमै-वेति नियमस्यापि स एव विषयः स्यादिति दोषः । पक्षे चायं दोषः, कत-रस्मिन् पक्षे, लटः शतृशानचावित्यत्र द्वौ पक्षौ अप्रथमेति पर्युदासः प्रस-ज्यप्रतिषेधो वेति, तथा 'कर्मणि द्वितीये' त्यादावपि प्रकरणे द्वैतं भवति विभक्तिनियमः स्यादर्थनियमो वेति तत्रयदार्थनियमः पर्युदासश्चा-श्रीयते तदा ऽयं दोषः, कथं, कर्मणि द्वितीयैवेत्यस्मिन् नियमे द्वितीया-दीनामनियतत्वात् प्रातिपदिकार्थमात्रेऽपि भावात्तदाश्रयौ शतृशानचौ-

प्रसज्यप्रतिषेधे त्विति । (कै)

यदि प्रथमासमानाधिकरणभिन्ने इति पर्युदास आश्रीयते तदाऽपि न दोषः । अन्यसामानाधिकरण्ये प्रथमासामानाधिकरण्यस्यापि सत्त्वेन तत्त्वावच्छिन्नप्रतियोगिताकभेदाभावादित्यपि बोध्यम् ॥ नन्वर्थनियमे प्रयुज्यमानयोरभावेऽपि सर्वत्र विभक्तिमत्त्वापत्तिरत आह

प्रयुज्यमानयोरिति । (कै)

अनियतायाश्चेति ॥ (कै)

यदा हि विभक्तीत्यस्य भाष्यस्य यथास्थितसूत्रन्यासे इत्यर्थः । प्रत्ययनियमस्यैव सूत्रसम्मतत्वात् तत्र च प्रथमाया विशेषपुरस्कारेणानियतायाः प्रातिपदिकार्थमात्रप्रतिबद्धायाः सन्निधानमस्त्येवेति भावः ॥ ननु वार्त्तिकन्यासेऽयं पन्थाः । तन्न्यासे एतन्नियमस्वीकारे

---

प्राप्नुतः प्रसज्यप्रतिषेधे तु प्रथमाया अपि तत्र भावात्तदाश्रयः प्रतिषेधः प्रवर्त्तेत इति न दोषः प्रयुज्यमानयोरभावात्तिङ्क्षु सत्सु तत्सामानाधिकरण्यात्प्रथमैवेति नियमेन द्वितीयादीनां व्यावर्त्तितत्वात्, यदा तु द्वितीयादीनां कर्मादिषु नियमः कर्मण्येव द्वितीयेति तदा तदभावे तासामभावादनियतायाश्च प्रथमायाः सन्निधानात्पर्युदासे प्रसज्यप्रतिषेधे च नास्ति प्रयुज्यमानयोः प्रसङ्गः, तदभावे च तिङ्क्षु सत्सु तत्सामानाधिकरण्यात्तत्रैव प्रथमा भवतीति नियमेन कर्मादिषु प्रथमाव्यावृत्तिरिति न दोषः । ननु च विभक्तिनियमे कर्माद्यभावेन यद्यपि द्वितीयादीनां तत्राभावस्तथापि शेषषष्ठी प्राप्नोति, तथाहि । यदि तिङ्सामानाधिकरण्य एव प्रथमेत्यस्या-

प्रथमावाक्येऽप्येवमेव नियमापत्तौ देवदत्तवत् इत्यवस्थायां विभक्तिसामान्याभावेन पर्युदासपक्षे प्रथमाभिन्नविभक्त्यन्ताभावेन प्रत्ययादेरप्राप्तावपि प्रसज्यप्रतिषेधे प्रथमान्तसामानाधिकरण्याभावेन निषेधाप्रवृत्तौ तौ स्यातामिति चेन्न। वार्त्तिकमते प्रत्ययादिविधौ प्रसज्यप्रतिषेध एव प्रथमाविधावर्थनियमा एवेति न दोषः। सूत्रमते तूभयथापि न क्षतिरिति तात्पर्यात् ॥

---

प्रथमान्तेनैव द्वितीयादिवत् यद्यपि नियता स्यात्तथाप्यप्रसक्तस्या सा तु प्रेषणक्रिया यत्र च विभक्त्यन्तरस्य नियमो न कृतः स प्रेषः तत्र तिङ्सामानाधिकरण्याभावप्रयोगत्वात् षष्ठी प्राप्नोतीति तत्सामानाधिकरण्याच्छतृशानचावेव स्यातां पर्युदासे प्रसज्यप्रतिषेधे तु न दोषः प्रथमाया अपि भावात्। तत्त्वं द्वयोरपि पक्षयोः पर्युदासे भवत्येव दोषः, भाष्ये तु विभक्तिनियमे पर्युदासेऽपि न दोष इत्यनाख्यावारः वार्त्तिक एव दोष इत्यैव तात्पर्यं, वस्तुतः न किंचिदुपपन्नाभिधानमित्यपरस्माते ।

# षष्ठी शेषे।२।३।५०॥

किमप्रधानमिति। (कै)

“शिष्लृ विशेषणे” इत्यतो घञि “शिष असर्वोपयोगे” इत्यतो वा घञि निष्पन्न इत्यर्थः॥

तथापि षष्ठीप्रसङ्ग इति। (कै)

न चैतस्य कर्मत्वाद्यविवक्षायां चारितार्थ्येन क्रियाकारकभावेनान्वये तत्तद्विधिभिर्बाधाच्च षष्ठ्यापत्तिः। अभिहितविषये ऽपि प्रथमया बाधादिति वाच्यम्। “ज्ञो विदर्थस्य करणे” (२।३।५१) इत्यादिषु शेष इत्यनुवृत्तेस्तद्विषये क्रियाकारकभावेनान्वयेऽपि परत्वात्षष्ठीप्रसङ्ग इति तदर्थान्न दोषः। शेषशब्दो ऽन्यवाची। तत्र प्रतियोग्याकाङ्क्षायामुपस्थितकर्मादय एव प्रकरणात् गृह्यन्त इत्याह

कर्माद्यनन्तरमिति॥ (कै)

ननु कर्मादिव्यतिरिक्तार्थासंभव इत्यत आह

---

षष्ठी शेषे। कारकप्रातिपदिकार्थव्यतिरिक्तः स्वस्वामिभावादिः शेषस्तत्र षष्ठी स्यात्। राज्ञः पुरुषः। ननु प्रत्ययनियमपक्षे शेष एवेत्यवधारणार्थमस्तु नाम शेषग्रहणम्। अर्थनियमपक्षे तु षष्ठ्यास्थान्यस्य च

---

“षष्ठी शेषे”। उपयुक्तादन्यः शेषः, कर्मादयश्च प्रातिपदिकार्थपर्यन्ता उपयुक्ता इत्याह। कर्मादिभ्योन्य इति। ननु न कर्मादिभ्योन्यः प्रातिपदिकार्थस्य व्यतिरेकः संभवति कथं क्रियामन्तरेण संबन्धानुपपत्तेः,

स्वस्वामीति ॥ (कै)

क्रियाकारकेति । (कै)

स्वत्वहेतुदानादिक्रियाकारकत्वपूर्वक इत्यर्थः । यत एवंविधोऽतः कारकेभ्यो ऽन्य इत्यर्थः ॥

विशेषणभाव एव स्मरणं प्रति मातुरिति । (कै)

क्रियाकर्मत्वमूलकविशेष्यविशेषणभाव इत्यर्थः । एतेन क्रियाकारकभाव एव संबन्धत्वेन विवक्षित इत्यन्यार्थं षष्ठ्यर्थेन सांसर्गिकस्येव विषयता । वक्ष्यति च भाष्यकारः ।

राज्ञः पुरुष इति । (भा)

अत्र राजा विशेषणं पुरुषो विशेष्य इति ॥

संबन्धाभावादिति । (कै)

दानादिना स्वीकरणातिरिक्तसंबन्धाभावादित्यर्थः । सर्वत्र तस्य संनिमित्तस्य च कर्मादि रूपस्य भावादित्यन्वयः ॥ ननु 'राज्ञः पुरुष' इत्यत्र राजा पुरुषस्य किं चिद्ददातीति राजा कर्ता पुरुषः संप्रदानं भवतु नाम राज्ञो वस्त्रम् । विप्रस्य गौः । विप्रस्य तिला इत्यादौ तु तदसंभवाच्छेषत्वं भविष्यतीत्यत आह भाष्ये

---

प्राप्तौ षष्ठ्येवेति नियमस्यासंभवात्तिन्नन्तेनेति चेन्न । उत्तरार्धमवाप्यकर्तृकस्य शेषग्रहणस्य स्पष्टार्थमिहैव ग्रहणम् । न चाप्रधानार्थं शेषग्रहणम् । तेन

---

सर्वत्र तस्यास्तन्निमित्तानां कर्मादीनां चावश्यंभावात्, तथाहि । राज्ञः पुरुष इति राजा कर्ता राजा द्रव्यं पुरुषाय ददातीत्यर्थसंप्रत्ययात् । 'वृक्षस्य शाखेति' । लोकप्रसिद्धा वृक्षोऽधिकरणं, तार्किकप्रक्रियया तु शाखा,

एतत्स्वं नामेति । (भा)

तत्र याच्ञाशब्दो न पूर्वतः प्रतिपाद्यो उच्यते ॥

अपहरणादिति । (कै)

यथा युद्धे क्षत्रियादीनाम् ॥ क्रयविनिमययोर्भेदमाह

परिवर्त्तनादिति ॥ (कै)

न विवक्ष्यत इति । (कै)

न हि यद्यद्वस्तुस्थित्यास्ति तत्तदभिधातव्यं यदेव विवक्षितं तदेव कार्यकृदिति भावः ॥ वृक्षस्य शाखेत्यादावप्याधाराधेयभावमूलको ऽवयवावयविभाव इति बोध्यम् । अथतो विवक्षायाः प्रकृते न संगतिरत आह

दृष्टान्तेति ॥ (कै)

भाष्ये

तत्र षष्ठी प्राप्नोतीति । (भा)

पर्यायेणेति भावः । परत्वेति नियमेन यौगपद्यासंभवात् ॥ ननु स्वादिवाक्येन षष्ठ्यामपि पर्यायेण प्राप्तायां पुनः षष्ठीविधानमप्राप्तौ विध्यर्थं न तु नियमार्थमित्यत आह

---

द्वयोः पर्यायेण वा न स्यादिति वाच्यम् । प्रत्ययार्थस्य प्राधान्येनाप्रधानादेव षष्ठ्या न्याय्यत्वात् । अप्रकृतत्वेऽपि पुरुषं प्रति तु राज्ञ इति षष्ठ्यर्थस्य विशेषणत्वमुचितमेवेति दिक् ॥

---

देवदत्तस्य गौरित्यादौ तु प्रतिग्रहत्वादौ कर्तृत्वं प्रतीयते देवदत्तः प्रतिग्रहीता क्रेता विनिमाता ऽपहर्ता वेति, उच्यते, नटस्य शृणोतीत्यत्र तावत्क्रियाकारकसंबन्धरूप एव शेषः, कथम्, 'आख्यातोपयोगे' इत्यनु-

## समे इति । (कै)

एवं च मीमांसकमतसिद्धो ऽयं नियम इति भावः । व्याकरणे तु परिसंख्यापि नियमपदेनोच्यते । अर्थनियमे ऽपि उत्तरार्थं शेषग्रहणमावश्यकमिति बोध्यम् ॥

## शक्यमकर्त्तुम् (भा)

इत्यस्याकर्त्तुं शक्यमित्यर्थः ॥ ननु शेषग्रहणाभावे ऽपि दोषसत्त्वेन न्यासान्तरस्य चादर्शनेनेति चेदित्यनुपपन्नमत आह

## व्याकरणान्तरे त्विति ॥ (कै)

भाष्ये

## व्यतिरिक्तः (भा)

इत्यस्य प्रातिपदिकार्थातिरिक्तया राजनिरूपितविशेष्यतया सहित इत्यर्थः । यत्तु षष्ठ्यर्थसंबन्धस्यांशेनोभयनिष्ठतया प्रतीतेस्तेन प्रातिपदिकार्थातिरिक्तेन सहित इत्यर्थ इति तन्न । पुरुषं स्वामिकृतं स्वत्वमपि षष्ठ्याभिहितमिति पुरुषशब्दात् षष्ठी नेत्याशयभाष्येण तस्य षष्ठ्यर्थत्वोक्त्या वाक्यार्थत्वकथनानुपपत्तेः ॥ भाष्ये

## षष्ठी स्यादिति । (भा)

कारकप्रातिपदिकार्थव्यतिरिक्तत्वात् षष्ठ्येव स्यादित्यर्थः ॥

---

योगग्रहणान्नटस्यापादानसंज्ञा नास्ति दुह्यादिपरिगणनाच्चाकथितत्वेऽपि कर्मसंज्ञा नास्ति, तदयं नटः कारकमेव शेषः, तथोक्तं क्रियायास्तन्निमित्तानां च सर्वत्र भावान्नान्यः प्रातिपदिकार्थस्य व्यतिरेक इति । तन्न, प्रतिग्रह-क्रयादिजन्यस्य सर्वलोकप्रसिद्धस्य स्वस्वामिभावादिसंबन्धस्यापि दुरपलाप-

संबन्धस्य (कै)

विशेष्यविशेषणभावस्य ॥ भाष्ये

यद्चाधिक्यमिति । (कै)

उक्तरूपम् पदांतरसंनिधाने प्रतीयमानत्वाच्च वाक्यार्थत्वं संबन्धित्वम् ॥

उक्तम् । (भा)

संबन्धकृतं राजनिरूपितं विशेष्यत्वम् ॥

राज्ञः संबन्धित्वावगमः । (कै)

संबन्धकृतो विशेषणत्वावगमः । एवञ्च विशेषणत्वस्य वाक्यार्थत्वे तन्नियामकसंबन्धोऽपि वाक्यार्थ एवास्त्विति ततोऽपि प्रथमाप्रसङ्ग इत्यर्थः ॥

संबन्धित्वम् । (कै)

विशेषणत्वम् ॥

अनियतप्रतियोगीति । (कै)

अनियतविशेष्यनिरूपितमित्यर्थः ॥ तदाह

---

त्वात् । यदि च परस्परमुपकार्योपकारकभावाभावे संबन्धानुपपत्तेः क्रियाकारकसंबन्धोपि सर्वत्र वस्तुस्थित्यास्तीत्युच्येत, अस्तु तथा न कश्चिद्दोषः, नहि यद्यद्वस्तुस्थित्यास्ति तत्तदभिधातव्यं यदेव तु विवक्षितं तदेव स्वनिमित्तां विभक्तिं प्रसूते तत्र स्वस्वामिभावादिसंबन्धविवक्षायां सन्नपि क्रियाकारकसंबन्धो न विवक्ष्यत इति द्वितीयाद्यभावे षष्ठी भविष्यति एवं च मातुः स्मरति न मापायामश्नीयादनुकरोति भगवतो नारायणस्येत्यादौ

राजा परोपकारित्वेनेति । (कै)

विशेषणत्वेनेत्यर्थः ॥

न स्वनिष्ठत्वेन (कै)

न स्वार्थनिरूपितविशेष्यतया ॥ भाष्ये

पुरुषे सोऽर्थ इति । (भा)

किंचिदन्यपदार्थनिरूपितं विशेष्यत्वम् ॥ शब्दार्थयोर्नित्यत्वात् शब्दकृतमर्थकृतमित्यनुपपन्नमत आह

किं तर्ह्यर्थस्येति । (कै)

अर्थस्य शब्दोच्चारणप्रयोजकत्वाच्छब्दे ऽर्थकृतत्वमिवार्थे शब्दकृतत्वं नेति भावः ॥

प्रतिपिपादयिषया (कै)

इत्यस्य विषयीकरणाकरणाभ्यामित्यनेनान्वयः ॥

राजनि सो ऽर्थ इति । (भा)

विशेषणत्वं संबन्धस्येत्यर्थः ॥ तदाह

तत्रेति ॥ (कै)

परोपकारित्वेन । (कै)

विशेषणत्वेन ॥

---

अयमाशयोऽपि क्रियाशब्दे मातृसंबद्धं स्मरणमिति संबन्धमात्रं विवक्षितं कर्मत्वं तु सदप्यविवक्षितमिति षष्ठी भवति । उक्तं च ।

संबन्धः कारकेभ्यो ऽन्यः क्रियाकारकपूर्वकः ।
श्रुतायामश्रुतायां च क्रियायां सोऽभिधीयते ॥

षष्ठी भवतीति ॥ (कै)

तस्य विशेषणतानियामकसंबन्धबोधिका । तद्गतविशेषणताबोधिका च षष्ठी भवतीत्यर्थः ॥

पुरुषस्य तूपकार्यतयेति । (कै)

अविवक्षितत्वेनेति शेषः । राजादिपदासंनिधानेन तस्योपकार्यतयान्यनिरूपितविशेष्यतया ऽविवक्षितत्वेन स्वनिष्ठतया स्वार्थमात्रनिष्ठविशेष्यतया विवक्षितत्वादन्तरङ्गत्वात्प्रथमेत्यर्थः ॥

[1]द्विष्ठ इति । (हरिः)

असौ संबन्धः ॥

परार्थत्वात् (हरि)

परं विशेषणत्वम् अर्थः प्रयोजनं यस्य तत्त्वाद्विशेषणतानियामकत्वादित्यर्थः । भेदे सति विशेषणतया विवक्षितस्य संबन्धं विना विशेषणत्वासंभवेन तदाकाङ्क्षितत्वात् ॥

---

१ द्विष्ठोऽप्यसौ परार्थत्वात् गुणेषु व्यतिरिच्यते ।
तत्राभिधीयमानस्य प्रधानेऽप्युपयुज्यते ॥

---

इति । 'षष्ठी शेष इति चेद्विशेष्यस्य प्रतिषेधः स्वस्वामिभावासंबन्धः षष्ठ्यर्थः स च द्विष्ठस्तत्र यद्यप्येकस्मादप्युत्पन्नयापि षष्ठ्या द्विष्ठस्यापि संबन्धस्यावगमात्तुभाभ्यां षष्ठी न भवति तथापि कदा चिद्विशेष्यादपि प्राप्नोति प्रथमा च न प्राप्नोति संबन्धस्याधिकस्य भावात् न वा वाक्यार्थत्वात्, यदत्र पुरुषस्याधिक्यं स वाक्यार्थः राज्ञ इत्येतत्पदसंनिधानात्पुरुषस्य संबन्धः प्रतीयते पुरुषप्रातिपदिकं तु स्वार्थमात्रे वर्तत इति तत्र प्रथमा च भविष्यति

**तत्र संबन्धो व्यतिरिच्यते ।** (हरिः)

उद्भूततया प्रतीयत इति। तत्र षष्ठीत्यर्थः। विशेष्यस्य तु स्वनिष्ठत्वादेव न विशेष्यतानियामकसंबन्धाकाङ्क्षेति भावः। तत्र विशेषणशब्देन षष्ठ्यादिना प्रतीयमानः॥

**प्रधानेऽप्युपयुज्यते ।** (हरिः)

तस्य द्विष्ठत्वस्वभावत्वाद्राजादिनिरूपितविशेष्यताया राजादि-पदसंनिधाने प्रतीयमानाया उपकारको भवतीत्यर्थः॥

**किं पुनस्तदिति** (भा)

भाष्ये

**सोऽर्थ** (भा)

इत्यत्र तच्छब्दार्थः कः किं विशेषणत्वमेवातोऽन्योऽपीति प्रश्नः। उत्तरम्।

**स्वामित्वमिति ।** (भा)

स्वामित्वं तत्कृतं विशेषणत्वं चेत्यर्थः॥

**स्वस्वामिसंबन्ध इति ।** (कै)

तन्मूलकं विशेषणत्वं चेत्यपि बोध्यम्। स्वस्वामिनोः संबन्धः स्वत्वस्वामित्वोभयरूपः स चैकदेशेन स्वनिष्ठः स्वामिनिष्ठश्चेति बोध्यम्॥

---

षष्ठी च न भविष्यतीति, एतदुक्तं भवति, राज्ञ इति केवलपद उच्चार्यमाणे संबन्धित्वमनियतप्रतियोगिकमवगम्यते पुरुषपदसन्निधौ तु सविशेषस्य प्रतीतिरित्येतावत्, ततश्चानियतं समपेक्ष्य प्रथममेव संबन्धाश्रया षष्ठी

**समासेति ।** (कै)

स्वशब्दादैश्वर्ये आमिनचि स्वामिन्शब्द इति भावः ॥ भाष्ये

**किं कृतमिति ।** (भा)

स्वत्ववद्वाचकपदानुपादानादिति भावः ॥ उत्तरयति ।

**स्वकृतमिति ।** (भा)

सामान्यतः स्वमात्रनिरूपितमित्यर्थः ॥ नन्वेवं पुरुषशब्दोपादानं व्यर्थमत आह

**पुरुषेति ॥** (कै)

ननु स्वामित्वप्रतिपिपादयिषायां राजा स्वामीति प्रयुज्यतां किमिति षष्ठीप्रयोगः । प्रयोगयोर्विषयविभागस्य कः सामान्यनिरूपितं स्वामित्वं च कथमित्याशङ्क्य दृष्टान्तेनोपपादयति । भाष्ये

**तद्यथेति ॥** (भा)

**क्रियाकृताः ॥** (भा)

क्रियासामान्यनिरूपिताः ॥

**उपजायन्ते ॥** (भा)

विवक्ष्यन्ते ॥ तदेवाह

---

भवति । ननु च षष्ठ्युच्चारणानुच्चारणाकृतो यो विशेषो ऽकृभवान् पुरुषपदादपि षष्ठीमुच्चारयतुं गंस्यते स विशेषः । नैतत्सूक्ष्यते । नहि शब्दस्य भावाभावाभ्यामर्थस्य भावाभावौ क्रियेते किन्तर्हि विद्यमान एवार्थः प्रतिपिपादयिषितस्य वाचकपदप्रयोगे हेतुर्भवति तत्र गुणस्य परोपकारकत्वेन विवक्षितत्वात्तदन्ते षष्ठी भवति पुरुषस्य तूपकार्यत्वात्स्वनिष्ठत्वेन विवक्षितत्वात्प्रथमा

आश्रीयन्त इति ॥ (कै)

यदेत्यादि। (कै)

उभयत्रापि भवतीत्यस्य तदेति शेषः ॥

शक्तिलक्षणार्थातिरेक इति। (कै)

अयं भावः। सर्वे पदार्थाः सर्वशक्तिमन्तः शक्तिभिश्च धर्मिणा भेदाभेदौ तत्र भेदविवक्षायां विभक्तयः। अभेदविवक्षायां तु करणादिशब्दैरभिधानं भेदविवक्षा च क्रियासामान्ये क्रियाविशेषे वा विशेषणत्वे साम्वयविवक्षामेव भवतीति। इयमेव च

क्रियां प्रति व्यापारावेशविवक्षया। (कै)

तस्यां विशेषणत्वविवक्षया ॥

प्रातिपदिकार्थता। (कै)

विभक्तिसमभिव्याहारं विनापि तदर्थता ॥

अपरोपकारित्वेनेति। (कै)

इतराविशेषणत्वेनेत्यर्थः ॥

स्वनिष्ठतया ॥ (कै)

स्वार्थनिरूपितविशेष्यतया ॥ दृष्टान्तमुपपाद्य दार्ष्टान्तिके योजयति

---

भवति, तत्र च संबन्धो गुणे पदं निधाय प्रधानमपि स्पृशति गुणस्य प्रधानोपकाराय प्रवृत्तोन्यथानुपपत्तेः रूपान्तरमाश्रयति प्रधानं तु स्वनिष्ठत्वेन न रूपान्तरं भजते, उक्तं च।

द्विष्ठोप्यसौ परार्थत्वाद्गुणेषु व्यतिरिच्यते।
तत्राभिधीयमानः सन् प्रधानेप्युपयुज्यते ॥

तदेवमिति। (कै)

एवं च स्वप्रत्ययार्थस्य विशेषणभावेऽपि विभक्त्यर्थ इति बोध्यम् ॥

संज्ञामेवेति। (कै)

संज्ञाव्यवहारः करणत्वादिव्यवहारस्तमेवेत्यर्थः। विभक्त्यभावेन शास्त्रीयसंज्ञाया अनुपयोगात् ॥

[1]स धर्मः। (हरिः)

शक्तिरूपः ॥

नाभिधीयते। (हरिः)

सामान्यतो विशेषतो वा पृथक् नाभिधीयते। फलाश्रयत्वादिनैव ततो बोधादिति भावः ॥

उपकारः। (हरिः)

स्वप्रत्ययार्थस्येतरविशेषणतानियामककर्मादिपदेन संबन्धपदेन चोक्तस्य न शक्तिरूपता नापि संबन्धरूपता। अत्र कर्मादिशब्दै-

---

१ स्वशब्दैरभिधाने तु स धर्मो नाभिधीयते।
विभक्त्यादिभिरेवासावुपकारः प्रतीयते ॥ हरिः।

---

इति। यदा तु पुरुषस्याप्राधान्यं राज्ञश्च प्राधान्यं विवक्ष्यते तदा पुरुषस्य राजेत्यपि भवत्येव, यदा च राज्ञः पुरुषस्य गृहमिति तत्पुरुषस्य गृहादिसंबन्धो विवक्ष्यते तदैकस्यापि वस्तुनो भिन्नविषयो गुणप्रधानभावो न विरुद्ध इति द्वाभ्यामपि षष्ठी भवति, राज्ञ इति हि षष्ठ्या राजपुरुषयोरेव संबन्धोऽभिहितो न पुरुषस्य गृहस्य च, इह पक्षे प्रातिपदिकार्थे 'कर्मणि द्वितीये' त्यादौ चार्थनियमपक्षे शेषग्रहणं शक्यमकर्तुं कथं

नाभिधीयते इत्युक्त्वा तदन्ते सर्वत्र तदनभिधानमिति लभ्यते। न हि क्षतकर्मशब्दयोः कश्चिद्विशेष उभयथापि कर्मणि प्रत्ययात्॥

विभक्त्यादिभिः (प्र०)

इत्यत्रापि शब्द आश्रयवाचीति बोध्यम्। उक्तमाश्रयमजानानो "यस्मादधिकमि"ति (२।३।९) सूत्रोक्तरीत्या "अधिशब्दस्तु प्रत्याला" इत्यत्रापि पञ्चाशब्दाद् द्वितीयैव। प्रकृते पुरुषपदात्षष्ठी प्रकृते। भाष्ये

[1]यद्येवं तर्हीति॥ (भा)

ननु षष्ठ्या उभयथापत्तिवद्द्वितीयादीनामप्युभयथापत्तिः कुतो नेत्यत आह

शक्तिस्त्विति। (कै)

संबन्धस्य तु स्वत्वस्वामित्वोभयरूपतयोभयशक्तिकमिति भावः। यद्यप्येवं क्रियाकारकभावं संबन्धोऽस्त्येव तथापि "कर्मणी"त्यादिशास्त्रबलादिह स्वामित्वस्यैव तत्र शक्तेरपि तदर्थत्वान्न दोषः। क्रियावाचकस्याप्रातिपदिकत्वादपि न तदापत्तिरिति बोध्यम्॥

---

१ उपलब्धभाष्यपुस्तकेषु "यद्येवं तर्हि" इति पाठो दृश्यते।

---

कर्मादयो नियताः शेषोऽनियतः, ततश्च स्वादिसूत्रेण द्वितीयादिषु षष्ठ्यां च शेषे प्राप्तेषु षष्ठीत्येतावदप्युच्यमानं नियमार्थं सम्पद्यते षष्ठ्येव भवतीति, यत्र च षष्ठी च प्रत्ययान्तरं च प्राप्नोति तत्रैवंविधो नियम इत्यर्थाच्छेष एव भविष्यतीति उत्तरार्थमेव तदवश्यं शेषग्रहणं कर्तव्यं, त्रिकपक्षे तु कार्यं

षष्ठ्याभिहित इति (भा)

भाष्ये ऽयं भावः । कथं भीम इत्यादौ प्रकारान्तरेण द्वितीयासाधनात्परिगणनमनावश्यकं राजपदोत्तरषष्ठ्या स्वामित्वोक्तावपि पुरुषे स्वत्वं विना पुरुषनिरूपितस्वामित्वाप्रत्ययेन तत्र तत्त्वमप्यायातमिति ॥ नन्वर्थलभ्येऽपि स्वामित्वे राज्ञः स्वामित्यादौ षष्ठी दृश्यते किं च वार्त्तिकमते इदं परिगणनेन विरुद्धमित्यतः पूर्वमुक्तमभिप्रायं स्मारयति ।

गुणप्रधानभावेनेति । (कै)

रूपान्तरं विशेषणतानियामकसंबन्धवत्त्वं पदान्तरासमभिव्याहारेऽपीति भावः ॥

प्रधानं त्विति । (कै)

पदान्तरासमभिव्याहारे इति शेषः ॥

रूपान्तरम् । (कै)

अन्यनिरूपितविशेष्यतानियामकसंबन्धं तस्या एवाप्रतीतेरिति भावः । अनया रीत्या पञ्चालशब्दाद्द्वितीयावारणमपि कर्त्तुं शक्यं तदा पुरुषस्य राजेति पुरुषसंबन्धी राजेति तदा बोध इति भावः ॥

---

षष्ठी मा भूदिति द्वितीयादीनामिव कर्मादिः शेषो वाच्यत्वेन विधातव्यः, तथा प्रत्ययनियमपक्षे कर्मादीनामनियतत्वात्तेष्वपि षष्ठ्यां प्राप्तायां शेष एव षष्ठी न कर्मादिष्विति षष्ठी नियमार्थं शेषग्रहणं कर्तव्यम् ।

# अधीगर्थदयेषां कर्मणि । २ । ३ । ५२ ॥

एषां कर्मणि शेषत्वेन विवक्षिते षष्ठीति सिद्धान्ते सूत्रार्थः । कर्मादीनामविवक्षा च शेष इति बोध्यम् ॥ ननु मातुः कर्मत्वाविवक्षायां किं निमित्तेन संबन्धेन मात्रादेः स्मरणे ऽन्वय इत्यत आह

## मातुरिति । (भा)

अवस्थाने विषयत्वभावेन माता कर्त्री स्मरणमधिकरणं तन्निमित्तकं विषयत्वं संबन्ध इत्यर्थः ॥

## अन्येत्विति । (कै)

स्वकर्मत्वकृतो विषयविषयीभाव एव संबन्ध इति भावः ॥ कर्मव्यतिरिक्तस्याभावादादिशब्दवैफल्यमत आह

---

अधीगर्थदयेशां कर्मणि ॥ एषां कर्मणि शेषे षष्ठी स्यात् । इक् स्मरणे, ककार इहैव विशेषणार्थः । अधिशब्दोच्चारणन्तु सामान्यापेक्ष-

---

"अधीगर्थदयेशां कर्मणि" ॥ इक् स्मरणे ककारोऽत्रैव विशेषणार्थः, अधिपूर्वस्यैवोच्चारणमेवमेवायं प्रयोक्तव्य इति ज्ञापनार्थम्, 'शेषत्वेन विवक्षित इति' । ननु शेषत्वेन विवक्षिते पूर्वेणैव सिद्धा षष्ठी यथा न माषाणामश्नीयादनुकरोति भगवतो नारायणस्येति, सत्यं, प्रकरणं तु नियमार्थम्, अस्मिन्विषये षष्ठी भवत्येव श्रूयत एव न लुप्यत इति, किं कृतं भवति

### आदिशब्द इति ॥ (कै)

### द्वितीयाविधिनिमित्तभावेनेति । (कै)

द्वितीयापवादषष्ठीविधिनिमित्तभावेनेत्यर्थः । दिवविषये "विभाषोपसर्गे" "द्वितीया ब्राह्मणे" इति सूत्रद्वयारम्भसामर्थ्याच्च प्रकरणे शेषग्रहणानुवृत्तिर्नेति वार्त्तिकारम्भः । पदाभावे अस्मादेवानभिहितत्वात् षष्ठी । यदा कर्मणि तदा ऽभिहितत्वात्प्रथमैव तदाह

### कर्मणि त्विति ॥ (कै)

### विनापीति । (कै)

अप्रयुज्यमाने प्रयुज्यमानशब्दप्रयोग इवेत्यर्थः ॥ वत्यभावे सिद्धिमुपपादयति ।

### नाप्राप्ते इति । (कै)

वस्तुतस्तु अयं क्षत्रियो ब्राह्मण इत्यादौ लोके वतिं विनाप्यतिदेशविषये स्वाश्रयाभिव्यक्तिदर्शनादिदं चिन्त्यम् । किं तु वत्य-

---

ज्ञापकं इङिकावध्युपसर्गं न व्यभिचरत इति । अत एव स्मृत्यर्थदयेशामिति गौणम् । सूत्रभङ्गपक्षेपि हि कित्वं कर्तव्यमेव इण्वदिक इत्यत्र

---

समासो निवर्त्तितो भवति मातुः स्मरणमिति, एवं पूर्वसूत्रे परत्र च प्रकरणे सर्वत्र द्रष्टव्यं, समासे सति 'सुपो धातुप्रातिपदिकयो'रिति षष्ठी लुप्येत, तेन प्रतिपदविधानषष्ठी न समस्यत इति सिद्धं भवति, कथं तर्हि विशेषस्मृतेः संशय इति समासः, उच्यते, शेषषष्ठ्या एव समासनिषेधः, इह तु 'कर्तृकर्मणोः कृतीति' कर्मरूपविवक्षायामेव षष्ठी समासो

भावे ऽकर्मसंज्ञैवं स्यात् । तथा च स्वाश्रयं न स्यादिति भाष्यतात्पर्य्यम् ॥ भाष्ये 'कर्मवद्भावस्य' फलान्तरमाह

कर्माभिधाने हीति । (भा)

हिस्वार्थे ॥

इत्येके इति । (कै)

तन्नेष्टापत्तिरित्यत्रारुचिः ॥ भाष्ये

अविवक्षिते कर्मणीति । (भा)

एवं चाविवक्षितकर्मकत्वेनाकर्मकत्वाद्भावे लादयः सिद्धा इति भावः ॥ नन्वेवं शेषषष्ठ्यैव सिद्धे प्रकरणमिदं व्यर्थमत आह

प्रकरणञ्चेति । (कै)

मण्डूकानुवृत्तेरयुक्तत्वात् पूर्वसूत्रेऽपि शेष इत्यस्य संबन्धो बोध्यः ॥

[1]साधनैरिति । (हरिः)

करणकर्मकारकैः ॥

---

१ साधनैर्व्यपदिष्टे च श्रूयमाणक्रिये पुनः ।
प्रोक्ता प्रतिपदं षष्ठी समासस्य निवृत्तये ॥ हरिः ॥

---

विशेषणार्थम् । एरित्युक्तेः कटीमतावित्यत्र प्रश्लिष्टस्यायतेर्ग्रहणापत्तेः । मातुः स्मरणम् । सर्पिषोदयनमीशनं चेत्यादिवृत्त्यादिग्रन्थेष्विह प्रकरणे

---

भविष्यति, कः पुनरत्र विशेषः शेषषष्ठ्याः समासः स्यात्कारकषष्ठ्या वा, अयमस्ति विशेषः कारकषष्ठ्याः समासे कृत्स्वरो भवति शेषषष्ठ्याः समासे

## व्यपदिष्टे इति (हरिः)

विगतोपदेशे विगतव्यवहारशेषत्वेन विवक्षित इति यावत् ॥

## श्रूयमाणक्रिये इति । (हरिः)

स्वरूपकथनम् । तत्र शेषत्वाविवक्षायां कृद्योगषष्ठ्या समासस्य दुर्वारत्वेनेदं व्यर्थमादिकर्मणि कर्तरि क्तप्रत्ययान्तस्य क्तादिभिः समासवारणार्थत्वात् न हि तत्र कृद्योगलक्षणा षष्ठी "न लोकेति" निषेधादिति बोध्यम् ॥

---

उदाहरणं प्रत्युदाहरणञ्च यद्यपि तिङन्तं दृश्यते तथापि तत्सर्वमुपलक्षण-तया ऽभियुक्तैर्व्याख्यातमेव ॥

---

तु समासान्तोदात्तत्वं स्यात्, अन्तोदात्तसमासनिवृत्तये प्रकरणं यत्र च कारकषष्ठी प्रतिषिध्यते यथा मातुः स्मृतमिति तत्र समासोपि मा भूत्, एवं चात्र प्रकरणे ये ऽनुपात्ताः यानि चात्र प्रत्युदाहरणानि तेषूभयेष्वपि निष्ठायोगे शेषषष्ठ्याः समासो ऽन्यत्र कारकषष्ठ्या अपीति वेदितव्यम् । 'गुणैरिति' । गुणेषु शेषत्वेन विवक्षितेषु अस्य नियमस्याभावात्समासो भवत्येवेत्यर्थः । इयमेवास्मिन्प्रकरणे प्रत्युदाहरणगतिरिति ॥

# रुजार्थानां भाववचनानामज्वरेः।

## २ । ३ । ५४ ॥

कर्मणि षष्ठीविधानेन भावकर्तृकादित्यनुपपन्नमत आह

ल्यब्लोप इति ॥ (कै)

तत्प्रत्याख्यानपक्षे ऽप्याह

अथवेति ॥ (कै)

कर्तृत्वासंभवादिति । (कै)

असत्त्वभूतस्य भवत्यर्थातिरिक्ते कर्तृत्वासम्भवादिति भावः ॥

---

रुजार्थानां भाववचनानामज्वरेः। भावकर्तृकाणां ज्वरिवर्जितानां रुजार्थानां कर्मणि शेषे षष्ठी स्यात् । चौरस्य रोगस्य रुजा। रुजो भङ्गे। भिदादिपाठात्प्रकृतसूत्र एव निपातनाद्वाङ्। रुजाशब्दो व्याधौ रूढः। सूत्रे भाववचनानामिति कर्तरि ल्युट्। प्रकृत्यर्थस्तु न विवक्षितः।

---

"रुजार्थानां भाववचनानामज्वरेः" ॥ रुजोभङ्गेभिदादिपाठादस्मादेव निपातनाद्वा ऽङ् 'भाववचनानामिति'। नायमर्थो भाववाचिनामिति धातूनां भाववाचित्वाव्यभिचारात् किं तर्हि भावशब्देन घञादिवाच्यः सिद्धरूपो भाव उच्यते। वचन इति कर्तरि ल्युट्, तत्र प्रकृत्यर्थो न विवक्ष्यते न हि रुजार्थानां भावो वक्ता प्रतिपादयितोच्चारयिता वोपपद्यते तस्मात्प्रत्ययार्थ एव कर्ता विवक्षितः, भावो वचनः कर्ता येषामित्यर्थः, तदाह। भावकर्तृकाणामिति'। 'चौरस्यामयतीति'। अम रोगे चुरादिः 'नान्ये मितो ऽहेता-विति' चुरादौ वचना 'ज्वलह्वलह्मलनमामनुपसर्गाद्वा' 'जनीजॄष्क्नसुरञ्जोऽमन्ताश्चे'ति मित्त्वं न भवति

कर्तरीति । (कै)

बहुलवचनादित्यर्थः ॥

अन्येत्विति । (कै)

बाहुलकाद्व्यधिकरणबहुव्रीह्याश्रयणं वरमित्यभिमानः ॥

रुजाशब्द इति । (कै)

अन्यथा रुजार्थानामिति निर्देशो ऽनुपपन्न इति भावः ॥

धातुमात्रेति । (कै)

धात्वर्थमात्रे इत्यर्थः । अकार उच्चारणार्थ इति निर्देशोपपत्तिरिति भावः ॥ तिङन्तं प्रत्युदाहरणं वार्त्तिकमते शेषग्रहणानुवृत्तेस्तन्मते ऽभावात् ॥

---

तर्हि वक्ता सम्भवति । तस्मात् प्रत्ययस्य साधुत्वनिर्वाहाय वचिर्बोध्यः । अज्वरिसन्ताप्योरिति वाच्यम् ॥ रोगस्य चौरज्वरः । चौरसन्तापो वा । रोगकर्तृकचौरसम्बधि ज्वरादिकमित्यर्थः । तपेर्हेतुमत्सन्तादेरच् । इह समासो भवत्येव ॥

---

'शमभिव'त्यारभ्य मान्येमितोहेता' वितः प्राग्ये पठितास्तएवचुरादिषु मितो भवन्ति नान्य इत्यर्थः । 'आमय इति' आङ्पूर्वस्य मीनातेरच्, मीनातिमिनोतीत्यात्वस्य मिमिमीलियां खलचोरिति प्रतिषेधः । 'नदीकूलं रुजतीति' । अत्र नदी कर्त्री न भावः । ननु रुजाशब्दा व्याधौ रूढ इति नात्र प्रसङ्गः एवं तर्हि प्रत्युदाहरणादिगियं दर्शिता इदं तु प्रत्युदाहरणं श्लेष्मा पुरुषं रुजतीति व्याधिना कासादिना पाचयतीत्यर्थः । 'ज्वरयतीति' । ज्वर रोगे घटादिः, 'सन्तापयतीति' । 'हेतुमति चे'ति णिच्, सन्तापोऽत्र भावः कर्त्ता च ॥

# द्वितीया ब्राह्मणे । २ । ३ । ६० ॥

भाष्ये

**पूर्वेणापीति** (भा)

"विभाषोपसर्गे" (२।३।५९) इत्यनेनेत्यर्थः ॥ "दिव" इति सूत्रे शेषग्रहणानुवृत्त्या शेषषष्ठी तत्त्वाविवक्षायां द्वितीयेतीदमपि सिद्धमतमाह ।

**अत्र च शेष इति ।** (कै)

"दिवस्तदर्थस्येति" (२।३।५८) सूत्रे इत्यर्थः । अत्र शेष इत्यस्य संबन्धे "विभाषोपसर्गे" इति सूत्रं समासविकल्पफलकं वाच्यं तथा च नोपसर्ग इति पूर्वसूत्रनिषेधे शेषषष्ठ्यां समासविकल्पेन रूपद्वयस्य सिद्धतया विभाषाग्रहणं व्यर्थं स्यात् । "विभाषोपसर्गे" इत्यत्र शेष इत्यस्यासंबन्धे तु वेदेऽपि तेनैव कर्मणि द्वितीयायाः सोपसर्गे सिद्धत्वेन आपाद्यरूपाभावेन निरुपसर्गेऽपि कर्मत्वविवक्षायां दिव इत्यस्याप्रवृत्त्या कर्मणि द्वितीयेत्येव सिद्धतया "द्वितीया ब्राह्मणे" इत्यस्य

---

द्वितीया ब्राह्मणे ॥ ब्राह्मणविषये प्रयोगे दिवस्तदर्थस्य कर्मणि द्वितीया वा स्यात् । षष्ठ्यपवादः । गामस्य तदहः सभायां दीव्येयुः । सोपसर्गस्य छन्दसि व्यवस्थितविभाषयापि सिद्धे निरुपसर्गार्थ आरम्भः ॥

---

"द्वितीया ब्राह्मणे" । मन्त्रव्यतिरिक्तो वेदभागो ब्राह्मणम् । 'गामस्य तदहः सभायामिति' । ग्रामस्य सभायामित्यन्वयः, तदहरित्येतदुदाहरणं,

93

वैयर्थ्यापत्तिः । इति त्विदं न प्रवर्तेत इति पुनर्विधानं समासाभावा-र्थेत्यपि न वाच्यमिति भावः ॥ परे तु दिव इति सूत्रे शेष इत्यस्य निवृत्तिर्व्याख्यानादेव नोपसर्ग इत्यत्र "विभाषोपसर्ग" इत्यतः पद-लाघवाभावात्तिङन्ते रूपद्वयार्थं विभाषाग्रहणस्यावश्यकत्वाच्च । इति "प्रतिपदविधानेति" निषेधात् षष्ठीसमासाभाव एव । अत एव तद्भाष्यकृता न प्रत्याख्यातमित्याहुः । परे तु दिव इति सूत्रे शेष इति संबन्धाद् एव "कर्मादिष्वकर्मकवद्वचनमिति" वार्त्तिकरीत्या शतस्य दीव्यत इति भावे इष्टः प्रयोगः सिध्यति । अत एव सकर्मका अधीगर्थादयः प्रेष्यब्रूपर्यन्ताः कर्मादिशब्देनोच्यन्ते इति कैयटः । शेष इत्यनुवृत्त्या वार्त्तिकप्रत्याख्याने तु एतत्सूत्रद्वयप्रत्याख्याने एव भाष्यतात्पर्यम् ॥

### अत्र चेति । (कै)

कैयटस्यापि । अत्र प्रकरणे इत्यर्थः । एवं चात्रत्यं भाष्यं वार्त्तिकरीत्या । एवं च "ज्ञो विदर्थस्य" "क्त्वोर्थे"ति सूत्रे च न शेष-पदसंबन्धो मानाभावात् । अत्र च मण्डूकानुवृत्तिरत एव यदा कर्मविवक्षितमित्येवोक्तमन्यथा कर्मादिविवक्षितमिति वदेदित्याहुः ॥

---

'अमोर्नपुंसका'दिति लुक्, 'अष्टम्ने'ति सत्वम् । 'अनुपसर्गस्य नित्यं षष्ठ्यां प्राप्तायामिति' । दिवस्तदर्थस्येत्यनेन, अथ सोपसर्गस्यापि पूर्वेण षष्ठ्यामपि प्राप्तायां नित्यद्वितीयार्थं कस्मान्न भवतीत्याह । 'सोपसर्गस्येत्यादि' ॥

# प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने। २। ३। ६१॥

हविषः प्रस्थानासम्भवादाह
यदेति॥ (कै)

---

प्रेष्यब्रुवोर्हविषो देवतासम्प्रदाने॥ इष्यतेर्दैवादिकस्य गत्यर्थस्य लोण्मध्यमपुरुषैकवचनं प्रेष्येति तत्साहचर्याद् ब्रुविरपि तथाभूतो गृह्यते। देवतासम्प्रदानं यस्यार्थस्य तत्र वर्तमानयोः प्रेष्यब्रूहीत्येतयोः कर्मणोर्हविर्विशेषस्य वाचकाच्छब्दात् षष्ठी स्यात्। अग्नये छागस्य हविषो वपाया मेदसः प्रेष्यानुब्रूहि वा। प्रेष्यब्रुवोः किम्। अग्नये छागं हविर्वपामेदो जुहुधि। हविषः किम्। अग्नये गोमयानि प्रेष्य। देवतासम्प्रदाने किम्। माणवकाय पुरोडाशान्प्रेष्य। हविषः प्रस्थितत्वेन विशेषणे प्रतिषेधो वक्तव्यः॥ इन्द्राग्निभ्यां छागं हविर्वपामेदः प्रस्थितं प्रेष्य। इह सूत्रे प्रेषग्रहणं न सम्बध्यते। तिङन्तेन समासस्याप्रसक्तत्वात्। इदञ्च भाषायामपि प्रवर्तते। उत्तरत्र छन्दोग्रहणात्॥

---

"प्रेष्यब्रुवोर्हविषो देवतासंप्रदाने"॥ 'इष्यतेर्दैवादिकस्येति'। इषु गतावित्यस्य श्नसा निर्देशः इच्छतीष्णात्योरिच्छाभीक्ष्ण्यार्थयोर्निरासार्थं। तद्विषय एवेति। लोण्मध्यमैकवचनान्तः। 'देवतासंप्रदान इति'। देवता संप्रदानं यस्यार्थस्य तत्र वर्तमानयोः कर्मणि कारक इत्यन्वयः, 'हविषो' हविर्विशेषवाचिन इत्यर्थः। 'प्रेश्येति'। ब्रूहिप्रेष्येत्यादिना प्लुतः। 'अग्नये गोमयानि प्रेष्येति'। गोमयं हविष्ट्वेन क्वापि न चोदितं, 'हविषः प्रस्थितस्येति'। प्रस्थितशब्देन यद्विशेष्यते तस्येत्यर्थः, इदं च भाषायामपि भवति उत्तरत्र छन्दोग्रहणात्॥

# चतुर्थ्यर्थे बहुलं छन्दसि । २ । ३ । ६२ ॥

खर्वेण । (भा)

अग्निदग्धशरावेण । अञ्जलिरपक्वशरावो वा विहित इति बोध्यम् । खर्वो वामनः । रजस्वलाप्रस्तावे तैत्तिरीयश्रुतौ न महासीत नास्या अन्नमद्याद्ब्रह्महत्यायै ह्येषा वर्णं प्रति मुच्यास्तेथो खल्वाहुरभ्यञ्जनं वा वस्त्रिया अन्नमभ्यञ्जनमेव न प्रतिगृह्यं काममन्यदित्युपक्रम्य

यां मलवद्वाससमित्यादि । (भा)

"मलवद्वाससं" रजस्वलाम् ॥

संभवति (भा)

गर्भाधानार्थमुपगच्छन्ति ॥

ततो जायते सोऽभिशस्तः । (भा)

मिथ्यारोपितपातकः ॥

---

चतुर्थ्यर्थे बहुलं छन्दसि ॥ षष्ठी स्यात् । पुरुषमृगश्चन्द्रमसे गोधा कालकादार्वाघाटस्ते वनस्पतीनाम् । वनस्पतिभ्य इत्यर्थः । बहुलग्रहणादन्य-

---

"चतुर्थ्यर्थे बहुलं छन्दसि" । 'या खर्वेणेति' । रजस्वलायाः खर्वपानादिप्रतिषेधार्थोऽयमर्थवादः । तत्र हि वक्तव्यं षष्ठ्यर्थे चतुर्थीति, न वक्तव्यं,

**अरण्ये इति। (भा)**

संभवतीत्यनुवर्त्तते।

**स्तेनः। (भा)**

चौरः॥

**पराचीम्। (भा)**

लज्जादिना पराग् वलितवदनामन्यचित्तां वा॥

**तस्यै ह्रीतमुखी। (भा)**

लज्जावनतवदनस्तस्यैव व्याख्या॥

**अपगल्भः। (भा)**

अप्रगल्भ इत्यर्थः॥

**मारुकः (भा)**

मरणशीलः॥

**अभ्यङ्क्ते (भा)**

तैलादिनेति शेषः॥

**दुश्चर्मा। (भा)**

कुष्ठी॥

**प्रलिखते। (भा)**

चित्रादि लिखति॥

---

मतस्चतुर्थी। षष्ठ्यर्थे चतुर्थीत्यपि वक्तव्यम्॥ या खर्वेण पिबति तस्यै खर्वः। व्यत्ययवचनात्सिद्धम्॥

---

योगविभागात्सिद्धं, चतुर्थ्यर्थे इति नायं समासः किं तर्हि चतुर्थी अर्थे इति योगो विभक्तव्यः, षष्ठीत्यनुवर्त्तते, अर्थे षष्ठी भवति चतुर्थी चेति, तत्र

खलतिः । (भा)

अकेशशिराः ॥

अपमारी । (भा)

अपमृत्युयुक्तः ॥

अञ्जनम् । (भा)

नेत्रयोः कज्जलदानम् ॥

श्यावदन् । (भा)

मलिनदन्तः ॥

या क्ष्णक्ति । (भा)

औषध्यादीन् छिनत्ति ॥

उद्बन्धुकः । (भा)

गले रज्जुं बध्वा मरणशीलः ॥

उन्मादुकः । (भा)

उन्मत्तशीलः ॥ एतदग्रे श्रुतौ । या खर्वेण पिबति तस्यै खर्वस्तिस्रो रात्रीर्व्रतं चरेत् । अञ्जलिना वा पिबेदखर्वेण वा पात्रेण गोपोथायाहत्यायै जार मनाय्यै तन्तुरिति । तस्मात्तिस्रो प्रजायै रात्रीर्व्रतं चरेत् । अहत्याया जारेत्यर्थे ऽहत्यायै जारेत्यादि ॥

---

स्वार्थ एव षष्ठीचतुर्थ्योर्विधानमनर्थकमित्यन्योन्यसन्निधानादन्योन्यार्थे विभक्तिद्वयं विज्ञायते ॥

# कर्तृकर्मणोः कृति । २ । ३ । ६५ ॥

यथोक्तेति । (कै)

"तस्य कर्मकर्त्रर्थम्" (भा) इत्यस्यार्थान्तरं वक्तुं पूर्वोक्तार्थकत्वं निरस्यतीति भावः ॥ ननु कर्तृकर्मत्वे क्रियापेक्षे न धात्वपेक्षे इति धातोरित्ययुक्तमत आह

इहेति ॥ (कै)

वाचकं धातुमिति । (कै)

न च स्ववाचकाक्षेपे ऽपि धात्वाक्षेपे मानाभावः । खनतीत्याद्यर्थे जायमानानां तद्धितानामपि क्रियोपसर्जनद्रव्यवाचकत्वेन क्रियावा-

---

कर्तृकर्मणोः कृति ॥ शेष इति निवृत्तम् । कृद्योगे कर्तरि कर्मणि च षष्ठी स्यात् । भवतः शायिका । अपां स्रष्टा । कर्तृकर्मणोः किम् । शस्त्रेण भेत्ता । स्यादेतत् । इह कर्तृकर्मभ्यां क्रिया आक्षिप्यते । तद्वाची च धातुरेव । धातोश्च द्वये प्रत्ययाः । कृतस्तिङश्च । तत्र तिङः प्रयोगे नलोकेति प्रतिषेधेन भाव्यम् । ततश्च परिशेषात् कृद्योग एव षष्ठी भविष्यति तत् किं

---

"कर्तृकर्मणोः कृति" । 'इह क्रियायाः साधनं भवतीति' । कर्तृकर्मभ्यां क्रिया सन्निधाप्यते, धातुरेव क्रियावाची, धातोश्च द्वये प्रत्ययाः कृतस्तिङश्च, तत्र तिङ्प्रयोगे नलोकाव्ययेति लप्रतिषेधेन भाव्यं स चावश्यं लप्रतिषेधः कर्त्तव्यः, ये कृतो लादेशास्तदर्थम्, ओदनं पचन् ओदनं पचमानः, पपिः सोमं, ददिर्गा इति, इह तु नार्थः कृद्ग्रहणेनेति मत्वा पृच्छति ।

चकत्वात् । तदर्थाश्रयादिष्वपि कर्तृत्वादिप्रयुक्तकार्यदर्शनाच्च । अयमेव "तस्य कर्मकर्त्रर्थम्" इति वक्तुराशय इति वाच्यम् । एतन्न्यायप्रामाण्येन कारकत्वोपयोग्यक्रिया धातुवाच्यैव न तु तद्धितादिवाच्येति निर्णयेनादोषात् । एवञ्च देवदत्तेन शत्योऽश्व अभिको भूमित्यादयो ऽपप्रयोगा एव । अत एव हिरुगादियोगे न द्वितीयादयः । न चाधिका खारी द्रोणेनेत्यनापत्तिः । तत्र प्रकृत्यादित्वाद्धेतौ वा तृतीयायाः सत्त्वेनादोषादिति पञ्चमे निरूपयिष्यामः ॥

भाष्ये

अकृतो ऽव्ययस्य ये इति । (भा)

अकृतोऽव्ययस्य प्रयोगे यत्किंचित्क्रियानिरूपिते ये कर्तृकर्मणोः इत्यर्थः सूत्रस्यापि अव्ययप्रयोगे नेत्येवार्थः ।

---

त्यद्ग्रहणेन । नैवम् । तद्धितान्तस्य वारणीयत्वात् । यथा कृतपूर्वीकटमिति । ननु कृतः कटः पूर्वमनेनेत्यस्मिन्विग्रहे क्तस्य कर्मणि विधानात्तेनैव कर्मणो ऽभिहितत्वात् द्वितीयया न भाव्यम् । एवं तदपवादभूतया षष्ठ्यापि । इहाप्यनभिहिताधिकारात् । किञ्च कृतशब्दस्य कटसापेक्षतया समासो दुर्लभः । एवं तद्धितोपीति चेत् । अत्रोक्तं हरिणा । विशेषकर्मसम्बन्धे निर्मुक्तोऽपि क्तादिभिः । विशेषनिरपेक्षोन्यः कृतशब्दः प्रवर्तते । अकर्मकत्वे

---

'कृतीति किमिति' । 'कृतपूर्वी कटमिति' । ननु कृतः कटः पूर्वमनेनेत्यस्मिन्विग्रहे क्तस्य कर्मणि विधानात्तेनैव कर्मणोभिहितत्वान्नैव द्वितीयया भाव्यम्, एवं च तदपवादः षष्ठ्यपि न प्राप्नोति, इहाप्यनभिहिताधिकारात्, कृतशब्दस्य च कटापेक्षस्य समासो दुर्लभः, एतेन तद्धितो व्याख्यातः, तस्मादयमसाधुरेव प्रयोगः । सत्यम्, विशेषविवक्षायां नैव समासतद्धितौ

**तदन्तकर्मकर्तृत्वादिति।** (भा)

तदन्तकर्तृत्वकर्मत्वमेवैतयोर्न त्वव्ययकर्तृत्वकर्मत्वमेतयोरित्यर्थः॥

तदुपपादयति।

**न लोकेति।** (कै)

सन्देहे तत्पुरुषस्यैव न्याय्यत्वं कृत्पदोपादाने तु अन्यपदार्थस्य स्पष्टत्वाद्बहुव्रीहिरेवेति भावः॥ भाष्ये

**प्रतिषेध-** (भा)

शब्दो नियमशास्त्राणां निषेधे पर्यवसानमभिप्रेत्येत्याहुः॥

**एकत्वस्याविवक्षामिति।** (कै)

उद्देश्यनिमित्तगतत्वादिति भावः॥ भाष्ये

---

सत्येवं क्तान्ते भावाभिधायिनि। ततः क्रियावता कर्त्रा योगो भवति कर्मणाम्॥ अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः। क्रिया सम्बध्यते तद्वत् कृतपूर्व्यादिषु स्थितेति॥ अस्यार्थः। कृतादिभिः शब्दैः कटादिसमभिव्याहारात् विशिष्टकर्मसम्बन्धे निष्कृष्य भुक्तेऽपि अनुभूतेऽपि कृतः पूर्वं कटोऽनेनेत्यवस्थायामिति भावः। तस्यामवस्थायां वृत्तिविरहात्। कर्मसामान्यवचनोऽय एव कृतशब्दः प्रवर्तते वृत्तिं लभते। अविवक्षितकर्मतायां नेह

---

भवतो, यदा तु कृतं पूर्वमनेनेति कर्मसामान्ये भावे वा क्त उत्पद्यते तदा सापेक्षत्वाभावात्समासः, केन 'सुप्सुपे'ति, ततः 'पूर्वादिनिःसपूर्वाच्चे'तीनिःप्रत्ययः, न च कटस्य क्तेनाभिधानं करोतेरुत्पद्यमानः क्तप्रत्ययः कर्मसामान्यमेवाह विशेषकर्मसबन्धात्तु तस्याभिधानं न चात्र तद्धितेनेकार्थीभूतस्य निष्कृष्य कटेन संबन्धः सम्भवति, क्रियया तु गुणभूतयापि कारकाणां

**कृतो ये इति ।** (भा)

कृदन्तप्रकृतिकप्रत्ययसहकारेणोपस्थितायाः क्रियाया ये इत्यर्थः ॥

**तद्धितेनेति ।** (कै)

तद्धितान्तप्रकृतिकप्रत्ययसहकारेणैवोपस्थितक्रियाया ये इत्यर्थः ॥ एतद्वाक्यभवनाभावे हेतुमाह तत्र

**द्वितीयेति ॥** (भा)

**कटापेक्षत्वादिति ।** (कै)

कृत इत्यस्य विशेष्यतया कटसापेक्षत्वादित्यर्थः । अन्यथा क्रियायाः कारकांशे नित्यसापेक्षतया ऽसंगतिः स्पष्टैवेति बोध्यम् । नित्यसापेक्षस्थले ऽपि कश्चिदेव समासो न सर्वत्रेत्याशयमन्ये ॥ भाष्ये

---

पच्यत इत्यादावपि कर्मसामान्ये प्रत्ययाभ्युपगमादिति भावः । अविवक्षित-कर्मणां भावे प्रत्यय इति मतान्तरमाह, अकर्मकत्व इति । ननु कर्मसामान्ये भावे वा क्तप्रत्यये कृते सापेक्षत्वाभावात्सुप्सुपेति समासे कृते पूर्वादिनिः सपूर्वाच्चेति कर्त्तरि इनिप्रत्ययोऽस्तु नाम । कटस्य तु प्रथमपक्षे क्तेनाभि-धानं दुर्वारम् । यथा प्रकृतस्य हृदुपहन्तुमित्यत्र हृधः कृत्यप्रत्ययेन । नैवम् ।

---

सम्बन्धो भवति यथा कटं कृतवानिति, कृतपूर्वीशब्दस्यायं पूर्वं कृतमनेने-त्यस्मिन्नर्थे व्युत्पादितः पूर्वं कृतवानित्यनेन समानार्थः संपद्यते, तत्र करोति-क्रियापेक्षमस्ति कटस्य कर्मत्वम्, अनभिहितं च तदिति कृद्योगे षष्ठी स्यात्, यत्र च निष्ठान्तेन शब्देन कर्तृकर्मणो संबन्धस्तत्रैव निष्ठाश्रयः प्रति-षेधो यथा कटं कृतवान् कृतः कटो देवदत्तेनेति, इह तु कृतस्य कटेन

योऽसौ कृतकटयोरिति। (भा)

यः कृतकटयोः सामानाधिकरण्यरूपसम्बन्धो वाक्ये दृष्टः स उत्पन्ने प्रत्यये इनिः निवर्त्तते निवृत्त इति बुद्धिविषयो भवति भावविषयकृतशब्देन वृत्तिसत्त्वात्तत्रान्यार्थदर्शनात्तद्धितार्थेनैकार्थी-भूतस्य कृतस्य कटेन सम्बन्धाभावादिति भावः॥ ननु विशेषा-तिरिक्तसामान्यसद्भावे मानाभावात्क्वधात्वर्थफलाश्रयः केनाभिहित इति ज्ञानकाले तदर्थफले ऽन्वितस्य कटस्यानभिहिततया वक्तुम-शक्यत्वाच्च "कर्मसामान्ये" इत्यसङ्गतमत आह

भावे वेति। (कै)

अविवक्षितकर्मतया अकर्मकत्वं फलांशे प्रागाश्रयविशेषान्वया-विवक्षैवाच कर्माविवक्षेत्याहुः॥

---

तद्धितार्थेनैकार्थीभूतस्य कृतशब्दार्थस्य निष्कृष्य कटेन सम्बन्धाभावात्। तदेतदाह, ततः क्रियावतेति। नन्वेवं क्रिययापि योगाभावे कथं द्वितीये-त्याशङ्क्याह। अविग्रहेति। विग्रहस्य यशो ग्रहणं तदपेक्षिताप्राधान्येना-ग्रहमाणापीत्यर्थः। अयं भावः। गुणभूतयापि क्रियया कारकाणां सम्बन्धो दृश्यते। यथा कटं कृतवानिति। कृतपूर्वीशब्दस्यायं पूर्वं कृतमनेनेत्यस्मिन्नर्थे

---

संबन्धो न भवतीत्युक्तमेव, अथ तु वस्तुतो निष्ठान्ते पदे धातुवाच्यक्रियापेक्षे वे कर्तृकर्मणी तयोः प्रतिषेधस्तया सति नेदं कृद्ग्रहणस्य प्रयोजनं तेनैत-दपि निरस्तम्, असति कृद्ग्रहणे कटं कारयति पाचयत्योदनं देवदत्तो यज्ञ-दत्तेनेति णिच्प्रकृतेः पचेरर्थं प्रति कर्तृकर्मणोः षष्ठीप्रसङ्गः सति तु कृद्-ग्रहणे णिचोऽकृत्त्वान्न भवतीति कथमिव निरस्तं, न लोकेऽयत्र नैवं ज्ञायते

कृतं पूर्वमनेनेति । (कै)

अर्थप्रदर्शनमात्रमेतत् । नत्वयं प्रयोगः साधुः । प्रत्ययोत्पत्त्यनन्तरं भाष्ये सामानाधिकरण्यनिवृत्त्युक्तेर्वाक्ये कृतकटयोः सामानाधिकरण्येन प्रयोगस्यैव साधुत्वात् ॥

कर्मत्वमिति । (कै)

अस्त्यनभिहितं कटस्य कर्मत्वमित्यर्थः ॥

[१]विशेषकर्मेति । (हरिः)

---

१ विशेषकर्मसम्बन्धे निर्मुक्तेऽपि कृतादिभिः ।
विशेषनिरपेक्षोऽन्यः कृतशब्दः प्रवर्त्तते ॥
अकर्मकत्वे सत्येव क्तान्ते भावाभिधायिनि ।
ततः क्रियावता कर्त्रा योगो भवति कर्मणा ॥
अविग्रहा गतादिस्था यथा ग्रामादिकर्मभिः ।
क्रिया सम्बध्यते तद्वत् कृतपूर्व्यादिषु स्थिता ॥ हरिः ॥

---

युत्पादितः । पूर्वं कृतवानित्यनेन समानार्थः सम्पद्यते । तत्र करोतिक्रियापेक्ष-मस्ति कटस्य कर्मत्वम् । अनभिहितश्च तत् । अतो ऽसति कृद्ग्रहणे षष्ठी स्यादेवेति स्थितम् । स्यादेतत् । ओदनः पच्यतेतमां, गुडधरिणीक्रियतेत-रान्वयेत्यादावपि ओदने .धरिण्यादेः कर्मणः क्रिययैव योगाद् द्वितीयैव

---

त्वप्रकृतिभूतस्य धातोर्ये कर्तृकर्मणी इति किं तर्हि क्तान्ते पदे या क्रियोच्यते प्राधान्येन गुणभावेन वा तत्र ये कर्तृकर्मणी तयोः षष्ठी न भवतीति तेनेद-मप्यप्रयोजनम्, अथ स्याद् न लोकाव्ययेत्यत्राव्ययविशेषणार्थं कृद्ग्रहणं तेनोच्चैः कटानां स्रष्टेत्यत्राकृतोप्यव्ययस्य प्रयोगे निषेधाभाव इति तदपि

कृतः कटो ऽनेनेत्यस्यामवस्थायां कृतशब्देन विशेषकर्मकटादि-"सम्बन्धे" ॥

**निर्मुक्ते ऽपि ।** (वृत्तिः)

अनुभूते ऽपि तस्यामवस्थायामसामर्थ्येन वृत्तिविरहाद् ॥

**विशेषनिरपेक्षः ।** (वृत्तिः)

भाववचनः ॥ "अन्यः" एव ।

**कृतशब्दः प्रवर्त्तते ।** (वृत्तिः)

वृत्तिं लभत इत्यर्थः ॥ तदेवोपपादयन्नविवक्षितकर्मतया भावे क्त इत्याह ।

**अकर्मकत्वे इति ।** (वृत्तिः)

एवं विशेष्यनिरपेक्षत्वे विशेष्यरहितसामान्यस्याभावादित्यर्थः ॥

---

स्यात् । क्रियाविशेषणीभूतेन लकारार्थेन कर्मान्वयश्चेत् स्वार्थेनाप्यस्तु । क्रियायाः कारकेष्विव शक्तेरपि शक्तिमत्युत्थिताकाङ्क्षत्वाविशेषात् । किञ्चास्तु नाम कथञ्चित् स्वार्थपरित्यागेन वृत्तिः । राजपुरुषादौ संख्या-विशेषस्य मासजातादौ गुणप्रधानभावादेश्च बहुशस्त्यागदर्शनात् । तथापि तद्ग्रहणं व्यर्थमेव । नलोकेति निष्ठायोगे निषेधासिद्धेः। निष्ठान्तधातूपात्त-

---

न, अव्ययेन कर्तृकर्मणी विशेषयिष्यामो ऽव्ययस्य ये कर्तृकर्मणी तयोः षष्ठी नेति, न चाक्त उच्चैसः कर्तृकर्मणी सम्भवतः, इह तर्हि करोतीति कृदिति कृच्छब्देन कर्त्तोच्यते तत्र कर्तृकर्मणोरित्येव षष्ठ्यामपि सिद्धायां पुनर्विधानं गुणभूतेपि कर्त्तरि यथा स्याद्भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामिति, भिदेर्ण्यन्तात्पर्यायादिना ण्वुच्, अत्र ण्यर्थस्य प्राधान्यात्प्रयोजककर्त्ता प्रधानं प्रयोज्यकर्त्ता तु प्रकृत्यर्थस्य गुणभावाद्गुणभूत इति प्रधानेतरसन्निधौ प्रधा-

[1]अत्र क्तान्तं भावाभिधायि तदिति क्वचित्पाठः सुयुक्ततरः । प्रथ-म्यन्तपाठे भावाभिधायिनि सति समासे तद्धितोत्पत्तिरिति शेषः ॥

एवं सति तद्धितोत्पत्तौ यथा ऽसामर्थ्यं न भवति तथा दर्शयति ।

**ततः क्रियावतेति ।** (हरिः)

कर्मणां कटादीनां क्रियावत्कर्त्रर्थके इतिना तदन्तोपस्थाप्य-क्रियया योगो भवतीत्यर्थः ॥ तत्रोपपत्तिमाह ।

**अविग्रहेति ।** (हरिः)

विगृह्य प्राधान्येन यस्तो ग्रहणं तद्रहिताप्राधान्येन गृह्यमाणा-पीत्यर्थः । गुणभूतक्रियया वा कारकाणां सम्बन्धदर्शनादिति भावः ॥ तदुक्तं भाष्ये ।

१ हरिकारिकायाम् ।

---

क्रियायोगे न भवतीति हि तदर्थः । ग्रामं गतवानित्यादावपि कारकाणां क्रियवैवान्वयात् । न च पाचयति यज्ञदत्तो देवदत्तेनेत्यत्र णिच्प्रकृत्यर्थं प्रति कर्तुः प्रयोज्यात्षष्ठीं वारयितुं कृद्ग्रहणम् । णिच् तु न कृदिति वाच्यम् । तद्योगे नेत्येव निषेधसिद्धेः । तत्प्रकृत्या लान्तपदेन वा या क्रियो-पात्ता तद्योगे नेत्यर्थात् । सा च क्रिया गुणभूता प्रधानभूता चेत्यत्र

---

नादेव स्यात् कृद्ग्रहणादप्रधानादपि भवति, एतदपि नास्ति प्रयोजनं, तृतीयावत् सिद्धं, तद्यथा पाचित ओदनो देवदत्तेन यज्ञदत्तेनेत्यादौ प्रधा-नाप्रधानयोर्द्वयोरपि कर्त्रोस्तृतीया भवति तत्कस्य हेतोः एकशब्दवाच्यता-भावेन विरोधाभावात् तथा षष्ठ्यपि भविष्यति, इह तर्हि प्रयोजनम्, 'उभयप्राप्तौ कर्मणी'ति बहुव्रीहिर्यथा स्याद् अन्यथान्यपदार्थस्यानुपात्त-त्वात्तत्पुरुषः स्यात्तच्च नानिष्टं वक्ष्यते, यद्येवमुत्तरत्रैव कृद्ग्रहणं कर्त्तव्यम्, अथ

अस्ति च करोतेः कटेन सामर्थ्यमिति। (भा)

सामान्येन तदावृत्तिरिति। (भा)

अविवक्षितकर्मतया धात्वर्थमात्रवृत्तिना भावक्तान्तेनेत्यर्थः॥

विशेषार्थिनेति। (भा)

कर्मविशेषजिज्ञासानिवर्त्तकयत्नवतेत्यर्थः। एषा च विवक्षा प्रयोगानुसारात्क्वचिदेव तेन घटं क्रियते घटं कृतमित्यादि नापादनीयम्। कृद्ग्रहणे कृते तु न दोषः। कर्मणः कृदन्तमात्रोपस्थाप्यक्रियान्वयाभावात्। स चास्योक्तरीत्या न क्वापि पृथक् प्रयोग इति तन्मात्रस्य प्रक्रियाद्याभावात्। अत एव तण्डुलानां पाचकपुत्रः पाचकतर इत्यादौ न दोषः। निषेधसूत्रे ऽपि कृदिग्रह-

नाग्रहः। गौणमुख्यन्यायस्तु नाश्रीयते। लक्ष्यानुरोधात्। स्वरितेनाधिकार इति व्याख्यानाच्च। अत एव तत्र तृतीया लभ्यते। भेदिका देवदत्तस्य यज्ञदत्तस्य काष्ठानामित्यत्रोभाभ्यामुदर्थभ्यां षष्ठ्यप्यत एव। तस्मात्पाद्यर्थं कृद्ग्रहणमिति। अत्राहुः। कृत्येव यथा स्यात्तद्धिताधिक्ये मा भूदिति कृद्ग्रहणम्। व्याकरणं प्राज्ञः। प्रज्ञादिभ्यश्चेति स्वार्थिकाण् एवञ्च वदतां मते ओदनस्य पाचकतम इत्यत्रापि षष्ठी नेति लभ्यते। कृतपूर्वीत्यिकल्पातन्त्यपूर्वी-

वानुपात्तेप्यन्यपदार्थे व्याख्यानाद्बहुव्रीहिर्भविष्यति यथैकाचो द्वे प्रथमस्ये'ति तदेतत्कृद्ग्रहणं चिन्त्यप्रयोजनम्। केचिदाहुः। इहैव तद्धितनिवृत्त्यर्थं कृद्ग्रहणमिति, प्रजानातीति प्रज्ञः प्रज्ञ एव प्राज्ञः 'प्रज्ञादिभ्यश्चे'ति स्वार्थिकेणि कृते व्याकरणं प्राज्ञ इत्यत्र षष्ठी न भवति, ननु क्रियमाणेऽपि कृद्ग्रहणे कस्मादेवात्र न भवति यावता भवत्येव कृतोत्र प्रयोगो यद्यप्येतच्छक्यं वक्तुं प्रत्ययार्थेनैकार्थीभूतस्य कृदन्तस्य निष्कृष्य व्याकरणेन संबन्धो

पर्याप्तिरूपांशेऽपि तथार्थं इति न निषेधप्रवृत्तिः । कटं कृतं पाचकपुत्र इत्यादौ च निषेधप्रवृत्तिरत एव भाष्ये "करोतेः कटेन सामर्थ्यमित्युक्तं" न तु कृतशब्दस्य कटेनेत्युक्तम् । एवं च सकर्मकधातावीदृशविवक्षाया भावे क्तप्रत्यय ईदृशसमासविषय एव नान्यत्रेति भाष्यस्वरसाल्लभ्यते "भ्रान्तं देशमि"त्यादौ तु "गत्यर्थाकर्मके"तिभावे क्तो बोध्यः ॥

## एतच्च विशेषापेक्षायामिति । (कै)

अत्रैव प्रधानन्यायो न तृतीयादिविधाविति विशेषापेक्षायामित्यर्थः । विरोधाभावे हेतुरेकशब्दवाच्यत्वाभावः । तदुपपादकं भिन्नशब्दवाच्ययोरित्यादीति बोध्यम् ॥

---

त्यादेरभ्युपगमे तु तव्यादाद्यन्तेन समासादिनौ कृते कृद्ग्रहणाद्यावर्त्यतापि सम्भवति भाष्यं त्विदोदासीनमेवेत्यभियुक्तप्रयोगा अन्वेषणीयाः । यत्तर्हि धर्यै रामोदमुत्तममिति भट्टिः । उच्यते । अनित्येयं षष्ठी । तदर्हमिति निर्देशात् । द्विकर्मकेभ्यस्तु कर्तरि कृति कृते "प्रधाने नियताषष्ठी गुणे तूभयथा भवेदि"त्यकथितसूत्र एवोक्तम् ॥

---

न संभवतीति प्रत्ययस्य स्वार्थिकत्वेनार्थान्तराभावात् । नैष दोषः । कृद्ग्रहणसामर्थ्यात्कृदन्तेनैव योगे षष्ठी विधास्यते इह तु कृता तद्धितेन चैकरूपः संबन्ध इति न भविष्यतीत्यलमतिक्षोदेन । 'शेष इति निवृत्तमिति' । तेनाप्राप्ता षष्ठी विधीयत इत्यस्याः समासो भवतीति कृद्योगा च षष्ठी समस्यत इति न वक्तव्यं भवति ॥

# उभयप्राप्तौ कर्मणि । २ । ३ । ६६ ॥

**नियमेनानेनेति ।** (कै)

नियमप्राप्तानां निषेधे तात्पर्यादन्यथानुवादवैयर्थ्यापत्तिरिति भावः ॥

**स्त्रीप्रत्यय एवेति ।** (कै)

भाष्ये

---

उभयप्राप्तौ कर्मणि ॥ उभयोः प्राप्तिर्यस्मिन्कृति तत्र कर्मण्येव षष्ठी स्यात् । आश्चर्यो गवां दोहोऽगोपेन । अकाकारयोः प्रयोगे प्रतिषेधो नेति वक्तव्यम् ॥ भेदिका बिभित्सा वा रुद्रस्य जगतः । कथन्तर्हि शिका बाधा न भवतीति श्यागापापचोभाव इति सूत्रे वृत्तिः । तथा सुटा सीयुटो बाधा न

---

"उभयप्राप्तौ कर्मणि" ॥ उभयशब्देन प्रकृतत्वात्कर्तृकर्मणी संगृह्येते । 'उभयप्राप्ताविति बहुव्रीहिरिति' । न तत्पुरुषः । 'उभयोः कर्तृकर्मणोः षष्ठी प्राप्तौ सत्यामिति' । अत्र प्रयोजनं वक्ष्यति । 'कर्मण्येवेति' । विपरीतस्तु नियमो न भवति उभयप्राप्तावेव कर्मणीति एवं हि पूर्वसूत्रे कर्मग्रहणमनर्थकं स्यात् अनेनैव विशिष्टविधानमाश्रयणीयं स्यादिति भावः । 'आश्चर्य इति' । सकर्मकेभ्यो भावे कृति विहिते कर्मणि कर्तरि च षष्ठी प्राप्ता नियमेन कर्तुरपनीयते, प्राप्तिग्रहणाच्च प्राप्तिमात्रे नियम इति कर्तृकर्मणोः प्रयोगेऽपि कर्तरि तृतीया भवति, 'शब्दार्थां येनादर्शनमिच्छतीति' अत्र ह्यात्मन इति गम्यमानत्वादस्त्युभयोः प्राप्तिः, अत्र यावन्तरस्य विधिर्वा प्रतिषेधो वेति कर्तृकर्मणोरिति प्राप्तिर्नियम्यते शेषषष्ठी तु

**अकाकारयोर्भेदिका चिकीर्षेति कृतिरिति च** (भा)

**स्त्रीप्रत्यये एवोदाहरणदानादिति तदाशयः ॥**

**अपरे त्विति ।** (कै)

**नोदाहरणमादरणीयमिति तद्भावः ॥**

---

भवतीति लुट्तिपोरित्यत्र वृत्तिः । अत्र रक्षितः । अप्रत्ययादित्यकारप्रत्ययस्यैव ग्रहणं प्राथम्यात् । बाधाशब्दे तु गुरोश्च हल इत्यकार इत्याह करणत्वविवक्षायां तृतीयेति वा बोध्यम् । शेषे विभाषा । स्त्रीप्रत्ययविषयमेवेदमित्येके । विभिन्ना सूत्रस्य कृतिः पाणिनेः पाणिनिना वा । केचिदविशेषेण विभाषामिच्छन्ति । शब्दानामनुशासनमाचार्येणाचार्यस्य वा ॥

---

कर्त्तर्यपि भवत्येव नियमस्य प्रयोजनं पक्षे तृतीयाश्रवणं कर्मण्यपि यदा शेषत्वेन विवक्ष्यते तदा तत्रापि शेषे षष्ठी भवत्येव तस्याश्च 'कर्मणि चे'ति निषेधाभावात्समासोऽपि भवति, निषेधस्य तु प्रयोजनं कृत्स्वरो मा भूदिति एतदपि सूचितं 'पूर्वेण षष्ठी प्राप्तौ नियम्यत इति' आश्चर्यमिदमित्येतावदेकं वाक्यं किं तदित्याह । 'ओदनस्येति' । अत्र पाके ओदनस्य कर्मत्वं प्रादुर्भावे च ब्राह्मणानां कर्तृत्वमित्यनेकत्वात्कृदुभयप्राप्तिर्भवति । 'भेदिका चेति' । पर्यायादिषु ण्वुच् । 'चिकीर्षेति' । 'अप्रत्ययात्' । अत्रोभयत्रापि कर्तरि तृतीया न भवति षष्ठी तु शेषविवक्षयापि सिद्ध्यति समासोऽप्यत्र भवति धर्मजिज्ञासा देवदत्तस्य शिष्यस्याचार्यशुश्रूषेति शेषे विभाषेति तत्र यदा नियमेन कर्तरि तृतीया तदा 'कर्मणि चे' ति निषेधात्पाणिनिना सूत्रकृतिः आचार्येण शब्दानुशासनमित्यसाधुः समासः, पाणिनेः सूत्रकृतिराचार्यस्य शब्दानुशासनमिति तु साधुः ॥

# क्तस्य च वर्त्तमाने । २ । ३ । ६७ ॥

नपुंसके भाव इति । (कै)

इदं वार्त्तिकं लक्षणप्रतिपदोक्तपरिभाषया कालोदासीन "नपुंसके भावे क्त" इति सूत्रविहितक्तयोग एव । तेन भूते भावे क्तेन योगे तृतीयैवेति वार्त्तिकमतम् । यद्यपि शेषत्वविवक्षयापि सिद्धं तथाऽपि कर्त्तृत्वप्रकारके बोधे षष्ठ्यर्थमिदमिति वार्त्तिकाशयः । भाष्यकारस्तु तादृश एवार्थे साधुत्वमङ्गीकृत्य प्रत्याचख्यौ ॥ भाष्ये

यद्येवमिति । (भा)

एवं शेषत्वविवक्षया षष्ठ्यङ्गीकारे ॥

अधिकरणवाचिनश्चेत्यचेति । (कै)

एतत्सूत्रोदाहरणविषयीभूतगत्यर्थं इत्यर्थः ॥ तत्र हि क्तोऽधिकरणे च ध्रौव्यगति इति विशेषविधाना"नपुंसके भावे क्त"

---

क्तस्य च वर्तमाने ॥ वर्तमानार्थक्तस्य योगे षष्ठी स्यात् । नलोकेति निषेधस्यापवादः । राज्ञां मतो बुद्धः पूजितो वा । मतिबुद्धिपूजार्थेभ्यश्चेति

---

"क्तस्य च वर्तमाने" ॥ 'राज्ञां मत इति' । 'मतिबुद्धिपूजार्थेभ्यश्चे'ति वर्त्तमाने क्तः, शेषविज्ञानादित्युपसंख्यानं प्रत्याचष्टे, सदप्यत्र क्तान्तस्य कर्तृत्वमविवक्षया तिरोधीयते संबन्धित्वमात्रमेव तु विवक्षिष्यते ततश्च न

इत्यस्याप्रवृत्तिरेवेति वार्त्तिकमते वार्त्तिकेन षष्ठी न प्राप्नोति शेषत्वविवक्षयाऽत्र भावविषये ऽभाव एवेति वार्त्तिकमते चैतद्वा- प्रत्याख्यातृमते च शेषे षष्ठी स्यादिति "छात्रुःशब्दशमि"त्यर्थः ॥ तदाह ।

तत्र शेषेति । (कै)

कर्माविवक्षया ऽकर्मकत्वे इत्यादीनि चत्वारि रूपाणि । सकर्म- कत्वे तु अहिना सृप्तो ग्राम इति पञ्चमीमपि बोध्यमिति केचित् ॥

सप्तमीप्रयोगेणेति । (कै)

"इहे"ति सप्तमीप्रयोगेणैवेदं दर्शितम् । इहपदार्थस्यैव चेदं विवरणं भाष्ये इति बोध्यम् ॥

किं तर्हि भाव इति । (कै)

इदमिहाहिः सृप्त इत्युदाहरणे, कर्त्तरीत्यस्योपलक्षणम् ॥

---

वर्तमाने क्तः । कथन्तर्हि नपुंसके भावे क्तस्य योगे षष्ठी । छात्रस्य हसित- मिति शेषविज्ञानात्सिद्धम् । कर्तृत्वविवक्षायां तृतीयैव । छात्रेण हसित- मिति ॥

---

मायाशामन्त्रीयादितिवत्सिद्धा षष्ठीत्यर्थः । 'तथा चेति' । उपसंख्याने नैतन्न सिद्ध्यतीति भावः ॥

# न लोकाव्ययनिष्ठाखलर्थतृनाम्।
## २। ३। ६९॥

---

### अपनीयेति। (कै)

चक्षिट् ग्रहणे तस्य फलाभावादित्यर्थः॥ अग्रहणेनैव सत्कानच् क्वसूनां सिद्धत्वात्किं चक्षिट्ग्रहणेनेत्यत आह

### किकिनौ चेति। (कै)

लेत्यस्य लादेशयोग इत्येवार्थः। लयोग इति तु न शक्यम्। आदेशे लत्वाच्छिधित्वेन स्थानिवत्त्वायोगात्॥

---

न लोकाव्ययनिष्ठाखलर्थतृनाम्॥ जिघृक्षितरूपविनाशप्रसङ्गात् तृना-मिति णत्वं न कृतम्। एषां प्रयोगे षष्ठी न स्यात्। कर्तृकर्मणोः कृतीति प्राप्ता प्रतिषिध्यते। लादेशाः, ओदनं पचन् पचमानः पेचानः पेचिवान्। कथन्तर्हि बभ्रिर्वज्रं पपिः सोमं ददिर्गा इति। नहि किकिनौ लकारौ नापि तदादेशौ। नैष दोषः। किकिनौ लिट्चेत्यनेन लिट्कार्यातिदेशः क्रियते

---

"न लोकाव्ययनिष्ठाखलर्थतृनाम्"॥ जिघृक्षितरूपविनाशप्रसङ्गात् तृनामित्यत्र णत्वाभावः। 'उ उकेति'। अनेनोकारप्रश्लेषं दर्शयति तत्र लश्चेति पूर्वद्वन्द्वे उकारस्य पूर्वनिपातः स्यात् परनिपातेऽपि लवुकेति स्यात् तस्मात्पदयोर्द्वन्द्वं कृत्वा पश्चाल्लशब्दस्य द्वन्द्वः कार्यः, उकारेण च कृतो विशेषणात्तदन्तविधिः, व्यपदेशिवद्भावात्केवलस्यापि ग्रहणम्। 'शतृशान-

## लिट्कार्यातिदेशादिति । (कै)

द्वित्वविधानेनैव सिद्धौ तद्वदतिदेशाल्लिडादेशतुल्याविस्यर्थ इति भावः ॥

## व्याख्यास्यामीति । (कै)

संज्ञां न व्याख्यास्यामि किं त्वतिदेशं व्याख्यास्यामीत्यर्थः ॥ ननु लिड्वदतिदेशे ऽपि कथं समाचाश्रयषष्ठीनिषेधो ऽत आह ।

## विशेषेति । (कै)

संज्ञाप्रकरणाभावादिति मन्तव्यम् ॥ भाष्ये

---

न तु लिट्संज्ञा । विशेषातिदेशे च सामान्यमप्यतिदिश्यत इति । उ, कटं चिकीर्षुः । कन्यामलंकरिष्णुः । उक, वाराणसीमागामुकः । कमेर्भाषायामनिषेधः ॥ लक्ष्म्याः कामुकः । अव्यय, कटं कृत्वा । तोसुन्कसुनोरप्रतिषेधः ॥ पुरा सूर्यस्योदेतोराधेयः । पुरा क्रूरस्य विसृपोविरप्शिन् । निष्ठा, ओदनं भुक्तवान् । देवदत्तेन कृतम् । खलर्थ, त्वया सुकरम् । ईषत्पानः सोमो भवता । तृन्निति प्रत्याहारः शतृशानचाविस्यारभ्य तृनो नकारात् । तेन

---

चाविति' । तेन शानजर्थं-तृन्निति प्रत्याहारो नाश्रयणीय इति भावः । 'किकिनौ चेति' । ननु अग्रहणेन लकारात्तदादेशास्य ग्रहीतुं युक्ताः कटं कारयांचकार ओदनं पाचयति किकिनोस्त्वयुक्तं ग्रहणम् अलत्वादलादेशत्वाच्च । नैष दोषः, किकिनौ लिट् चेत्यनेन लिट्त्वातिदेशः क्रियते न लिट्संज्ञा तत्र कारयां पचान इत्यादौ लिटि तदादेशे च दृष्टः प्रतिषेधः किकिनोरपि भविष्यति । उदाहरणेषु सर्वत्र कारकषष्ठ्याः प्रतिषेधः शेष-

उकारेति (भा)

कारप्रयोगेण वर्णग्रहणमिति ध्वनितम् । तत्फलमाह

उकारान्तेति । (कै)

शब्दरूपं विशेष्यमादाय तदन्तविधिः । स च प्रत्यय एव साहचर्यादिति भावः । तेन कन्यामलङ्करिष्णुरित्यादि सिद्धम् । प्रत्ययाप्रत्यययोरिति तु वर्णग्रहणे न प्रवर्त्तत इति बोध्यम् ॥

---

शानच्प्रभृतीनामपि ग्रहणम् । सोमं पवमानः । पूङ्यजोः शानन् । नटमाघ्नानः । ताच्छील्यादिषु चानश् । अधीयन् पारायणम् । इङ्धार्योरिति शता । तृन्, पाता सुतमिन्द्रो अस्तु सोमम् । द्विषः शतुर्वा । मुरस्य मुरं वा द्विषन् । सर्वत्र कारकषष्ठ्याः प्रतिषेधः । शेषे षष्ठी तु स्यादेव । ब्राह्मणस्य कुर्वन् । सत्यानुरक्ता नरकस्य जिष्णवः । छात्रस्य हसितम् । जनिकर्तुरित्यादि । इक्ष्वाकूणां दुरापेऽर्थे त्वदधीना हि सिद्धयः । अपि वागधिपस्य दुर्वचं वचनं तद्विदधीत विस्मयमिति च । यद्वा । इक्ष्वाकूणां

---

षष्ठी तु भवत्येव ब्राह्मणस्य कुर्वन् ओदनस्य पचन् अपां पेतरसि नरकस्य जिष्णवो गुणैः तानि द्विषद्वीर्यनिराकरिष्णुरिति । 'आगामुकमिति' । लषपतपदेत्यादिनोकञ्, रक्षांसि वाराणसीं प्रत्यागमनशीलानि भवन्ति, शापादिमोक्षार्थमित्यर्थः । 'दास्याः कामुक इति' । द्वितीयानिवृत्त्यर्थं वचनं षष्ठी तु शेषविज्ञानादेव सिद्धा । 'पुरा सूर्यस्येति' । भावलक्षणे इत्यादिना तोसुन् । 'विसृप इति' । 'सृपितृदोः कसुन्' 'पूङ्यजोः शानन्' ताच्छील्यवयोवचनशक्तिषु चानश्' 'इङ्धार्योः शत्रकृच्छ्रिणि'त्येतेषु च इति नानुवर्त्तत इति स्थापयिष्यते तेन लग्रहणादसिद्धिरिति मत्वाह । 'इन्निति' ।

**एतेषां चेति ।** (कै)

"पूजनोः प्रामनि"त्यादीनामित्यर्थः ॥ भाष्ये

**प्रतिषेधार्थमिति** (भा)

षष्ठ्याः सिद्धत्वेन प्रतिषेधमात्रफलकवार्त्तिकमिति भावः ॥

**तदेव विध्यर्थमिति ।** (भा)

नित्यं प्रतिषेधे प्राप्ते पक्षे षष्ठीविध्यर्थमित्यर्थः ॥

---

सिद्धय इत्यन्वयो न तु इक्ष्वाकूणां दुराप इति । तथा वागधिपस्य विस्मय-मित्यन्वयो न तु वागधिपस्य दुर्वचमिति दिक् । इह उश्च उकश्च उकाविति व्युत्पाद्य लश्च उकौ चेति विग्रहीतव्यम् । उकारेण च कृतो विशेषणात्तदन्तविधिः । व्यपदेशिवद्भावात्केवलेनापि निषेधः ॥

---

'प्रत्याहारग्रहणमिति' । 'द्विषः शतुर्वा वचनमिति' । 'द्विषोमित्र' इति योगं शतृप्रत्ययस्तत्प्रयोगे विकल्पेन प्रतिषेधो वक्तव्य इत्यर्थः । प्रत्याख्यानं तु शेषविवक्षायां षष्ठ्यन्यत्र द्वितीयेति सता च समासप्रतिषेधात्समासे तत्पुरु-रार्थं कारकषष्ठी विधेयेत्यपि नास्ति ॥

# अकेनोर्भविष्यदाधमर्ण्ययोः ।
## २ । ३ । ७० ॥

स्वरितत्वेति । (कै)

"यथासंख्य"सूत्रे स्वरितेनेत्यनुवृत्तेरिति भावः ॥

भविष्यदधिकारेति । (कै)

इदञ्च तुमुन् ण्वुलावित्यत्र भाष्ये स्पष्टम् ॥ भविष्यदर्थकस्यापि ग्रहणमिति पक्षान्तरमपि तत्र स्पष्टम् ॥

---

अकेनोर्भविष्यदाधमर्ण्ययोः । भविष्यत्यकस्य भविष्यदाधमर्ण्यार्थेनश्च योगे षष्ठी न स्यात् । एधानाहारको व्रजति । व्रजङ्गामी । द्वितीयासमासप्रसङ्गे व्युत्पादितमेतत् । आधमर्ण्ये, शतं दायी । भविष्यदिति स्वर्यते । तेन भविष्यदधिकारविहितस्य ग्रहणान्नेह वर्षशतस्य पूरकः । पुत्रपौत्राणां दर्शकः । अयं हि ण्वुल्तृचावित्यविशेषेण विहितो न तु तुमुन्ण्वुलाविति-वद्भविष्यदधिकारस्थः । इह यथासंख्यं वारयितुं भाष्ये योगो विभक्तः । अकस्य भविष्यति, इन आधमर्ण्ये चेति ॥

---

"अकेनोर्भविष्यदाधमर्ण्ययोः" ॥ अकस्य भविष्यति काले इनस्तु आधमर्ण्ये चेति संख्यातानुदेशस्तु व्याख्यानान्न भवतीति भावः । 'ग्रामं गमीति' । 'भविष्यति गम्यादयः' । ननु च नात्र षष्ठ्याः प्रसंगः कथं गत्यर्थकर्मणीत्यत्रोक्तं द्वितीयाग्रहणं किं न चतुर्थ्येव विकल्प्येत अपवादविषयेऽपि यथा स्याद् ग्रामस्य गन्तेति, सत्यं, श्रौते तावत् प्रतिषेधे लभ्यमाने किं द्वितीयाग्रहणसामर्थ्याश्रयणेनेति मन्यते ॥

# कृत्यानां कर्त्तरि वा । २ । ३ । ७१ ॥

भाष्ये

भावकर्मणोरिति । (भा)

तत्र भावे ऽकर्मकाद्विधानेन कर्मणो ऽभाव एव । कर्मणि तु सकर्मकाद्विधाने ऽपि तस्याभिधानमेवेति भावः । न च कर्त्तव्यपूर्वीकटमित्यादौ अविवक्षितकर्मतया भावे तव्ये पश्चात्कर्मसन्निधाने भावेऽपि संभव इति वाच्यम् । भाष्यप्रामाण्येन कृत्यविषये तथा विवक्षाया अभावादित्याहुः ॥

भव्यादीनामिति । (भा)

तत्र हि कर्त्तरि कृत्यः । गेयो माणवकः साम्नामित्यत्र कर्मणि विकल्पाभावादित्यर्थः ॥

तन्निवृत्त्यर्थमपीति । (कै)

कृत्यानां प्रयोगे कर्त्तर्येव षष्ठी न कर्मणि सा च वेति कस्मान्न व्याख्यायत इत्यर्थः । यद्यप्येवं व्याख्याने गेयो माणवकः साम्नामिति न सिध्यति तथापि उभयप्राप्तावित्यनुवर्त्य तत्र

---

कृत्यानां कर्त्तरि वा ॥ षष्ठी वा स्यात् । कर्तृकर्मणोः कृतीति नित्यं प्राप्ते विभाषेयम् । कर्तव्यमिदं कृष्णेन कृष्णस्य वा । कर्तरीति किम् ।

---

"कृत्यानां कर्तरि वा" ॥ 'कर्त्तरीति किमिति' । 'तयोरेव कृत्यक्तखलर्थाः' इति वचनादकर्मकेभ्यो भावे सकर्मकेभ्यस्तु कर्मणि कृत्यानां विधानात्कर्त्तुरेव तैरनभिधानं सम्भवतीति कर्तृकर्मणोर्द्वयोरधिकारेऽपि

दोषाभाव इति भावः ।. अत्र पक्षे विधिसम्भवे नियमानुपपत्तिरनुभयप्राप्तिविषये भवतः कटः कर्त्तव्यो भवता कटः कर्त्तव्य इत्यादावसिद्धिं च मनसि निधाय भाष्ये उक्तम् ।

एवं तर्हीति । (भा)

कर्त्तृकर्मणोर्द्वयोरपीति विकल्पस्त्वनुभयप्राप्तिविषयः । आक्रष्टव्या ग्रामं शाखा देवदत्तेनेत्यस्यैवेष्टेरित्याशयः । वृत्तिस्वरसोऽप्येवमेव ॥

भाष्ये

ग्राममाक्रष्टव्य (भा)

इत्यस्य देवदत्तेनेति शेषः । उभयप्राप्तावित्यस्य सम्बन्धाऽज्ञानेन वा तत्रेदमुदाहृतं देवदत्तस्य देवदत्तेन वा कर्त्तव्यमिति कर्त्तरि वेत्यस्योदाहरणम् ॥

इहापि तर्हि प्राप्नोतीति (भा)

निषेध इति शेषः ॥ ननु च

उभयप्राप्तिरिति । (कै)

उभयप्राप्ताविति तत्पुरुष इति भावः । बहुव्रीहिरित्युत्तरम् । पर्यायेणेति कर्त्तरि भव्यादीनां विकल्पेन विधानादित्यर्थः ॥

---

गेयो माणवकः साम्नाम् । भव्यगेयेति कर्तरि यद्विधानादनभिहितं कर्म । इहापि भाष्ये योगविभागः कृतः । तद्यथा, कृत्यानाम् । उभयप्राप्तौ,

---

कर्त्तर्येव षष्ठी भविष्यतीति प्रश्नः । 'गेय इति' । भव्यगेयेत्यादिना कर्त्तरि यत्प्रत्ययः । 'साम्नामिति' । कर्मणि नित्यमेव षष्ठी भवति । 'उभयप्राप्तौ कृत्य इति' । उभयोः कर्तृकर्मणोः प्राप्तिर्यस्मिन् कृत्ये, तत्र द्वयोरपि कर्तृकर्मणोः षष्ठी न भवतीत्यर्थः । 'आकृष्टव्येति' । कृषेर्द्विकर्मकत्वात्प्रधाने

बहुव्रीहीति । (कै)

कदाचित्कर्मणि कृत्यसत्त्वेन कृत्यप्रत्ययभेदादेककृत्ये युगपदु-भयप्राप्तिर्नास्तीति भावः । अनेन भाष्येण यत्रोभयोः प्रयोगस्तत्रैवो-भयप्राप्तिरिति सूचितम् ॥

इति शिवभट्टसुतसतीगर्भजनागोजीभट्टकृते
महाभाष्यप्रदीपोद्योते द्वितीयाध्यायस्य
तृतीये पादे तृतीयमाह्निकम् ॥
पादश्च समाप्तः ॥

---

नेत्यनुवर्तते । नेतव्या व्रजंगावः कृष्णेन । इह प्रधाने कर्मणि गवाख्ये कृत्यः । अप्रधानकर्मणः कर्तुश्च । कृत्येनानभिधानात्षष्ठी प्राप्ता निषिध्यते । ततः कर्तरि वा ॥ षष्ठी स्यात् । अन्यत्सर्वं निवृत्तम् ॥

---

कर्मणि कृत्यप्रत्ययो न त्ववधान इति तस्मिन् कर्मणि कर्त्तरि च प्राप्ता षष्ठी न भवति, एतच्च योगविभागाल्लभ्यते, कथं, कृत्यानामित्येको योगः, अत्रो-भयप्राप्तौ नेति च वर्त्तते, युगपदुभयप्राप्तीनां कृत्यानां प्रयोगे षष्ठी न भवतीत्यर्थः । ततः कर्त्तरि वा, अत्र षष्ठीत्येवानुवर्तते ऽन्यत्सर्वं निवृत्तम् ॥

## महाभाष्यप्रदीपोद्द्योतः ।

पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ।

कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ॥

# द्विगुरेकवचनम् ।२।४।१॥

तद्धितार्थेत्यत्र विहितस्य सर्वस्य द्विगुत्वात्समाहारद्विगोरेव ग्रहणे मानाभावः । तन्मात्रग्रहणे ऽपि समाहारशब्दस्य कर्मसाधनत्वे बहुवचनप्राप्तेर्वक्ष्यमाणरीत्या भावसाधनत्वे ऽपि तत्प्राप्तेः प्रश्नानुपपत्तिरत आह

इहेति । (कै)

कर्मसाधनस्य ग्रहणं तु तत्रैव भाष्ये निराकृतम् ॥

---

द्विगुरेकवचनम् ॥ वक्तीति वचनम् । बाहुलकात्कर्तरि ल्युट् । सामान्ये नपुंसकम् ॥ समाहारद्विगुरेकार्थप्रतिपादकः स्यात् । तद्धितार्थेति

---

"द्विगुरेकवचनम्" ॥ अत्र यदि पारिभाषिकमेकवचनं गृह्येतानुप्रयोगत एकवचनं न स्यात् पञ्चपूलीयं शोभनेति, तस्यादिद्विगुत्वाद्'द्विगो'-

**द्रव्यमिति ।** (कै)

गुणादीनामाधारत्वादित्यर्थः ॥ एकद्रव्यवाचकत्वरूपसामानाधिकरण्यस्य शब्दधर्मत्वादाह

**संख्याशब्देनेति ॥** (कै)

**उच्यते इति ।** (कै)

अत एव द्विगुपदेन सामानाधिकरण्यं पारिभाषिकग्रहणे हि द्विगोरिति पञ्चमी स्यादिति भावः । वचनमिति च सामान्ये नपुंसकं बोध्यम् ॥

**द्विग्वर्थस्येति ।** (कै)

एवं चानुप्रयोगे ऽपि सिद्धिरिति भावः ॥ षष्ठीसमासेऽर्थानुपपत्तिमाशङ्क्याह

**एकशेषविषय इति ॥** (कै)

**एक शेषे च** (भा)

इति तु भाष्ये विषयसप्तमी भाष्यकारस्यात्तु विषयसप्तम्यन्तेन "सुप्सुपे"ति समास इति लभ्यते ॥ भाष्ये

---

सूत्रे हि भावसाधन एव समाहार इति स्थितम् । तथा च न्यायसिद्धमेतत् । कर्मसाधनताभ्रमं वारयितुमारभ्यते स नपुंसकमित्यस्य प्रत्ययथं च ।

---

रिति पञ्चम्या च निर्देशः स्यात् अतोन्वर्थस्यैकवचनस्येदं ग्रहणमिति मत्वाह, 'एकस्य वचनमेकवचनमिति' । वक्तीति वचनं, 'कृत्यल्युटो बहुल'मिति कर्त्तरि ल्युट्, एकस्यार्थस्य वचनमेकवचनमिति कर्मणि षष्ठ्याः समासः,

नैतत् द्विगोरिति । (भा)

द्विग्वर्थस्येत्यर्थः ॥

समुदायस्येति । (कै)

उद्भूतावयवभेदस्येत्यर्थः ॥ यद्यपि "भ्रियमाणं लुप्यमानार्थाभिधायीति" अयमपि द्विग्वर्थ एव तथापि न दोष इत्याह

बहिरङ्गत्वाच्चेति । (कै)

बहुवचनसमभिव्याहारेणैवास्य प्रतीत्या जातसंस्कारानिवृत्तिरित्याशयमन्ये ॥ पञ्चकपालशब्दस्य प्रत्येकं समुदाये वा परिसमाप्तौ तद्धितार्थे द्विगुत्वानपायात्किं विचारेणेत्यत आह ।

यदि तावदिति ॥ (कै)

समानमिति । (कै)

अयमेव पुरस्तादेव चोदितं परिहृतं चेति भाष्यस्यार्थः ॥

---

दृश्यते च भ्रमनिवृत्तयेऽपि सूत्रकृतो यत्नः। यथा उपकादिभ्योऽन्यतरस्यामद्वन्द्व इति। तत्र हि अद्वन्द्व इत्यस्य द्वन्द्वग्रहणं नानुवर्तत इत्यर्थो भाष्ये स्थितः ॥

---

तत्र चैकस्यार्थस्य वाचकं भवतीति सामान्येनोपक्रमः पश्चात्किं तदित्यपेक्षायां द्विगुरित्यस्य पुल्लिङ्गस्य संबन्ध इत्येकवचनमिति नपुंसकोपपत्तिः, एतदेव व्यनक्ति। 'एकस्यार्थस्येति'। एवं च द्विगुरेकार्थस्य वाचको भवति यदि द्विग्वर्थ एको भवति, न च वस्तुतोनेकार्थस्य वचनमात्रेणाप्येकार्थत्वमापादयितुं शक्यमिति सामर्थ्यादतिदेशो विज्ञायत इत्याह। 'तदनेन

समाह्रियमाणत्वादिति। (कै)

समुदायरूपत्वादित्यर्थः। समुदायसमाहारौ च पर्यायाविति भावः॥

निवृत्तिर्न सिध्यतीति। (कै)

समाहारानुवादेनैकत्वविधानादप्येतन्न सिध्यतीति भाष्याक्षरार्थः॥ प्रत्येकमेव समाप्तिरित्यत्र विनिगमकमाह

नहीति। (कै)

एवं च न वा समाहारैकत्वादिति निष्फलम्। किं च समासे संख्याविशेषानवगतेः समुदायमादाय बहुवचनोपपत्तिरपि नेति भाष्याशयः॥

तिरोहितेति। (कै)

शब्दानुरोधादिति भावः। अत्र पक्षे द्रव्यानयनं तु नान्तरीयकत्वाद् द्रव्याकृत्योरभेदन्यायेन वा अवश्यं च भावसाधन एव समाहारशब्दस्तत्राश्रयणीयः। अन्यथा पञ्चखट्वीत्यादावनुपसर्जनत्वाद् ह्रस्वो न स्यात्। एवं च न्यायसिद्धार्थानुवादकमेवेदं सूत्रमिति

---

प्रकारेणेति'। तदिति वाक्योपन्यासे किमुक्तं भवतीत्याह। 'द्विगवर्थ एकवद्भवतीति'। 'समाहारद्विगोश्चेदं ग्रहणमिति'। तद्धितार्थे यो द्विगुस्तस्यैकवद्भावो माभूदित्येवमर्थं पञ्चभिर्गोभिः क्रीताः पञ्चगवः पटा इति, अथ क्रियमाणेऽपि समाहारग्रहणे इह कस्मान्न भवति पञ्चपूली च पञ्चपूली च पञ्चपूल्य इति, क्रियमाणस्य द्विगुत्वात्तदर्थस्यैकवद्भावः प्राप्नोति, न वा बहिरङ्गत्वाद्, बहिरङ्गोयं द्विगवर्थः सत्येव द्विगावेकशेषात्प्रागभावादेकशेषे

बोध्यम् ॥ समुदाये शब्दसमाप्तौ पञ्चगवः पटा इत्यादौ तद्धितार्थेऽपि समाहारसम्भवात्कथं तेनापि तद्व्यावृत्तिरत आह

समाहारेण व्यपदिष्टस्येति। (कै)

प्रतिपदोक्तपरिभाषया तद्धितार्थद्विगोश्च तत्त्वाभावादिति भावः॥ पञ्च पूल्य इत्यनेन नेदं तुल्यमित्याह

यदा बह्वनामिति॥ (कै)

असमास्वसतेति। (कै)

वस्तुतः समासेऽन्तर्वर्तिविभक्त्यर्थसंख्यानवगमेन सर्वत्र समासादेकशेषेणैव बहुवचनादीति भाष्याशयः। अत एव "एवं तर्ही"त्यादि-

---

सति पश्चादुपजायमानत्वादन्तरङ्गे प्राथमकल्पिके द्विगवर्थे चरितार्थ एकवद्भावो ऽत्र न भविष्यति, यद्येवं पञ्चगवः पटा इत्यत्राप्येवमेव भविष्यति, सत्यं यदा पटाः प्रत्येकं पञ्चभिर्गोभिः क्रीताः, यदा तु बहवः पटाः संहताः पञ्चभिर्गोभिः क्रीयन्ते तदाऽयमेकशेषस्याविषयः, यदि तर्हि समाहारद्विगोर्ग्रहणं नार्थोऽनेन, कथं, समाहरणं समाहारः समूहस्तस्यैकत्वाद्यूथं वनमित्यादिवदेकवचनं भविष्यति, यदि तर्हि समाक्रियत इति समाहार इति कर्मसाधनः समाहारशब्दस्तदाऽपेक्षितपरस्परः पञ्चपूलाः समासार्थ इति बहुवचनप्रसङ्गेऽतिदेश आरभ्यते, तदाह, प्रत्यधिकरणं वचनोत्पत्तेः संख्यासामानाधिकरण्याच्च द्विगोरेकवचनविधानमिति, अधिकरणं द्रव्यम्। संख्यावाची पञ्चादिशब्दः, यत्संख्याविशिष्टं द्रव्यमभिधीयते तदभिधानयोग्यं वचनमुत्पद्यते पञ्चपूलीशब्देन पञ्चपूलाः समाक्रियमाणा उच्यन्तेऽतः समासार्थस्य पञ्चादिभिः सामानाधिकरण्याद् द्विवचनबहुवच-

परिहृतं "वे"त्युक्तं भाष्यं संगच्छते। अन्यथा तदसंगतिरित्यन्ये॥

उत्तरपदद्विगुस्तु न समाहारग्रहणस्य व्यावर्त्य इत्याह

उत्तरपदत्वे त्विति॥ (कै)

सत्यपि प्रातिपदिकत्वे इति। (कै)

तत्त्वे सत्यपि स्वगतसंख्याद्यभावान्न ततः प्रत्यय इति भावः। पञ्चगवप्रिय इत्यादौ प्रत्ययान्तत्वाभावाच्च न प्रातिपदिकत्वमित्यपिना सूचितम्॥

---

नप्रसङ्गे एकवचनं विधीयत इत्यर्थः, संख्यासामानाधिकरण्यादित्यनेन कर्मसाधनत्वं समाहारशब्दस्य दर्शयति, भावसाधने तु वैयधिकरण्यं पञ्चानां पूलानाम्। न वा समाहारैकत्वादिति, अयमर्थः, तिरोहितावयवभेदः समूहरूपः समाहारो द्विगवर्थस्तस्यैकत्वाद्वनादिवदेकवचनसिद्धेर्नात्र सूत्रेण प्रयोजनम् अवश्यं च तद् भावसाधनः समाहार आश्रयणीयः। अन्यथा पञ्चानां खट्वानां समाहारः पञ्चखट्वीत्यत्र वा टाबन्त इति स्त्रीत्वपक्षे खट्वाशब्दस्यानुपसर्जनत्वाद् ह्रस्वो न स्यात्, अनुपसर्जनत्वं चाप्रथमानिर्दिष्टत्वादनेकविभक्तित्वाच्च, भावसाधने तु पञ्चानां खट्वानां समाहारः, समाहारं समाहारेणेति समासार्थस्य नानाविभक्तियोगेऽपि खट्वाशब्दस्य नित्यं षष्ठ्यन्तत्वादेकविभक्ति चेत्युपसर्जनत्वाद् ह्रस्वत्वं सिध्यति, एकवचनमित्येतत्सूत्रं तर्हि कर्त्तव्यमेव। 'पञ्चपूलीति' 'अकारान्तोत्तरपदो द्विगुः स्त्रियां भाष्यत' इति स्त्रीलिङ्गत्वाद् 'द्विगो'रिति ङीप्॥

# द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् । २ । ४ । २ ॥

पूर्वपक्षेऽपि प्रत्येकमङ्गशब्दसम्बन्धे युक्तिमाह

नहीति ॥ (कै)

एवं च पूर्वपक्षात्सिद्धान्ते को विशेष इत्यत आह

---

द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम् ॥ प्राण्यङ्गानां द्वन्द्व एकार्थः स्यात् । एवं तूर्याङ्गानां सेनाङ्गानाञ्च । पाणिपादम् । मार्दङ्गिकपाणविकम् । रथिकाश्वारोहम् । इह प्राणिसेनयोरङ्गं नामावयवः । तूर्यस्य तु अङ्गं नामोपकारकं बोध्यम् । मार्दङ्गिकेत्यादौ मृदङ्गवादनं शिल्पमित्यर्थे शिल्पमिति ठक् । पाणिपादमित्यादौ जातिरप्राणिनामित्येव सिद्धे व्यति-

---

"द्वन्द्वश्च प्राणितूर्यसेनाङ्गानाम्" ॥ इह यस्य द्वन्द्वस्य कश्चिदवयवः प्राण्यङ्गवाची कश्चित्तूर्याङ्गवाची कश्चित्सेनाङ्गवाची यथा पाणिमार्दङ्गिकाश्वारोहा इति स व्यतिकीर्णावयवोऽपि प्राण्यङ्गादीनां द्वन्द्वो भवत्येवेत्येकवद्भावः प्राप्नोति तत्राह 'अङ्गशब्दस्येत्यादि'। ननु पूर्वपक्षेऽपि प्रत्येकमेव परिसमाप्तिरङ्गशब्दस्य नहि प्राणितूर्यसेनानामेकमङ्गं सम्भवति, एवं तदङ्गानामेव रूपस्य बहुवचनान्तस्य सतोऽङ्गशब्दस्य प्रत्येकं सम्बन्धो न तु प्रत्येकपरिसमाप्तस्य पश्चाद्बहुवचनसंबन्धः । 'त्रीणि वाक्यानि संपद्यन्त इति'। सूत्रं तु तेषामेव ग्रहणकवाक्यमिति भावः । तत्र प्रथमेन वाक्येन प्राण्यङ्गानां प्राण्यङ्गयोरेव द्वन्द्वः कृतस्तस्यैकवद्भावो विधीयते द्वितीयेन तूर्याङ्गानां तूर्याङ्गैरेव तृतीयेन सेनाङ्गानां सेनाङ्गैरेवेति न संकरप्रसङ्गः,

## तस्मादन्यथेति । (कै)

अङ्गानामित्येवंरूपबहुवचनान्तस्य सतः प्रत्येकं समाप्तिरित्यर्थः। पूर्वपक्षे प्राण्यङ्गस्य तूर्याङ्गस्येत्यादिवचनव्यक्त्या व्यतिकरः शङ्कितः। सिद्धान्ते तु प्राण्यङ्गानामित्यादिबहुवचनान्तलक्ष्यसंस्कारकवाक्यात् फलाभावात् प्राण्यङ्गानां प्राण्यङ्गैरेव समास एकवद्भाव इति विशेष

---

करनिरासार्थं वचनम् । हस्त्यश्वं हस्त्यश्वायेत्यत्र तु सेनाङ्गत्वेऽपि परत्वात्पशुलक्षणो विकल्प इति विभाषावृक्षेत्यत्र भाष्यकैयटयोः स्थितम् । अथ कथं रथवाजिपत्तिकरिणीसमाकुलमिति । नपुंसकत्वलक्षणेन हि भाव्यम् । उच्यते । रथादिसहिताः करिण्य इति मध्यमपदलोपी समासो बोध्यः । यद्वा । रथश्च वाजी चेत्यादि विग्रहः । जातावेकवचनम् । फलसेनादीनां बहुप्रकृतिरिति वक्ष्यमाणत्वान्नैकवद्भावः । एतेन पातितैरथनागाश्वैरिति ।

---

तथा तूर्याङ्गानामिति द्वन्द्व एकवद्भवतीत्यपेक्षते, अत्राङ्गशब्द उपकारकवचनः पूर्वत्रोत्तरत्र चावयववचनः सेनाङ्गानां चेति पूर्ववदपेक्षा । 'पाणिपादमिति'। अत्र 'जातिरप्राणिना'मित्येव सिद्धे व्यतिकरनिरासार्थं वचनम् । 'मार्दङ्गिकपाणविकमिति' । 'शिल्प'मिति ठक् । 'वीणावादकेति' । 'नित्यं क्रीडाजीविकयो'रिति समासः, विपञ्ची परिवादिनी तज्जीविकः परिवादकः । पणवमृदङ्गमित्यादौ तु 'जातिरप्राणिना'मित्येव सिद्धम् । 'रथिकाश्वारोहमिति' । कथं रथवाजिपत्तिकरिणीसमाकुलमिति, यावतैकवद्भावे सति नपुंसकत्वलक्षणेन भाव्यम्, निरङ्कुशाः कवयः रथवाजिपत्तिसहिताः करिण्यो रथवाजिपत्तिकरिण्यस्ताभिः समाकुलमिति वा समर्थनीयम् । द्वन्द्वस्येत्यारभ्य 'विभाषा समीपे' इत्यन्तस्य प्रकरणस्यानारम्भणीयतां शङ्कते । 'इतरेतरयोग इत्यादि' । 'सिद्धमेवैकवचनमिति' । 'ततश्चानारम्भणीयं प्रकरणमिति भावः । परिहरति ।

इति भावः। केवलप्रातिपदिकस्य पदान्तरेणान्वयायोगाद्विभक्त्यन्तस्यैवान्वयो वाच्यस्तथा च श्रूयमाणविभक्तिं त्यक्त्वा विभक्त्यन्तरकल्पने गौरवाद्बहुवचनान्तस्यैवाङ्गशब्दस्यान्वय इति तात्पर्यम्॥

**वाक्यचर्यमिति। (कै)**

बहुवचनान्ताङ्गशब्दघटितमित्यर्थः। अत्र तूर्याङ्गशब्देन वादका

---

इत्यं रथाश्वेभनिषादिनां प्रगे इति माघस्य व्याख्यातः। इहापि मध्यमपदलोपादेकवचनान्तेन विग्रहाद्वा। यद्वा कृतद्वन्द्वानामेकशेषः। तथा च तिङस्त्रीणि त्रीणीति सूत्रे लुटःप्रथमस्येति सूत्रे च भाष्यम्। उभयं ह्रीष्यते बहूनि शुक्तिकिटकानीति। माघटिप्पणे रथतुरङ्गाश्वेभे निषीदन्तीति णिन्यन्तेनोपपदसमास इति समाधानान्तरं साम्। यद्यपि चार्थे द्वन्द्व

---

'इदं त्विति'। कः पुनरसौ विषयविभाग इत्याह। 'प्राण्यङ्गादीनामिति'। कथं पुनः प्राण्यङ्गादीनां द्वन्द्व एकवचनो भवतीत्यस्य वचनस्य प्राण्यङ्गादीनां समाहार एवेत्यर्थो भवतीति, वचनव्यक्तिभेदात्, एवं ह्यत्र वचनं व्यज्यते य एकवचनो द्वन्द्वः स एषां भवतीति न पुनः प्राण्यङ्गादीनां यो द्वन्द्वः इत्यनूद्य तस्यैकवचनता विधीयते, एकवचनान्तस्य द्वन्द्वः समाहारद्वन्द्वः स प्राण्यङ्गादीनामपि 'चार्थे द्वन्द्व' इत्येव सिद्ध इति स एवैषामिति नियमः संपद्यते, दधिपय आदिष्वपि येषां ब्रह्मप्रजापत्यादीनामनेन प्रकरणेन नियमस्याप्राप्तिस्तेषां ताव'च्चार्थे द्वन्द्व' इत्यनेन प्राप्तो द्वन्द्वः प्रतिषिध्यते य एकवचनो द्वन्द्व स एषां न भवतीति वचनव्यक्त्याश्रयेण येषामपि दधिपयसी इत्यादीनां 'जातिरप्राणिना'मिति नियमस्य प्राप्तिस्तेषामनन्तरस्य विधिर्वा भवति प्रतिषेधो वेति यद्यपि नियमस्य प्रतिषेधो युक्तस्तथापि ब्रह्मप्रजापत्यादिभिः साहचर्यादेकवचनो द्वन्द्व इत्येतावन्मात्रस्यापेक्षणात्समाहारद्वन्द्व एव प्रतिषिध्यते न नियमः; हन्तादिविभाषा-

एव गृह्यन्ते । मृदङ्गशङ्खपणवा इति "मयूरव्यंसकादयश्च"... 

एव गृह्यन्ते । मृदङ्गशङ्खपणवा इति "अल्पाच्तरम्" ( २ । २ । ३४ ) इति सूत्रे भाष्यप्रयोगात् तत्साहचर्याच्च "सेनाङ्ग"शब्देन रथाद्यारूढानामेव ग्रहणं संग्रामं हस्त्यश्वरथपदातिभिरिति "येन विधिरि"ति ( १ । १ । ७२ ) सूत्रस्थभाष्यस्वरसाच्च "फलसेना" (वा-१ । ४ । १२) इत्यत्र तु सेनाशब्देन हस्तिरथादय एवेत्याहुः ॥

---

इत्येवेतरेतरयोगे समाहारे च द्वन्द्वो विहितः । समाहारस्यैकत्वाच्च सिद्धमेकवचनं तथापि नियमार्थमिदं प्रकरणम्, प्राण्यङ्गादीनामेकवचनद्वन्द्व एव । समाहारद्वन्द्व एवेत्यर्थः । न च समाहारे एषामेवेति विपरीतं ग्राह्यम् । तिष्यपुनर्वस्वोरिति सूत्रे बहुवचनग्रहणात् । तद्धि समाहारैकवचनव्यावृत्तये क्रियते तिष्यपुनर्वस्विदमिति ॥

---

प्रयोजनं तु तत्रैव वक्ष्यामः । अथैवं कस्मान्न विज्ञायते इतरेतरयोगपक्षेऽप्राप्त एकवद्भावो विधीयत इति । उच्यते । यदीतरेतरयोगविहितद्वन्द्वस्यैकवद्भावो विधीयेत द्वन्द्वाच्चुदषहान्तेत्यादिना समाहारनिबन्धनं कार्यं न स्याद् दधिपय आदिषु तु यस्य द्वन्द्वस्यैकवचनप्राप्तिस्तस्य प्रतिषिध्येतेति समाहारद्वन्द्वस्यैकवचनतायां प्रतिषिद्धायामपि द्वित्वबहुत्वाभावाद् द्विवचनबहुवचने न स्यातामतो नियम एवाङ्गीकर्त्तव्यः, अत्र च व्याख्यानमेव शरणम्, अथ नियमोऽपि भवन्नेवमेव कस्मान्न भवति प्राण्यङ्गादीनां समाहार एवेति न पुनः प्राण्यङ्गादीनामेव समाहार इति, उच्यते । एवं हि विज्ञायमाने दधिपय आदिषु येषामनेन प्रकरणेन नियमो न प्राप्नोति तेषु प्रतिषेधोऽनर्थकः स्यात्, तिष्यपुनर्वस्वोरिति बहुवचनग्रहणमनर्थकं स्यात् तद्धितसमाहारद्वन्द्वपक्षे तिष्यपुनर्वस्विदमित्यत्रैकवचनस्य प्रसक्ते द्विवचनं माभूदित्येवमर्थम् । यदि च त्वदुक्तो नियमः स्यात्तिष्यपुनर्वस्वोरत्र प्रकरणेऽसङ्कीर्त्तितयोः समाहारद्वन्द्वाभावादनर्थकं तत्स्यात्, अतो वृत्तिकारोक्तमेव नियमस्वरूपमिति निरवद्यम् ॥

# अनुवादे चरणानाम् । २ । ४ । ३ ॥

प्रतिपत्ता । (कै)

अनुवादे चरणानाम् ॥ चरणानां द्वन्द्व एकवत्स्यात् । चरणशब्दः कठकालापादिषु शाखाभेदेषु मुख्यः । तदध्यायिषु पुरुषेषु गौणः । उभयेषां चैषां गोत्रञ्च चरणैः सहेति जातिसंज्ञा । तत्र शाखाभेदवाचिनां जातिरप्राणिनामित्येकवद्भावस्य सिद्धत्वाद्गौणोऽपि पुरुषवृत्तिरेवेह गृह्यते । उदगात्कठकालापम् । प्रत्यष्ठात्कठकौथुमम् । इह यदा कठकालापेषूदितेषु प्रतिष्ठितेषु चावाभ्यां तत्र गन्तव्यमिति संवादं कृत्वा तच्च विस्मृत्य कश्चिदास्ते तत्र प्रतीदमुच्यते । नन्वूदगात्कठकालापन्त्वकिमास्यत इति । अतो भवत्यनुवादः । कठेन प्रोक्तमधीयते कठाः । वैशम्पायनान्तेवासित्वाण्णिनिः ।

"अनुवादे चरणानाम्" ॥ चरणशब्दः कठकालापादिषु शाखाभेदेषु मुख्यस्तदध्यायिषु पुरुषेषु गौण उभयेषां चैषां 'गोत्रञ्च चरणैः सहे'ति जातिसंज्ञा तत्र शाखाभेदवाचिनो 'जातिरप्राणिना'मित्येकवद्भावस्य सिद्धत्वाद्गौणोपि पुरुषवृत्तिरेव गृह्यत इत्याह । 'चरणशब्दः शाखानिमित्तक इति' । शाखाध्ययननिमित्तक इत्यर्थः । गौण इति क्वचित्पठ्यते क्वचिन्न । 'प्रमाणान्तरावगतस्येति' । शब्दादन्यत्प्रमाणं प्रमाणान्तरं प्रत्यक्षादि । 'सङ्कीर्तनमात्रमिति' । मात्रशब्दो ऽवगतिव्युदासाय, अन्यार्थप्रतिपादनाय प्रयोगः स चेदर्थः प्रमाणान्तरेणावगतः किमिति शब्दः प्रयुज्यते, कार्यान्तरविधानार्थं यदा हि कठकालापेषूदितेषु आवाभ्यां तत्र गन्तव्यमिति

## श्रोता अद्यतन्याम् इति । (भा)

अद्यतनीति लुङः संज्ञा ॥

---

कठचरकाल्लुक् । तदधीते तद्वेदेत्यण् । प्रोक्ताल्लुक् ! कलापिशब्दात्कलापिनोऽण् । नान्तस्य टिलोपे सब्रह्मचारीत्यादिना टिलोपः । अध्येतर्यणो लुक् । एतेन कौथुमो व्याख्यातः । यदा तु उदयप्रतिष्ठे नानूद्येते, किन्तु अज्ञाते ज्ञाप्येते तदा प्रत्युदाहरणम् । उदगुः । कठकालापाः ॥ स्थेणोरद्यतन्यामेवेति वाच्यम् ॥ स्थेणोः किम् । अनन्दिषु कठकालापाः । अद्यतन्यां किम् । उद्यन्ति कठकालापाः ॥

---

संवादः ज्ञातो भवति स च विस्मृत्योदास्ते तदा तं प्रतीदमुच्यते ननूदस्थात्कठकालापं किमास्यत इति । कठेन प्रोक्तमधीयते कठाः, वैशम्पायनान्तेवासित्वाणिनिः, 'कठचरकाल्लुक्, कलापिशब्दा'त्कलापिनोऽण्' नान्तस्य टिलोपे सब्रह्मचारीत्यादिना टिलोपः, उभयत्राध्येतर्यणो लुक्, एतेन कौथुमो व्याख्यातः 'यदा तु प्रथमत एव शब्दोपदेश इति' । प्रमाणान्तरेणानवगतस्य शब्देनाद्यं प्रत्यायनमित्यर्थः । 'उदगुरिति' । 'आत' इति झेर्जुस् 'उस्यपदान्ता'दिति पररूपत्वम्, अद्यतनीति लुङः पूर्वाचार्यसंज्ञा । 'अनन्दिषुरिति'' । टुनदि समृद्धौ, सिजभ्यस्तेति जुस् ।

# विशिष्टलिङ्गो नदी देशोऽग्रामाः । २।४।७॥

जनपदे विशेष इति । (कै)

जनपदस्थानविशेष इत्यर्थः ॥

ग्रामप्रतिषेध इति (भा)

ग्रामग्रहणेन नगराणां ग्रहणं नेत्यर्थः ॥ भाष्ये

विशिष्टलिङ्गो नदी देशोऽग्रामाः ॥ अग्रामा इत्येकवचनस्य स्थाने सौत्रं बहुवचनम् । विशिष्टलिङ्गानां भिन्नलिङ्गानां नदीवाचिनां देशवाचिनां च ग्रामवर्जितानां द्वन्द्व एकवत्स्यात् । सूत्रे चत्वारोऽपि शब्दा अवयवधर्मेणावयविनि द्वन्द्वे बोध्याः । नदीदेश इत्यसमासनिर्देशः । उभयस्य इरावती च

---

"विशिष्टलिङ्गो नदी देशोऽग्रामाः" ॥ विशिष्टलिङ्गानामित्यस्य विवरणं भिन्नलिङ्गानामिति, विपूर्वः शिषिर्भिदिना समानार्थः, तथा च भेदकं विशेषणं भेद्यं विशेष्यमित्युच्यते तेन नञ्विशिष्टेनेत्यत्रापि भेदद्वारेणाधिक्यमर्थो व्याख्यातः, यस्य हि नञ् भेदकः स नञाधिको भवति । 'नदीवाचिनामित्यादि' । कथं तर्हि सूत्रे विशिष्टलिङ्गादिशब्दानां द्वन्द्वेन सामानाधिकरण्यमित्याह । 'नद्यवयव इत्यादिना' । अग्रामावयवोऽग्राम इत्यपि

## उभयतश्चेति । (भा)

यो ग्रामाणां प्रतिषेधः । उभयतोग्रामसर्वावयवकस्य ग्रामान्यतरावयवस्य वेत्यर्थः । नगरसर्वावयवे च

---

उध्यैरावति । कुरवश्च कुरुक्षेत्रं च कुरुकुरुक्षेत्रम् । भिन्नलिङ्गाः किम् गङ्गायमुने । मद्रकेकयाः । नदीदेश इति किम् । कुक्कुटमयूर्यौ । अग्रामा किम् । जाम्बवं नगरं शालुकिनी ग्रामः । जाम्बवशालूकिन्यौ । अत्र पूर्वपदार्थस्य अग्रामत्वेऽपि उत्तरपदार्थस्य ग्रामत्वात्तदाश्रयः प्रतिषेधः

---

इत्यर्थम्, अग्राम इति चैकवचनस्थाने बहुवचनम् । 'असमासनिर्देश एवायमिति' । समासे हि व्यतिकीर्णावयवो द्वन्द्व एकवत्स्यात्, 'गङ्गाकुरुक्षेत्रे इति' । समासो हि भवन्नितरेतरयोगे चेद् द्विवचनप्रसङ्गः, समाहारे चेन्नपुंसकत्वप्रसङ्ग इति भावः । 'उध्यैरावतीति' । उज्झ उत्सर्गे, 'भियोध्यौ नदे' । 'देशः खल्वपीति' । उदाह्रियत इति शेषः । 'जाम्बवशालूकिन्याविति' । जाम्बवं नगरं शालूकिनी ग्रामः, तत्रोभयतश्च ग्रामाणामिति प्रतिषेध एव भवति ग्रामोभयावयवस्तु द्वन्द्वो नोदाहृतः । 'जनपदो हि देश इति' । जना यत्र सञ्चरन्ति स देश इत्यर्थः । अवश्यं जनपदो देश इत्यङ्गीकर्तव्यमित्याह । 'तथा चेति' । ग्रामे नाध्येयम् । अभक्ष्या ग्रामकुक्कुटा इत्यादौ ग्रामग्रहणेन नगरमपि गृह्यते तद्वदिहापि नगरावयवस्यापि द्वन्द्वस्यात्र प्रतिषेधः स्यात्, ज्ञापकात्सिद्धं, यदयं 'प्राचां ग्रामनगराणा'मिति ग्रामग्रहणे नगरग्रहणं करोति तज्ज्ञापयति इह शास्त्रे ग्रामग्रहणे नगरं गृह्यतइति, नैतत्सूच्यते वक्ष्यति हि तत्र ग्रामत्वादेव सिद्धे नगरग्रहणं प्रवृत्तिभेदज्ञापनार्थं ग्रामग्रहणमङ्गविशेषणं पूर्वसूका-

"अनगराणामिति"

प्रतिषेध इति भावः॥ तदाह

ग्रामनगरेत्यादि॥ (कै)

---

तदुक्तं, उभयतश्च ग्रामाणां प्रतिषेधो वक्तव्य इति। नदीग्रहणमदेशत्वात्। जनपदो हि देशः। अत एव पर्वतानां न। कैलासश्च गन्धमादनं च कैलासगन्धमादने॥

---

सप्तमी, नगरग्रहणं तूत्तरपदविशेषणं पूर्वपाटलिपुत्रक इति, वाहीकग्रामेभ्यश्च उदीच्यग्रामाच्चेत्यादौ ग्रामग्रहणेन नगरग्रहणं न स्यात्तस्मादाह ग्राम इत्यत्र नगरप्रतिषेध इति'। ग्रामाश्रयस्य प्रतिषेधस्य प्रतिषेधः इत्यर्थः। 'उभयतश्चेति' ग्रामनगरात्मके उभयस्मिन्सति ग्रामाश्रयः प्रतिषेध एव वक्तव्यो न पुनर्नगराश्रयः प्रतिषेध इत्यर्थः।

## क्षुद्रजन्तवः। २। ४। ८॥

**अर्हार्थे इति।** (कै)

**अनेन क्षुद्रशब्देनोरगोऽप्यर्हार्थः। तेन जन्तुशब्देन कर्मधारय इति ध्वनितम्॥ भाष्ये**

**स्वं शोणितं नास्तीति।** (भा)

**यथा जलौकप्रभृतीनाम्॥**

---

क्षुद्रजन्तवः॥ एषां द्वन्द्व एकवत्स्यात्। यूकालिक्षम्। आनकुलात् क्षुद्रजन्तवः॥

---

"क्षुद्रजन्तवः"॥ क्षुद्रशब्दोयमस्त्येव कृपणे क्षुद्रोयं पुरुष इति, अस्त्यङ्गहीने शीलहीने च 'क्षुद्राभ्यो वे'ति, अस्ति परिमाणापचये क्षुद्रास्तन्दुला इति, इह तु जन्तुशब्दसमभिव्याहारादन्तिमस्य ग्रहणमित्याह 'अपचितपरिमाणः क्षुद्र इति'। अल्पशरीर इत्यर्थः, अपचयस्यापेक्षिकत्वादनवस्था माभूदिति स्मृतिमुपन्यस्यति। 'क्षुद्रजन्तुरनस्थिः स्यादिति'। यस्यास्थीनि न विद्यन्ते सोनस्थिः, स्मृत्यन्तरमाह। 'अथ वेति'। क्षोत्तव्यः क्षुद्रः, अर्हार्थेऽपि स्फायितञ्चीत्यादिना रक् प्रत्ययः, यः क्षुद्यमानोऽपि न म्रियते यथा जलूका स क्षुद्रजन्तुः यस्तु म्रियते स पापनिमित्तत्वान्न क्षोदार्हः, क्षुद्र एव य इति व्युत्पत्तिवशादेवायं प्रसिद्ध इत्यर्थः। स्मृत्यन्तरमाह. 'शतं वेति'। प्रसृतिरञ्जलेरर्द्धं येषां शतं प्रसृतौ भवति शतेनार्द्धाञ्जलिः पूर्यत इत्यर्थः। स्मृत्यन्तरमाह। 'केचिदानकुलादपीति'। नकुलपर्यन्ताः क्षुद्रजन्तव इत्यर्थः। 'इतरासान्तद्विरोधादिति'। अनस्थ्यादिभिः स्मृतिभिर्ये प्रयोगा उपदर्शिता न ते सर्वे ताभिः संगृह्यन्त इत्ययमत्र विरोधः॥

# येषां च विरोधः शाश्वतिकः ।२।४। ९ ॥

## यत्नेनेति । (कै)

पुनर्विधानार्थेनेत्यर्थः ॥

---

येषाञ्च विरोधः शाश्वतिकः ॥ येषां नित्यं वैरं तेषां द्वन्द्व एकवत्स्यात् । गोव्याघ्रम् । मार्जारमूषकमित्यादि । विरोधो वैरं न तु सहानवस्थानादिः । छायातपावित्यादावतिव्याप्तेः । शश्वदिति त्रैकाल्यमाह । तत्रभवाद्यर्थे कालाट्ठञ् । तान्तात्परत्वेपि निपातनादिकादेशः । अव्ययानां भमात्रे इति प्राप्तस्य टिलोपस्याभावश्च सामान्यापेक्षमिकस्य केनावाधे ज्ञापकमिदम् । तेन कान्दविकादि सिद्धमिति कश्चित् । वस्तुतस्तु कन्दुःस्वेदनी तत्र संस्कृतं भक्षा इत्यण् । कान्दवम् तदस्यपण्यमिति ठक् । शाश्वतिकः किम् । चैत्रमैत्रौ कलहायेते । एतेन देवासुरैरमृतमम्बुनिधिर्ममन्थेति भारविप्रयोगो व्याख्यातः । तेषां हि अमृतादिप्रयुक्तः कादाचित्कोविरोधो न तु नित्यः । मथनप्रवृत्तिकाले तदभावात् । इह पशुशकुनिद्वन्द्वावकाशो महाजोरभ्रं महाजोरभ्राः । हंसचक्रवाकं हंसचक्रवाकाः । येषांचेत्यस्याव-काशः श्रमणब्राह्मणम् । मार्जारमूषकम् । अश्वमहिषं काकोलूकमित्यत्रो-भयप्रसङ्गे परत्वात्पशुशकुनि विभाषा प्राप्ता चकारेण पुनर्विधानाद्येषां चेति नित्यमेव भवति ॥

---

"येषां च विरोधः शाश्वतिकः" ॥' विरोधो वैरमिति' । न सहानवस्थानादिः, छायातपावित्यादावपि प्रसङ्गात्, पूर्वसूत्राच्चानुवृत्तेन जन्तु-ग्रहणेन विरोधस्य विशेषणात् जन्तूना हि विरोधो वैरमेव भवति ।

# शूद्राणामनिरवसितानाम्।२।४।१०॥

प्रत्यय इति। (कै)

दिग्शब्देभ्य इत्यादिना ऽस्तातिः तस्य च लुगिति भावः॥

डोम्बा इति। (कै)

श्मशाननिकटे ये च सन्ति मृतवस्त्रचितिकाष्ठादिसंग्राहकाश्चण्डालसदृशास्ते डोम्बा इत्युच्यन्ते। "तस्माच्छूद्रो यज्ञेऽनवक्लृप्त" इति श्रुतेः शूद्राणां यज्ञकर्मणि बहिष्कृतत्वं विरुद्धमित्यत आह

---

'शाश्वतिको नित्य इति'। शश्वदिति त्रैकाल्यमाह, 'तत्र भव' इति कालाट्ठञि तान्तादपि निपातनादिकादेशः, अव्ययानां भमात्रे टिलोपाभावश्च, गोपालस्यापत्यानि गौपालयः, अत्र कादाचित्को विरोधः। 'चकारः पुनरित्यादि'। पशुशकुनिद्वन्द्वावकाशो महाजोरभं महाजोरभाः हंसचक्रवाकं हंसचक्रवाकाः, विरोधिनामेकवद्भावस्यावकाशः श्रमणब्राह्मणं मार्जारमूषिकम्। अश्वमहिषं काकोलूकमित्यत्रोभयप्रसङ्गे परत्वात्पशुशकुनिविभाषा स्यात्, चकारादयमेव भवति॥

---

शूद्राणामनिरवसितानाम्॥ अबहिष्कृतानां शूद्राणां द्वन्द्व एकवत्स्यात्। तक्षायस्कारम्। रजकतन्तुवायम्। शूद्रशब्दोऽत्र त्रैवर्णिकेतरपरः न

---

"शूद्राणामनिरवसितानाम्"॥ शूद्रशब्दोत्र त्रैवर्णिकव्यतिरिक्तजातिमात्रवचनो न वृषलपर्यायः, निरवसितप्रतिषेधात्। 'निरवसित-

शूद्राणामिति। (कै)

पूर्वोक्तश्रुतिस्थाग्निहोत्रादिविषयेति भावः॥

तक्षादीनामिति। (कै)

तेषां प्रतिलोमत्वादिति भावः। शूद्रशब्दो ऽत्र सूत्रे त्रैवर्णिके-तरपर इति बोध्यम्॥

स्मृतिकारैरिति। (कै)

"भस्मना शुध्यते कांस्यमि"त्यादि॥



---

तु शूद्रत्वजातिपरः। अनिरवसितानामिति प्रतिषेधात्। निरवपूर्वात्स्यतेः कर्मणि क्तः। निरवसानं बहिष्करणं तच्चेह पात्रादिवच्छितम् यैर्भुक्ते पात्रं न शुध्यति भस्मना शुध्यते कांस्यमित्यादिस्मृतिकारोक्तसंस्कारेणापि। ते पात्र बहिष्कृताः। अनिरवसितानां किम्। चण्डालमृतपाः॥

---

इति'। निरवपूर्वात्स्यतेः कर्मणि क्तः, तत्र प्रकृत्यर्थमाह। 'निरवसानं बहिष्करणमिति'। अनेकार्थत्वाद्धातूनामुपसर्गवशादेति भावः। पात्रा-द्बहिष्करणमिह विवक्षितमित्याह। 'यैरिति' 'संस्कारेणापीति'। भस्मना शुध्यते कांस्यमित्यादिना स्मृतिकारैरुक्तेन न शुध्यति तेन, तत्र भोक्तुं न लभन्त इति ततो बहिष्कृता भवन्ति॥

# गवाश्वप्रभृतीनि च । २ । ४ । ११ ॥

भाष्ये

यथोच्चारितं द्वन्द्ववृत्तमिति । (भा)

द्वन्द्वप्रयुक्तमिदं कार्यं गणे यथोच्चारितशब्दविषयमित्यर्थः ॥ तत्फलितमाह

गवाश्वप्रभृतीनि च ॥ एतानि द्वन्द्वरूपाणि कृतैकवद्भावानि साधूनि स्युः । गवाश्वम् । गवाविकम् । गवैडकम् । अजाविकम् । अजैडकम् । एषां पशुद्वन्द्वविभाषायां प्राप्तायां वचनम् । कुब्जवामनम् । कुब्जकैरातम् । पुत्रपौत्रम् । श्वचाण्डालम् । स्त्रीकुमारम् । दासीमाणवकम् उष्ट्रखरम् । शाटीप्रच्छदम् । इहाप्राणिजातिवाचिनामबहुप्रकृत्यर्थः पाठः । उष्ट्रशशम् । मूत्रशकृत् । मूत्रपुरीषम् । यकृन्मेदः । मांसशोणितम् । दर्भपूतीकम् ।

"गवाश्वप्रभृतीनि च" ॥ द्वन्द्वरूपाणीत्यन्वयात्प्रभृतीनीति नपुंसकोपपत्तिः, गवाश्वप्रभृतीनि द्वन्द्वैकवद्भावान्येव पठ्यन्ते तेषामनेन साधुत्वमात्रं विधीयते न त्वेकवद्भाव इत्याह । 'गवाश्वप्रभृतीनीति' । गवाश्वादीनां चतुर्णाम्पशुद्वन्द्वे विभाषायां प्राप्तायां वचनम्, एवमुष्ट्रखरम् उष्ट्रशशमिति दर्भशरादीनां तृणोलपपर्यन्तानां तृणद्वन्द्वे विभाषायां प्राप्तायां दासीदासादीनां 'पुमान्स्त्रिया' त्येकशेषाभावोऽपि निपातनात्, शाटीपटीकमित्यादीनामप्राणिजातिवचनानामबहुप्रकृत्यर्थः पाठः, अन्येषां कुब्जवामनादीनाम-

गणे इति ॥ (कै)

यथोच्चारितमित्यस्य फलमाह

यदा त्विति ॥ (कै)

---

अर्जुनपुरुषम्। तृणोलपम्। दासीदासम्। अत्र पुमान्स्त्रियेत्येकशेषो न। कुटीकुटम्। मांसशोणितम्। भागवतीभागवतम्। गवाश्वप्रभृतिषु यथोच्चारितं द्वन्द्ववृत्तमिति वार्त्तिकम्। गणपाठे रूपमेषां विवक्षितं न तु पूर्वोत्तरपदनिर्देशमात्रे तात्पर्यमित्यर्थः। तेन अवङादेशाभावपक्षे न भवति। अपशवो वा अन्ये गो अश्वेभ्यः पशवो गोअश्वाः ॥

प्राप्ते वचनम्। 'यथोच्चारितं द्वन्द्ववृत्तमिति'। गणे यादृशाः कृतावङादेशाः पठितास्तादृशानामेव द्वन्द्ववृत्तं द्वन्द्वकार्यमेकवद्भावलक्षणं भवति। 'रूपान्तरेष्विति'। 'अवङ्स्फोटायनस्ये' ति विकल्पितत्वाद्यदा नास्ति तदेत्यर्थः। एतेन गणपाठे रूपमेषां विवक्षितं न पूर्वोत्तरपदनिर्देशमात्रे तात्पर्यमित्युक्तं भवति ॥

# विभाषा वृक्षमृगतृणधान्यव्यञ्जन-पशुशकुन्यश्ववडवपूर्वापराधरो-त्तराणाम्। २। ४। १२॥



द्वन्द्वप्रकृतिर्वर्त्तिपदानि तेषां बहुत्वे त्रिप्रभृतिष्वेव स्यादत आह

बहव इति॥ (कै)

पदार्थाः। (कै)

तादृशपदार्थप्रतिपादकाः शब्दाः तदर्थानां बहुत्वगमकस्यैक-वद्भाव एव। यदा बदरत्वेनैवानेकेषां भानमेकवद्भावबलादिति

---

विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्तरा-णाम्॥ २। ४। १२॥ वृक्षादीनां सप्तानां द्वन्द्वः। अश्ववडवेत्यादि द्वन्द्वत्रयं च विभाषा एकवत्स्यात्। वृक्षादौ विशेषाणां ग्रहणम्। तथाहि। वृक्षादि-शब्दैः प्रत्येकं द्वन्द्वो विशेष्यते। न चैको वृक्षशब्दो द्वन्द्वः। न च द्वयोः सह-

---

"विभाषा वृक्षमृगतृणधान्यव्यञ्जनपशुशकुन्यश्ववडवपूर्वापराधरोत्त-राणाम्"॥ २। ४। १२॥ अत्र वृक्षादिभिः प्रत्येकं द्वन्द्वो विशेष्यते न चैको वृक्षशब्दो द्वन्द्वः, न च द्वयोः सहप्रयोगः, एकशेषात्, न च पर्यायाणामपि सहप्रयोगः, 'विरूपाणामपि समानार्थाना' मेकशेषवचनात्, नापि विशेषेण

नैकार्थीभावविरोधः॥ एतत्सूत्रानुपात्तं फलं द्वन्द्वस्यैकशेषोपादानं बहु-
प्रकृतित्वनियमार्थेत्याह

## जातिरिति। (कै)

न च जातिप्राधान्य एव जातिरित्यस्य प्राप्तिस्तत्र च न बहुवचनं तस्या एकत्वात्। अत एव क्षीरोदकं संयुक्त इति "अन्तादिवच्चे"ति (६। १। ८५) सूत्रस्थभाष्यप्रयोगः संगच्छते। "जात्याख्यायाम्" (१। २। ५८) इति सूत्रं च भगवता प्रत्याख्यातमिति वाच्यम्। जातिप्राधान्ये एव जातौ व्यक्तिद्वारकपरम्परया संख्यान्वये तत्सम्भवात् तद्वेवं जातिप्राधान्ये व्यक्तिद्वारकपरम्परया सङ्ख्यान्वये बदरामलक-

---

प्रयोगः। एकशेषात्। एवं पर्याययोरपि। विरूपाणामपि समानार्थाना-मेकशेषारम्भात्। नापि वृक्षस्य धवस्येत्यादिसामान्यविशेषयोर्वाचनिकद्वन्द्व-निषेधस्योक्तत्वात्। न च प्राच्यभरतेष्विति निर्देशादनित्यः स इति वाच्यम्ः तथापि वृक्षधवमित्यादिप्रयोगादर्शनेन निषेधस्यैव प्रकृते प्रवृत्तेः। तस्मा-द्विशेषाणामेवेह ग्रहणं स्थितम्। प्लक्षन्यग्रोधम् प्लक्षन्यग्रोधाः। ननु एव-

---

सहप्रयोगोवृक्षस्य धवस्येति, वृक्षशब्देनैवाशेषविशेषाक्षेपाद्धवादिशब्द-प्रयोगस्य निष्फलत्वात्, कथं तर्हि गोबलीवर्दावित्यादौ सामान्यविशेषयो सहप्रयोगः, बलीवर्दशब्दसंनिधौ गोशब्दस्य स्त्रीगवीष्वेव वृत्तेर्द्वयोरपि विशेषवचनत्वादिति चेद् इहापि तर्हि धवपदसंनिधौ वृक्षशब्दस्य तद्व्य-तिरिक्तविषयतया द्वन्द्वप्रसंगः, किं च वाक्येऽपि कथं सहप्रयोगः ब्राह्मणा आगता वसिष्ठोप्यागत इति, प्राधान्यख्यापनार्थमुक्तार्थस्यापि प्रयोग इति चेद् द्वन्द्वेऽपि तर्हि प्राप्नोति, तस्मादनभिधानमेवाश्रयणीयम्। नहि वृक्षधव-

मित्येव । पाठान्तरे । आद्यव्याख्यायां बदरामलकानीत्यपि । व्यक्तिप्राधान्ये तु बदरामलकानीत्यपि । जातौ साक्षात्सङ्ख्यान्वये बदरामलके इत्येव व्यक्तिप्राधान्ये व्यक्तेरेकत्वविवक्षायां बदरामलके बदरामलकमित्युभयमिति लभ्यते इति बोध्यम् ॥

## व्याचक्षत इति । (कै)

अन्यचेत्यस्येह पाठसामर्थ्याद्विकल्पो बहुप्रकृतित्वं चानेन विधेयमिति लभ्यत इति बोध्यम् । अत एव वार्तिकव्याख्यानभाष्ये विभाषेत्युक्तम् ॥

---

तम् । शशपृषताः । कुशकाशम् । कुशकाशाः । व्रीहियवम् । व्रीहियवाः । दधिघृतम् । दधिघृते । गोमहिषम् । गोमहिषाः । तित्तिरिकपिञ्जलम् । तित्तिरिकपिञ्जलाः । अश्ववडवम् । अश्ववडवौ । पूर्वापरम् । पूर्वापरे । अधरोत्तरम् । अधरोत्तरे । अत्र वार्त्तिकम् । बहुप्रकृतिः फलसेनावनस्पतिमृगशकुनिक्षुद्रजन्तुधान्यतृणानामिति ॥ एषां बहुप्रकृतिरेव द्वन्द्व एकव-

---

मिति लोकेऽभिधानमस्ति, अतो वृक्षविशेषवाचिनां ग्रहणम्, एवं मृगादिष्वपि द्रष्टव्यम् । 'इत्येतेषां द्वन्द्व इति' । एतेषामित्येकापि षष्ठी विषयभेदाद्भिद्यते, वृक्षादीञ्छकुनिपर्यन्तान्प्रत्यवयवषष्ठी अश्ववडवादीन् प्रति निर्द्धारणषष्ठी, येऽत्राप्राणिनस्तेषां 'जातिरप्राणिना' मिति नित्यं समाहारद्वन्द्वे प्राप्ते उभयत्र विधीयते यो विभाषाप्राप्तैकवचनो द्वन्द्वः स एषां भवतीति वचनव्यक्त्याश्रयणेन तेषामेव वृक्षादीनामन्यैः सह द्वन्द्वे यथाप्राप्तमित्यो विकल्पितो वा एकवद्भावो भवति व्रीहिकुशप्लक्षमिति, जातिरप्राणिनामिति नित्यः, प्लक्षशब्दस्पर्शा इत्यत्राद्रव्यवाचित्वा 'ज्जातिर-

अन्येत्विति। (कै)

वार्तिकव्याख्यानभाष्ये विकल्पो न वाचनिकः किन्तु "विभाषावृक्षे"ति सूत्रप्राप्तिविषयानुवादकः। तस्मादेषां य एकवद्भवति यश्च विभाषा एकवद्भवति स सर्वोऽपि बहुप्रकृतिरेवेति वाच्यम् इति वार्तिकव्याख्यानभाष्यार्थः। एवमेव "यूकालिक्षा" इत्यपि भाष्यव्याख्येयः। अत एवाग्रे "बहुप्रकृतिरेव यथास्याद्" इत्येव प्रयोजनमुक्तं न तु फलक्षुद्रजन्त्वंशे विकल्पोऽपि प्रयोजनत्वेनोक्त इति तदाशयः। अत्राद्यव्याख्यैव युक्ता। भाष्यकारेण फलक्षुद्रजन्त्वोर्विभाषाप्रकरणे पाठः कर्तव्य इत्युच्यतेऽतो न वार्तिकप्रयोजनकथनभाष्यविरोधो "यथोत्तरं मुनीनांप्रामाण्याच्चै"वमेव युक्तमित्याहुः॥

---

दित्यर्थः। नेह। बदरामलकौ। रथिकाश्वारोहौ। प्लक्षन्यग्रोधावित्यादि। इदं वार्त्तिकं विध्यन्तरशेषभूतं न तु स्वातन्त्र्येण विधायकम्। विधित्वे हि स नियमश्चेत्तर्हि वनस्पत्यादीनामेतत्सूत्रोपात्तानामपि बहुप्रकृतित्वे विकल्पं बाधित्वा नित्यं स्यात्। अबहुप्रकृतिकत्वे च सौत्रो विकल्पः स्यात्।

---

प्राणिना' मित्यस्याप्रवृत्तौ 'चार्थे द्वन्द्व' इत्युभयत्र प्राप्तो भवति, पशुग्रहणं हस्त्यश्वादिषु परत्वात् सेनाङ्गलक्षणस्य नित्यविधेर्बाधनार्थम्। मृगशकुनिग्रहणं किमर्थम्। नह्येतेषामनेन प्रकरणेन नित्य एकवद्भावः प्राप्तो यद्बाधनाय विकल्पोऽभ्यनुज्ञायते, अन्यत्र प्राप्त्यभावादेषामुभयत्रैव द्वन्द्व इति नियमो न सम्भवति, अपेषामेवोभयत्र द्वन्द्व इति नियमः स्यात्, क्व तर्ह्येषां स्यात्, न क्वचिदिति चेत्, यद्येवं 'चार्थे द्वन्द्व' इति सामान्यलक्षणमनवकाशं स्यात्

## सेनाङ्गत्वेऽपीति। (कै)

इदं चिन्त्यम्। तत्र सेनाङ्गशब्देन हस्त्यारोहादीनामेव ग्रहणात्। अत्र तु सेनाशब्देन हस्त्यश्वादीनां ग्रहणं भाष्यप्रामाण्यात्। अत एव संग्रामं हस्त्यश्वरथपदातिभिरिति भाष्यप्रयोगः संगच्छते। बहुप्रकृतित्वाभावान्नैकवदिति तु न युक्तबहुभिरेव तैः संग्रामस्य निष्पाद्यत्वात्। वनस्पतिशब्देन वार्तिके वृक्षग्रहणमेतत् सूत्रानुपात्तानामपि पाठात्। प्रकरणविषयत्वनिश्चयेन सन्देहानुपपत्तिरत आह

---

वैकल्पिकत्वे तु फलादीनामपि जातिरप्राणिनामित्यादिलक्षणान्तरप्राप्तनित्यमेकवद्भावं बाधित्वा बहुप्रकृतिकत्वे विकल्पः स्यात्। न च बदरामलकं बदरामलकानीति भाष्यदर्शनादिष्टापत्तिरिति वाच्यम्। तत्र बदरामलकानीति क्वाचित्कः पाठः। सोपि बदरामलकानीत्येवं प्राप्ते जातिलक्षणो नित्य एकवद्भाव इति व्याख्येय इति कैयटेनोक्तत्वात्। यत्तु नित्य एकवद्भावे

---

विप्रतिषेधविधानमेव तदानीमाश्रयणीयं स्यात् प्राण्यङ्गादीनां समाहारे दधिपय आदीनामितरेतरयोगे वृक्षादीनामुभयत्रेति, अथैषामेवोभयत्रेत्यनेनान्येषामुभयत्रापि द्वन्द्वो वार्यते, अन्यतरत्र तु भवत्येव, एवमपि क्वाप्यत्रेति न ज्ञायते 'सर्वो द्वन्द्वो विभाषयैकवद्भवती'ति चानुपपन्नं स्यात्। उच्यते। यत्तुल्यजातीयानामेवायं विकल्पस्तत्रैव नियमः प्रवर्त्तते मृगविशेषवाचिनां मृगविशेषवाचिभिरेवोभयत्र द्वन्द्वः, अन्यैस्तु सहान्यतरत्रेति, नान्यमपि न ज्ञायते क्वान्यतरत्रेति, स्यादेतदेवं यद्युभयत्रैषां द्वन्द्व इतिश्रुतं स्याद् इह तु विभाषैकवचनो द्वन्द्व इति श्रूयते ततश्च यो विभाषाप्राप्त एकवचनो

**येषामिति। (कै)**

एतत् सूत्रोपात्तविषय एव सन्देह इति भावः ॥ भाष्ये

**नित्यो द्वन्द्वैकवद्भावः प्राप्नोतीति। (भा)**

अस्य नियमेन वारणेऽपि नित्यप्राप्नोतीत्यर्थः ॥

**अविशेषेणेति। (भा)**

एष्वेकवचनं द्वन्द्वविषयं यद्यच्छास्त्रं प्राप्नोति तद्बहुप्रकृतरेवेत्यर्थ इति भावः। एतेन बदरामलके इत्यत्र जातिरित्यस्याप्रवृत्तावपि "चार्थे" इति विभाषास्यादित्यपास्तम् ॥

पशुत्वेनैव सिद्धेऽश्वग्रहणं न कार्य्यमित्याशयेन वार्तिकमित्याह

. . . .

प्राप्ते विकल्पोऽनेन क्रियत इति मतान्तरं कैयटेनोक्तम्। तदापाततः। बद-रामलके तिष्ठत इति तदुत्तरभाष्यविरोधात्। उक्तरीत्या प्रकृतवार्त्तिकस्य बहुप्रकृतिके विकल्पविधिपरत्वे हि अन्यत्र नित्य एकवद्भावो दुर्वारः स्यादिति दिक्। तथापि यदि विभाषावृक्षेत्यत्र पठितत्वादस्यैव शेषः स्यात्तदा वनस्पत्यादिष्वबहुप्रकृतित्वे विकल्पाभावेऽपि जातिरप्राणिनामिति

---

द्वन्द्वः स मृगविशेषवाचिनां मृगविशेषवाचिभिरेव नान्यैरिति वचनव्यक्तौ शक्यमेव ज्ञायते ऽन्यैः सहेतरेतरयोगद्वन्द्व इति, अथास्यां वचनव्यक्तौ विभाषाग्रहणं किमर्थं यावता विभाषैवैकवचनान्तो द्वन्द्वः प्राप्तस्तत्रैताव-देवास्तु य एकवचनो द्वन्द्वः स एषामेभिरेवेति। उच्यते। असति विभाषा-ग्रहणे वचनव्यक्त्यन्तरमपि सम्भाव्येत एषामेभिः सहैकवचन एव द्वन्द्व इति यथा प्राण्यङ्गादिषु सति तु तस्य नियमस्यासम्भवादभिमतो नियमः

पशुत्वादिति ॥ (कै)

नाचेति। (कै)

पूर्वविप्रतिषेधादश्ववडवग्रहणमेव न्याय्यमित्याशयः ॥ नपुंसकत्वस्य प्रतिपदविधित्वं समर्थ्यते

तच्छब्देनेति ॥ (कै)

भाष्ये

ज्ञास्यामीति। (भा)

अन्तर्भावितण्यर्थं ज्ञापयिष्यामीत्यर्थः ॥

नित्यो विधिः स्यात्। तस्मात्सर्वप्रकरणशेषोऽयम्। एषां फलादीनां द्वन्द्वोऽनेन लक्षणान्तरेण वा एकवद्भवन् बहुप्रकृतिरेवेति। तेन प्लक्षन्यग्रोधावित्यत्र अयं विकल्पो जातिरप्राणिनामिति नित्यस्य न भवति। एवं व्रीहियवौ कुशकाशावित्यादि। प्रकृतसूत्रोपात्तानान्तु इत्थं विषयविभागः। येऽत्राप्राणिनस्तेषां जातिरप्राणिनामिति नित्यं प्राप्ते विकल्पो विधीयते। स च

संपद्यते, एवं पूर्वापरमधरोत्तरमित्यत्रापि नियमस्वरूपं विज्ञेयम्, पशुद्वन्द्व इत्येव सिद्धेऽश्ववडवग्रहणं प्रतिपदविधानार्थं तत्र प्रतिपदविधानादश्ववडवमित्येकवद्भावपक्षे 'पूर्ववदश्ववडवा' वित्येतद्बाधित्वा 'स नपुंसक' मित्येतदेव भवति, तच्छब्देन ह्येकवद्भावभाजं परामृश्य विधीयमानं नपुंसकत्वमेकवद्भाववदेव प्रतिपदविहितं भवति पूर्ववदश्ववडवावित्येतत्तु एकवद्भावाभावपक्षे प्रवर्तते अश्ववडवौ अश्ववडवान् इति, एतदेवाभिप्रेत्य वृत्तिकारस्तत्र वक्ष्यति अश्ववडवयोर्विभाषैकवद्भाव उक्त इत्यादि। बहुप्रकृतिरिति'।

इह नित्य इति। (भा)

विनिगमनविरहात्प्राण्यङ्गादीनामेव समाहारः। तेषां समाहार एव इत्येवं द्विविधोऽपि नियम इति भावः। अन्यथैतत्प्रयोजनखण्डनपरभाष्येणैषामेव समाहार इति नियमस्यैव लाभात्। एतद् विषये इतरेतरयोगाभावात्त्या द्वन्द्वस्येत्यारभ्यैतत्पर्यन्तमित्यो विधिरित्यादिकैयटासंगतिः स्यात्। भाष्यमपि विशिष्टप्रयोजनखण्डनपरम्॥ भाष्ये

यदयमिति। (भा)

---

तेषां तैरेव। तथा च वृक्षादीनामन्यैः सह द्वन्द्वे यथा प्राप्तं नित्यं विकल्पो वा तद्यथा ब्रीहिकुशप्लक्षमित्यत्र जातिरप्राणिनामिति नित्यः। प्लक्षशब्द-स्पर्शौ प्लक्षशब्दस्पर्शा इत्यत्र तु चार्थे द्वन्द्व इत्युभयत्र। न चेह जातिरप्राणि-नामित्यस्य प्रवृत्तिः। अद्रव्यजातित्वात्। अप्राणिनामिति हि पर्युदास इत्युक्तम्। पशुग्रहणान्तु हस्त्यश्वादिषु सेनाङ्गलक्षणस्य नित्यविधेर्बाधना-

---

बहवो बहुत्वसंख्यायुक्ता वर्त्तिपदार्थाः प्रकृतिः कारणं यस्य द्वन्द्वार्थस्य स बहुप्रकृतिः, तदर्थाभिधायित्वाद् द्वन्द्वोऽपि बहुप्रकृतिः, नेदं स्वतन्त्रं लक्षणं स्यात्तर्ह्यि नित्यं चेद्वनस्पत्यादीनामपि। एतत्सूत्रविहितं विकल्पं बाधित्वा बहुप्रकृतित्वे नित्य एकवद्भावः स्याद् विकल्पे पश्वादीनामपि जातिरप्राणिनामित्यादिलक्षणान्तरेण प्राप्तं नित्यमेकवद्भावं बाधित्वा बहुप्रकृतित्वे विकल्पः स्यात्, अतो लक्षणान्तरस्य शेषोऽयमत्रापि यदि विभाषा वृक्षेत्यत्र पठितत्वादस्यैव शेषत्वं स्यात्ततो वनस्पत्यादिष्वबहु-

एवं चैकवद्भावप्रकरणं व्यर्थमिति भावः। सर्वशब्देऽसङ्कुचद्वृत्ति-रित्यभिमानः॥ एवञ्चान्यतरनियमस्य ज्ञापकाभिरासेऽन्यतर एव स्थित इत्याशयेनाह

प्राण्यङ्गादीनामिति। (कै)

"सर्वो द्वन्द्व" (भा) इत्यत्र सर्वशब्द एतत्प्रकरणस्थसूत्रानुपात्तविषय इति भावः॥

लिङ्गमशिष्यमिति। (भा)

शास्त्रोक्तलिङ्गानुशासनस्य व्यभिचारदर्शनादिति भावः॥ भाष्ये

उत्तरत्र व्यभिचारार्थमिति। (भा)

---

र्थम्। मृगशकुनिग्रहणं त्ववशिष्यते। तन्नेत्थं वचनं क्रियते। यो विभाषाप्राप्त एकवचनो द्वन्द्वः स मृगाविशेषाणां तैरेव नान्यैरिति। तेनैषामन्यैः सह इतरेतरयोग एवेति फलितम्। एवं पूर्वापरमधरोत्तरमित्यत्रापि पशुद्वन्द्वत्वादेव सिद्धे अश्ववडवग्रहणं प्रतिपदविधानार्थम्। तेनैकवद्भावपक्षे

---

प्रकृतित्वे एतद्विकल्पाभावेऽपि जातिरप्राणिनामिति नित्यो विधिः स्यात्, फलादिषु तु न दोषः, एतद्विकल्पप्राप्त्यभावाल्लक्षणान्तरप्राप्तेरेव नियमनात्तस्मात्सर्वस्यैव प्रकरणस्यार्थशेषत्वादेतदाह। एषां बहुप्रकृति-रेवेति' 'एषां फलादीनां द्वन्द्वोऽनेन लक्षणान्तरेण वा एकवद्भवन् बहुप्रकृतिरेवैकवद्भवतीत्यर्थः। 'बदरामलके इति'। अत्र 'जातिर-प्राणिना'मिति न भवति। 'रथिकाश्वारोहाविति'। अत्र सेनाङ्गत्वाभावः। 'प्लक्षन्यग्रोधाविति'। अत्रायं विकल्पो 'जातिरप्राणिना'मित्यस्य

नित्यैकवद्भावस्य व्यभिचारार्थमित्यर्थः। स च क्वचिदेकवद्भावाभावेन क्वचिन्नित्यत्वाभावेन। एवं च मृगादीनां व्यतिकरे इतरेतरयोग एवोत्तरसूत्रविषयेऽधिकरणवाचिनामितरेतरयोग एवेति ध्वनितम्। तदुपपत्तिस्तयोर्विभाषा एकवचनो द्वन्द्वः स मृगाणां मृगैरेव द्वन्द्वेऽन्यत्र नेति वचनव्यक्त्याऽन्यत्र विप्रियभूतैकवचनद्वन्द्वस्यैव निषेधे इतरेतरयोग एवेति फलितत्वात्। एवं "विप्रतिषिद्धं च" (२।४।१३) इत्यत्रापि य एकवचनो विभाषा द्वन्द्वः स यदि विरुद्धार्थानां चेद्द्रव्यवाचिनामेवेति वचनव्यक्त्या द्रव्यवाचिनामितरेतरयोग एव फलति॥

---

पूर्ववदश्ववडवावित्येतद्बाधित्वा सनपुंसकमिति प्रवर्तते। तच्छब्दो हि एकवद्भावभाजं परामृशति। तेन एकवद्भाववन्नपुंसकत्वमपि प्रतिपदविहितः सम्पद्यते। पूर्ववदश्ववडवावितित्वेकवद्भावविरहपक्षे प्रवर्त्तते। अश्ववडवौ। अश्ववडवान्॥

---

न भवति, अवनस्पतीनां तु वृक्षविशेषाणामिबङ्क्प्रकृतित्वेऽप्ययं विकल्पो भवत्येव। आम्रपलाशम् आम्रपलाशौ, अन्ये तु वनस्पतिग्रहणं वृक्षमात्रोपलक्षणं मन्यन्ते। 'रुरुपृषतौ हंसचक्रवाकाविति'। अत्राप्यस्य विकल्पस्याभावः। 'यूकालिक्षे इति'। 'वाक्जन्तव' इत्यस्याभावः, मौक्षियवौ कुशकाशाविव्यत्र तूभयोः॥

# विभाषा समीपे । २ । ४ । १६ ॥

समाहारविषये "उपदशं पाणिपादम्" इत्येव । इतरेतरेतु "उपदशाः पाणिपादाः" इत्येवेष्यते । विपरीतमपि प्राप्नोतीत्याशयेन प्रश्न इत्याह

अनुप्रयोगे इति ॥ (कै)

भाष्ये

नैतदस्तीति । (भा)

सूत्रेण द्वन्द्वस्यैकवद्भावविधानेऽपि अनुप्रयोगानियमस्तदवस्थ एवेति नेदं सूत्रप्रयोजनमित्यर्थः । प्रश्ने "उदाहरण" शब्दोऽपि प्रयोजनपर एवेति भावः ॥

---

विभाषा समीपे ॥ अधिकरणैतावत्त्वस्य सामीप्येन परिच्छित्तौ समाहार एवेत्येवंरूपो नियमो वा स्यात् । उपदशं दन्तोष्ठम् । उपदशा दन्तोष्ठाः । अव्ययंविभक्तीत्यादिना सुबन्तसामान्येन विधीयमानोऽव्ययीभावः सङ्ख्ययापि भवति । बहुव्रीहिस्तु सङ्ख्ययाव्ययासन्नेत्यादिना विग्रिय विहितः । तत्रैकवद्भावपक्षे अव्ययीभावो ऽनुप्रयुज्यते । एकार्थस्य लेकार्थ

---

"विभाषा समीपे" ॥ अधिकरणैतावत्त्व इत्यधिकारात्समीपरूप एतस्मिन्निति गम्यते, वृत्तौ त्वर्थमात्रं दर्शितम् । 'अधिकरणैतावत्त्वस्य समीप इति' अत्र च भावप्रधानः समीपशब्दः, अधिकरणैतावत्त्वस्य सामीप्येन परिच्छित्ताविव्यर्थः । अत्र विकल्प एव नियमस्य प्रतिषेधः, नहि विभाषा समाहारद्वन्द्व प्रतिषेध्यः । 'अव्ययीभावो विहित इति' । अव्ययं विभक्तीत्यादिना । यद्यप्यत्र सङ्ख्येति नास्ति, सङ्ख्ययापि तु

## नन्वर्थस्येति। (कै)

एवं च समाहारद्वन्द्वपक्षेऽव्ययीभावस्य बहुव्रीहेर्वानुप्रयोगेऽपि द्वन्द्वार्थस्यैकवत्त्वादुपदशमित्येव भविष्यतीति भावः ॥

## अव्ययत्वादिति। (कै)

अव्ययत्वेनासंख्यत्वादित्यर्थः ॥

## सत्यपि वेति। (कै)

नाव्ययीभावात्" (२।४।८३) "तृतीयासप्तम्योः" (२।४।८४) इत्याद्यारम्भादसंख्यत्वमव्ययीभावातिरिक्ताव्ययविषयमिति भावः ॥

## अर्थेति। (कै)

अर्थस्यैकवत्त्वान्नित्यबहुवचनान्तस्याप्युपदशशब्दस्यैकवचनान्तत्व-संपत्तावपि पाणिपादस्येतिषष्ठ्यन्तसमभिव्याहारे उपदेशस्येति षष्ठ्याश्रयेतेति भावः। वस्तुतो नियमे मानाभावेनोभयत्रापि उभयानुप्रयोगः स्यात्। तथाच इतरेतरयोगे "उपदशपाणिपादा" इत्यपि स्यादिति भाष्यार्थः ॥

---

एवान्तरङ्गः। ऐकार्थ्यञ्च सामीप्यप्रधानत्वात्। यद्यप्यव्ययीभावो निःसंख्यस्तथापि भेदाभावरूपमैकार्थ्यं बोध्यम्। सामानाधिकरण्यन्तु सामीप्यतद्वतोरभेदविवक्षया। अधिकरणैतावत्त्वन्तु समाहारसमाहारिणोरभेदविवक्षया। पक्षान्तरे तु बह्वर्थस्य बह्वर्था बहुव्रीहिरेवानुप्रयुज्यते बह्वर्थत्वस्य

---

भवत्येव। 'बहुव्रीहिरिति'। सङ्ख्ययाव्ययासन्नेत्यादिना। तत्रैकवद्भावपक्षेऽव्ययीभावोऽनुप्रयुज्यत इति। एकार्थस्यैकार्थ इति भावः, ऐकार्थ्यञ्च तस्य सामीप्यप्रधानत्वात्, यद्यव्ययीभावोऽव्ययत्वान्निःसङ्ख्यस्तथापि भेदाभावरूपमैकार्थ्यमस्त्येव। सामानाधिकरण्यं च सामीप्यतद्वतोर्भेदाश्रयेण प्रति-

## एकवचनस्य त्विति। (कै)

तावतैव नाव्ययीभावादित्याद्युपपन्नसंख्यासंबन्धज्ञापकमिति भावः। पञ्चमीतृतीयासप्तमीग्रहणं तु स्पष्टार्थमेव पूर्वाचार्यानुरोधाद्वा। तदनुरोधफलं च तेषां प्रमादबोधनं क्वचित् स्वकृतप्रामाण्यबोधनं क्वचिदिति बोध्यम्॥ नन्वव्ययार्थे संख्याया अभावादेकार्थं इत्यनुपपन्नमत आह

## अभेदैकत्वेति। (कै)

तथाच भेदसहचरितद्वित्वाद्यभावरूपमेकार्थ्यं समीपप्रधानाव्ययीभावस्येत्यर्थः। एतेन समासेऽपि अन्तर्वर्तिसंख्याया अभानं बहुवचनादि तु एकशेषेणेति बोध्यम्॥

---

तस्य समीपे प्राधान्यात्। यदि तूभयत्राव्ययीभाव एवानुप्रयुज्येत। तदा तस्याव्ययत्वाद्बहुत्वाभावाद्बहुवचनं न स्यात्। सत्यपि वा तस्मिन्नभावे कृते उपदशा इति न स्यात्। बहुव्रीहेरेवानुप्रयोगे तु उपदशस्य पाणिपादस्येति षष्ठी स्यात्। उपदशं पाणिपादस्येति चेष्यते। तस्माद्यथोक्तमेव मनोरमम्॥

---

पाद्यम्, अधिकरणैतावत्त्वमपि समाहारसमाहारिणोर्भेदाविवक्षयैवोपपाद्यम्। 'इतरच बहुव्रीहिरिति'। बह्वर्थस्य बह्वर्थ इति भावः। बह्वर्थत्वं च तस्य समीपिप्रधानत्वात्। ननु द्वन्द्वार्थस्यैकवद्भावादनुप्रयोगस्याप्येकवचनता सिद्धा किमेतया क्लिष्टकल्पनया। उच्यते। अव्ययीभावस्यैवानुप्रयोगे तस्याव्ययत्वाद्बहुत्वाभावाद्बहुवचनं न स्यात्, सत्यपि वा तस्मिन्नभावे कृते उपदशा इति न स्यात्, बहुव्रीहेरेव चानुप्रयोगे उपदशस्य पाणिपादस्येति षष्ठी स्याद्, उपदशम्पाणिपादस्येति चेष्यते ऽतो यथोक्तमेव साधीयः॥

# तत्पुरुषोऽनञ्कर्मधारयः। २। ४। १९॥

इदानीन्तनसंज्ञायामतत्पुरुषादेरपि सम्भवादाह

अनादिरिति॥ (कै)

अनेति। (कै)

---

तत्पुरुषो ऽनञ्कर्मधारयः॥ अधिकारोयम्। कर्मधारयशब्दो भावप्रधानः। द्वन्द्वगर्भो नञा बहुव्रीहिः। न विद्येते नञ् च कर्मधारयत्वञ्च यत्र स तत्पुरुष इत्यर्थः। वक्ष्यति विभाषासेनासुरेत्यादि। तत्पुरुषः

---

"तत्पुरुषो ऽनञ्कर्मधारयः"॥ असन्देहार्थं नञ्कर्मधारयस्तत्पुरुष इति न्यासादनञ्कर्मधारय इति पदच्छेदः। अत्र कर्मधारयशब्दो भावप्रधानः। नञ्च कर्मधारयश्च नञ्कर्मधारयौ तौ न विद्येते यस्मिंस्तत्पुरुषे सोऽनञ्कर्म्मधारय इति बहुव्रीहिः। तत्पुरुषे त्वस्मिन्नसमासस्य तत्पुरुषस्याभावात्तद्युक्ततत्पुरुषो नञ्शब्देन लक्षणीयः स्यात्, लिङ्गवचनयोश्चान्यतरस्य अव्ययो वाच्यः स्यात्, अतो बहुव्रीहिरेव न्याय्यः, कृत्तौ वस्तुमात्रं दर्शितं 'नञ्समासं कर्म्मधारयं च वर्ज्जयित्वेति'। 'विभाषासेनेति'। अनन्तरेषु सूत्रेष्वस्य नातीवोपयोगः, संज्ञायां कस्येयञ्च तावदनादिः संज्ञा गृह्यते न वा तत्पुरुषो नञ्समासः कर्मधारयो वा उशीनरमु संज्ञास्ति, उपज्ञोपक्रममित्यत्रापि षष्ठीतत्पुरुषादिना तदादित्वासम्भवः। 'छाया बाहुल्य' इत्य-

शास्त्रस्थानादित्वादिति भावः॥

न च समूहिभिरिति। (कै)

तदंशे नित्यसाकाङ्क्षत्वादिति भावः॥

---

किम्। दृढसेनो राजा। नञ्रहितः किम्। असेना। कर्मधारयत्वरहितः किम्। परमसेना। मध्यमसूत्रेष्वयमधिकारो नातीवोपयुज्यत इति तत्रैव वक्ष्यामः॥

---

स्यापि पूर्वपदार्थधर्मो साकल्यं षष्ठीतत्पुरुषमन्तरेण न गम्यते। सभाराजेत्यत्र तु राजामनुष्यपूर्वेति वचनान्नञ्समासस्य कर्मधारयस्य च सभान्तस्याप्रसङ्गः। द्वन्द्वस्य तु प्राप्नोति। ईश्वरश्च सभा च ईश्वरसभे इति, अतस्तत्रापि तत्पुरुष इत्यस्यांशस्योपयोगोऽस्त्येव, 'अशाला चे'त्यत्र समूहवचनः सभाशब्दः समूहस्य च समूह्यपेक्षा स्फुटतरेति षष्ठीतत्पुरुषस्यैव भविष्यति नान्यस्य, ब्राह्मणश्च सभा च ब्राह्मणसभे असभा परमसभेति, अतो विभाषा सेनेत्यत्रैवास्य साक्षादुपयोग इति भावः॥

# परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः। २। ४। २६॥

तत्पुरुषे विधित्वेन चारितार्थ्यसम्भवादाह

द्वन्द्वेति॥ (कै)

विध्यर्थमिति। (कै)

अवयवार्थातिरिक्तः समुदायोऽलिङ्ग इति पक्षे इदम्॥

नियमार्थमिति। (कै)

उद्भूतावयवभेदः समूहः समासार्थः। लिङ्गेनैव लिङ्गवान् इति पक्षे इदम्॥ इदं पक्षद्वयं षष्ठ्यन्तत्वपक्षे। सप्तम्यन्तत्वे तु विध्य-

---

परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः॥ एतयोः परपदस्येव लिङ्गं स्यात्। कुक्कुटमयूर्याविमे। मयूरीकुक्कुटाविमौ। अर्धं पिप्पल्या अर्धपिप्पली। स्यादेतत्। यदि समासार्थस्य परवल्लिङ्गत्वमनेनातिदिश्यते तर्हि पूर्ववद-

---

"परवल्लिङ्गं द्वन्द्वतत्पुरुषयोः"॥ किमर्थमिदम्, इह द्वन्द्वे त्रीणि दर्शनानि। अवयवार्था एवापेक्षितपरस्परा द्वन्द्वार्था न तु तद्व्यतिरिक्तः समुदायो नामेत्येकम्। अवयवार्थव्यतिरिक्त एव समुदायो द्वन्द्वार्थः, स चावयवलिङ्गेन लिङ्गवानिति द्वितीयम्, स एव स्वयं लिङ्गशून्य इति तृतीयम्। तत्र पूर्वके दर्शनद्वये विभिन्नलिङ्गावयवद्वन्द्वे युगपदुभयलिङ्गानुपपत्तेः पर्यायेण लिङ्गद्वयप्रसक्ते परस्यैव लिङ्गं भवतीति नियमार्थं भवति। तृतीये

र्थत्वमेवेति बोध्यम् ॥ इदं द्वन्द्वांशेन समाहारविषये । तस्य विशिष्यनपुंसकत्वाविधानात् किन्तु इतरेतरयोगविषयषष्ठीति द्वन्द्वतत्पुरुषयोरित्यत्रायं सन्देहः । तत्र षष्ठीपक्षे उद्भूतावयवभेदसमुदायस्य समासार्थत्वात् । अवयववचनवत्तन्निमित्तानेकलिङ्गप्राप्तौ नियमायायमित्याह

नियमश्चेतीति ॥ (कै)

समुदायार्थो नास्ति इति । (कै)

उद्भूतावयवभेदस्य तस्य द्वन्द्वार्थतया नावयवार्था इत्यन्ततिरिक्तः स इत्यर्थः॥

अपेक्षितपरस्परौ (कै)

इत्यनेन समूहरूपतासमासार्थस्योक्ताविरुद्धलिङ्गावयवार्था वा

---

अश्वडवाविति सूत्रेणापि न्यायसाम्यात्समासस्यैवातिदेशत्वम् । ततश्च टाप् स्यैत समासार्थस्य पुंस्त्वेपि उत्तरपदार्थस्य स्त्रीत्वावगमात् । यत्तु गोस्त्रियोरिति ह्रस्व इति तन्न । चार्थे द्वन्द्व इत्यत्रानेकमित्यधिकारात्सर्वेषां प्रथमानिर्दिष्टत्वेऽपि प्राधान्यादुपसर्जनसंज्ञाविरहात् । अन्वर्थसंज्ञा हि सा।

---

नु समासार्थस्यालिङ्गस्य परवल्लिङ्गता भवतीति विध्यर्थः । तत्पुरुषोऽपि द्विविधः, पूर्वपदार्थप्रधानो ऽर्धपिप्पल्यादिः, उत्तरपदार्थप्रधानो राजकुमार्यादिः, तत्रोत्तरपदार्थप्रधाने प्राधान्यादेव परवल्लिङ्गस्य सिद्धत्वात्पूर्वपदार्थप्रधाने विध्यर्थं भवति, तत्र वृत्तिकारेण विधिपक्ष आश्रितस्तदाह । 'परस्य यल्लिङ्गं तद्भवतीति'। एवं हि सूत्रस्यैकरूपा वचनव्यक्तिर्भवति, इतरथा तत्पुरुषे विधिरूपा द्वन्द्वे नियमरूपेति वचनव्यक्तिभेदः स्यादिति भावः । 'द्वन्द्वस्य तत्पुरुषस्य वेति'। एतेन द्वन्द्वतत्पुरुषयोरिति षष्ठीयमिति

इत्यनेनोद्भूतावयवभेदता तस्य सूचिता। यथावयवसंख्यावद्वयव-
लिङ्गग्राहीति मते नियमार्थत्वमुक्तम्॥

**पर्यायेणेति।** (कै)

विरुद्धलिङ्गावयवद्वन्द्वस्थले इत्यर्थः॥

**यद्येवमिति।** (कै)

परस्यैव लिङ्गं न पूर्वस्य इत्यर्थादतिनेर्नोपपद्यत इति भावः॥

**केवलाकेवलेति।** (कै)

समस्तासमस्त इत्यर्थः॥

भाष्ये

**द्वैवकृतमिति।** (भा)

उपमितसमासः समानलिङ्गपदयोरेवेति। अत्रापि न दोष
इति भावः॥

---

अत एव राज्ञः कुमार्याः राजकुमार्या इत्यत्र न ह्रस्व इत्युक्तम्। अत एव
च कुक्कुटमयूर्याविव्यत्र न ह्रस्वः। ननु माऽस्त्वन्वर्थता। तथा चाप्यवक्तव्याविति
सिद्ध्यति। राजकुमार्याः कुक्कुटमयूर्याविव्यत्र तु ह्रस्वे कृते पुनः स्त्रीप्रत्ययात्

---

दर्शयति। समस्यां त्वयमर्थो भवति द्वन्द्वे तत्पुरुषे च यत्परं तद्वल्लिङ्गं
भवतीति। तत्र कार्यिणोऽनुपादानात्परशब्दस्य च सम्बन्धिशब्दत्वात्तदाक्षि-
प्तस्य पूर्वपदस्य लिङ्गविधिर्भवति यद्वा द्वन्द्वे तत्पुरुषे च विषये परस्यैव लिङ्गं
भवतीत्युत्तरार्थः। तत्रापि पूर्वपदस्यैव लिङ्गविधिः। अत्र पक्षे मयूरी-
कुक्कुटाविव्यत्रोत्तरपदार्थलिङ्गे पूर्वपदार्थस्यातिदिष्टे स्त्रीप्रत्ययस्य निवृत्तिः
प्राप्नोति। कुक्कुटमयूर्यौ राजकुमारी अर्द्धपिप्पलीत्यादौ पूर्वपदे स्त्रीप्रत्य-

सप्तमीति । (कै)

अवयवषष्ठ्यभिप्रायेणेत्यन्ये ॥

स्त्रीप्रत्ययनिवृत्तीति । (कै)

अतिदेशविरुद्धत्वात् स्वाश्रयस्यापि निवृत्तिरित्यर्थः ॥ अतिदिश्यमानधर्मप्रयुक्तकार्यविशेषमप्याह

कुक्कुटेति ॥ (कै)

नन्वेवं सूत्रवैयर्थ्यमत आह

पूर्वपदप्रतिषेधे चेति ॥ (कै)

व्यतिरिक्तसमुदायेति । (कै)

तथा च परपदार्थलिङ्गसदृशलिङ्गसमुदायरूपार्थस्येत्यर्थादप्युपपत्तिरिति भावः । समासात्त्वत एव लिङ्गस्यान्यत्वाद्भूयें विशेषणं समासस्यातिदिश्यत इति च वक्तुं युक्तमत आह

---

सिद्धम् । तदुक्तम्, परवल्लिङ्गमिति शब्दशब्दार्थाविति । तथाह । लिङ्गशब्देन लिङ्गाभिधायी प्रत्ययार्थश्च गृह्यते । तन्त्राद्याश्रयणात् । एवञ्च द्वन्द्वार्थस्य तत्पुरुषार्थस्य च परस्येव लिङ्गं स्यात् । तदभिधायी प्रत्ययश्च

---

यप्रसङ्गः । किं पुनरस्मिन्पक्षे किंचिदिष्टं सिध्यति आहो स्विद्दोषान्तरमेव, सिध्यतीत्याह । 'इह पूर्वकायः, अर्धद्रोण इति' । यत्र पूर्वपदं नपुंसकमुत्तरपदं च पुंलिङ्गं तत्र परस्य लिङ्गे पूर्वस्यातिदिष्टे समासस्यापि तदेव भवति, न च पूर्ववदिह किं चिदनिष्टमापद्यते । द्वन्द्वेऽपि पूर्वके दर्शनद्वये गुणकर्मणी द्रव्यगुणावित्यादौ यत्र पुंनपुंसकाभ्यां भिन्नलिङ्गे पूर्वोत्तरपदे यत्र वाऽवर्णान्तं स्त्रीप्रत्ययान्तं वा परं न भवति शनिस्थाने योषित्पुरुषौ तित्ति-

**समासार्थेति ॥** (कै)

**स्वलिङ्गबाधनायेति।** (कै)

स्वलिङ्गञ्च नपुंसकमित्यभिमानः। यदि तु वनं सेनासङ्ग इति तत्तस्यानेकलिङ्गत्वं तदात्रापि पक्षे नियमार्थत्वमेवेति बोध्यम् ॥

**वचनान्तरे इति।** (कै)

द्विवचनविषयमेव निपातनस्य तस्माद्वचर्यालिङ्गातिदेशोऽपि तत्रैव स्यादित्यभिमानः ॥

**समुदायार्थे इति।** (कै)

इतरेतरयोगेऽप्युद्भूतावयवभेदः समुदाय एव समासार्थ इति भावः ॥

---

परस्यैवेति सूत्रार्थः। तथा च यत्र द्रव्यगुणौ गुणकर्मणी इत्यादौ लिङ्गाभिधायी प्रत्ययो न सम्भवति तत्रार्थ एवातिदिश्यते। उभयसम्भवे तूभयम्। यथा कुक्कुटमयूर्यावित्यादौ। ततश्च औपदेशिकस्य ह्रस्वत्वेऽप्यातिदेशिकस्य श्रवणं भविष्यति। न च पुनर्ह्रस्वः शङ्क्यः। अनुपसर्जनत्वात्तदन्तस्याप्राति-

---

शिवलाके इति तत्रोत्तरपदार्थलिङ्गे पूर्वपदार्थस्यातिदिष्टे द्वन्द्वस्य पर्यायेण द्वयोरपि लिङ्गे प्रवृत्तेऽपि सर्वमिष्टं सिध्यति, पूर्ववदेव न किंचिदनिष्टमापद्यते। व्यतिरिक्तो द्वन्द्वार्थः स्वयं लिङ्गशून्य इत्यत्र तु पक्षे द्वन्द्वार्थस्यालिङ्गत्वं तदवस्थमेवेति दोषान्तरमेव। 'द्वन्द्वस्य तत्पुरुषस्य चेति'। द्वन्द्वार्थस्य तत्पुरुषार्थस्य चेत्यर्थः। तेनानुप्रयोगेऽपि तदेव लिङ्गं भवति। यदि तर्हि षष्ठ्याश्रयणेन समासार्थस्य परवल्लिङ्गमतिदिश्यते 'पूर्ववदश्ववडवा' वित्यत्रापि पूर्वपदार्थलिङ्गं समासार्थेऽतिदिश्येत ततश्चोत्तरपदार्थस्य स्त्रीत्वं

## कुक्कुटमयूरी इति। (कै)

अन्तरङ्गत्वात्पूर्वं ङ्गृखले कृते "दीर्घादि"तिनिषेधानन्तरात्पूर्वसवर्णदीर्घापत्तिरिति भावः। "द्वन्द्वेनेति" निषेधे तु अश्ववडवेत्यत्रापि तदनापत्तिरिति तात्पर्यम्॥

## तस्यानुपसर्जनत्वादिति। (कै)

समुदायात्तस्यातिदेशादित्यर्थः। अत एव तदन्तस्याप्रातिपदिकत्वमपि बोध्यम्॥ अयं हेतुर्लिङ्गविशिष्टभावासत्त्वान्नित्यः॥

## यकारद्वयश्रवणेति। (कै)

न च पुनर्द्वित्वप्रवृत्त्या तदपि दृष्टमेव लक्ष्ये लक्षणस्य सकृत्प्रवृत्त्या पुनर्द्वित्वाप्रवृत्तेरिति भावः॥

---

पदिकत्वाच्च। न चैवमपि दत्तागार्ग्यायण्यौ दत्ताकारीषगन्ध्ये इत्यत्र ङ्गृखले कृते समासात्पुनः फक्ष्यङौ स्यातामिति वाच्यम्। भस्याढे तद्धित इति पूर्वोत्पन्नयोर्निवृत्तिसम्भवादिष्टापत्तेरिति। मैवम्। दत्ता च युवतिश्च दत्तायुवती इत्यत्र तिप्रत्ययद्वयश्रवणापत्तेः तत्राभत्वेन पुंवद्भावायोगात्।

---

श्रितमेवेति टापः श्रवणप्रसङ्गः। सप्तमीपक्षे तु 'पूर्ववदश्ववडवा' वित्यत्रापि पूर्वपदार्थलिङ्गमुत्तरपदार्थस्यातिदिश्यत इति वडवाशब्दस्य पुंस्त्वातिदेशात् स्त्रीत्वाभावे टापो निवृत्तिः सिध्यति। निपातनात्सिद्धम्। किं निपातनम्, न ताव'त्पूर्ववदश्ववडवा'विति निपातनमाश्रयितुमुचितम्, वचनान्तरे ऽनतिदेशप्रसङ्गाद् अश्ववडवान् अश्ववडवैरिति। एवं तर्ह्यश्ववडवपूर्वापराधरोत्तराणामित्यत्र टापोनुच्चारणान्निपातनादश्ववडवयोर्द्वन्द्वे टाप्निवर्तिष्यते। अपर आह। 'चार्थे द्वन्द्व' इत्यत्रानेकमित्यधिकारात्सर्वेषामेव वर्तिपदा-

भस्याढ इति । (कै)

ष्यङ्ष्फयोस्तद्धितत्वादिति भावः ॥

अन्वर्थेति । (कै)

अप्रधानस्यैव प्रथमानिर्दिष्टस्योपसर्जनसंज्ञाविधानादित्यर्थः ॥

अवयवानां कार्यसम्बन्धादिति । (कै)

प्रत्याहत्योरिव समाहारसमाहारिणोरभेदेनेति भावः ॥ अन्व-र्थत्वानङ्गीकारे तु ह्रस्वविधायके द्वन्द्वेनेति वचनकरणान्न दोष इति भावः ॥

*ननु तद्व्यतिरिक्त इति । (कै)

अत्यन्तं व्यतिरिक्त एवेत्यर्थः । अत एवापेक्षितपरस्पराविति सङ्गच्छते ऽनेन समूहरूपतावयवयोः सूच्यते । अत एव पचन्ये

* उपलब्धकैयटपुस्तके 'न तु व्यतिरिक्त' इति पाठो दृश्यते ।

तस्मादुपसर्जनत्वं द्वन्द्वे नास्त्येव अन्वर्थत्वादिति स्थितम् । अश्ववडवावित्यत्र स्त्रीप्रत्ययनिवृत्तौ उपायान्तरं वक्तव्यमिति । उच्यते । विभाषावृक्षमृग-गेतिसूत्रे ऽश्ववडवेत्यत्र टापो निवृत्तिर्निपात्यते । तदुक्तम्, समासादन्य-

र्थानां प्रथमानिर्दिष्टत्वेनोपसर्जनत्वा 'द्गोस्त्रियोरुपसर्जनस्ये'ति ह्रस्वत्वं भवि-ष्यति, इहापि तर्हि प्राप्नोति कुक्कुटमयूर्याविति, अस्तु, का रूपसिद्धिः, परवल्लिङ्गमिति शब्दशब्दार्थौ, कोऽर्थः, लिङ्गशब्देन लिङ्गाभिधायी प्रत्य-योऽर्थस्य तस्यैवैकदेशेन वोच्यते तदयमर्थो भवति द्वन्द्वार्थस्य तत्पुरुषार्थस्य परस्येव लिङ्गं भवति तदभिधायी प्रत्ययस्य परस्येव भवति ताभ्यामिति ।

बोधाविशेषः। अन्यथा फलभेदः स्यादेतेनागं कैयटः साहित्यमितरेतरयोगे विशेषणमित्येवंपर इति वदन्तः परास्ताः॥

नियमार्थमिति। (कै)

पर्यायेण लिङ्गद्वयप्राप्ताविति भावः॥

अवयवार्थव्यतिरिक्तो वेति। (कै)

व्यतिरिक्त एवेत्यर्थः॥

स चावयवलिङ्गेनेति। (कै)

अवयवसंख्यया संख्यावानित्यपि बोध्यम्॥

स चालिङ्ग इति। (कै)

उद्भूतावयवभेदत्वे ऽपि तल्लिङ्गत्वे मानाभाव इति भावः। नपुंसकलिङ्ग इति वक्तुमुचितम्॥

---

लिङ्गमिति चेदश्ववडवयोष्टाब्लुग्वचनं निपातनात् सिद्धमिति॥ द्विगुप्राप्तापन्नालंपूर्वगतिसमासेषु प्रतिषेधो वक्तव्यः॥ पञ्चसु कपालेषु संस्कृतः पञ्चकपालः पुरोडाशः। प्राप्तो जीविकां प्राप्तजीविकः। आपन्नजीविकः।

---

तत्र च यत्र अश्वगुणौ गुणकर्मणी अर्द्धद्रोण इत्यादौ लिङ्गाभिधायी प्रत्ययो न संभवति तत्रार्थ एवातिदिश्यते उभयसम्भवे तूभयं यथा कुक्कुटमयूर्याविति, तत्रश्चौपदेशिकस्य श्रवणेप्यातिदेशिकस्य श्रवणं भविष्यति, तस्य चानुपसर्जनत्वात्तदन्तस्य चाप्रातिपदिकत्वात्पुनर्ह्रस्वत्वाभावः, इह तर्हि दत्तागार्ग्यायण्यौ दत्ताकारीषगन्ध्ये इति ह्रस्वत्वे कृते समासात्पुनः ष्फष्यङौ प्रसृतः, तयोः, 'भस्याढे तद्धिते' इति पूर्वोत्पन्नयोर्निवृत्तिर्भविष्यति। यत्र

**अथवेत्यादि** (भा)

भाष्यस्य "यदि पुनर्यथाजातीयमि"त्यादिनोक्तार्थस्यैवानुवाद-परमिति बोध्यम्॥

**यदिपुनरि-** (भा)

त्यादिग्रन्थस्यापि विधिपरत्वात् स्वलिङ्गबाधनायेति व्याचक्षाणे-नोपाध्यायेन विधित्वमुक्तप्रायमेव॥ अन्ये तु

**यदि पुनरिति** (भा)

भाष्यस्य समासस्येति पदकर्तव्यता परता द्वन्द्वतत्पुरुषयोरिति पदावृत्तिपरता वा॥

**अथवेत्यादेश्च** (भा)

तत्प्रत्याख्यानपरतेति वदन्ति॥

---

अलंकुमारिः। निष्कौशाम्बिः। भाष्ये त्वेतत्प्रत्याख्यातम्। तथाहि। तत्पुरुष-ग्रहणं न करिष्यते। परवल्लिङ्गं द्वन्द्वस्येत्येव। कथं पूर्वकायोऽर्धपिप्पलीति। एकदेशिसमासोऽपि नारभ्यते। कर्मधारय एवायं पूर्वश्चासौ कायश्च अर्धं-चासौ पिप्पली चेति। ततश्च प्राधान्यादेवोत्तरपदार्थस्य लिङ्गं भवति। न

---

तर्हि पुंवद्भावो नास्ति अभत्वाद् यथा दत्ता च युवतिश्च दत्तायुवती इति तत्र द्वयोः स्त्रीप्रत्यययोः अवणप्रसङ्गः, तस्मादुपसर्जनकृतत्वं द्वन्द्वे न भवति। अन्वर्था ह्युपसर्जनसंज्ञा ऽप्रधानस्य विधीयते, द्वन्द्वे चावयवार्थाना-मेव कार्यान्वयादप्राधान्याभावः। परवल्लिङ्गमिति चार्थ एवातिदिश्यते-ऽश्ववडवाविति च निपातनादित्येतदेव सम्मति। 'द्विगुप्राप्तापन्नेत्यादि'। स तर्हि प्रतिषेधो वक्तव्यो न वक्तव्यस्तत्पुरुषग्रहणं न करिष्यते परवल्लिङ्ग

अतः पूर्वपदस्येति । १(कै)

अप्राप्तेरित्यर्थः ॥

आश्रयभेदादिति । (कै)

समुदायरूपस्य केवलस्य चाश्रयस्य भेदादित्यर्थः ॥ मध्ये तु पक्षे भाष्यानुपपत्तिस्त्विन्त्यः । एकदेशिसमासानारम्भे ऽपीह तत्पुरुषग्रहणे प्राप्तादिषु दोषस्तदवस्थो ऽत आह

द्वन्द्वस्येत्येतावदिति ॥ (कै)

भेदविवक्षायां षष्ठीत्यस्याभेदे समानाधिकरणसमासस्येति विषयभेदात्परत्वादित्यनुपपन्नमत आह

अयमर्थ इति । (कै)

एवञ्च परत्वादित्यस्योत्कृष्टत्वादित्यर्थ इति भावः ॥

---

च षष्ठीसमासबाधनार्थमेकदेशिसमासो ऽवश्यारब्धव्य इति वाच्यम् । इष्टत्वादनभिधानाच्च । तथाहि । द्वितीयतृतीयेत्यत्रान्यतरस्यांग्रहणात्सूत्रकारस्यापि षष्ठीसमास इष्टोऽर्धशब्देनापि षष्ठीसमासो भाष्यकाराणामिष्ट

---

द्वन्द्वस्येत्येव, कथं पूर्वकायः अर्धपिप्पलीति, एकदेशिसमासो नारप्स्यते, कर्मधारय एवात्र भविष्यति पूर्वश्चासौ कायश्च अर्धं चासौ पिप्पली चेति । पूर्वादयः शब्दा एकदेशे वर्तन्ते कायादयस्तु समुदाये कथमेषां सामानाधिकरण्यम्, अवयवेन समुदायोपचारात् । तदेवं कर्मधारये कृते प्राधान्यादेवोत्तरपदार्थस्य लिङ्गं भविष्यति नार्थस्तत्पुरुषग्रहणेन नाप्येकदेशिसमासेन, षष्ठीसमासप्रसङ्ग इति चेन्नेष्टत्वादनभिधानाच्च । तत्रैतत्स्यात् । यद्यपि पूर्वकाय इत्यादीनि रूपाणि कर्मधारयेणापि सिध्यन्ति

**एवमादीति।** (कै)

भेदाश्रयणस्य मुख्यत्वेऽपीदृशप्रयोगसिध्यर्थमेवोपचाराश्रयणमिति भावः॥

**मुनित्रयाच्चेति।** (भा)

एवञ्च सूत्रत्रयविषयेऽपि षष्ठीसमासस्य साधुत्वे कर्मधारयस्य चेति भावः॥

**पिप्पल्यर्धमित्यपी-** (भा)

त्यपिना सूत्रत्रयोदाहरणसंग्रहो बोध्यः॥

---

इति प्रागेवोक्तम्। पूर्वापरेत्यत्र त्वनभिधानात्षष्ठीसमासो न भविष्यतीति। इदञ्च प्रत्याख्यानं दुर्बलम्। अनभिधानाश्रयणमगतिकगतिरिति सम्प्रत्ययविधौ भाष्य एवोक्तत्वात्।

---

तथापि मुख्यार्थवृत्तिषु कायादिशब्देषु यथा पूर्वं कायस्येत्येवमादि वाक्यं भवति तथा कायपूर्वं इत्यादि षष्ठीसमासोऽपि स्याद् अतस्तन्निवृत्तये एकदेशिसमास आरब्ध इति तच्च नैवम्, इष्टत्वादनभिधानाच्च। तत्र तावद् द्वितीयतृतीयेत्यत्रान्यतरस्यांग्रहणात्सूत्रकारस्य षष्ठीसमास इष्टो भिक्षाद्वितीयमिति, 'अर्धं नपुंसक'मित्यत्रापि भाष्यकार आह इष्यतेत्र षष्ठी समासोऽपि तद्यथा ऽपूपार्धं मया भक्षितमिति, अस्ति च पैङ्गले सूत्रे प्रयोगः स्वरार्द्धं चार्यार्धमिति। पूर्वापरेत्यत्र त्वनभिधानात् षष्ठी समासो न भविष्यति॥

# रात्राह्नाहाः पुंसि । २ । ४ । २९ ॥

अनुवाकादय इति । (भा)

रात्राह्नाहाः पुंसि ॥ एतदन्तौ द्वन्द्वतत्पुरुषौ पुंस्येव । रात्रेः पूर्वो भागः पूर्वरात्रः । एकदेशिसमासः । अह्नः सर्वैकदेशेत्यच् समासान्तः । पूर्वाह्णः । राजाहःसखिभ्य इति टच् । अह्नोऽह्न एतेभ्य इत्यह्नादेशः । अह्नोऽदन्तादिति णत्वम् । द्व्यहः । न संख्यादेःसमाहार इत्यह्नादेशाभावः । अह्नष्टखोरेवेति टिलोपः । परवल्लिंगापवादोयं योगः । वृत्तौ तु एते पुंसीत्युक्तम् । तत्राप्येतदन्ता इत्यर्थो बोध्यः । यत्तु रात्रादीनामेवानेन पुंस्त्वे कृते तदन्तस्य परवल्लिंगमित्येव सिद्धिमिति । तन्न । समाहारे नपुंसकत्वापत्तेः । परवल्लिङ्गत्वापवादो हि स नपुंसकमिति योगः । न च नपुंसकत्वे इष्टापत्तिः । द्विरात्रस्त्रिरात्र इति वृत्तिकारीयोदाहरणविरोधात् । तद्धि समाहारे द्विगुरिति सर्वैर्व्याख्यातम् । अमरोपि प्रायुङ्क्त । ते तु त्रिंशद-

---

"रात्राह्नाहाः पुंसि" ॥ 'इत्येते पुंसि भाष्यन्त इति' । केचिदाहुः । रात्रादीनामेवानेन पुंस्त्वं विधीयते तदन्तस्य तु परवल्लिङ्गमित्येव सिद्ध-मिति, एवं तु समाहारे 'स नपुंसक'मित्येतदेव स्यात् परवल्लिङ्गापवाद-त्वात्तस्य, तस्माद्रात्राद्यन्तस्य समासस्यैवेदं लिङ्गविधानं युक्तम्, एवं हि समाहारेपि परत्वादिदमेव प्रवर्त्तते । इत्येते पुंसि भाष्यन्त इत्यत्र त्वेतदन्ता इत्यर्थो द्रष्टव्यः । 'त्रिरात्र इति' । समाहारे द्विगुः, अह्नः सर्वैकदेशेत्यच्

अनुवाको वाक्यमिति प्रयोगसिद्धये इदमित्याह

तच्च विशिष्टमिति ॥ (कै)

---

होरात्र इति, मासेन स्यादहोरात्र इति च । तस्मात्तदन्तस्यैवायं पुंस्त्वविधिः । यद्यपि संनिधानात्परवल्लिंगताया एवायमपवादस्तथापि परत्वान्नपुंसकतां बाधते । अत्रेदं चिन्त्यम् । उक्तरीत्याहोरात्र इत्यत्र पुंस्त्वमस्तु । द्विरात्रादौ हि वृत्तिकारहरदत्ताद्युक्तं पुंस्त्वमसङ्गतम् । तत्र विशिष्टक्लीवताविधेः । तथा च लिङ्गानुशासनसूत्रम् । अपथपुण्याहौ नपुंसकौ ॥ संख्यापूर्वा रात्रिरिति । अमरोप्याह । रात्रेः प्राक् संख्यायाम्वितमिति, गणरात्रं निशाबहुत्वय इति च ॥ अनुवाकादयः पुंसीति वक्तव्यम् ॥ अनुवाकः । शंयुवाकः । सूक्तवाकः । वाक्यविशेषस्यैताः संज्ञाः । कर्मणि घञन्ता इति नपुंसकत्वे प्राप्ते वचनम् ॥

---

समासान्तः । पूर्वाह्ण इति' । अह्नः पूर्वो भागः एकदेशिसमासः । 'राजाहःसखिभ्यष्टच्' । 'अह्नोह्न एतेभ्य' इत्यह्नादेशः 'अह्नोऽदन्ता'दिति णत्वम् । 'द्व्यह इति' । 'न संख्याऽऽदेः समाहार' इत्यह्नादेशाभावः, 'अह्नष्टखोरेवे'ति टिलोपः । 'अनुवाकादयः पुंसीति' । वाक्यविशेषस्य ताः संज्ञाः कर्मणि घञन्ता इति नपुंसकत्वे प्राप्ते वचनम् ॥

# अपथं नपुंसकम् । २ । ४ । ३० ॥

उत्तरपदार्थप्राधान्यात्परवल्लिङ्गत्वाच्च सूत्रेणैव सिद्धमत आह

## राचाह्नाहा इति । (कै)

"पथः संख्येति" वार्त्तिके कृतसमासान्तपथिन् शब्दस्यैव ग्रहणं साहचर्यादिति बोध्यम् । तेनातिपन्था इत्यादौ न दोषः । सत्पथ इत्यादौ तु "स्वतिभ्यामेवेति" नियमात्समासान्तो ऽस्त्येवं तदेव "संख्याव्ययादेरि"त्यस्य व्यावर्त्यमित्याहुः ॥

## पूर्वकालत्वादिति । (कै)

सूत्रप्रत्याख्यानपरमेव वार्त्तिकमिति भावः ॥

## द्विगोरप्राप्तमिति । (कै)

वस्तुतो व्यवहितद्विगुग्रहणस्य तत्र सम्बन्धबोधकमिदं सम्बोधनप्रथमैवेति न प्रथमासाचमित्यर्थः ॥

## समाहारद्विगोश्चेति । (कै)

समूहसमूहिनोरत्यन्तभेदाभावात्स्वपदार्थप्रधानत्वेनान्तरङ्गत्वाद्व्याख्यानाच्च तस्यैव ग्रहणमिति भावः ॥

---

अपथं नपुंसकम् ॥ इदं नपुंसकं स्यात्तत्पुरुषे । समासान्तरे तु अपथो देशः । अपथा नगरी । कृतसमासान्तनिर्देशान्नेह । अपन्थाः ॥

---

"अपथं नपुंसकम्" ॥ 'पथः संख्याव्ययादे'रित्यस्यापरकालभावित्वादयमारम्भः । ''अपथमिति' । 'पथो विभाषे'ति यदा समासान्तप्रति-

यदा पञ्चगाव इति । (कै)

अयं पक्षस्तु तत्रैव भाष्ये दूषितः । षार्थबोधकसमाहारपदे-ऽपि कर्मसाधनतापत्तौ बहुपद्रव इति चिन्त्यमेतत् ॥

क्षते इति । (भा)

अन्यथादन्तत्वाभावात्तत्त्वादिति भावः ॥

न तु समाह्रियमाण इति । (कै)

एवञ्च कर्मसाधनव्युत्पत्तिरसङ्गतेति तामवष्टभ्य स्त्रियां पञ्च-खट्वीत्यपि रूपमिति न वाच्यमिति बोध्यम् ॥

परत्वादिति । (कै)

यौगपद्यासम्भवरूपविरोधाभावाच्चिन्त्यमिदम् ॥ सन्नियोगशिष्टत्वे पञ्चतक्षमित्युदाहरणानुपपत्तिरत आह

च शब्देनेति ॥ (कै)

"नलोपः प्रातिपदिकेति" नलोपसिद्धिमाशङ्क्याह

उत्तरेति ॥ (कै)

तादर्थ्ये इति (कै)

पाचात्वादिप्रयोगसिध्यर्थमित्यर्थः ॥ अत एव वृद्धिसूत्रे (१।१।१) सूत्रशब्दस्यापाचादित्वे कैयटसंमते ऽपि न चिन्तूणीत्यादि-प्रयोगविरोध इति बोध्यम् ॥

---

षेधो न भवति तदर्थं पूरब्धूरित्यकारः समासान्तः । समासान्तनिर्देशाच्च तदभावपक्षे पुंस्त्वमेव भवत्यपथा इति । 'तत्पुरुष इति वर्तत इति' । एतदर्थमेव 'स नपुंसक'मित्यस्यानन्तरं न कृतम् ॥

# इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ । २ । ४ । ३२ ॥

कथितानुकथनस्यान्वादेशत्वे वार्त्तिकानुत्थानादाह

पश्चादिति ॥ (कै)

तृतीयादौ विहितादेशस्य द्वितीयादावप्रसक्तेराह

एनादेश इति । (कै)

सूत्रद्वयस्याप्यन्वादेशविषयत्वादित्यर्थः । एवञ्च समानाधिकरणग्रहणेन कथितानुकथनमेवान्वादेश इति बोध्यते ॥ एवञ्चोत्तरवार्त्तिकं व्यर्थमत आह

---

इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ ॥ अन्वादेशविषयस्येदमोनुदात्तोऽशादेशः स्यात्तृतीयादौ । प्रतेर्बभूविचक्षणं शंसामि, माध्याक्षा अनु, इह बभ्रूशब्देनोक्तयोरिदमा परामर्शेप्यन्वादेशो भवत्येव । अन्वादेशस्य कथितानुकथनमात्रं नत्विदमा कथितस्येदमैवानुकथनमिति भाष्योक्तेः । न चैवमीषदस्य इति श्लोके यच्छब्देनोक्तस्य पुनः कथनादेतमातमित्यन्वादेशः

---

"इदमोऽन्वादेशेऽशनुदात्तस्तृतीयादौ" । 'अन्वादेशोऽनुकथनमिति' । शब्दार्थकथनमेतत्, यादृशस्त्वत्राभिप्रेतस्तादृशं पश्चाद्वक्ष्यति । 'आभ्यां छात्राभ्यामिति' । आदेश एषः । 'अथो आभ्यामिति' । एषोन्वादेशः । अथोशब्देन चात्रान्वादेशोऽभिव्यज्यते । ननु तृतीयादावयमादेशस्तत्र च

**प्रत्यासत्त्येति ॥** (कै)

तदेवाह भाष्ये

**तद्द्वेष्यमिति ।** (भा)

तथा च स्वतात्पर्यं वार्त्तिककृता वार्त्तिकान्तरेण व्याख्यातमिति भावः ॥

**कथितमि-** (कै)

त्यज्ञाते सत्कथितमित्यर्थः। तेन "तमातमि"त्यादौ नादेश इति बोध्यम् ॥

**नापि चेति ।** (कै)

अभ्युपेत्यवादेनेदम् ॥ भाष्ये

---

स्यादिति वाच्यम्। किञ्चिद्विधायान्यद्विधातुमनुकथनस्यैवान्वादेशत्वात्। इंषदर्थादिवृत्तेस्त्वनुवादेऽप्यविधानात्। अशादेशवचनं साकच्कार्थम्। अन्यथान्वादेशे ऽज्ञातार्थविवक्षायामिमकाभ्यामित्यपि प्रसज्येत। ननु त्यदाद्यत्वेन सिद्धौ विधानसामर्थ्यात्सर्वादेशोऽस्तु किं शित्वेन। मैवम्। आभ्यामेभिरित्यादौ विकाराभावार्थतापत्तेः, मोराजीतिवत्। नन्वाभ्यामिन्द्रपक्षमित्यादावन्वादेशत्वविवक्षाविरहे यथा ऊडिदमिति विभक्त्युदा-

---

टायामोसि चैनादेशो वक्ष्यते ऽन्याः सर्वा हलादयस्तत्र हलि लोपेनैवाभ्यामित्यादिरूपं सिद्धं नार्थ आदेशवचनेन, तत्राह। 'आदेशवचनमिति'। अज्ञातार्थविवक्षायामकचि कृते 'हलि लोप' इत्यत्रा 'नाद्यक' इत्यतोऽक इत्यधिकारादिद्रूपलोपो न स्यात्, सत्यपि च तस्मिन्नाभ्यामित्यादि रूपं न सिद्धेत्, तस्मात्साकच्कार्थमादेशवचनं, साकच्कार्थे चास्मिन् शित्करणं

रात्रिरधीतेति । (भा)

द्रव्यकर्मणाऽविवक्षितत्वात्कालकर्मणि क्तः । सम्बन्धस्याविवक्षणादत्यन्तसंयोगाविवक्षणाद्वा षष्ठ्यपवादः "कालाध्वनोरिति" (२।३।५) द्वितीया न कृता ॥ मकारस्यादेशे विकारवचनानर्थक्यानुपपत्तिरित्याह

त्यदादित्वादिति । (कै)

परत्वात्त्यदाद्यत्वं मन्यते ॥ भाष्ये

ये ऽन्ये इति । (भा)

दीर्घत्वादयः पररूपश्चेत्यर्थः ॥ भाष्ये

---

स्ता तथा माभ्यां गा इत्यत्रापि कुतो नेति चेन्न । तत्र प्रकृतेरनुदात्तविधानात् । ऊडिदमिति सूत्रे चान्तोदात्तादुत्तरपदादिति सूत्रादन्तोदात्तादित्यस्यानुवर्त्तनात् । तथा चान्वादेशे आभ्यामित्यादेः सर्वानुदात्तता इतरत्र त्वन्तोदात्ततेति विवेकः । स्यादेतत् । सवेकाच इत्युदात्तेनेह भाव्यम् । सुः सप्तमीबहुवचनमिति भाष्ये वृत्तौ चोक्तत्वात् यत्तूडिदमिति सूत्रे हरदत्तेनोक्तम् । इहान्तोदात्तादित्यनुवृत्तिसामर्थ्यात्सवेकाच इत्यपि न प्रवर्त्तते । न च यदीमेना उशत इति प्रसो व्यावृत्तौ सामर्थ्योपक्षयः ।

---

सर्वादेशार्थम् । न वान्त्यस्य विकारवचनानर्थक्यात् । यदि ह्ययमन्त्यस्य विकारः स्याद्वचनमिदनर्थकं स्यात् त्यदाद्यत्वेनैव सिद्धेः । अर्थवद्वादेशप्रतिषेधार्थम् । अन्त्यस्यापि विकारवचनमर्थवदेव, येन्य आदेशा आभ्यामित्यादौ दीर्घादयस्ते माभूवन्नित्यकारस्याप्यकारवचनं स्याद्यथा 'मो राजि समः क्वौ' विति मकारस्य मकारवचनमनुस्वारनिवृत्त्यर्थम् । ननु च कृते ऽप्यकचि

## अनुस्वारादय इति । (भा)

प्रशामम्बलयतीत्यादौ "मो नो धातोरिति" ( ८ । २ । ६४ ) नत्वाभाव आदिशब्दार्थः ॥ "अ अ इति" ( ८ । ४ । ६८ ) निर्देशे विपरीत गौरवमत आह

## समुदायादिति । (भा)

तस्याः "सुपां सुलुगिति" ( ७ । १ । ३९ ) लुक् । वस्तुतः सौत्रत्वादिभक्त्यनुत्पत्तिरेव वक्तुमुचिता । इतैकादेशस्यादेशत्वे विवक्षितासिद्धिरत आह

---

एकाज्ग्रहणेनैव तद्व्यावृत्तेः । एकाच इत्यस्य चावश्यानुवर्त्यत्वात् । अन्यथा ग्रीवायां बद्धो अपि कक्ष आसनि । मत्स्यं नदीन उदनि क्षिपन्तमित्यत्रातिप्रसङ्गात् । आसन्नित्यादयो ह्यन्तोदात्ता एवादेशाः सूत्रे पठिता इति । अत्रेदं वक्तव्यम् । आभ्यामित्यत्र सावेकाच इत्यस्य प्राप्तिरेव नास्तिः सप्तमीबहुवचनेष्वेष्विति रूपं न तादृगिहास्ति । तथा चात्रैवान्तोदात्तग्रहणस्य चरितार्थत्वात्सामर्थ्यविरहः । तथा च माभ्याङ्गाः, तदस्य प्रियम्, तदस्मै नव्यमित्यादेः सिद्धावपि भिसादौ दोषस्तदवस्थ एव । एभिरग्ने, सुन्वन्ति सोमात्वचसित्वमेषाम्, प्रेणातदेषां निहितं, एषु धावीरवदित्यादौ हि ए इत्येव रूपमस्येव । तथा च तत्र विभक्तेरुदात्तप्रसङ्गः । न च

---

अनेनादेशे सत्याभ्यामित्यादिरूपस्य साधारण्यादज्ञाताद्यर्थगतिः प्रकरणाधीना, यद्येवमनुत्पत्तिरेवाकचोस्तु प्रकरणादिनैवाज्ञाताद्यर्थः प्रतिपत्स्यतेऽतो ऽनुदात्तत्वमेव विधेयं नादेशः, उच्यते । असत्यादेशे प्रकरणादिकमन्तरेणाकचैव कश्चिदज्ञातादिकं प्रतिपादयेत्, मैवं प्रतिपीपददित्यादेशवचनम् । उत्तरार्थं च । अनुदात्तवचनं किमर्थं, यावंतोऽहिदम्पदादीति

तत्रेति । (कै)

कृतैकादेशनिर्देशसामर्थ्यादिति भावः ॥

अच न कर्त्तव्य (भा)

इत्यादिरेकदेश्युक्तिः । व्याख्यानसापेक्षत्वात्प्रक्रियागौरवाच्च अका-रस्यैव लघुत्वात् ॥

व्यवस्थितेति । (कै)

अयमेव भाष्ये वैचित्र्यशब्दार्थ इति भावः ॥ वस्तुतो ऽभिधान-लक्षणाः "कृत्तद्धितसमासा" ( १ । २ । ४६ ) इति "अकर्त्तरि च"( ३ । ३ । १९ )ति सूत्रभाष्योक्तेरनभिधानादकजित्येव भाष्यार्थः ॥

---

सावेकाच इत्येतत्सूत्रस्थकैयटपर्यालोचनयेष्टापत्तिरिति वाच्यम् । अन्येत्विति वदता कैयटेन तन्मते ऽस्वरसाविष्करणात् । तद्बीजन्तु बहुतरवैदिक-प्रयोगविरोध एव । अथोच्यते सावेकाच इति सूत्रे हरदत्तोक्तरीत्या सुः प्रथमैकवचनमेव । न च त्वयेत्यत्रातिप्रसङ्गः । सावर्वर्णेति निषेधात् । शेषे लोपष्टिलोप इति पक्षे तु सावेकाच्त्वाभावात्प्राप्तिरेव नास्ति । रूपविवक्षापि विफला । एवञ्च एभिरित्यादौ प्राप्तिरेव नास्तीति । तदपि न । रूपविवक्षाभावे दोषभ्यामित्यत्रातिप्रसङ्गात् । तैत्तिरीये हि

---

विभक्तेरुदात्तत्वं शेषनिघातेनैव सिद्धम्, अनुदात्तवचनं विभक्त्यन्तस्यानुदा-त्तार्थम्, शेषनिघातेन हि प्रकृतेरेवानुदात्तत्वं सिद्ध्यति । कथं पुनरिदम-स्तृतीयादावन्वादेशे भवति स चानुदात्त इत्यनेन विभक्त्यन्तस्यानुदात्तत्वं विधातुं शक्यम् । नानेन विभक्त्यन्तस्यानुदात्तत्वं विधीयते किं त्वनेन प्रकृतेरनुदात्तत्वे कृते ऊडिदमित्यन्तोदात्तादित्यधिकारादसति विभक्ते-

**किश्चेति । (कै)**

निष्फलमथान्वादेशेऽकच्विधानमिति भावः । "किश्चे"त्याद्यपि चिन्त्यम् । तदर्थे कुत्सितपदघटितस्याकच्घटितस्य वा साधुत्वेन तदुत्पत्तिपूर्वकमादेशस्यैवावश्यकत्वात् । अनभिधाने तु न दोषः । कुत्सिताभ्यामाभ्यामित्यर्थस्य वाक्यैकदेशन्यायेन बोधादित्याहुः ॥

---

अंसाभ्यां स्वाहा दोषभ्यां स्वाहेति मध्योदात्तं पठ्यते । एवं स्थिते सुः सप्तमीबहुवचनमेव ग्राह्यम् । अन्यथा इन्द्रोयातो वसितस्य राजेत्यत्र या इत्यन्तोदात्तं न स्यात् । नहि प्रथमैकवचनं यद्रूपं यानिति तदिहास्ति । अत एव गोश्वनोः प्रतिषेधः सार्थकः । तदेवमन्तोदात्तानुवृत्तिसामर्थ्यं प्रथमैकवचनग्रहणं वा प्राग्यामित्येवंरूपस्य माछन्दस्यत्तग्रहणबललब्धस्य समाधानद्वयस्यापि दुष्टत्वादेभिरित्यादि कथन्निर्वाह्यमिति फलितः पूर्वपक्षः । अत्रोच्यते । सावेकाच इत्यत्राप्यन्तोदात्तादित्यस्यापकर्षान्नोक्तदोषः । वृत्त्यादावननुवर्त्तितस्याप्यनुवृत्तिस्तु बहुधा दृष्टैव । अत एव तुरुस्तुशम्ये स्तुवीतेत्यादिसिद्धये पितोत्यस्य निवृत्त्यै सार्वधातुकग्रहणमिति स्थिते प्राप्यतीति प्यनम् इटं वारयितं तिङीत्यस्यानुवृत्तिर्वक्ष्यते ॥

---

वदात्तत्वेऽ'नुदात्तौ सुप्पिता' वित्यनुदात्तत्वादाभ्यामित्यादि पदं कृत्स्नमेवानुदात्तं भवति । यद्यन्वादेशेनोनुकथनम् इहापि प्राप्नोति देवदत्तं भोजय इमं च यज्ञदत्तमिति, अस्ति ह्यत्रान्वादेशः, तत्र 'द्वितीया टौस्स्वेन' इत्येनादेशः प्राप्नोत्यत आह । 'नेहेति' । 'एकस्यैवाभिधेयस्येत्यादि' । तत्रैवान्वादेशशब्दः प्रसिद्धतर इति भावः ॥

# एतदस्त्रतसोस्त्रतसौ चानुदात्तौ। २। ४। ३३॥

तद्विनापि सर्वानुदात्तत्वसिद्धिं दर्शयति

**अत्रेति॥** (कै)

अनेन भाष्ये

**लित्स्वरे** (भा)

इत्यस्य प्रकृतेः प्रत्ययनिमित्तके इत्यादिः॥

**निघाते** (भा)

इत्यस्य प्रत्ययस्येत्यादि। एतदोऽनुदात्तत्वेनेत्यत्रैतदित्यस्याश इति शेष इति दर्शयति। अन्यार्थं तदादेशेनापहारात्तस्यानुदात्तत्वासम्भव इति बोध्यम्। एतदो ऽनुदात्तत्वेनेति क्वचित्पाठः।

---

एतदस्त्रतसोस्त्रतसौ चानुदात्तौ॥ अन्वादेशविषये एतदोश् स्यात्स चानुदात्तस्त्रतसोः परतः तौ चानुदात्तौ स्तः। एतस्मिन् ग्रामे सुखं वसामः अथो ऽत्राधीमहे अतो न गन्तास्मः। अत्रात इति पदे सर्वानुदात्ते। ननु प्रथमे एतदोन्निति भाष्यसम्मतः पाठः। न्यासरीत्या वृत्तिपाठोप्येवमेव। पदमञ्जरीरीत्या तु एतदोश्निति वृत्तिपाठः। उभयत्रापि अकारे सिद्धे किमनेनेति चेत्। प्राथमिकस्योदात्ततया ऽनुदात्तार्थमिह पुनर्वचनमिति

---

"एतदस्त्रतसोस्त्रतसौ चानुदात्तौ"॥ 'पुनर्वचनमनुदात्तार्थमिति'। प्राथमिको ऽशादेश उदात्तः स्याद् अनुदात्तस्त्विष्यते इत्यनुदात्तार्थं पुनर्वचनं, त्रतसोरिति वचनं निमित्तभावार्थम् अन्यथा त्रतसौ चानुदात्तावित्यन्वाचयो विज्ञायेत, यत्र त्रतसौ पश्यसि तत्र तावनुदात्ताविति। किमर्थं पुनस्त्रतसोरनुदात्तत्वमिष्यते यावता ऽत्रात इत्यादौ त्रतसोः लितयोः प्रकृतेर्लित्स्वरे

तदाऽस्यानुदात्तत्वेनेत्यर्थः। "येन नाप्राप्तिन्यायेना"ऽनुदात्तत्वे ऽस्य लित्स्वरापवादत्वान्नित्यत्वोक्तिरसङ्गतेत्यत आह

एतच्चेति॥ (कै)

भाष्ये

उदात्तभावो नास्तीति। (भा)

अनुदात्तविधानसामर्थ्यादिति भावः॥ अपवादविषयपरिहारेणोत्सर्गप्रवृत्तेः कथं प्रत्ययस्वरोऽत आह

अपवादाप्रवृत्ताविति॥ (कै)

णमुल्लोपाविति। (कै)

परैरिति शेषः॥

---

गृह्यमाण। त्रतसोरिति वचनं निमित्तभावार्थम्। अन्यथा त्रतसौ चानुदात्तावित्यन्वादयो विज्ञायेत। स्यादेतत्। त्रतसोः कृतयोः प्रकृतयोर्लित्स्वरः। ततः शेषनिघातेन त्रतसोरनुदात्तत्वं सिद्धम्। अश्मात्रस्य त्वनुदात्तत्वं विधीयताम्। नैवम्। त्रतसोर्हि कृतयोर्येननाप्राप्तिन्यायेनापवादत्वान्नित्यत्वाच्चानुदात्तोऽश्रादेशः स्यात्। ततस्तद्विधानसामर्थ्याल्लित्स्वरस्याप्रवृत्तावुत्सर्गः प्रत्ययस्वर एव त्रतसोः स्यात्। यथा गोष्पदमित्यत्र णमुल्लोपेन सह विधानाल्लित्स्वराप्रवृत्तौ प्रत्ययाद्युदात्तत्वे सति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तं पदं भवति। तस्मात्त्रतसौ चानुदात्ताविति कर्तव्यमेव॥

---

कृते शेषनिघातेन प्रत्ययानुदात्तत्वे सत्यप्यनुदात्तः करिष्यते। यद्येवं लभ्येत कृतं स्यात् तत्तु न लभ्यम्, इह हि त्रतसोः कृतयोर्लित्स्वरस्य प्राप्नोति अनेन चानुदात्तोऽश्रादेशस्तत्र येन नाप्राप्तिन्यायेनापवादत्वान्नित्यत्वाच्चानुदात्तेऽश्रादेशे कृते तद्विधानसामर्थ्यादपवादस्य लित्स्वरस्याप्रवृत्तावुत्सर्गः प्रत्ययस्वर एव त्रतसोः स्यात्, यथा गोः पदप्रमित्यत्र णमुल ऊलोपेन सह विधानाल्लित्स्वराप्रवृत्तौ प्रत्ययाद्युदात्तत्वे सति कृदुत्तरपदप्रकृतिस्वरेणान्तोदात्तं पदं भवति, तस्मात्त्रतसौ चानुदात्ताविति वक्तव्यम्॥

# द्वितीयाटौस्स्वेनः। २। ४। ३४॥

ननु इदमो ऽपि लिख्यत इत्यनेन तदुपायः क इति प्रश्नस्य प्रतीयमानत्वात्तदुत्तरं वाच्यं न त्विदमो ग्रहणं कर्त्तव्यं न कर्त्तव्यमिति विप्रतिपत्तिरुपिता। अग्रे विधिनिषेधयोरभावाद्त आह

**न कर्त्तव्यमित्युत्तरमिति। (कै)**

एवञ्च नेयं विप्रतिपत्तिरपि तु सामान्याकारेण प्रतीयमानं प्रश्नं तदिदमो ग्रहणं कर्तव्यमिति विशेषाकारेण कृत्वा तस्योत्तरमाहेत्यर्थः॥

**इदम् शब्दादिति। (कै)**

एतेनेदमस्त्वतो ऽभावादेतदित्यत्र तत्सम्बन्धाभाव इत्यपास्तम्॥

---

द्वितीयाटौस्स्वेनः॥ द्वितीयायाग्टौसोश्च परत इदमेतदोरेनादेशः स्यात्स चानुदात्तः अन्वादेशे। इदमोऽत्र मण्डूकप्लुत्या ऽनुवृत्तिः। अथैनमद्रेः। एनेन। एनयोः। कथन्तर्हि अह्उयावित्यत्रोदाहृते हे रोहिणीति श्लोके एनादेश इति चेत्। अयं श्रोणीतटं स्पृशति एनं निवारयेति व्यत्यासेन योज्यम्। आशीर्विषेण रदनच्छदरंप्रदानमेतेन ते पुनरनर्थतया न प्रच्छ-

---

"द्वितीयाटौस्स्वेनः"॥ अनन्तरत्वादेतद एवैनादेशः प्राप्नोति, इदमोपीष्यते तदिदमो ग्रहणं कर्त्तव्यं, न कर्त्तव्यम्, इदमोन्वादेश इत्यत इदम इत्यनुवर्तिष्यते, एतदस्त्रतसोरित्यत्रापि संबन्धात्तस्यापि त्रतसोरादेशप्रसङ्गस्तत्राह। 'इदमो मण्डूकप्लुतिन्यायेनानुवृत्तिरिति'। इदमप्यत्र वक्तव्यम्, इदमो हप्रत्ययेन बाधितत्वात्त्वतो, ऽसम्भवात्त्रतसोरित्यत्रासम्बन्ध इति।

इप्रत्ययेन। (कै)

इदमो ह इति विहितेन। तथा तसिल्विषये ऽपि इदम इशं बाधित्वा ऽयमेव स्यात् ॥

एकग्रहणकेति। (कै)

इदमस्तृतीयादौ एतदस्त्रतसोश्चानुदात्तो भवतीत्येवं रूपमित्यर्थः ॥

एनद्वक्तव्य इति। (भा)

भाष्ये तथा च सूत्र एवैनद्वक्तव्यः। तकारोच्चारणसामर्थ्याच्च नपुंसके लुग्विषये ऽपि भविष्यति तकारोच्चारणसामर्थ्यात्त्यदाद्यत्वबाधापेक्षया लुकूप्रबाधस्य "न लुमतेति" ( १। १। ६३ ) निषेधस्य बाध एवोचित इति भावः। नचैनदस्त्यदाद्यत्वापवाद-

---

मित्यादौ त्यन्यादेशत्वस्याविवक्षा बोध्या। अभूत्रृप इत्यादावनद्यतनत्वस्य यथा। अथ कथं प्रक्षालयैतत्परिवर्तयैनदिति। नपुंसकैकवचने एनदिति वक्तव्यात्। वस्तुतस्तु सूत्रएवैनद्वक्तव्यः। एनं एनौ इत्यादि तु त्यदाद्यत्वेन सिद्धम्। एनंश्रित इति द्वितीयासमासे त्वेतच्छ्रित इत्येव भवति। नत्वेत

---

यदि परमनुवृत्तिसामर्थ्यात्तस्याप्यादेशेन भाव्यं, न चासति त्वलि तद्विधानमुपपद्यत इति त्वलः सत्ता परिकल्प्यते, तदपि न। उत्तरार्थमप्यनुवृत्तिसम्भवादिति। 'एनदिति नपुंसकैकवचने वक्तव्यमिति'। एनादेशे कृते 'ऽतोमि'त्यम्भावे सत्येनमिति प्राप्नोत्यत एनदादेशो वक्तव्यः। यद्येवमयमेव सर्वत्रास्तु नार्थ एनादेशेन, कथम् एनं एनौ एनान् एनेन एनयोरिति, त्यदाद्यत्वे कृते भविष्यति, नपुंसकैकवचने तु नित्यत्वा'त्स्वमोर्नपुंसकादि'ति लुकि कृते एनदिति स्यादिति सिद्धम्, इह त्वेनं श्रित. इति द्वितीया-

लाक्षण कृते त्यदाद्यत्वं दुर्लभं द्वितीयेत्यादि. सप्तम्या "आर्धधातुके" ( २ । ४ । ३५ ) इति साहचर्येण विषयसप्तमीत्वेनापवादत्वज्ञा-नाभावात् । वस्तुतो यथेनदित्यादिः पूर्वपक्ष्युक्तिरिति विषयसप्तम्यां मानाभावेनैनादेशः कार्य एवेति बोध्यम् ॥

इत्याहुरिति । (कै)

अन्वादेशविधिबीजन्तु नपुंसकलुकीवात्रापि लुकि सामर्थ्यादेनदादेश-प्रवृत्तिरङ्गाधिकारानिर्देशे ऽपि भविष्यतीति भाष्याशयः । बहि-रङ्गत्वन्तु न लुग्विषये दुर्बलतानियामकमिति दिक् । वस्तुतो-ऽप्रयुक्तत्वाल्लक्षणस्यायमविषय इति भाष्यार्थ इति बोध्यम् ॥

---

एनदा । सुपोधातुरिति लुका बहिरङ्गेणाप्यन्तरङ्गाणां बाधनात् । न चैवं प्रत्याश्रयेनदित्यपि न स्यादिति वाच्यम् । अमो लुका लुप्तत्वेऽपि नकारो-च्चारणसामर्थ्यादेनदादेशप्रवृत्तेः । न चैवमेतच्छ्रितेपि एनदापत्तिः । एक-पदाश्रयत्वेनान्तरङ्गे अमो लुकि चरितार्थत्वेन बहिरङ्गे समासलुकि अप्रवृत्तेः ॥

---

समासे यद्यप्येनादेशोऽप्येनदादेश उभाभ्यामपि न भाव्यं, कथम्, अन्तर-ङ्गानपि विधीन् बहिरङ्गो लुग्बाधते तस्मादेतच्छ्रित इति भवति । 'एकमेव विधानमिति' । अयं दण्ड इत्यनेन दण्डस्य सत्तामात्रमुपलक्ष्यते न तु किंचिद्विधीयते, एवमीषदर्थे इत्यादिना आकारस्य स्वरूपमात्रं निर्दिश्यते न तु किंचिद्विधीयते ॥

# आर्धधातुके । २ । ४ । ३५ ।

व्यक्ताविति (कै)

परसप्तम्यामुचिततया तत्पक्षस्यैवाश्रयणमुचितमिति भावः ॥

तथापि भूवीति । (कै)

अत एव जग्ध्यादिष्वित्युक्ताऽपि "भव्यमि"त्याद्येव भाष्ये उदाहृतं वचेरप्युपलक्षणमेतत् ॥ अतो यदुत्सर्गत्वाभावादाह

उत्सर्गशब्देनेति ॥ (कै)

भाष्ये

ण्यतः श्रवणमिति । (भा)

ण्यत्कार्यस्य वृद्ध्यादेरित्यर्थः ॥

---

आर्धधातुके ॥ अधिकारोयं ण्यक्षत्रियेति यावत् । विषयसप्तमी चेयम् । तेनार्धधातुकोत्पत्तेः प्रागेवादेशेषु कृतेषु यथायथं प्रत्ययाः । तथाहि । अस्तेर्भव्यम् । परसप्तम्यान्तु यति कृते भाव्यमिति स्यात् । अजेः प्रवेयम् । यति तु प्रवैयमिति स्यात् । चक्षिङ आख्येयम् । यति

---

"आर्धधातुके"। 'वध्यादिति'। आशिषि लिङ्, 'लिङाशिषी'त्यार्धधातुकसंज्ञा । 'हन्यादिति'। विध्यादिलिङ् । विषयसप्तमी चेयमिति'। सामान्यनिर्देशोऽयं तच्च व्यापित्वान्नित्यत्वाच्च न तेन तत्र देशकालकृतं पौर्वापर्यं सम्भवति तस्माद्विषयसप्तमी । यदि तु व्यक्तिनिर्देशेन परसप्तमी स्याद्भव्यमि-

## आकृतीति । (कै)

एवञ्चार्धधातुकत्वजातिविषये आदेशा नतु प्रत्यये परे इति श्वाद्यादेशेषु कृतेषु पश्चाद्यदेव भविष्यतीति भावः ॥

## जातिपक्षस्येति । (कै)

सर्वेषां निमित्तवाचकशब्दानां जातिपरत्वं स्यादित्यभिप्रायेण दोषदानमिति भावः । दित्यधित्ययोर्यति "यतो नाव" ( ६ । १ । २१३ ) इत्याद्युदात्तत्वं ण्यति "तित्स्वरितमि"ति स्वरितत्वमिति भेदः ॥

## ज्ञापकत्वादिति । (कै)

सर्वदेशस्याश्रयाश्रितत्वादिति भावः ॥ तच्च व्यापारैकत्वादेशकृतं नित्यत्वात्कालकृतमिति विभागः ॥

## सप्तम्या चेहेति । (कै)

"तस्मिन्निति" ( १ । १ । ६६ ) शास्त्रबलादत्र शास्त्रे विषयसप्तमीभावं मन्यते ॥

---

युक्ति आख्याप्यमिति स्यात् । ब्रुवस्तु अजन्तत्वाद्यति वच्यमिति स्यात् । वाच्यमिति चेष्यते । स्यादेतत् । आङ्गधिकारस्थे आर्धधातुकाधिकार एव जग्ध्यादयो विधीयन्ताम्, मैवम् । जघ्नतुरधिजगे अध्यगीष्ट बभूव विव्यतुरित्यत्र घस्लाद्यादेशानामसिद्धतया उपधालोपाल्लोपेत्त्वगुणानामभावापत्तेः ।

---

त्वादि न स्यात् । तथाहि । हलन्तत्वादस्यादीनां 'ऋहलोर्ण्य'दिति ण्यति कृते तत्र परत आदेशैर्भाव्यं तत्र द्वयोर्लुकि कृतायां तृतीयस्य च पुकि भाव्यं प्रवेयं आख्याप्यमिति प्रसज्येत । इह च 'ब्रुवो वचिः' ब्रुवोऽजन्तत्वाद्यति कृते वच्यादेशे च वच्यमिति प्राप्नोति विषयसप्तम्यां तु नैष

भूतपूर्वस्येति । (कै)

अङ्गत्वस्य विधानप्रतिबद्धतयाङ्गाधिकारे सामान्याश्रयत्वस्य वक्तुमशक्यतया "अल्लोपाविषयक्ष्णगुणे" (वा-१ । ४ । ४८) त्यादि पूर्वविप्रतिषेधवार्त्तिकभाष्येण अतोलोपा (१।४।४८) दीनां स्थानि-वत्त्वपरभाष्यविरोधेन चास्य भाष्यस्य प्रौढिवादपरत्वमिति केचित् । वस्तुतो विषयसप्तम्यामपि परनिमित्तत्वं वक्तुं शक्यमिति न दोषः । अङ्गसंज्ञासूत्रेऽपि (१।४।१३) यस्माद् यस्य प्रत्ययस्य विधानं तस्मिन्विवक्षित एवाङ्गत्वविधानेऽपि न दोष इति भाष्याशयः ॥ भाष्ये

सति पौर्वापर्ये इति । (भा)

न च व्यक्तिदारकं पौर्वापर्यमत एव "हलन्त्यमेति" (१ । १ । १०) सूत्रे व्यक्तिदारकं सामीप्यं कैयटेनोक्तमतः कथमिदं भाष्यमिति वाच्यम् । तस्य कैयटस्य तत्रैव सूत्रे ऽप्रयोजकत्वस्य मया बोधि-तत्वात् । परम्परासम्बन्धस्यासम्बन्धतया "अनेकमन्यपदार्थे" (२ । २ । २४) इति सूत्रे भाष्ये उक्तेः ॥

---

न चातोलोपादयोप्यत्रैव विधीयन्तामिति वाच्यम् । गतो गतवानित्यत्रानु-नासिकलोपस्यासिद्धत्वाभावादतोलोपापत्तेः । यदि त्वार्धधातुकोपदेशकाले यदकारान्तमिति व्याख्यायते ऽसिद्धवत्सूत्रञ्च प्रत्याख्यायते तदा ऽन्यतर आर्धधातुकाधिकारः शक्योऽकर्तुम् । नन्वेकस्मिंदार्धधातुकाधिकारेऽपि

---

दोष इत्याह । 'तेनेति' । यथा प्राप्तमिति' । यो यतः प्राप्नोति स ततो भवतीत्यर्थः । 'असिद्धवदत्राभा'दित्यस्य भावाभावव्यवस्थार्थम् । अत्र चाङ्गाधिकारे च द्विरार्धधातुकाधिकारः क्रियते । यदि ह्येतेप्यादेशास्तत्रैव विधीयेरन् जग्धतुरधिजगे ऽध्यगीष्ट बभूव विव्यतुरिति घसाद्यादेशा-

आर्धधातुकावयवा इति । (कै)

अत एवैषां यङ्लुगन्ते प्रयोगा नेत्याहुः । लुक्याऽऽर्धधातुकावयवत्वाभावात् ॥

प्रतीतिष्विति । (भा)

प्रयुज्यमानास्वित्यर्थः ॥

न केवलेति (भा)

सङ्केतात् प्रकृतिप्रत्ययसमुदाय एव प्रयुज्यते । एवञ्च तस्य व्यावहारिकत्वादनित्यत्वसम्पन्नमित्याह ।

व्यवहारेति ॥ (कै)

---

विषयसप्तमीत्वपरसप्तमीत्वे कथं व्यवतिष्ठेयातामिति चेन्न । सूत्रद्वयारम्भसामर्थ्यादेकस्यैकस्यैव व्यापकत्वे नोभयरूपताश्रयणात् । यथा चैतत्तथा गमहनेति सूत्रे उपपादितम् ॥

---

नामसिद्धत्वादुपधालोपाल्लोपेत्वगुणयो न स्युर्यदि स्वतोलोपादयोऽप्यत्रैव विधीयेरन् गतो गतवानित्यनुनासिकलोपस्यासिद्धत्वाभावादतो लोपः स्यादित्येषा दिक् ।

# अदो जग्धिर्ल्यप्ति किति । २ । ४ । ३६ ॥

तकारादिप्रत्ययमात्रेति । (कै)

सूत्रे विषयसप्तमीति युक्तं वक्तुम् ॥ भाष्ये

उपदेशिवद्वचनमिति । (भा)

उपदेशे क्त्वा तदवस्थायां वचनं कार्यमित्यर्थः । भाविन्येव समासे क्त्वो ल्यबादेश इति भावः ॥

अनादिष्टार्थम् । (भा)

हित्वाद्यादेशाभावार्थमित्यर्थः ॥

---

अदो जग्धिर्ल्यप्ति किति ॥ ल्यबिति लुप्तसप्तमीकं पृथक् पदम् । अत्तेर्जग्धिरादेशः स्याल्ल्यपि तादौ किति च । इकार उच्चारणार्थो न त्वनुबन्धः । नुम्प्रसङ्गात् । एवं ब्रुवोवचिरित्यादौ । प्रजग्ध्य जग्धम् । जग्धौ सिद्धेऽन्तरङ्गत्वात्ति कितीति ल्यबुच्यते । ज्ञापयत्यन्तरङ्गाणां ल्यपा

---

"अदो जग्धिर्ल्यप्ति किति"। ल्यबिति पृथक् पदं लुप्तसप्तमीकम् । इह पदद्वयापेक्षं समासमपेक्षमाणो ल्यब्बहिरङ्गः क्त्वाप्रत्ययमात्रापेक्षश्च जग्ध्यादेशोऽन्तरङ्गः, तत्र क्त्वावस्थायामेव जग्धौ कृते प्रजग्ध्येति सिद्धं नार्थो ल्यब्ग्रहणेन । एवं तर्हि ल्यब्विषयेऽप्यन्तरङ्गत्वात्ति कितीत्येव सिद्धे जग्धौ ल्यबिति यदुच्यते तत् ज्ञापयत्यन्तरङ्गाणामपि विधीनां हिप्रभृतीनां

## प्रधायेत्यादि (कै)

हिते त्वादिष्टानादिष्टेष्वकृतेषु यथा स्यादित्येषोऽनादिष्टार्थमित्यस्यार्थ इति भावः ॥

## हित्वादिष्विति । (भा)

आदिना हित्वदत्वेत्वदीर्घत्वानि गृह्यन्ते । वार्त्तिके यदिति सामान्ये नपुंसकं जग्धिरिति यः स इत्यर्थः ॥

## अकस्मात् । (भा)

न कस्माच्चित्प्रयोजनादित्यर्थः । अनर्थक इति भावः ॥ कुतस्तत्राह

## सिद्धमिति ॥ (कै)

---

भवति बाधनम् । तथाहि । पदद्वयसापेक्षं समासं प्रतीक्षमाणो ल्यब्बहिरङ्गः ततः प्राक्क्तिकितीति सिद्धो जग्धिः । ल्यब्ग्रहणात्तु हित्वदत्वेत्वदीर्घत्वनुड्ढिटामन्तरङ्गाणामपि बाधं ज्ञापयति । दधातेर्हिः, जहातेश्च क्त्वि, हित्वा । नेह । विधाय । दोदद्घोः, दत्त्वा । नेह प्रदाय । जनसनखनांसञ्झलोः, खात्वा । नेह । प्रखन्य । प्रखाय । इह हि ये विभाषेति

---

ल्यपा भवति बाधनमिति । विधाय विहाय प्रदाय प्रखाय प्रखन्य प्रस्थाय प्रक्राम्य आपृच्छ्य प्रदीव्य प्रपच्येत्येतेषु विधिषु 'दधातेर्हिः' 'जहातेश्च क्त्वि' 'दो दद् घोः' 'जनसनखनां सञ्झलोः' 'द्यतिस्यतिमास्थामित्ति किति' 'अनुनासिकस्य क्विझलोः क्ङिति' 'च्छ्वोः शूडनुनासिके च' 'आर्धधातुकस्येड्वलादे'रित्येते विधयः क्त्वावस्थायामेव प्राप्ता बहिरङ्गेन ल्यपा बाध्यन्ते । एव

*अद इति । (कै)

सामान्ये नपुंसकं यतो ऽत इति च शेषः ॥

एष एवार्थ इति । (भा)

अन्येन निबद्ध इति शेषः । मया निबध्यत इति वा ॥

---

विकल्पः । द्यतिस्यतिमास्थामित्ति किति । स्थित्वा । नेह । प्रस्थाय । अनुनासिकस्य क्विझलोः क्ङितीति दीर्घः । क्रान्त्वा । नेह । प्रक्रम्य । छ्वोः शूठ । पृष्ट्वा । द्यूत्वा । नेह । आपृच्छ्य । प्रदीव्य । इट् । देवित्वा । नेह । प्रदीव्य । वस्तुतस्तु ल्यब्ग्रहणं नान्तरङ्गबाधं ज्ञापयितुं किन्तु विध्यर्थं ल्यबेव वेति निरूपितमचः परस्मिन्निति सूत्रे ॥

---

एवार्थः श्लोकान्तरेण भाष्ये कथितः । 'जग्धिर्विधिर्ल्यपि यत्तदकारणम्' । अकरणं निष्प्रयोजनमित्यर्थः । 'सिद्धमदस्ति कितीति विधानात्' । अदो जग्धिविधानमित्यर्थः । ज्ञापकार्थं ल्यपि जग्धिविधानमित्याह । 'हिप्रभृतींस्तु सदा बहिरङ्गो ल्यबभवतीति कृतं तद् विद्धि' । ल्यबभवतीति, ल्यबादेशो हरति अपनयति बाधत इत्यर्थः । उ इति निपातोऽवधारणे । एतदेवास्य प्रयोजनमित्यर्थः ॥

# हनो वध लिङि। २। ४। ४२॥

**हलन्तलक्षणेति।** (कै)

हलन्तलक्षणया प्रतिप्रसवभूतेत्यर्थः॥

**औपसंख्यानिके इति।** (कै)

बहुलं तणीत्यनेनेति भावः॥

**स्थानिवद्भावादिति।** (कै)

स्थानिवदादेश (१।१।५६) इत्यनेन॥

**अल्लोपस्येति।** (कै)

"अचः परस्मिन्" (१।१।५७) त्यनेन। एवञ्च "जनि बध्योश्च" (७।३।३५) ति सूत्रे वधिग्रहणं न कार्यमिति भावः। स्वतन्त्रो वधधातुस्तु नास्त्येव। अत एव व्यञ्जनान्तेऽवधीदित्यदौ "वृद्धिप्रतिषेधो वक्तव्य" इति सङ्गच्छते ऽन्यथा तस्य वृद्धेर्दुर्वारत्वेन तदसङ्गतिः॥

---

हनो वध लिङि। हन्तेर्वध इत्यादेशः स्यादार्द्धधातुके लिङि। वध्यात्॥

---

"हनो वध लिङि"॥ 'अकारान्तश्चायमादेश इति'। कुत एतत्। शैलीयमाचार्यस्य यत्र व्यञ्जनान्त आदेशस्तत्रेकारमुच्चारयति यथा जग्ध्यादौ तस्मादिकाराकरणादकारान्तोयमादेशः। 'हलन्तलक्षणा वृद्धिर्न भवतीति'। उत्तरसूत्रेण वधादेशे कृत इति भावः॥

लुप्तत्वात् स्थानी न भवतीति । (कै)

अतिदेशेनाहार्ये बुद्धिसत्त्वेऽपि षष्ठ्यर्थस्योच्चारणरूपप्रसङ्गस्य वक्तुमशक्यत्वात् ॥

उपदेश इति । (कै)

वध्युपदेशे इत्यर्थः ॥ उपदेशत्वावच्छेदेनैकाच्त्वस्य विवक्षणादिति भावः ॥

---

# गाङ् लिटि । २ । ४ । ४९ ॥

ङित्वादीत्वेति । (कै)

"घुमास्थे" ( ६ । ४ । ६६ ) त्यनेनेति भावः ॥ इणः परस्मैपदित्वेन लुङि "गातिस्थे" ( २ । ४ । ७७ ) ति सिचो लोपादातिदेशिकङित्वभाजो भावात्कर्मणि चिण्वदिड्भावपक्षे उदाहृतं न तु गाङ् गताविति । तस्यापि ग्रहणे तु सामान्यग्रहणार्थमिति वदेत् । न तु विशेषणार्थमितीति भावः ॥

---

गाङ् लिटि ॥ इङो गाङ् स्याल्लिटि । अधिजगे । वार्त्तिकमते लिटीति परसप्तमी । द्विर्वचनेचीति स्थानिवद्भावस्तु न भवति । ल्लिटीति द्विलकार-

---

"गाङ लिटि"। द्विलकारकोयं निर्देशः, लिटि लकारादाविति । तेन प्रागेवादेशेभ्यो लावस्थायामेवादेशो भवति । किं सिद्धं भवति अधि-

## तुल्यताभावादिति। (कै)

वस्तुतो भाष्यप्रामाण्येन व्याख्यानादेवास्याग्रहणम्। अत एव "घटायोन्मीलितमिति" न्यायविरोधो न सानुबन्धादिति। "गाङ्-कुटादिभ्य" (५। २। १) इत्यत्र व्याख्यानादिङादेशस्यैव ग्रहणं भविष्यतीत्याशयेन ज्ञापकोपन्यासः॥

## ङितायाश्चेति। (कै)

"अनल्विधावि" (१। १। ५६) ति प्रतिषेधस्तु स्थान्यल्लाश्रये कार्ये अनुबन्धस्य लुप्तत्वात् स्थानिनि न सन्निधीयत इत्यर्थः॥ भाष्ये "नन्दनेति" ल्युः कर्त्तरि। पुंसीत्यमरस्य प्रमादः इति वा॥

---

कनिर्देशेन लावस्थायामेव गाङः प्रवृत्तेः। भाष्यमते तु आर्धधातुकीयाः सामान्येन भवन्तीत्यभ्युपगमात्परनिमित्तता नास्तीति प्रागेवोक्तम्। यद्यपि स्थानिवद्भावेन ङित्वात्तङ् सिद्धस्तथापि गाङ्कुटादिसूत्रे ङस्यैव ग्रहणार्थं ङित्करणम्। न हि स्थानिवद्भावेन गाङिति रूपं लभ्यते। गङ्कुटादिभ्य इति तूच्यमाने कै गै रै शब्दे, इणो गा लुङीत्येतयोरपि ग्रहणं स्यात्। ततश्चागासीन्नटः, अगासातां ग्रामौ देवदत्तेनेत्यत्र घुमास्थेतीत्वं स्यात्।

---

जगे 'द्विर्वचनेऽचीे'ति स्थानिपद्भावो न भवति। ङित्करणमनर्थकं स्थानिवद्भावादेव सिद्धमात्मनेपदमित्याशङ्क्याह। 'गाङ्यनुबन्धकरणमिति'। 'गाङिति ग्रहणं यथा स्यादिति'। ननु चैतदपि स्थानिवद्भावादेव सिद्धं, नेत्याह। 'नहीति'। गांकुटादिभ्य इति तूच्यमाने कै गै रै शब्दे इणो गा लुङीत्येतयोरपि ग्रहणं प्राप्नोति ततश्चागासीन्नटः, अगासातां ग्रामौ देवदत्तेनेत्यत्रापि घुमास्थादिति सूत्रेणेत्वं प्रसज्येत। अपर आह। यत्र

## अनुदात्तत्वमिति। (कै)

पित्वादित्यर्थः। [1]अडागमनिषेधाय माङ् लुङर्थस्य निघातप्रतिषेधाय हिः ॥

## चिन्त्यमेतदिति। (कै)

वस्तुतस्तु परस्मैपदानां णलतु "विदो लटो वे" (३। ४। ८३) त्यादौ यथासंख्यनिर्वाहाय परस्मैपदानां क्रमेणोपस्थितये "तिप्तस्झि"

१ "मा हि स्म चिनवम्" इत्यत्र ॥

गाङ् गतावित्यनेन सह सामान्यग्रहणार्थोऽयं ङकार इति तु न भ्रमितव्यम्। गाते इत्यादौ तङं प्रवर्त्य तदीयङकारस्य निवृत्ताकांक्षतया उल्लिखितप्रज्ञाप्यप्रयोगन्तु यत्र सानुबन्धकात्षष्ठी उच्चार्यते तत्राकृतायामेवेत्संज्ञायामादेश इति। सत्यामपि वा तस्यां तत्र स्थानिवद्भावेनानुबन्धकार्यं नेति। प्रयोजनन्तु नन्दना कार्त्तिकेयस्त्रोगिल्लक्षणङीबभावः। तथा हि युवोरनाकाविति सूत्रे ऽनुनासिकोकारौ युवू निर्दिष्टौ। अन्यथा भुज्यः प्रयुत्यत्रातिव्याप्तेः। तथा च स्थानिवद्भावेनोगित्वान्नन्दना कार्त्तिकेयस्त्रोगिल्लक्षणो ङीप् स्यात्। नन्दः कारक इत्यत्र चोगिल्लक्षणो नुम् स्यात्। ननु

सानुबन्धकात्षष्ठ्युच्चार्यते तत्राकृतायामेवेत्संज्ञायामादेशः प्रवर्त्तते सत्यामपि वा तस्यामनुबन्धकार्यमादेशे न भवतीत्यस्यार्थस्य ज्ञापनार्थं गाङ्यनुबन्धकरणमिति, किं प्रयोजनं, 'चक्षिङः ख्याञ्' ङित इत्यात्मनेपदं न भवति। ञिदादेशकरणसामर्थ्यात्स्वरितञित इत्येतदेव भविष्यति। इह तर्हि लटः शतृशानचौ, लट इति सानुबन्धकात्षष्ठी, पचमानः, टित इत्येत्वं न भवतीति : प्रकृतानामात्मनेपदानामेत्वविधानादिह न भवति।

( १ । ४ । ८ ) त्यादिसूत्रस्थक्रमेणोपस्थितौ सानुबन्धकयोरेवोपस्थितिरिति भाष्याशयः ॥

## निन्दामाहेति । (कै)

अन्यथा दोषाणामाधिक्याभावात्प्रकर्षप्रयोगोऽनुपपन्न इति भावः ॥ "स्वरित ञित" ( १ । ३ । ७२ ) इत्यत्र विकल्पवाचिनोऽनुपादानाद्वा

## कर्त्रभीति । (कै)

नुम् स्यादिति सत्यं ङीप् तु कारिकायामापाद्यताम् । नन्दनायान्तु कथं ल्युः कर्त्तरीमनिज् भावे कः किर्घोः प्रादितोन्यत इत्यमरेण पुंस्त्वस्योक्तत्वादिति चेन्न । एतत्सूत्रे युवोरिति सूत्रे च नन्दनेति भाष्योदाहरणबलेन ल्युः कर्त्तरीत्यमरस्य प्रायिकत्वात् । तथा च श्रीहर्षः प्रायुङ्क्त । विमृश्य सा भीमनरेन्द्रनन्दनेति । तस्मान्ङीप्नुमोरभावो ज्ञापनफलमिति । अत्रोच्यते । युवोरित्यत्रानुनासिकयणावेव युवू न त्वनुनासिकोकारौ । अतो ङीब्नुमौ न । तथा यजमान इत्यत्र टेरेत्वाभावोऽपि न ज्ञापनफलम् । टित आत्मनेपदानामित्यत्र प्रकृतानामेवात्मनेपदानां ग्रहणात् । तङामित्येव

---

इह तर्हि 'युवोरनाका'वित्यत्र भुज्युः शुंयुरित्यत्र मा भूदिति, अनुनासिकोकारानुबन्धौ युवू सूत्रे निर्दिष्टौ ततश्च नन्दनः कारकः नन्दना कारिका स्थानिवद्भावादुगिल्लक्षणौ ङीन्नुमौ प्राप्नुतः, अस्माज्ज्ञापकान्न भवतः । अनुनासिकयणोस्तत्र ग्रहणं न त्वनुनासिकोकारानुबन्धयोरिति नात्रोगित्कार्यप्रसङ्गः, इह हि 'सेद्ध्यपिच्च,' सिपो हिरिति वक्तव्यम् । अपिच्चेति न वक्तव्यम्, इह च तुह्योस्तातङिति तिप्सिपोस्तादाशिषीति सानुबन्धकात्षष्ठीमुच्चार्यादेशौ विधेयौ ङित्करणं न कर्तव्यम् । इह च तस्थस्थमि-

अनुनासिकयोरिति। (कै)

युवोरिति विशेष्यम्॥

उगित्वं नास्तीति। (कै)

उकारविशिष्टस्य स्थानित्वादिति भावः॥



वास्तु। अन्यान्यपि सम्भावितानि ज्ञापकफलानि प्रत्याख्यातानि भाष्ये। प्रत्युत ज्ञापनाभ्युपगमे बाधकान्यपि सन्ति। तथाहि। अचिनवमित्यत्र अमादेशस्य पित्त्वसिद्ध्यर्थं तस्थस्थमिपामिति वक्तव्यम्। अग्निभ्योरनार्षयोः क्रोल्यबित्यादौ स्थानिनि अनुबन्धस्त्यक्तव्यः। वाराह्या प्रक्षत्येत्यादौ वृद्धि-गुणप्रतिषेधश्च यथा स्यात् तदेवं बहुसूत्रभङ्गापत्तेर्नेदं ज्ञापकं सूत्रकृतोऽभिप्रेतं किन्तु पूर्वोक्तमेवाङित्त्वस्य फलं बोध्यम्॥

पामिति पकारो नोच्चार्यस्तेनाचिनवमित्यादौ गुणसिद्धिः, अग्निभ्योरनार्षयोः क्रो ल्यबित्यादौ यत्र स्थान्यनुबन्धकार्यमिष्यते तत्राननुबन्धकः स्थान्युपादेयः। वाराह्या प्रक्षत्येत्यादौ वृद्धिगुणप्रतिषेधश्च भवति तदेवमस्य पक्षस्य मन्दत्वादनुपन्यासः॥

# चक्षिङः ख्याञ् ।२।४।५४॥

रूपद्वयेति । (कै)

ख्क्शौ चख्याविती त्यर्थः ॥ भाष्ये

ख्यादिरिति । (भा)

खकारयकारादिरित्यर्थः । एवं क्शादिः ख्शादिरित्यपि ककारशकारादिखकारशकारादिरित्यर्थकम् ॥

चक्षिङः ख्याञ् ॥ आर्धधातुके विवक्षिते । हजादौ चक्षितेत्यादि-निवृत्तये सूत्रम् । कर्त्रभिप्राये फले आत्मनेपदार्थश्च । मुनिर्वेदं व्याख्या-स्यते । आख्यातेत्यादि तु ख्या प्रकथन इत्यनेनापि सिद्धम् । अत्र वार्तिकानि । चक्षिङः ख्याञ्क्शाञौ ॥ आक्शाता ख्शादिर्वा ॥ असिद्धे शस्य यवचनं विभाषा ॥ अस्यार्थः । खकारशकारादिरादेशोनेन विधेयः। असिद्धकाण्डे तु णत्वप्रकरणानन्तरं ख्शाञः शस्य यो वेति वचनं कर्तव्यम् । तथा च चर्त्वे यत्वं सिद्धमिति खर्परत्वाभावेन खरिचेत्यस्याप्रवृत्तेर्यत्वपक्षे आख्यातेति सिद्धम् । यत्वाभावपक्षे तु चर्त्वेन क्शातेति रूपम् । प्रयोजनं सौप्रख्ये वुञ्विधिः ॥ सुप्रचष्टे सुप्रख्यः । आतश्चोपसर्गे इति कः । तस्य

"चक्षिङः ख्याञ्" ॥ कर्त्रभिप्राये क्रियाफले आख्यास्यते आचख्ये इत्यात्मनेपदं यथा स्यात् हजादौ चक्षितेत्यादि मा भूदिति च योगारम्भः । आख्यातेत्यादि ख्या प्रकथन इत्यस्यैव सिद्धम् । अत्र यथान्यासे आकारा-त्पूर्वो भागःखकारयकारात्मेति स्यादाख्यातेति, ककारशकारात्मापि

## अकारप्रश्लेषादिति । (कै)

वस्तुतस्तु तं विनापि मयका धूमप्रयोजनमित्यादेरिव वुञ्विधिनिवर्त्यत्वेन प्रयोजनमिति वार्त्तिकार्थः। अग्रिमवार्त्तिकाणामेवमेव व्याख्येयत्वात्। अस्य वार्त्तिकस्य भाष्ये ऽनुक्रमणयर्थयोग्यतया स भाष्याह

## ष्यञ् भवतीति । (भा)

"योपधाद्गुरूपोत्तमाद्वुञि" ( ५।१।१३१ ) ति प्राप्तवुञो भावे "ब्राह्मणादित्वात्" ष्यञिति भावः ॥

---

भावः सौप्रख्यम्। ष्यञ्। योपधाद्गुरूपोत्तमादिति वुञ् तु न भवति। षत्वस्यासिद्धत्वादित्यर्थः। तथा सुप्रख्येन निर्वृत्तो देशः सौप्रख्यः। तत्र भावः सौप्रख्यीयः। वृद्धाच्छः न तु धन्वयोपधादिति वुञ् प्रयोजनान्तरमाह, निष्ठानत्वमाख्याते। आख्यात इत्यत्र संयोगादेरातोधातोर्यण्वत इति न भवति। षत्वस्यासिद्धा यण्वत्ताविरहात्। एवञ्च नध्याख्येति सूत्रे ख्याग्रहणं न कर्त्तव्यं भवति। रुविधिः पुंख्यानम्॥ षत्वस्यासिद्धतया ऽम्परत्वाभावात्पुमः खय्यीति रुत्वं नेत्यर्थः। णत्वं पर्याख्यानम्॥ षत्वस्यासिद्धतया षकारे वानटा व्यवायात्कृत्यच इति णत्वं नेत्यर्थः। सस्थानत्वं नमःख्यात्रे॥ षपरे विसर्जनीय इति विसर्गः सिध्यतीत्यर्थः। सस्थान इति जिह्वामूलीयस्य प्राचां संज्ञा। सस्थानत्वं त्विह नेति योज्यम्। णत्वादीनामप्यभावस्यैव

---

लिप्यते आकृशातेति, तदेतदाह। 'कशादिरप्ययमिति'। ककारेऽकार उच्चारणार्थः। अपर आह खशादिरेवायमादेश इति, अत्राप्यकार उच्चारणार्थः। तत्र षत्वे कृते कशातेत्यादि भवति। कथमाख्यातेति खकारयकारयोः श्रवणम्। असिद्धकाण्डे णत्वविधानानन्तरं खशाञः शस्य यो वेति शस्य यत्वं विभाषा वक्तव्यम्। तत्र षत्वे यत्वं सिद्धमित्याख्यातेत्यादि षत्वपक्षे रूपम्, अन्यदा कशातेति रूपम्। अवश्यं च शस्य यत्वमत्राश्रयणीयम्।

## लाक्षणिकत्वादिति । (कै)

अस्य तत्रायहणे आख्यानमित्यपि स्यादिति तद्व्यावृत्त्यर्थः खशादित्वमिति भावः । वस्तुतः स्वतन्त्रख्याधातोरार्धधातुके प्रयोगाभाव एवेष्टव्यः । अन्यथा तमादाय सौप्रख्यादौ वुञादि दुर्वारमेव स्यादित्यस्य खशादित्ववैयर्थ्यापत्तेः । न च पाक्षिकख्यङादिसिद्धिरेव फलं "मख्यानत्वं नमः ख्यात्रे" इति भाष्यस्य सर्वथाऽसङ्गतेः । जिह्वामूलीयस्य वैकल्पिकत्वेन विसर्गसिद्धेर्जिह्वामूलीयस्य दुर्वारत्वाच्च । एवञ्च नध्याख्येत्यत्र तद्ग्रहणे फलाभावात्तदपि न

---

प्रक्रान्तत्वात् तस्माद्वुञ्नत्वणत्वयात्वानि मख्यानखेति पञ्चकं प्राप्तं वारयितुमस्य यत्वं कृतमिति स्थितम् । स्यादेतत् । ख्या प्रकथन इति धातुमादाय वुञादिपञ्चकं दुर्वारम् । सत्यम् । सोऽपि खशादिः । यत्वविधिरप्युभयसाधारणो बोध्य इति हरदत्तमाधवादयः । कैयटस्तु नैतन्मेने । भाष्ये ख्याधातोः खशादित्वानुक्तेश्चक्षिङः ख्याञादेशमेवोपक्रम्य यत्वविधानात् नध्याख्येति सूत्रे ख्याग्रहणान्तु कर्तव्यमेव व्याख्यात इत्यत्र नत्वाभावाय । ख्याञादेशस्तु लाक्षणिकत्वात्तत्र न गृह्यत इति यत्वस्यासिद्धत्वात्प्राप्तिरेव नास्तीति च बोधयितुं प्राङ्नत्वग्रहणम् । णत्वं तु लुब्योगाप्रख्यानादिति निपातनान्न भवति । वुञ् नत्वसख्यानत्वानि तु ख्यातौ स्युरेव । ख्याञादेशे तु नेति तत्र रूपद्वयं बोध्यम् । अस्मिन्मते आदेशे प्रख्यानादिति प्रयोगो-

---

इह सुप्रचष्टे सुप्रख्यः आतश्चोपसर्ग इति कः, ततो यत्वस्यासिद्धत्वात्सुप्रख्यस्य भाव इति योपधाद्गुरूपोत्तमादिति वुञ् न भवति अयोपधत्वात्, तस्मिन्नसति ष्यञ् भवति सौप्रख्यमिति । तथा सुप्रख्येण निर्वृत्ते देशे भवः सौप्रख्यीयः, धन्वयोपधादिति वुञ् न भवति, 'वृद्धाच्छ' एव भवति । आख्यातः, यत्वस्यासिद्धत्वाद्यणस्त्वाभावात्संयोगादेरिति नत्वं न भवति,

कर्त्तव्यमेवेति भाष्याशयः । ख्याधातुरपि यजादिरिति भिन्नोक्तं तु न युक्तं भाष्यस्वारस्येनादेशस्यैव यत्वमिति भानात् ॥

निपातनादिति । (कै)

सौत्रप्रयोगस्यादेशेनोपपत्तेश्चिन्त्यमेतत् ॥

णत्वेति । (कै)

कृत्यचः (८ । ४ । २९) इति प्राप्तिः ॥

द्वयम् (कै)

जिह्वामूलीयत्वमित्येषा ॥ "नृचक्षा" इति प्रयोगे रक्षो विशेषणत्वे नपुंसकत्वेन दीर्घानुपपत्तिरत आह

---

पपत्तेः कथं निपातनमुपन्यस्तमिति चिन्त्यम् । वुञादाविव णत्वांशेऽपि रूपद्वये इष्टापत्तिः, अनिष्टत्वे वाऽनभिधानात्कृत्यल्युटोबहुलग्रहणाच्च तत्र ल्युडेव नेति न्याय्यः पन्थाः । परमार्थस्तु ख्याधातुः सार्वधातुकमात्रविषयः । सङ्ख्यानत्वं नमः ख्यात्र इति वार्त्तिकं तद्भाष्यं चेह प्रमाणम् । आर्धधातुकेऽपि तत्प्रयोगे उक्तप्रयोजनासङ्गतेः । एवं णत्वं पर्याख्यानमित्यपि । तथा च नध्याख्येति सूत्रे ख्याग्रहणं न कर्तव्यमेव । हरदत्ताद्युत्प्रेक्षा तु गौरव-ग्रस्ता उपक्रमादिविरुद्धा । सार्वधातुकेऽपि कृत्प्रयोगे प्राप्ते ऽनभिधान-मात्रालम्बना चेत्यवधेयम् । वर्जने प्रतिषेधः । दुर्जनाः सङ्ख्याः । वर्जनीया

---

'न ध्याख्यापॄमूर्च्छिमदा'मित्यत्र ख्याग्रहणं न कर्त्तव्यं भवति । पुंसः ख्यानं पुंख्यानमित्यत्र यत्वस्यासिद्धत्वा'त्पुमः खय्यम्परे' इति रुविधिर्न भवति, पर्याख्यानम्, यत्वस्यासिद्धत्वाच्छकारेणानटा व्यवाया 'कृत्यच' इति णत्वाभावः । नटः ख्यातेत्यत्र यत्वस्यासिद्धत्वात् खरः शर्परत्वा'च्छर्परे विसर्जनीय' इत्येष विधिर्भवति । नन्वसिद्धे शस्य यवचनेऽपि ख्या प्रकृत्यन्तर इत्यस्यौत्पत्तिक एव यकार इति तत्र वुञादिप्रसङ्गः, एवं तर्हि सोऽपि

छान्दस इति ॥ (कै)

नन्वत्र विचक्षणशब्दादन्येषामुपयोगं न पश्याम इत्यत आह

सर्वप्रकारेणेति ॥ (कै)

अनपेक्ष्येति । (कै)

तेषां सूत्राणामाधुनिकत्वादनपेक्षेति भावः ॥

---

इत्यर्थः । असनयोश्च ॥ नृचक्षा रक्षः । छान्दसो वर्णविकारः । भाषायान्तु नृचक्षो रक्ष इति भवतीति कैयटहरदत्तौ । माधवस्तु हे अग्ने नृचक्षाः मनुष्याणां द्रष्टा त्वं रक्षः परिपश्येति वेदभाष्ये व्याख्यत् । विचक्षणः । अनुदात्तेतश्च हलादेरिति युच् । अत एवान्तोदात्तः पठ्यते, विचक्षणाः प्रथयन्निति । यत्रान्यतस्य चक्षणमित्यादौ तु ल्युट् । अत एव लित्स्वरेणाद्युदात्तता । कथं तर्हि पुंख्यानं पर्याख्यानमिति प्रागुदाहृतमिति चेत् । वक्ष्यमाणवाङ्कलकादित्यवेहि । गजतन्त्रसम्बन्धकगात्रविवक्षाजिराद्यर्थं, सर्वप्रकरणापेक्षमेतत् । तद्यिति संज्ञाछन्दसोर्ग्रहणं तत्र अन्नशब्दे अजध्यभावः । अन्नाश्च इति निपातनाद्वा सिद्धम् । वधक इति ण्वुलि वधादेशः । अल्लोपस्य स्थानिवत्त्वाद्वृद्ध्यभावः । कुनृशिल्पिसंज्ञयोरित्यधिकारे हनोवधचेत्यादिसूत्रेण गतार्थमेतत् । गात्रमिति, इण औणादिके ष्ट्रनि गादेशः । गाङ्धातुना वा सिद्धम् । अजिरमिति वीभावो न । अजिरशिशिरेति निपातनात् सिद्धम् ॥

---

सम्प्रादिः प्रश्न पवचनमपि साधारणं द्रष्टव्यम् । 'नृचक्षा रक्ष इति'। छान्दसः प्रयोगः । भाषायां तु नृचक्षो रक्ष इति । 'विचक्षण इति' । अनुदात्तेतश्च हलादे'रिति युच् । 'वधक इति' । अतो लोपस्य स्थानिवत्त्वाद्वृद्ध्यभावः 'गात्रमिति' । ष्ट्रनि गादेशः । 'अजिरमिति' । अजिरशिशिरेति निपातनमनादृत्योक्तम् ॥

# अजेर्व्यघञपोः । २ । ४ । ५६ ॥

क्यप उपसंख्यानमिति (भा)

भाष्येऽधिकरणस्य शेषत्वविवक्षायां षष्ठी ॥

वलादाविति । (कै)

यद्यपि भाष्ये इच्येव विकल्पो लभ्यते तथापि "पादस्य पदाज्याती" (६।३।५२) ति निर्देशेनेह च न भविष्यति। समाज इत्यपि भाष्यस्योपलक्षणताया आवश्यकत्वेनेदमपि तथैव वृत्त्यादिप्रामाण्यादिति भावः ॥

---

अजेर्व्यघञपोः ॥ अजेर्धातोर्वी इत्यादेशः स्यादार्द्धधातुके घञमपञ्च वर्जयित्वा। प्रवयणीयः। प्रवायकः। अघञपोः किम्। समाजः। उदाजः। समजः। उदजः। समुदोरजः पशुष्वित्यप्। दीर्घश्चाख्यानं किमर्थम्। संवीतिः। घञपोः प्रतिषेधे क्यप उपसङ्ख्यानम् ॥ समज्या। संज्ञायां समजेति क्यप्। इह पूर्वसूत्रादेत्यनुवर्त्तते। सा च व्यवस्थितविभाषा। तेन घञ् अप्क्यपसु न। समाजः समजः। समज्येति वलादावार्धधातुके ल्युटि च वा ॥ प्रजिता प्रवेता। प्राजनं प्रवयणम्। एवञ्च नार्थो घञपोः

---

"अजेर्व्यघञपोः" ॥ प्रवयणीयः प्रवायक इत्यादौ गुणवृद्धिविषये ह्रस्वदीर्घयोरविशेषं मन्वानः पृच्छति। 'दीर्घोच्चारणं किमिति'। दीर्घव्याख्यानमित्यर्थः। 'घञपोः प्रतिषेधे क्यप उपसङ्ख्यानमिति'। क्यपि यः प्रतिषेधस्तस्य क्यप्सम्बन्धी भवतीति क्यप इत्युक्तम्। यस्त्वाह अपीत्येव क्यपि सिद्धः प्रतिषेधः, कथम्, अपिति प्रत्याहारः अपोऽकारादारभ्या

**वर्त्तमानोक्त इति । (कै)**

तेन रथं सूत इति न भवति ॥

**न तर्हीदानीं वक्तव्यं वायाविति वक्तव्यमिति** (भा)

व्यवस्थितविभाषयैव यौ वीभावविकल्पस्य सिद्धत्वादिति भावः ॥

**वायुरिति । (कै)**

यदि वातेरपि वायुः प्रकारान्तरेण सिध्यति तर्हि घञपक्यप्‌
ग्रहणवदिदमपि व्यर्थमिति कश्चित्‌ ॥

---

प्रतिषेधेन नापि क्यप उपसङ्ख्यानेन नापि वायाविति सूत्रेण । तस्मा
दजेर्वी वेति घञपोः क्यपि चायं न सम्मतः । वलादौ यौ च वान्यत्र
नित्यमित्येव निर्णयः ॥ आर्धधातुक इत्यस्य विषयसप्तमीत्वात्‌ प्रागेव इत्ययो-
त्पत्तेर्वीभावे वलादित्वाद्यड्‌ । वेवीयते । नात्र यङ्लुगस्ति यतो लुका यङ
आर्धधातुकस्य विषयत्वापहारादार्धधातुकत्वस्याभिव्यक्तिरिति वीभावस्य नैव
प्रसङ्गः । उक्तञ्च, नलुमताङ्गस्येति सूत्रे कैयटेन । लुका यङो विषयत्वा-
पहाराद्विषयसप्तम्याश्रयणेऽप्यसिद्धिरिति ॥

---

क्यपः प्रकाराद्‌ इति, तस्य संवीतिरिति क्तिन्यपि प्रतिषेधः प्राप्नोति,
तस्मात्संज्ञायग्रहणात्समज्येत्यत्र वीभावाभावः । महदादेशेन संज्ञा गम्यते ।
'वलादावार्धधातुके वेष्यत इति' । नार्थोऽनयेष्ट्या नापि घञपोः प्रतिषेधेन
नापि क्यप उपसङ्ख्यानेन नापि वायाविति सूत्रेण, एतावदस्तु वा लिटि,
अजेर्वीत्येव, व्यवस्थितविभाषेयं, तेन घञपोः क्यपि नैव भवति, वलादौ यौ
च विकल्पः, अन्यत्र नित्यम्‌ ॥

# ण्यक्षत्रियार्षञितो यूनि लुगणिञोः। २। ४। ५८॥

अपत्यवार्त्तिकानि अनर्थकानीत्याहुः। पैलादिदर्शनादिमानि सिद्धानीति वृत्तिः॥

---

ण्यक्षत्रियार्षञितो यूनि लुगणिञोः॥ क्षत्रियशब्दः क्षत्रियगोत्रपरः। ऋषेरपत्यमार्षम्। इतश्चानिञ इति ढकि प्राप्ते शिवादिपाठादण्। ठगपीष्यते। आर्षेयं वृणीत इति दर्शनात्तस्माच्छुभ्रादिष्वपि पठनीयः। ण्यप्रत्ययान्तात् क्षत्रियगोत्रापत्यप्रत्ययान्तादृष्यभिधायिनो गोत्रप्रत्ययान्तात् ञितश्च परयोः युवाभिधायिनोरणिञोर्लुक् स्यात्। कुर्वादिभ्यो ण्यः। तस्माद्यूनि इञ्। तस्य लुक्। कौरव्यः पिता। कौरव्यः पुत्रः। ननु कौरव्यशब्दस्तिकादिषु पठ्यते। ततः कौरव्यायणिरिति हि फिञा भाव्यमिति चेन्न। तत्र हि कुरुनादिभ्यो ण्य इत्यनेन विहितस्य क्षत्रिय-

---

"ण्यक्षत्रियार्षञितो यूनि लुगणिञोः"। 'ण्यादयो गोत्रप्रत्यया इति'। 'गोत्राद्यून्यस्त्रियामि'ति गोत्रप्रत्ययान्तादेव यूनि प्रत्ययविधानात्। क्षत्रियगोत्रस्य क्षत्रियाभेदोपचारात् क्षत्रियशब्देनाभिधानम्। 'ऋषेरपत्यमार्षम्, 'इतश्चानिञ' इति ढकि प्राप्ते शिवादिपाठादण्। ठगपीष्यते आर्षेयं वृणीत इति। तस्माच्छुभ्रादिष्वपि पठनीयः। एवं गोत्ररूपाभ्यां क्षत्रियार्षाभ्यां प्रत्ययस्योपलक्षणाद् ण्यादयो गोत्रप्रत्यया इत्युक्तम्। 'क्षत्रियादिति'। क्षत्रियगोत्रप्रत्ययान्तादित्यर्थः। 'आर्षादिति'। ऋष्यभिधायिनो गोत्रप्रत्ययान्तादित्यर्थः। प्रथमनिर्दिष्टाद् ण्यान्तादणोऽसम्भवा-

गोत्रस्य ग्रहणम्। इदन्तु ब्राह्मणगोत्रम्। ऋष्यन्धकवृष्णिकुरुभ्यश्चेत्यण्। तस्माद्यूनि इञ्। तस्य लुक् श्वाफल्कः पिता। श्वाफल्कः पुत्रः। क्षत्रिय, वसिष्ठादृष्यण् तत इञ्। तस्य लुक्। वासिष्ठः पिता। वासिष्ठः पुत्रः। आर्षः, बिदाद्यञ् तस्माद्यूनीञ्। तस्य लुक्। बैदः पिता। बैदः पुत्रः। तैकायनिः पिता। तैकायनिः पुत्रः। कुत्मातः सौवीरगोत्राद्वान्यत्रेदम्। अन्यथा फेश्छचेति छप्रसङ्गात्। यमुन्दश्चेत्यादिपरिगणनस्य भाष्यविरुद्धत्वात्। एभ्यः किम्। शिवादिभ्योऽण्। ततो यूनि इञ्। कौहडिः पिता कौहडिः पुत्रः। यूनि किम्। वामरथ्यस्य छात्राः वामरथाः। कुर्वादिभ्यो ण्यः। तस्मात् कण्वादिभ्यो गोत्रे इति शैषिकोऽण्। वामरथस्य कण्वादि-

---

चरमनिर्दिष्टोऽपीञेव प्रथममुदाहृतः। 'क्षत्रियगोत्रस्य तत्र ग्रहणमिति'। औरसशब्देन साहचर्यात्, स हि 'जनपदशब्दात् क्षत्रियादञि' त्यञन्तत्वात्क्षत्रियशब्दः। उरसशब्दः सकारोपधो जनपदवाची, तस्माद्यूनि प्राग्दीव्यतीयोऽणिति। 'फेश्छचे'ति च अच्छौ तु न भवतः, यमुन्दश्च सुयामा चेति परिगणनात्। 'कण्वादिभ्यो गोत्र इति शैषिकोऽणिति'। वामरथस्य कण्वादिवत्स्वरवर्जमिति कुर्वादिषु पाठादिति भावः। 'अब्राह्मणगोत्रमात्रादिति'। अत्र भाष्ये त्रीणि वाक्यान्युपन्यस्तानि, अणिञोर्लुकि तद्राजाद्युवप्रत्ययस्योपसंख्यानमिति प्रथमम्। अस्योदाहरणं बौधिः पिता बौधिः पुत्रः, औदुम्बरिः पिता औदुम्बरिः पुत्रः, बुधोदुम्बराभ्यां साल्वावयवलक्षण इञ्, 'यञिञोश्चे'ति फक्, तस्य लुक्,। अनर्थकमेतद्वचनम्। साल्वावयवेत्यत्रोदुम्बरास्तिलखला इत्यादि संभवोदाहरणं न परिगणनमिति बुधशब्दादपीञ् भवति। क्षत्रियगोत्रमात्राद्युवप्रत्ययस्योपसंख्यानमिति द्वितीयम्। मात्रशब्दो व्याप्त्यर्थः, तद्राजादिति नियमो नास्ति। क्षत्रियगोत्रमात्रादिति। तेन जाबालशब्दादत इञोऽतद्राजादपि परस्य-

## इति श्रीशिवभट्टसुतसतीगर्भजनागेशभट्टकृते महाभाष्यप्रदीपोद्योते द्वितीयाध्यायस्य चतुर्थे पादे प्रथममाह्निकम्॥

---

वत्सरवर्गमिति कुर्वादिषु पाठात्। अत्र शैषिकस्याणो न लुक्। अणिञोः किम्। दाक्षेरपत्यं युवा दाक्षायणः। अब्राह्मणगोत्रमात्राद्युवप्रत्ययस्योपसङ्ख्यानम्॥ मात्रशब्दः कार्त्स्न्ये क्षत्रियादिजातिं विनापि अब्राह्मणत्वमात्रेण ततः परस्य अणिञ्भ्यां भिन्नस्यापि लुगित्यर्थः। भण्डिजङ्घकर्णखरकौ वैश्यौ ताभ्यामतइञ् तदन्तात्फको लुक्। भाण्डिजङ्घिः पिता पुत्रश्च। एवं कार्णखरकिः॥

---

फको लुक् भवति, जाबालिः पिता जाबालिः पुत्रः, वृत्तिकारेणोपन्यस्तं तृतीयम्। अत्रापि मात्रशब्दो व्याप्त्यर्थः। क्षत्रियादित्यपि नियमो नास्ति अब्राह्मणगोत्रमात्रादिति। तेन वैश्यगोत्रादपि भवति। भाण्डिजङ्घकर्णखरकौ वैश्यौ, ताभ्यामत इञ्, तदन्तात्फको लुक्, व्यापकत्वाच्चेदमुपन्यस्तं वृत्तिकारेण॥

महाभाष्यप्रदीपोद्द्योतः ।



पाणिनिकात्यायनपतञ्जलिभ्यो गुरुभ्यो नमः ।



कृतेऽथ पतञ्जलिना गुरुणा तीर्थदर्शिना ।
सर्वेषां न्यायबीजानां महाभाष्ये निबन्धने ॥
अलब्धगाधे गाम्भीर्यादुत्तान इव सौष्ठवात् ॥



# तद्राजस्य बहुषु तेनैवास्त्रियाम् । २ । ४ । ६१ ॥



ननु बहुत्ववदर्थप्रतिपादकतद्राजस्यानेन लुग्विधानात् प्रियवाङ्गा इत्यादावस्य प्राप्तिरेव नेत्यत आह

---

तद्राजस्य बहुषु तेनैवास्त्रियाम् ॥ बहुष्वर्थेषु विद्यमानस्य तद्राजस्य लुक् स्यात्तेनैव लुग्भाग्जातीयेनैव कृतं चेद्बहुत्वं न तु स्त्रियाम् । अङ्गाः वङ्गाः । सुह्माः । पुण्ड्राः । मगधाः । ते तद्राजा इत्यादीनामिह संज्ञा

---

"तद्राजस्य बहुषु तेनैवास्त्रियाम्" ॥ इह बहुष्वित्यनेन जसादिबहुवचनं वा गृह्येत अर्थो वा, आद्ये पक्षेऽयमर्थो भवति जसादिषु बहुवचनेषु परतस्तद्राजस्यास्त्रीलिङ्गस्य लुगिति । द्वितीये बहुष्वर्थेषु वर्तमानस्येति बहुवचनशब्दे हि जसादिषु विनियुक्ते तदेकदेशेन बहुशब्देनापि जसादि शक्यं लक्षयितुम् । संज्ञानामेकदेशस्यापि प्रयोगदर्शनाद् भीमो भीमसेन

इहेति ॥ (कै)

बहुवचनशब्दस्य प्रत्ययविशेषे प्रसिद्धेरितितया बहुशब्देन तत्प्रतीतिः कथमत आह

संज्ञानां चेति । (कै)

"विनापि प्रत्ययं पूर्वोत्तरपदयोर्लोपः" इति वचनादिति भावः ॥ प्रत्ययग्रहणपक्षे ते तद्राजार्थेनैव कृतं यद्बहुत्वं तत्प्रतिपादके बहुवचने परत इत्यर्थः । तत्पदेन तद्राजपरामर्शिना नातदर्थो लभ्यत इति बोध्यम् ॥ अर्थग्रहणपक्षे बहुषु वर्त्तमानस्य तद्राजस्येत्यर्थः । प्रत्ययग्रहणपक्षस्य तेनैवेति लिङ्गमुक्त्वाऽर्थग्रहणपक्षस्य लिङ्गमाह

अस्त्रियामिति । (कै)

तत्र पूर्वमिति निषेध्यत्वादिति भावः ॥ प्रियवाङ्ग इति समासस्यैकत्वादाह

समासार्थेति ॥ (कै)

तेनैव चेत्कृतं बहुत्वमिति (भा)

भाष्ये । तन्मात्रार्थगतबहुत्वार्थके वचने परत इत्यर्थः ॥

---

लोहध्वजाः । व्रीहिमताः । इह तु व्यादयस्तद्राजा इति । तद्राजस्येति किम् । औपगवाः । राघवाः । यादवाः । कथन्तर्हि रघूणामन्वयं वक्ष्य इति । निरुध्यमाना यदुभिः कथं चिदिति च । उच्यते । रघ्वपत्ये रघुशब्दो

---

सत्या सत्यभामेति । जसादीनां च बहुत्वाद्बहुष्विति बहुवचनोपपत्तिः । नन्वेवमपि मुख्यत्वादर्थग्रहणमेव युक्तम् । सत्यम् । तेनैव ग्रहणादस्य पक्षस्य सम्भवः । तद्धि प्रियवाङ्गा इत्यादौ बहुवचनं परमिति लुकः प्रसक्तस्य निवृत्तये कृतम् । अर्थग्रहणे चात्र तद्राजस्य बहुत्वे इत्यभावादेव

अन्येति । (कै)

अन्यपदार्थस्य न तद्राजान्तमात्रार्थः किन्तु समुदायार्थ इति भावः ॥ एकवाक्यत्वासम्भवादाह

एतावदिति ॥ (कै)

प्रश्नरूपार्थानुपपत्तेर्बुद्देः क्रियमाणे लक्षणेत्याशयेनाह

कुर्वन्तीत्यर्थ इति ॥ (कै)

सर्वथा वचनेनैवेति । (कै)

अत्र पक्षे तेनैवेत्यवश्यं कार्यमिति वार्तिकतात्पर्यमित्यर्थः ॥

अबहुत्वे (कै)

इत्यस्य बहुवचनपरत्वाभावे इत्याह

समासेति ॥ (कै)

योर्बहुवचनत्वाभावादसङ्गतिमाशङ्क्याह

शसमेवेति ॥ (कै)

भाष्ये

---

लक्षणया वर्तते । एतच्च बह्वच इञ इति सूत्रे पदमञ्जर्यां स्पष्टम् । नन्वेवं परस्मैत सूत्रे बभ्रुमंयुडुलमक इत्यादीनामपशब्दत्वपरं भाष्यं विरुध्येतेति चेन्न । भाष्यस्य प्राक्तिभ्रमप्रयुक्तपरत्वात् । इष्यते हि गोयीशब्दस्य गोयी-

---

लुकोऽप्रसङ्गः । यद्येवमस्मादेव लिङ्गाद्बहुवचनस्यैव निश्चयादर्थग्रहणस्यासम्भवः । उच्यते । अस्त्रियामिति प्रतिषेधादस्य पक्षस्य सम्भवः । तद्राजाश्च स्त्रिय इत्यादौ तद्राजस्य बहुषु वर्तमानस्य लुङ् माभूदिति कृतम् । बहुवचनग्रहणे चात्र स्त्रीप्रत्ययेन व्यवधानादेव लुकोऽप्रसङ्गः । न चाम्बष्ठस्याप-

**न चात्रेति।** (भा)

लुका लुप्तत्वादिति भावः॥

**अन्तरङ्गानपीति।** (कै)

न्यायादिति तात्पर्यम्॥ नन्वन्तरङ्गानिति न्यायेनास्यापि लुको ग्रहणेनेदमनुपपन्नमत आह

**अस्यैवात्रेति।** (कै)

ज्ञापकस्य विशेषापेक्षत्वादिति भावः। वस्तुतश्चिन्त्यमेतत्। "एङ्ह्रस्वात्संबुद्धेः" (६।१।६९)। त्यादिसूत्रस्थभाष्यविरोधादिति स्पष्टं शब्देन्दुशेखरे॥ अनेनापि न्यायेन कार्यान्तरनिमित्तविनाश-कलुक एतदपेक्षया प्राबल्यं बोध्यते॥

**तत एव ज्ञापकादिति।** (कै)

नायं लुक्सुब्लुगपेक्षया बलवानिति तु भाष्याशयः॥

---

सादृश्यशक्तिभ्रमाभ्यां गवि प्रयुक्तस्य साधुत्वे। एतेन सोयमित्यभिसम्बन्धा-त्तद्धितेन विना यदि बभ्रादयः प्रयुज्येरन्नपत्यनियमो भवेदिति हरिश्लोकोपि व्याख्यातः बहुषु किम्। आङ्गः। वाङ्गः। तेनैव किम्। आङ्गदेवदत्तयज्ञ-

---

त्यानि बह्व्यः स्त्रियः 'वृद्धेत्कोसलाजादाञ्ञ्यङ्' "यङश्चाप्" आम्बष्ठ्या इत्यत्रैकादेशस्यान्तवद्भावादव्यवधानाल्लुक्प्रसङ्गः, एकादेशस्य पूर्वविधौ स्थानिवद्भावादत्रापि चापा व्यवधानात्। तदेवं लिङ्गद्वयदर्शनात्पक्षद्वय-सम्भवः। एवमुत्तरेष्वपि योगेषु द्रष्टव्यम्। तत्राद्ये पक्षे ऽतिक्रान्तोऽङ्गान-त्यङ्गः, अतिगर्गः, अङ्गेभ्य आगतोऽङ्गरूप्यः, गर्गरूप्य इत्यादौ बहुवचनपर-त्वाभावाल्लुङ् न स्यात्। न च वृत्त्यर्थवाक्ये यच्छ्रुतादि बहुवचनं तत्रैव

## यथास्थितमेवेति । (कै)

एवञ्चानङ्गाधिकारविहितकार्ये प्रतिषेधाय वार्त्तिककृता न्यासान्तरमारब्धं तस्यार्थस्य सूत्रेणैव लाभे वार्त्तिकं न कार्यं सूत्रस्य च न प्राप्तिरङ्गोद्देश्यककार्याभावादिति भावः ॥

## न समस्तस्येति । (कै)

न च पूर्वस्येत्यर्थः ॥

## इति चेष्यत इति । (कै)

तस्मादङ्गस्य तदवयवस्य वा कार्ये निषेध इत्यर्थः ॥

## अस्त्रियामिति चावेति । (कै)

एतदर्थमेवास्त्रियामिति करणे तु गौरवमिति भावः । न च ङीलुकः स्थानिवत्त्वाद्बहुवचनपरत्वाभावः । लुकि तन्निषेधात् ॥

## गार्ग्यश्चेति । (कै)

युगपदधिकरणवचनताया दूषितत्वादेकवचनान्तेन विग्रहः ॥

---

इत्ताः । यद्यपीह बहुत्वमाङ्गेष्यन्वेति तथापि नेदं लुग्भागोर्थे एव विश्रान्तम् । देवदत्तादिगतत्वात् । नन्वेवं भार्गवस्य वात्स्यस्य आग्रायणस्य भृगुवत्साग्रायणा इत्यत्र लुङ् न स्यात् । उत्तरसूत्रेष्वपि तेनैवेत्यधिकारात् ।

---

परत्वात्तस्यामेवावस्थायां लुग्लभ्यते ऽन्तरङ्गत्वादिति वाच्यम्, अन्तरङ्गानपि विधीन् बहिरङ्गो लुग्बाधत इति वचनात् । न च लुप्तेऽपि तन्निमित्तप्रत्ययलक्षणेन लुग्लभ्यः, 'न लुमताङ्गस्ये'ति निषेधात् । ननु च न लुमताङ्गस्य कार्यं किं तर्हि तदेकदेशस्य प्रत्ययमात्रस्य, अङ्गाभ्य इत्यादौ च समर्थात्तद्धितोत्पत्तेः बह्वर्थे वाक्ये यद्बहुवचनमङ्गेभ्य इत्यादि तत्रैव लुग् भविष्यति ।

अबहुष्विति। (भा)

भाष्यस्य न विद्यते बहुवचनं परं येभ्यस्तेषु वर्त्तिपदेष्वित्यर्थः॥

सुबन्तात्तद्धिते बहुवचनपरत्वमस्त्वादाह

प्रातिपदिकादेवेति। (कै)

"न लुमतेति"(१।१।६३)। निषेधात्प्रत्ययलक्षणाभावेन लुकि न सिध्येदित्येव भाष्याशय इत्यपि कश्चित्। तन्न सामर्थ्यञ्च सुबन्तेनेत्युत्तरभाष्यविरुद्धम्॥

जसि परत इति। (कै)

उदात्तलोपशब्देन चोदात्तघटितलोप उच्यते इति भावः॥

अपूर्ववचनत्वशङ्कां वारयति

व्याख्यानादिति॥ (कै)

अम्बष्ठस्येति। (कै)

क्षत्रियनामेदमातो वा नामधेयस्येति वृद्धत्वम्। आम्बष्ठस्येति पाठे तु सम्यगेव॥

---

आग्रायणे च महादिषको लुगभावात्। सत्यम्। तेनैवेत्यस्य तज्जातीयेनेति व्याख्यातत्वाददोषः। अपत्यतयैव साजात्यात्। यद्येवं गार्ग्यस्य काश्यपस्य गालवस्येत्यत्र गालवे अण्यणो लुगभावेपि अपत्यतया साजात्याद्यञञोर्लुक्-

---

इदं तर्हि अत्रेरपत्यानि बहूनि 'इतश्चानिञ' इति ढक्, तस्य 'कित' इत्यन्तोदात्तत्वं, तस्य जसि परतो ऽत्रिभृगिवति लुकि कृते उदात्तनिवृत्ति-स्वरः प्राप्नोति, तस्माद् द्वितीयं पक्षमाश्रित्याह। 'बहुषु वर्तमानस्येति'। अन्यथापि पक्षे आङ्गस्य वाङ्गस्य सौह्मस्य अङ्गवङ्गसुह्माः, गार्ग्यस्य वात्स्यस्य वाज्यस्य गर्गवत्सवाजा इत्यादौ द्वन्द्वे लुङ् न स्यात्, अत्र ह्येकैकस्मिन्नेवार्थे

## अचः परस्मिन्नितीति । (कै)

यद्यप्यन्तवद्भावेन चावन्तस्यायं विधिरिति न पूर्वविधित्वं तथापि पूर्वविधावित्यस्य पूर्वोद्देश्यकविधावित्यर्थादस्त्येव । यद्यपि यशब्दोऽपि स्थान्येव स कथं ततः पूर्वस्तथापि यत्किञ्चित्स्थानिभूतपूर्वत्वमस्त्येव स्थानिभूतादचः पूर्वोऽस्थानिभूत एव गृह्यत इत्यत्र न मानं स्थानिनि पृथग्भूते सत्यभवतो लुक एकादेशेऽप्यभावातिदेशो बोध्यः । एतेन चावन्तस्य कथं चापा व्यवधानमित्यपास्तम् ॥

## तदेवमिति । (कै)

अस्त्रियामित्येवार्थनिर्देशपक्षस्य ज्ञापकमिति भावः ॥ नन्वयं दोषो बहुवचनग्रहणेऽपीति कथं परं प्रत्ययस्योपन्यासो ऽत आह

## अन्त्यस्य तावदिति । (कै)

एवञ्चार्थपक्षे त्रयाणामपि लुग्वाच्यः । प्रत्ययपक्षे त्वनन्त्ययोरेवेति भावः ॥

---

प्रसङ्गः । अत्राङ्गः । लोप्यलोपिभिरपत्यप्रत्ययैः कृते बहुत्वे विकल्पः । भृगुवत्साग्रायणेषु, अगार्ग्यकाश्यपगालवानामित्युभयथापि सूत्रनिर्देशात् । अस्त्रियां किम् । आङ्ग्यः स्त्रियः । स्यादेतत् । आङ्गस्यापत्यानि बहूनि,

---

प्रत्यय उत्पन्नः, पूर्वत्र तु पक्षेऽन्तिमस्यापि तावत्सिध्यति बहुवचनपरत्वात् । नैष दोषः । युगपदधिकरणतायां द्वन्द्वः, तत्रैकैकस्य वर्त्तिपदस्य बह्वर्थकत्वाल्लुग्भविष्यति । नन्वेवमपि तद्धित उत्पत्तिदशायामेकैकस्मिन्नेवार्थे उत्पन्न इति तद्राजो यो बहुषुयञ् यो बहुषु अञ् यो बहुष्वित्युच्यमानो लुङ् न स्यादेव । नन्वत्र बहुष्वित्यनेन न प्रत्ययमात्रं विशेष्यते किं तर्हि प्रत्यय-

बहुष्वर्थेषूत्पन्न इति । (कै)

यदा विशेष्यांशे ऽपि न संख्याभानं तदैकशेषेण बहुष्वर्थेषु स्थित इत्यर्थो बोध्यः ॥

तस्य गोत्रप्रत्ययस्य बहुवचनपरत्वाभावादिति । (कै)

प्रत्ययलक्षणन्तु (१।१।६२) नलुमतेति (१।१।६३) निषिद्ध-मिति भावः ॥ ननु अस्त्रियामित्यस्य यथा ऽर्थान्तरानुपसंक्रान्तस्त्री-विषयता तथा बहुष्वित्यस्यार्थान्तरानुपसंक्रान्तबहुत्वविषयकत्वाभाव दोषः । द्व्येकयोस्तस्योपसंक्रान्तत्वादिति चेन्न ।

बहुष्विति (भा)

बहुवचनेनैव सर्वस्यापि बहुत्वस्य ग्रहादित्याशयः । अत एवात्यङ्ग इत्यादिसिद्धिः । इदमेव ध्वनयितुं सूत्रकृता "अस्त्रियामिति" विभिन्नविभक्तिनिर्देशः कृतः । प्रकृतसूत्रे वार्तिककरणादेतदुदाहरणं विषयीभूतमाङ्गानामपत्यं माणवक आङ्ग इत्युदाहरणं बोध्यम् । "गोत्रेऽलुगचीति" (४।१।८९) समाधानमपि साधारणमेव ।

---

अणोद्व्यच इति फिञ् । तस्य तद्राजाच्चाणा इति गणसूत्रेणाण्ग्रहणगोत्र-मात्रादिति वार्त्तिकेन लुक् । अङ्गाः । बैदस्यापत्यानि बहूनि, अत इञ् गृष्ट्यादिभ्यश्चेति लुक् विदाः । अत्र यूनि बहुत्वान्वयेऽपि गोत्रस्य तद्राज-

---

ग्रहणपरिभाषया तदन्तग्रहणे सति तदन्तं विशेष्यते तद्राजान्तं यद्बहुषु यञन्तं यद्बहुषु अञन्तं यद्बहुष्विति, यद्येवं काश्यपस्यापत्यं काश्यपः विदा-यन, तस्य प्रतिकृतय इति 'इवे प्रतिकृतावि'ति कन्, तस्य 'जीविकार्थे चापण्य इति देवपथादिषु अर्चासु पूजनार्थास्विति पाठाद्वा लुपि कृते

एतत्सूत्रविहितस्यापि तेनालुग्विधानात् । यत्तु तत्र लक्षणप्रतिपदोक्तपरिभाषया "यस्कादिभ्यो गोत्रे" (२।४।६३) इत्येतत्प्रकरणस्थत्वात् । इत एव तत्र बह्वित्यादीनामनुवृत्तेः श्रोत्वकृबुद्धिस्थताया एव प्रकरणत्वात् । अत एव "गोत्रेऽलुगचीति" (४।१।८९) सूत्रे भूम्निप्राप्तस्य लुका लुगिति भगवता वक्ष्यते । उत्तरसूत्रोदाहरणन्तु उत्तरसूत्रविषये ऽप्ययं विचारस्तुल्य इति बोधयितुमत एवोपक्रमे तद्राजादीनामित्युक्तम् ॥ भाष्ये

नचाचाजादिमिति । (भा)

[1]"यस्मिन्विधिरिति" परिभाषालभ्यमेतत् ॥

वर्णाश्रये इति । (भा)

अजादिप्राग्दीव्यतीयविषये इत्यर्थे ऽपि लुका विषयस्यापहाराद्दोष एवेति बोध्यम् । भाव्युच्चारणमेव हि विषयः । अतिव्याप्तिमुक्त्वा तत्रैव पक्षे व्याप्तिमाह भाष्ये

---

१ यस्मिन् विधिस्तदादावल्ग्रहणे ॥

---

वाच्यस्यैक्याल्लुङ् न स्यात् । किञ्च बिदानामपत्यं माणवकः बैदः बैदौ । अत्र युवबहुत्वाभावेपि गोत्रबहुत्वादतिव्याप्तिः । सत्यम् । गोत्रस्य बहुषु लोपिनो बहुवचनान्तस्य प्रवृत्तौ ह्येकयोरलुक् । एकवचनद्विवचनान्तस्य

---

काश्यपा इत्यन्तस्य प्रतिकृतिबहुत्वे लुक् प्राप्नोति । नैष दोषः । 'यञञोश्चे'त्यत्र 'यस्कादिभ्यो गोत्र' इत्यतो गोत्र इत्यनुवर्तते, तेन गोत्रबहुत्वे लुक् प्रतिकृतिबहुत्वे न भविष्यति । नन्वेवमप्याङ्गस्यैकस्य प्रतिकृतयो बह्व्य इति तद्राजान्तस्य बहुषु वृत्तेर्लुक्प्रसङ्गः । नह्यत्रेदमस्ति तद्राजान्तं यदपत्यं

• एकेति। (भा)

बहुषु लोपो यस्तद्धितस्तदन्तप्रकृतिकैकवचनाद्यन्तस्य युवबहुत्वविषयकप्रत्ययविषये प्रकृतित्वेन प्रवृत्तौ सत्यां तदवयवस्य तद्धितस्य लुग्वक्तव्य इत्यर्थः॥

इति पाठादेति। (कै)

अयं वाऽभियुक्तानां पाठो न त्वेतावतेदमार्षमिति बोध्यम्॥ अत्र तं यद्बहुष्वित्यर्थे न्यायविरोधमप्याह

प्रत्ययादर्शनस्यैवेति॥ (कै)

ततोऽयमाहेति। (कै)

प्रत्ययार्थबहुत्वे लुगिति यस्य मतं सोऽयं स्वपक्षदोषकथनोत्तरमाहेत्यन्वयः॥

किमाह। (भा)

द्वन्द्वे बहुषु लुग्वचनमित्यस्य परिहारो ऽयमित्याहेत्यर्थः॥ पदानां बह्वर्थत्वे ऽपि प्रत्ययस्य बह्वर्थत्वाभावादाह

प्रत्ययान्तमिति॥ (कै)

---

प्रवृत्तौ बहुषु लोपो यूनीति वार्त्तिकद्वयेन सिद्धम्। यद्वा। अथायमुद्धारः सूत्रेणापि सुकरः। तथाहि। तद्राजान्तं यद्बहुष्विति व्याख्यास्यामः। न चैवं प्रतिकृतिबहुत्वेतिप्रसङ्गः। तेनैवेत्यस्य लोपिप्रत्ययार्थजातीयेनेत्यर्थात्।

---

बहुत्वे वर्तत इति। एवं तर्हि तेनैव ग्रहणमस्मिन् पक्षे न कर्तव्यमित्युक्तं तदत्रोपयोक्ष्यामहे, यस्मिन्नर्थे लुगभावी प्रत्यय उत्पन्नस्तेनैव चेत्कृतं बहुत्वमिति। इह चापत्ये प्रत्यय उत्पन्नः प्रतिकृतिकृतं च बहुत्वम्, यद्येवम् चाक्रस्यापत्यानि 'अत्रो द्वयच' इति फिञ्, तस्यात्राऽऽयगोत्रमात्रादिति वा

स उत्तरश्चेति । (कै)

ननु गोत्रग्रहणानुवृत्त्या तत्र दोषं परिहरिष्यति । एवमप्याङ्गस्य प्रतिकृतिरियं आङ्ग इत्यत्र तदन्तग्रहणपक्षे तद्राजस्येति लुक् प्राप्नोति । नन्वत्रापि गोत्र इति वर्तत इति चेन्न । अत्रापि सूत्रे गोत्र इत्यपकर्षणेनादोषात् । तद्राजस्यापत्यत्वादारोपितगोत्रत्वमस्त्येव ।१. यत्तु हरदत्तेनैतदर्थं तेनैवेत्यवश्यं कर्तव्यमर्थग्रहणपक्षेऽपीत्युक्तं तदेतेन परास्तं भाष्यविरुद्धं च ॥ वस्तुतः

सर्वाणि द्वन्द्वे बह्वर्थानीति (भा)

भाष्यस्यायमर्थः । आश्रयतया बहुत्ववदर्थप्रतिपादकानीति द्वन्द्वे हि अन्यसंख्याबोधकविभक्त्यभावेन समुदायोत्तरविभक्त्या ते तेऽर्था वस्तुतो बहुत्ववन्त एवोपस्थाप्यन्ते पर्याप्त्या बहुत्ववदर्थप्रतिपादकत्वनिवेशे न किञ्चिन्मानम् । युगपदधिकरणविवक्षायामित्यस्यापि युगपद्द्रव्याणामेकत्रान्वयविवक्षायां द्वन्द्व इत्येवार्थः । युगपदधिकरणवचनतापक्षस्तु द्वन्द्वसूत्रे दूषित एवेति न तमादायास्य ग्रन्थस्य

गोत्रयूनादेरपत्यतया सजातीयत्वेपि प्रतिकृते विजातीयत्वात् । नापि बैदो बैदावित्यत्रातिव्याप्तिः । गोत्रे लुगचीति सूत्रेण इञि विवक्षित एवालुक्प्रवृत्तेः ।२. च यन्युपसङ्क्रमानान्तरं पुनर्युवबहुत्वे इव तद्धितैकत्वस्थले लुकः

'तद्राजाच्चाणः' इति वा लुक्, अङ्गाः । बैदस्यापत्यानि 'अत इञ्,' ण्यक्षत्रियेति लुक्, बिदाः । अत्र गोत्रे प्रत्यय उत्पन्नो युवकृतं चात्र बहुत्वमिति लुङ् न स्यात् । नैष दोषः, तेनैवेत्यस्य तज्जातीयेनैवेत्यर्थः, युवा चापत्यतया तज्जातीयो न प्रतिकृतिः । एवं च कृत्वा द्वन्द्वो यदा लोपिनामलोपिनां च भवति तदा न भवति आङ्गदेवदत्तयज्ञदत्ता गार्ग्यदेवदत्तयज्ञदत्ताः । इह

व्याख्योचिता। अपरस्तु युगपदधिकरणवचनतापक्षे विनावलम्बित इति मत्वा स्वपक्षेऽपि दोषाभाव इत्याह भाष्ये

ततो ऽयमाह यस्य बहुवचने इति। (भा)

अर्थवादिकृतव्याप्तिपरिहारानन्तरमित्यर्थः॥

चोदिः पृच्छत्यर्थत्वादिति। (कै)

व्यापारद्वयार्थत्वेन कर्त्तुरित्येव द्विकर्मकत्वं सिद्धमित्ययं प्रयासो वृथेति वस्तुतत्त्वम्॥

न लुमताङ्गस्येति। (पा)

तथा चाङ्गोद्देश्यककार्य एव निषेध इति नात्र निषेधप्रवृत्तिरिति भावः। "न लुमता तस्मिन्निति" वार्तिकन्यासे ऽपि प्रत्ययाक्षिप्तप्रकृत्युद्देश्यककार्ये एव निषेधो न तु तदवयवोद्देश्यक इति तात्पर्य्यम्। विषयसप्तमीपक्षेऽपि प्रत्ययलक्षणप्रवृत्तौ बाधकाभाव इति न दोषः। एवञ्चात्यङ्ग इत्यपि सिद्धम्। अत्रेदं बोध्यम्। युगपदधिकरणवचनताया दूषितत्वात्। प्रत्ययपक्षे ऽयं दोषः स्थित एवेति॥ भाष्ये

प्राप्तिरस्ति युवबहुत्वे तु पुनर्लुक्। न च पुनर्लुक् प्रसङ्गः। समर्थानां प्रथमादित्यधिकारात्। विभक्तिविपरिणामेन हि गोत्रप्रत्ययस्य प्रथमस्य

तु भार्गवस्य वात्स्यस्याग्रायणस्य भृगुवत्साग्रायणा इति, यद्यपि तत्रापि भिरेव छतं बहुत्वम्। आग्रयणो नडादिफक्को लुगभावात्तथाप्यपत्यतया तज्जातीयत्वमस्तीति लुभवत्येव। यद्येवं गार्ग्यस्य काश्यपस्य गालवस्य गार्ग्यकाश्यपगालवाः मित्यत्र गालवे ऋष्यणो लुगभावेप्यपत्यतया तज्जातीयत्वाद्यञ्ञो-

**पञ्चगर्ग इति । (भा)**

निषेधस्त्वर्थान्तरानुपसंक्रान्तस्त्रीविषय इत्युक्तम् ॥

**सुंबन्तेनेति । (कै)**

तस्य लुक्यप्युक्तन्यायेन प्रत्ययलक्षणसत्त्वाद्बहुवचनपरत्वेन लुक्सिद्धौ न दोष इति भावः ॥

**लुक्छास्त्रवदलुक्छास्त्रस्यापीति । (कै)**

तस्याप्यपत्याधिकारबहिर्भूतत्वेन लौकिकगोत्रस्यैव ग्रहणादिति भावः ॥ ननु "लक्ष्ये लक्षणस्येति" न्यायेन पुनरप्रवृत्तिः । किञ्च "यूनि लुगि"( ४ । १ । ९० )त्युत्तरत्रोक्ते "गोत्रेऽलुगिति" ( ४ । १ । ८९ ) सूत्रे युवातिरिक्ता येत्यस्यैव गोत्रग्रहणात् । युवबहुत्वाश्रयलुकः कथमलुक् । अपि च यत्र गोत्रे वर्त्तमानस्य लुक् प्राप्तस्तद्व्यतिरिक्तप्राग्दीव्यतीये ऽर्थे यो ऽजादिस्तत्रेत्यर्थस्य शब्दमर्यादया लाभात् । न चास्यामवस्थायां प्रत्युपसंक्रान्तात् कश्चिदिवक्षितो ऽस्तीति चेन्न । अर्थभेदेन लक्ष्यभेदात् । गोत्रे विहितस्य प्रत्ययस्येत्यर्थाश्रयणेनाप्यो युवातिरिक्त गोत्रे एव विहितत्वेन द्वितीयस्याप्यभावः । अत एव न तृतीयोऽपि ॥

---

अलुगित्यर्थः । प्राथम्यं चार्थान्तरेनुपसंक्रान्तत्वम् । अत एवात्रिभरद्वाजिकेति सिध्यति । अत्रेरपत्यानि इतश्चानिञ इति ढक् । भरद्वाजस्यापत्यानि

---

लुक्प्रसङ्गः । एवं तर्हि भृगुवत्साग्रायणोष्वगार्ग्यकाश्यपगालवानामिति निर्देशाद्बयाप्लोप्यलोपिभिरपत्यप्रत्ययैः कृते बहुत्वे विकल्पः । तदेवं तद्राजान्तस्य बहुत्वे वर्तमानस्येति स्थितम् । वृत्तौ तु तद्राजसञ्ज्ञकस्य प्रत्ययस्य

**समर्थानां प्रथमस्येति।** (कै)

अथ समर्थग्रहणानुवृत्तिप्रदर्शनस्योत्तरत्र तस्यानुवृत्तिसूचनमेव फलं प्रकृतोपयोगि तु प्रथमादित्येव तस्य वाऽनुवृत्तस्यार्थवशाद्विभक्तिविपरिणाम इति भावः ॥ अवश्यं चैतदित्यस्यार्थमाह

**यथा न्यासे ऽपीति ॥** (कै)

**ततो ऽणञोरिति।** (कै)

अत्रिभृगुकुत्सवसिष्ठगौतमाङ्गिरोभ्यश्चे (२। ४। ६५) त्यनेनाणः "यञञोश्चे"(२।४।६४)त्यत इत्यर्थः ॥

**ज्ञापनायेति।** (कै)

प्रथमादित्येतत्संबन्धज्ञापनायेत्यर्थः ॥ भाष्ये

**नियमार्थमित्यस्य** (भा)

तत्सम्बन्धबोधनपूर्वकं नियमार्थमित्यर्थः ॥ पूर्वव्याख्यानात् तत्सम्बन्ध इदानीं तु तत्रैवार्थे ज्ञापकमुक्तमिति भेदः ॥ भाष्ये

**अञन्तं यद् बहुष्विति।** (भा)

बहुष्वित्यस्याव्याप्त्यतिव्याप्तिवारकतया सार्थवत्त्वलाभेन तदन्तविशेषणमिति भावः ॥

---

विदाद्यञ्। ततस्तूभयत्र युवबहुत्वे अत इञ् तस्य ण्यक्षत्रियेति लुक्, ढको-ऽत्रिभृगिवति, अञो यञञोश्चेति। ततो अत्रिभरद्वाजानां मैथुनिकेति

---

बहुषु वर्तमानस्येति अधिकरणे षष्ठी बहुषु वर्तमानस्यास्त्रीलिङ्गस्य तद्राजान्तस्य यो ऽवयवः प्रत्ययस्तस्येत्यर्थः। 'तेनैव चेत्तद्राजेनेति'। अत्रापि तद्राजान्तेनेत्यर्थः। तद्राजेष्वपि लोपिप्रत्ययोपसन्तानाम् अङ्गगर्गलोहध्वज।

तस्यायमधिको दोष इति। (भा)

युगपदधिकरणवचनताया दूषितत्वाद् द्वन्द्वे ऽबहुषु लुग्वचनमिति दोषो ऽस्त्येवेति तस्याप्युपलक्षणमिदमर्थपरत्वे तु युगपदधिकरणतां विना ऽपि तद्दोषोद्धार उक्तः॥

एकैकमिति। (कै)

द्वन्द्वरूपसमुदायस्य स्त्रीपुंसात्मकसमुदाये शक्तौ समुदायस्य प्रत्येकानतिरेकेणैकैकस्य तदभिधायकत्वमिति भावः। यद्वा समुदायाभिधायीत्यस्य समुदायगतबहुत्वाश्रयाभिधायीत्यर्थः॥ भाष्ये

अर्थस्य तत्त्वमिति। (भा)

तत्त्वसतत्त्वशब्दौ पर्यायौ॥ पण्डितस्यैव प्रकारं दर्शयति

तत्रेति। (कै)

अन्येतुमतं तु न युक्तं न हि गार्ग्यौशब्देन स्त्रीत्वयुक्ता गार्ग्य उच्यन्ते। गार्गी चेत्येकवचनान्तेन भाष्ये विग्रहकरणात् समासे संख्याविशेषानवगमाच्च युगपदधिकरणवचनतापक्षे ऽपि वात्स्यादयः स्त्रीत्वयुक्ता नोच्यन्ते ऽनुभवविरोधादित्याहुः। पर्युदासप्रतिषेध-

---

द्वन्द्वाद्वुन् ञ्ञ्याकादेशः। तत्रसाधुरिति यत् कार्यः। एतेन तस्यामेव रघोः पाण्ड्या इति व्याख्यातम्। वृद्धेत्कोसलेत्यत्र पाण्ड्योर्ड्यण् इत्युपसङ्ख्यानात्

---

इत्यादावपि भवतीत्याहुः। इहाङ्गस्यापत्यानि बह्वन्यङ्गास्तेषामपत्यं युवा युवानौ वा आङ्गः आङ्गायनिरिति युवसञ्ज्ञान्तेः प्रागगोत्रे ऽलुगचीति प्रतिषेधाल्लुगभावः, पश्चात्तु बहुत्वाभावाद्। अचीति च विषयसप्तमी तेन युवप्रत्यये पश्चाल्लुमता लुप्ते ऽपि विषयभूत एव तस्मिन्प्रागेव लुकः प्रतिषेधः, लुप्ते ऽपि वा

योरुभयोरपि गार्गीवत्स्ये लुगभावौ। अन्ययोर्लुगित्यर्थतत्त्वं द्वन्द्वार्थे उद्भूतावयवभेदे समूहे गार्ग्या उपसंक्रान्तत्वेनार्थान्तरानुपसंक्रान्त-स्त्रियो ऽभावादिति परे॥

बह्वर्थ इति। (कै)

बहुत्वाश्रयार्थ इत्यर्थः॥

अथ तेनैवेतिवचनादिति। (कै)

[1]प्रत्ययग्रहणपक्षे तेनैवेति वचनात्तामाकारीतिलुक्। अर्थ-ग्रहणपक्षे तदभावात् प्राप्नोति। तथा च द्वितीयपक्षे एतदर्थमेव तेनैवेति किं कर्तव्यमिति प्रश्नाशय इति भावः॥

ज्ञापकद्वयेति। (कै)

एवञ्च तेनैवेति न कार्यमिति भावः। तेनैवेति कुर्वता ऽपि भृगुवत्साग्रायणेष्विति प्रयोगनिर्वाहाय ज्ञापकस्यावश्याश्रयणीयत्वात्। एवञ्च गार्ग्यश्च चैत्रश्चेत्यादौ द्वन्द्वे यथाप्रयोगं लुगलुकोर्व्यवस्था बोध्या॥

---

१ "प्रत्यय" इत्यारभ्य "प्राप्नोति" इत्यन्तं नास्ति इंगलण्डीयविवरणपुस्तके॥

याणतद्राजत्वेऽपि पाण्डेर साधवः पाण्ड्या इति यत्प्रत्ययान्तत्वेन साधुत्व-निर्वाहात्॥

प्रत्ययलक्षणेन। नन्वचीति वचनादर्थाश्रयोऽयं, नेत्याह, अचीति प्राग्दीव्य-तीयस्य प्रत्ययस्य विशेषणं प्रत्यय एव लुकि निमित्तम्। 'आङ्गः स्त्रिय इति'। इह च आङ्गी च वाङ्गश्च सौह्मश्चेति द्वन्द्वे आङ्गीतिशब्देन स्त्रीत्व-युक्तानामभिधानात्तदयो लुग् भवति आङ्गीवङ्गसुह्मा इति भवतीत्याङ्गः॥

# यञञोश्च । २ । ४ । ६४ ॥

इतः प्रभृतीति (कै)

अतः पूर्वविषये आङ्गं कुलमित्येवेति भावः ॥

---

यञञोश्च ॥ गोत्रे यौ यञञौ तदन्तं यद्बहुषु तदवयवयोर्यञञो-र्लुक् स्यान्न तु स्त्रियाम् । गर्गाः वत्साः बिदाः उर्वाः । स्त्रियां तु गार्ग्यः स्त्रियः । गोत्रे किम् । द्वीपादनुसमुद्रं यञ्, द्वैप्याः । उत्सादिभ्योऽञ्, औत्साः । अथ कथं पौत्रा दौहित्राः बिदाद्यञन्तत्वात् । उच्यते । अपत्याधिकारादन्यत्र लौकिकं गोत्रन्त्विह प्रवराध्यायप्रसिद्धम् । न च पौत्रादिस्तथा । इदं च स्त्रीपुंसाभ्यामिति सूत्रे कैयटेन स्फुटीकृतम् । यञादीनामेकद्वयोर्वा तत्पुरुषे षष्ठ्या उपसङ्ख्यानम् । एकद्वयोरिति भाव-प्रधानो निर्देशः । गार्ग्यस्य गार्ग्ययोर्वा कुलं गर्गकुलं गार्ग्यकुलं वा । यञा-दीनां किम् । आङ्गकुलम् । एकद्वयोः किम् । गर्गाणां कुलं गर्गकुलम् । तत्पुरुषे किम् । गार्ग्यस्य समीपमुपगार्ग्यम् । षष्ठ्याः किम् । परमगार्ग्यः ॥

---

"यञञोश्च" ॥ 'गोत्रप्रत्ययस्य बहुषु वर्तमानस्येति' । अत्रापि व्यधिकरणे षष्ठ्यौ । बहुषु वर्तमानस्य समुदायस्य सम्बन्धी यो गोत्रप्रत्ययो यञ् अञ् च तस्येत्यर्थः । तेन द्वन्द्वेपि भवति गर्गवत्सवाजा बिदौर्वभरद्वाजा इति । 'गार्ग्य स्त्रिय इति' । 'यञश्चे'ति ङीप् 'हलस्तद्धितस्य' । 'वैद्य इति' । 'शार्ङ्गरवाद्यञो ङीन्' । 'एकद्वयोरिति' । एकत्वद्वित्वयोरित्यर्थः । 'संख्याया अल्पीयस्या' इत्येकशब्दस्य पूर्वनिपातः । द्व्येकयोरिति निर्देशाद् द्विशब्दस्यापि भवति । 'गार्ग्ययोः कुलं गार्ग्यकुलमिति' । प्रकरणादिवशाद् द्वित्वावगतौ द्विवचनान्तस्यापि विग्रहः समासः ॥

# बह्वच इञः प्राच्यभरतेषु । २ । ४ । ६६ ॥

सामान्यविशेषयोर्द्वन्द्वासंभवादाह

गोबलीवर्दमिति । (कै)

इदमेव तयोरपि समासज्ञापकमिति भावः । वस्तुतो गोबली-वर्दमित्यादौ सामान्यविशेषभाव एव नेत्येकशेषप्रकरणान्ते भाष्ये उक्तत्वेनाच सौचत्वाद् द्वन्द्वः । सामान्यविशेषवाचिनोर्नैव द्वन्द्वः । "सामान्यविशेषवाचिनोर्द्वन्द्वो नेति" वक्तव्यमिति तत्रैव भाष्योक्ति-रिति बोध्यम् ॥

बह्वच इञः प्राच्यभरतेषु ॥ बह्वचः परो य इञ् प्राच्यगोत्रे भरत-गोत्रे च वर्तमानस्तस्य लुक् स्यात् । पन्नागाराः । मन्थरैषणाः । भरतापत्ये तु युधिष्ठिराः । अर्जुनाः । युधिष्ठिरार्जुनशब्दाभ्यां कुर्वादिण्यापवादो बाह्वादिलक्षण इञ् । भरतापत्ये अभेदोपचाराद्भरतशब्दः । ते च भरताः प्राच्या एव । द्वन्द्वस्तु गोबलीवर्दन्यायेन । सामन्यविशेषवाचिनोर्वाचनिक-द्वन्द्वनिषेधो यद्यप्युक्तस्तथापि तस्यानित्यता अनेनैव ज्ञाप्यते । तत्फलं तूक्तमेव । प्राग्ग्रहणेनैव सिद्धे भरतानां पृथगुपादानमन्यत्र प्राग्ग्रहणे एषां ग्रहणं नेति ज्ञापनार्थम् । तेन इञः प्राचामिति लुक् भरतयुवप्रत्य-यस्य न भवति । आर्जुनिः पिता आर्जुनायनः पुत्रः ॥

"बह्वच इञः प्राच्यभरतेषु" । भरतापत्येषु भरतशब्दाऽभेदोपचारा-द्वर्तते, यथा रघूणामन्वयं वक्ष्ये इति । युधिष्ठिरार्जुनशब्दाभ्यां कुर्वाण्योपवादो बाह्वादिलक्षण इञ् । बलाकाशब्दोपि बाह्वादिः । 'भरताः प्राच्या एवेति' । प्राच्यभरतेष्विति द्वन्द्वस्तु सामान्यविशेषवाचिनोर्गोबलीवर्दन्यायेनेति भावः ॥

# उपकादिभ्योऽन्यतरस्यामद्वन्द्वे । २ । ४ । ६९ ॥

पाठो ऽनार्ष इति । (कै)

वृत्तिकारोक्त इत्यर्थः ॥

उपकादिभ्योन्यतरस्यामद्वन्द्वे । एभ्यो गोत्रप्रत्ययस्य बहुत्वे लुक् वा स्यात् । द्वन्द्वे चाद्वन्द्वे च । सूत्रशेषस्य अद्वन्द्वे इत्यस्य तु द्वन्द्वग्रहणमिह नानुवर्त्तत इत्यर्थः । एषां मध्ये त्रयो द्वन्द्वास्तिककितवादिषु पठ्यन्ते । औपकायनाश्च लामकायनाश्च नडादिभ्यः फक् । तस्य लुक् । उपकलमकाः । भ्राष्ट्रककपिष्ठलाः । कृष्णाजिनयः । कृष्णसुन्दराः । एषां पूर्वेण नित्यमेव लुक् । अद्वन्द्वे त्वनेन विकल्पः । उपकाः । औपकायनाः । लमकाः । लामकायनाः । भ्राष्ट्रकाः । भ्राष्ट्रकः । कापिष्ठलाः । कापिष्ठलयः । कृष्णाजिनाः । कार्ष्णाजिनयः । कृष्णसुन्दराः । कार्ष्णसुन्दरयः । शेषाणान्तु द्वन्द्वेऽपि विकल्प इति वृत्तिः । भाष्ये तु भ्राष्ट्रकिकापिष्ठलय इत्युदाहरणात्तिककितवादिष्वस्य पाठो ऽनार्ष इति कैयटः ॥

"उपकादिभ्यो ऽन्यतरस्यामद्वन्द्वे" । 'द्वन्द्वे चाद्वन्द्वेचेति' । कथमद्वन्द्वइत्युच्यमाने द्वन्द्वे चाद्वन्द्वे च भवति, तदाह । 'अद्वन्द्वग्रहणं द्वन्द्वाधिकारनिवृत्त्यर्थमिति' । नात्र शास्त्रीयो ऽधिकारः स्वरितत्वनिबन्धनो विवक्षितः, नहि पूर्वसूत्रे द्वन्द्वशब्द आसन्नस्वरितः, तस्माल्लौकिकोधिकारो व्यपेक्षालक्षणः, तदिह द्वन्द्वशब्देन तद्विषया व्यपेक्षाभिधीयते तस्या नञा निषेधो ऽद्वन्द्वे इति । किमुक्तं भवति, द्वन्द्वइति नापेक्ष्यतइति, तदनपेक्षायां द्वन्द्वे चाद्वन्द्वे च भवति । अद्वन्द्वइत्यस्मिन्नसति लौकिको-ऽधिकारो द्वन्द्वस्य प्रवर्त्तेत, द्वन्द्वश्चैषामेव परस्परं गृह्यते, तेषां पूर्वेण नित्यं लुग्भवतीति । भाष्ये तु भ्राष्टकिकापिष्ठलय इत्युदाहरणात्तिककितवादिष्वस्य पाठोनार्ष इति निश्चयः ॥

**आसंक्तस्वरित इति।** (कै)

फलाभावादिति भावः। स्वरितत्वासङ्गभावस्यैवाभ्याख्यानं वार्त्तिकमित्यन्ये ॥

---

# आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्। २ । ४ । ७० ॥

प्रकृतिनिपातनशब्दस्य विवक्षितमर्थमाह

**प्रकृतेरेवेति।** (कै)

अर्थादेव प्रत्ययस्य लुगिति बोध्यमिति भावः ॥ भाष्ये

**वृध्यभावः स्यादिति।** (भा)

एवञ्च को न स्यादिति भावः। पूर्वं फलाभावाद्बृद्धिसंज्ञाभावेन स्थानिवद्भावेन न तल्लाभ इति बोध्यम् ॥

---

आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् ॥ एतयोरवयवस्य गोत्रप्रत्ययस्य अणो यञश्च बहुषु लुक् स्यात् अवशिष्टस्य प्रकृतिभागस्य यथासंख्यम् अगस्ति कुण्डिनच् एतावादेशौ स्तः। अगस्तयः। कुण्डिनाः। कुण्डिनी-शब्दस्य यञि भस्याढे इति पुंवद्भावे नस्तद्धित इति टिलोपे कौण्डय इति

---

"आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच्"। कुण्डिनीशब्दस्य यञि 'भस्याढे तद्धित' इति पुंवद्भावे 'नस्तद्धित' इति लोपे कौण्ड्य इति प्राप्नोति, अस्मादेव निपातनात्पुंवद्भावाभावः। असति च तस्मिन्नीकारस्य

( आगस्त्यकौण्डिन्ययोरगस्तिकुण्डिनच् । २ । ४ । ७० । ) (अ. २ । पा. ४ । आ. २)

## अस्य विशेषेति । (कै)

यद्यपि कौण्डिना इति सिध्यति । तथाप्यागस्तीया इति न सिध्यतीति व्याख्येयमिति भावः ॥ ननु प्रत्ययवाचकपदाभावेन बहुष्वित्यस्य प्रत्ययान्तसमुदाये एवान्वये च तस्यैव लुक् स्यादत आह

## बहुष्विति ॥ (कै)

## यः प्रत्यय इति । (कै)

लुगाचिप्तो ऽयं प्रत्ययादर्शनस्यैव लुक्त्वादिति बोध्यम् ॥

---

प्राप्तम् । अस्मादेव तु निपातनान्न पुंवत् । ईकारस्य यस्येति लोपः । तस्य स्थानिवत्त्वादाभीयत्वेनासिद्धत्वाद्वा टिलोपो न । चकारः स्वरार्थः । मध्योदात्तो हि कुण्डिनीशब्दः । कुण्डमस्त्यस्या इति मत्वर्थीयस्य इनेरुदात्तत्वात् । तदादेशोपि आन्तरतम्यात्तथा स्यात् । कथं तर्हि, वासिष्ठकुण्डिनौ तद्वद्-यमन्यपराशराः । चतुर्णामेकगोत्रत्वान्न विवाहः परस्परमिति ॥ उच्यते । नायं कुण्डिनजादेशः किन्तु कुडि दाहे इत्यस्मादौणादिके इनच्प्रत्यये उज्ज्वलदत्तादिभिर्व्युत्पादितः स्वतन्त्र एवायं शब्दः । अत एव वासिष्ठमैत्रावरुणकौण्डिन्येति, होताकुण्डिनवन्मित्रावरुणवद्वसिष्ठवदित्यध्वर्युरिति

---

यस्येति लोपः, तस्य स्थानिवत्त्वादाभीयत्वेनासिद्धत्वाद्वा टिलोपाभावः । आगस्त्यकौण्डिन्ययोरित्येतद्योर्गोत्रप्रत्यययोरिति व्यधिकरणे षष्ठौ, एतयोर्यावयवावित्यर्थः, तावेव स्वरूपेण दर्शयति । 'अणश्च यञश्चेति' । मध्योदात्तो हि कुण्डिनीशब्द इति' । कुण्डमस्यास्तीति 'अत इनिठनौ' प्रत्ययस्वरः, ङीबनुदात्तः । ननु मानुवृत्तलुग्ग्रहणं, प्रत्ययान्तयोरेवादेशौ स्तामत आह । 'तयोरित्यादि' । यदि हि प्रत्ययान्तयोरेवादेशौ स्यातां 'गोत्रेऽलुगचौ' ति प्रतिषेधो न स्याद् लुको ह्यसौ निषेधो नादेशस्य, ततश्चा-

**षष्ठीनिर्दिष्टस्येति । (कै)**

स्थानषष्ठीसामर्थ्यस्य प्रतिबन्धिकेति भावः ॥

**तत्रेति । (कै)**

एतदर्थमेव तत्र प्रत्ययग्रहणं कृतम् । यद्वा गोत्रे इत्यनुवर्त्य गोत्रे कृतस्य लुगित्यर्थान्न दोषः ॥

**पर्यायाभाव इति । (कै)**

विकल्पस्यादृष्टदोषदुष्टत्वादित्यपि बोध्यम् ॥

---

बौधायनसूत्रं सङ्गच्छते । आपस्तम्बसूत्रमप्येवम् । एतेन वसिष्ठमित्रावरुणौ कुण्डिनस्य महातपा इति मत्स्यपुराणप्रवराध्यायप्रयोगोऽपि व्याख्यात इति दिक् । इह यदि लुकं निवर्त्य विशिष्टयोरेवादेशौ क्रियेते तदा कौण्डिना इत्यस्य सिद्धावपि आगस्तीया इति न सिध्यति । तथाहि । अगस्त्य-शब्दादृष्यणि आगस्त्यः । ततो बहुवचनान्ताद्वृद्धाच्छे विवक्षिते गोत्रेऽलुग-चीति लुक्प्रतिषेधः । प्रत्ययविशिष्टस्यागस्त्यादेशपक्षे तु तन्निषेधाभावा-द्वृद्धत्वापगमे शैषिकोऽणेव स्यात् । उपपादितं चेदं प्रत्ययस्य लुक्श्लुलुप्सूत्रे ॥

---

देशे सत्यवृद्धत्वादणेव स्यात्, लुकि तु सति तस्य प्रतिषेधे तत्सन्नियोग-शिष्टस्यादेशस्याप्यभावाद्वृद्धलक्षणश्छो भवति । तत्र विशेषो नास्तीति किमर्थं तर्हीदमुक्तम् अयास्य यजस्व बहुषु लुग्भवतीति । एवं मन्यते, यदि कुण्डिनजादेशः समुदायस्य स्यात् अगस्त्यादेशोऽपि तथा स्यात् अतो ऽवश्यं लुगनुवर्त्य, अनुवृत्तस्य च कौण्डिन्येनापि संबन्धो विरोधाभावादिति ॥

# यङो ऽचि च।२।४।७४॥

यङा साहचर्यादच् प्रत्यय एवात्र गृह्यते॥

## ऊतोऽचि। (कै)

ऊतः परस्य यङो ऽचि लुगित्यर्थः॥

---

यङोऽचि च॥ यङो ऽच्प्रत्यये परे लुक् स्यात्। चकाराद्बहुलमन्यत्रापि। लोलुवः। पोपुवः। पचाद्यच्। इदमेव अचि लुग्विधानं ज्ञापकं सर्वधातुभ्यः पचाद्यजिति। बाहुलकात् बेभिदीति चेच्छिदीतीत्यादि। इह अजिति प्रत्याहारो न गृह्यते। तथाहि सति अग्रणीत्येवावक्ष्यत्। यङन्ता-

"यङोऽचि" च॥ 'अचि प्रत्यये परत इति'। पचाद्यचीत्यर्थः। एतदेव ज्ञापकं सर्वधातुभ्यः पचाद्यच् भवतीति, प्रत्याहारग्रहणं तु न भवति, तथा हि सत्यग्रणीत्येव वक्तव्यमन्यागमादेः प्रत्ययस्यासंभवात्। 'न तु छन्दसीति'। ऊग्नुवोः सार्वधातुक' इत्यत्र वार्तिकं, हुश्नुग्रहणमनर्थकमन्यस्याभावात्। यति वातीत्यत्र क्ङितीत्यधिकारान्न भविष्यति, यातः वातः, अपीत्यनुवर्तते। यान्ति वान्ति, ओरिति। युवन्ति रुवन्ति, अनेकाच इति वर्तते। अयुवन्, अरुवन्, अडागमोऽसिद्धः। प्रोर्णुवन्ति, असंयोगपूर्वस्येति वर्तते। यङ्लुङ्निवृत्त्यर्थं तर्हि हुश्नुग्रहणं, योयुवति, रोरुवति। यङ्लुगर्थमिति चेदार्धधातुकत्वात्सिद्धं, छान्दसो यङ्लुक् तत्र 'छन्दस्युभयथे' त्यार्धधातुकत्वादेव न भविष्यति। तदेवं यङ्लुकश्छान्दसत्वमभ्युपगम्य हुश्नुग्रहणं प्रत्याख्यातं वार्तिककारेण, स मन्यते, चकारेणात्र 'बहुलं छन्दसी' ति सर्वमनुवर्तिष्यते, तेनाचि प्रत्यये परतः छन्दसि भाषायां

यङ्चेति । (कै)

"न धात्विति" (१।१।४) सूत्रस्थप्रत्याख्यानप्रकारस्तु लक्ष्य-विशेषविषय एवेति निरूपितं तत्रैव ॥ भाष्ये

इत्येव भवितव्यमिति । (भा)

योयूपो रोरूप इत्यत्र बाहुलकाद्यङ् लुगभाव एवेत्यपरे ॥

---

दन्यस्याचो ऽसम्भवादिति हरदत्तः । न च पापच्ये पापच्यै इत्यत्र सम्भवः । यणा व्यवधानात् । एकादेशस्य स्थानिवद्भावात् लिटस्तझयोरित्येशः सम्भवोऽस्तीति चेन्न । अप्रसङ्गात् । यदि तु अमन्त्रे इति निषेधात् मन्त्रे कथंचित्तत्संभवस्तर्हि यङा साहचर्यादिति युक्त्यन्तरमन्वेषणीयम् ॥

---

यङो लुग् भवतीत्येकं वाक्यं, छन्दसि बहुलमनैमित्तिको लुगिति द्वितीयं, प्रसिद्धश्च तथा छान्दसो यङ्लुगिति, प्रयोगश्च चिरन्तनः पद्ये गद्ये च काथाख्यायिकादौ विकटपदोपन्यासप्रधानैरपि कविभिर्न कृतो दृश्यते । भाष्यकारस्तु ऊर्णुवोर्गिति वक्ष्यन्ति, एवं तर्ह्येतज्ज्ञापयति भाषायामपि यङ्लुगिति, तेन चेचिदीति चेच्छिदीति योयवीतीत्यादि सिद्धं भवति । वृत्तिकारस्तु मन्यते यदि ज्ञापकेनापि तावद्भाषायामपि यङ्लुकः प्रयोगो भवति छन्दस्येवमनेन छन्दो ग्रहणं मानुस्रतन् प्रयोगस्तु ज्ञापकाश्रयेणैव यथाभिधानं व्यवस्थास्यत इति । अतो न भाष्यवार्तिकविरोधो वृत्तेः शङ्कनीयः ।

# गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु । २ । ४ । ७७ ॥

**इणो यो गाशब्द इति ।** (भा)

**भाष्ये इकोऽपीण्वद्भावात्तदादेशस्यापि सिद्धिरिति भावः ॥**

---

गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु ॥ एभ्यः सिचो लुक् स्यात्परस्मैपदेषु । इह मण्डूकप्लुत्या लुगनुवर्तते न त्वनन्तरोऽपि श्लुः व्याख्यानात् । यद्यपि गामादाग्रहणेष्वविशेषस्तथापि गातीति निर्देशादिणो गा लुङीत्यस्य ग्रहणं गादेशस्यैव ह्ययं श्तिपि श्लुका निर्देशः । ननु नायं गादेशः । लुङ्येव तद्विधानात् । सत्यम् । तथापि प्रकृतिवदनुकरणमिति स्थानिवद्भावातिदेशाच्छब्लुक् । भवतेर इत्यादौ तु अस्त्यादेशानुकरणे अतिदेशातिदेशेन प्राप्तोऽपि शब्लुक् प्रकृतिवदित्यस्यानित्यत्वान्नेत्यवधेयम् । हरदत्तस्तु स्थानिवद्भावात्प्रकृतिवदनुकरणमिति वा गातीत्यत्र शब्लुगित्याह । तत्र शब्दस्यासङ्गतिः स्पष्टैव । वस्तुतस्तु गापोर्ग्रहणे इण्पिबत्योरिति वार्तिकमेवात्र शरणम् । निर्देशादेव व्यक्तम् । लुग्विकरणग्रहणमिति तु भाष्ये प्रौढिवादमात्रम् । निर्देशस्य सन्दिग्धत्वात् । गायतेरपि हि सिचि कृतात्वस्यानुकरणं गातीति सम्भवत्येवेत्यवधेयम् । अगात् अस्थात् अदात्

---

"गातिस्थाघुपाभूभ्यः सिचः परस्मैपदेषु" ॥ 'अभूदिति' । 'भूसुवोस्तिङी' ति गुणप्रतिषेधः । 'लुगनुवर्त्तते न श्लुरिति' । व्याख्यानात् । 'इण्पिबत्योर्ग्रहणमिति' । इणादेशो गा इणित्युक्तः' तत्र गातीत्यादाविकस्येणो वा आदेशस्तदनुकरणे गा तिपि श्लुका निर्दिष्टः, स्थानिवद्भावात्प्रकृतिवदनुकरणं भवतीति च । तेन गामादाग्रहणेष्वविशेष इति लाक्षणिकस्यापि गारूपस्य यद्यपि ग्रहणं प्राप्तं तथापि गातीति निर्देशादेव तस्य निवृत्तिः ।

यः स्थानीति। (कै)

स्थान्यादेशसम्बन्धे षष्ठीति भावः॥ ननु पातेरपि पिबादेशः किं नेत्यत आह

श्नितीति चेति। (कै)

अदादिलुकेति श्तिपः कर्त्रर्थकत्वाभावादिकरणो न न्यायप्राप्त इति वादिनां मतेऽपि तस्य गैतिरिति स्थादित्याशयः। न च गैशब्दे इत्यस्य कृतात्वस्यानुकरणात् श्तिपापि एवमेव रूपेण निर्देशः

---

अधात्। पिबतेरेवेह ग्रहणं न तु पातेः। लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैवेति परिभाषया। अपात्। अभूत्। भूधातोः सतन्त्रस्यास्यादेशस्य चेदं रूपं तुल्यम्। न चादेशस्य लुग्विकरणत्वात्पातिवदग्रहः शङ्क्यः। आर्धधातुकैकविषयतया हेतोः स्वरूपासिद्धेः गापोर्ग्रहणेन इणादेशपिबत्योरेव ग्रहणमित्युक्तम्। नेह। कै गै रै शब्दे। अगासीत्। पा रक्षणे। अपासीत्। यमरमेतीट्सकौ। पै शोषणे इत्यस्यापि लाक्षणिकत्वादग्रहणं बोध्यम्। परस्मैपदेषु किम्। अगासातां ग्रामौ देवदत्तेन। अत्र कश्चित् सूत्रे भीधातोर्ङसौ निर्देशः। एरनेकाच इति यण्। तेन मा भैः शशाङ्क मम शीधुनि नास्ति राहुरिति प्रयोगः सङ्गच्छत इत्याह। एवं तु मा स्म भैषीस्त्वयाद्यैव कृतार्थो गम्यते यतिरिति भट्टिर्विरुध्येत। माभैरिति तु प्रामादिकम्। यद्वा। आगमशासनानित्यतयास्तिसिच इतीटो विरहे सिपो हल्ङ्यादिलोपे सिचो विसर्गः॥

---

तथा लुग्विकरणालुग्विकरणयोरलुग्विकरणस्यैव ग्रहणमिति पिबतेरेव ग्रहणम्। 'अगासीदपासीदिति' कै गै रै शब्दे। पा रक्षणे। 'यमरमनमातां सक्चे' ति सगागमः सिचश्चेट् 'अस्ति सिचो ऽपृक्ते' इतीट्, 'इट ईटि'। पै ओवै शोषणे इत्यस्य लाक्षणिकं पारूपमिति ग्रहणाभावः। 'आगासातामिति'। कर्मण्यात्मनेपदमातास्॥

सन्दिग्ध इति वाच्यम् । लाघविकत्वेन तस्यानुकरणतयास्याप्येवमेव रूपं तस्यैव ग्रहणाच्च । अन्यथा गास्थाघु इत्येवमेव वदेदिति भावः । गाङस्तु नानुकरणं परस्मैपदपरत्वाभावात् । "गामादाग्रहणेष्वविशेष" इति श्तिपाश्तितगानिर्देशविषयमिति बोध्यम् ॥ भाष्ये

अलुग्विकरणस्येति । (भा)

."लुग्विकरणालुग्विकरणयोरलुग्विकरणस्य"(परिभा)त्यनयेत्यर्थः ॥

---

# तनादिभ्यस्तथासोः । २ । ४ । ७९ ॥

अतनिष्टेति (भा)

मध्यमपुरुषबहुवचनम् ॥

---

तनादिभ्यस्तथासोः ॥ एभ्यः सिचो वा लुक् स्यात्तथासोः परतः । अतत । अतथाः । अतनिष्ट । अतनिष्ठाः । असात । असाथाः । असनिष्ट । असनिष्ठाः । आत्मनेपदमि त्यात्मम् । पक्षे असनिष्ठाः । असनिष्ठ । यूयमतनिष्टेत्यत्र तु न लुक् । आत्मनेपदेनैकवचनेन च थासा साहचर्यात्तथाभूतस्यैव तशब्दस्य ग्रहणात् ।

"तनादिभ्यस्तथासोः" । उदाहरणेषु स्वरितेत्त्वादात्मनेपदम् । 'थासा साहचर्यादिति' । यद्यपि तावदयं तशब्दो दृष्टापचारो ऽस्यात्मनेपदमस्ति च परस्मैपदम्, अस्ति चैकवचनमस्ति च बहुवचनम् । अयं तु खलु थाःशब्दो ऽदृष्टापचार आत्मनेपदमेकवचनं च, तस्यास्य कोन्यः सहायो भवितुमर्हत्यन्यदत आत्मनेपदादेकवचनाच्चेति भावः । 'आत्मनेपदस्येति' । उपलक्षणमेतत् । एकवचनस्येत्यपि द्रष्टव्यम् ॥

# आमः । २ । ४ । ८१ ॥

यद्यपि पूर्वसूत्रे लेरिति क्लेर्ग्रहणं तथाप्यत्र योग्यतावशाल्लिट एव ग्रहणमिति ॥

## निपातनादिति (कै)

"विदाङ्कुर्वन्त्वित्यन्यतरस्यामिति" (पा-३।१।४१) "अभ्युत्सादयामि" (पा-३।१।४२) त्यादिनिपातनादित्यर्थः ॥

## तस्त्विति। (कै)

लेरित्यननुवृत्त्या सर्वेष्टसिद्धौ तदनुवृत्तिमभ्युपगम्य लुङ्लोटोर्निपातनाश्रयणमयुक्तमित्यर्थः ॥

## तरबादेरिति। (कै)

लावस्थायामेव लुकः प्राप्त्या कृदन्तत्वात्प्रातिपदिकत्वेन तरबुत्पद्यत इत्याशयः। आदिना तमबन्तादुत्पन्न आमश्च ग्राह्यः ॥

---

आमः ॥ आमः परस्य लुक् स्यात्, ईहांचक्रे। लक्षणप्रतिपदोक्तपरिभाषया नेह। अमगत्यादिषु, आम। आमतुः। तिबाद्यपवादत्वात्स्थाव-

---

"आमः"। 'आम उत्तरस्य लेर्लुग्भवतीति'। यद्यपि सिचा लिर्विशेषितस्तथापीह लेरित्येवानुवर्तत इति भावः। विदामक्रन्विदाङ्कुर्वन्त्वित्यत्र लुङ्लोटोर्निपातनाल्लुग्भवति। तरबादीनां चामन्तादनुत्पत्तिरेव, तस्याभिव्यक्तपदार्थत्वात्। अयं च लुङा प्राप्तेषु तिबादिषु विधीयमानत्वात्तादेशानामपवादः। तेनामन्तस्यातिङन्तत्वाद्यत्कामं ग्रामयाञ्चकारेत्यत्र 'तिङ्-

व्यवहितेति । (कै) .

तरबादौ सति व्यवहितत्वं स्यादिति भावः ॥ नन्वनभिव्यक्त-पदार्थकत्वेनातिशयाद्ययोगात्तरबाद्यनुत्पत्तौ कथं लुगित्यत आह

आमन्तस्येति । (कै)

प्रत्ययमात्रस्य लुक्फलमदर्शनमिष्यत एवानुत्पत्तेरिति भाष्याक्षरार्थ इति भावः ॥ नन्वर्थवानामसम्भवीत्यतः

आम्प्रत्यय इति ॥ (कै)

भाष्ये

सन्निपातेति । (भा)

लक्षणप्रतिपदोक्तपरिभाषया प्रत्ययाप्रत्यययोरिति परिभाषया च सुसाध्यमेतत् ॥

तदा कृतेष्विति । (कै)

विरोधाभावादेवान्तरङ्गत्वात्पूर्वं लुगित्यपि न वाच्यमिति भावः । “विहितानां नियम” इति पक्षाश्रयणाद्दोभयोस्तुल्यत्वम् ॥

---

स्थायामेवायं लुक् । तेनामन्तस्यातिङन्तत्वादनिघातस्ततः परस्य निघातश्च सिध्यतीति नलुमतेति सूत्रे प्रतिपादितम् । न चैवमामन्तस्य पदत्वं न

---

ङतिङ’ इति तस्य चानिघातस्तस्माच्च निघातः सिद्धो भवति । कथमामन्तस्य पदत्वं, सुबन्तत्वात् । लकारस्य कृत्वात्प्रातिपदिकत्वं, तिङ्भाविनो हि लकारस्यातिङिति प्रतिषेधो न चायन्तिङ्भावी । सुपः श्रवणं कस्मान्न भवति, आमः स्वरादिषु पाठादव्ययत्वात्, तद्धितेनामा साहचर्येऽपि तद्धित एव न गृह्यते ऽपि तु आमेरतद्धितोऽपि । नञा तु समासप्रसङ्गः, न कार्यां

• सत्यपीति । (कै)

न चासुत्पत्तिकाले परत्वात्ततः प्रागेव वादेशाः किं न भवन्तीति वाच्यम् । अपवादविषये उत्सर्गाप्रवृत्तेः । "प्रकल्प्य चापवादविषयमि"(परिभा)ति न्यायात् ॥ ननु अतिङिन्त्यनेन तिङ्स्थानित्वयोग्यस्य तस्य कृत्सञ्ज्ञा प्रतिषिध्येत इति कथं लिटः कृत्वमत आह

तिङ्भाविन इति ॥ (कै)

यद्यप्याम इत्यनेन सुपोऽपि लुक् सिध्यति लेरिति निवृत्ते-स्तथापि तदनुवृत्तिमतेऽपि लुकं साधयितुमाह भाष्ये

अव्ययादिति लुगिति ॥ (भा)

द्विवचनेति । (कै)

तदुत्पत्तिप्रकारश्च उत्तरसूत्रे भाष्ये स्पष्टः ॥

ननु कृत इति । (कै)

तद्विशेषणत्वे हि कृतो मान्तत्वाभावान्न सिध्यतीत्यर्थः । कृद्वि-शेषणत्वपक्षे तु लेरिति निवर्त्य आम इत्यनेनैवेति बोध्यम् ॥

---

स्यादिति वाच्यम् सुबन्ततया तत्सिद्धेः । यथा च सुपो न श्रवणं तथा कृन्मेजन्त इति सूत्रे प्रतिपादितम् ॥

---

हारयां 'नञ्' सुबन्तेन समस्यतइति समासः प्राप्नोति, नैष दोषः । अभिव्यक्तपदार्थेन हि याजयाञ्चकारेति नञः सामर्थ्यं न त्वनभिव्यक्तपदार्थे-नामन्तमात्रेण । आमन्तेभ्यो णलः प्रतिषेधः । पपाम ततामे । कृञ्ञौ कृतायां स्थानिवद्भावेन णलो लिग्रहणेन ग्रहणे लुक् प्राप्नोति ।

तद्धितप्रकरणादिति । (कै)

"तद्धितश्चासर्वविभक्तिरि"( १ । १ । ३८ )ति पठित्वा हि तत्र ते पठिता अतस्तेषु तद्धितपदमनुवर्त्तत इति भावः ॥ अननुवृत्तावपि न दोष इत्याह

तद्धितसाहचर्याद्वेति ॥ (कै)

समासे कृते इति । (कै)

गतिसमास इत्यर्थः । स च नित्य इति समासाभावे स्वरो न सिध्येदिति न वाच्यम् । उपसर्गाणां क्रियामात्रेण सामर्थ्यादनभिव्यक्तपदार्थकेन कारयामित्यनेन नास्य सामर्थ्यमिति न शङ्कनीयं तिङ्कृत्पदे त्वसमासो न स्यादित्यनिष्टम् । "तथा चे"त्यनेन सूचितम् । हेतुं दर्शयति

आमन्तस्येति ॥ (कै)

नलोपादीति । (कै)

आदिना पूर्वपदप्रकृतिस्वरत्वम् ॥ भाष्ये

न चकार कारयामिति । (भा)

क्वचित्तु न जहारहारयामिति पाठः । तत्र चकारेत्येतदर्थतो निबन्धजहारेति । तत्र सामान्यविशेषयोरभेदान्वयादित्याहुः ॥

---

अर्थवद्ग्रहणात्सिद्धम् । अर्थवत आमन्तस्य ग्रहणं न चैषोऽर्थवान् । एवमप्याम गत्यादिषु, तिपो णल्, आम अत्र प्राप्नोति, अर्थवत्त्वात् । लक्षणप्रतिपदोक्तयोः प्रतिपदोक्तस्यैव ग्रहणमित्यत्र न भविष्यति ॥

# अव्ययादाप्सुपः। २। ४। ८२॥

ननु माभूल्लिङ्गं तत्र शालायामित्यादौ स्त्रीसामानाधिकरण्या-देव टा एतस्य च न लुगत आह

न चेति॥ (कै)

भूतमिति। (कै)

सामान्ये नपुंसकम्॥ ननूच्चैस्तराभ्यां ब्राह्मणीभ्यां कृतमित्या-दावव्ययात्परा यः सम्भव इति चेन्न। "अव्ययादि"ति विहित-विशेषणात्। यद्वाप्सुब्भ्यामतिप्रसङ्गस्याव्ययरूपस्यैव प्रत्यासत्त्या ग्रहणान्न दोषः। एवञ्च छन्दोमेजन्तसूत्रस्थभाष्यमपि स्वरसतः सङ्ग-च्छते इति दिक्॥ ननु सुपो ऽनुत्पत्तौ कथं लुक् कथं वा प्रत्ययलक्षणमत आह

---

अव्ययादाप्सुपः॥ अव्ययाद्विहितस्यापः सुपश्च लुक् स्यात्। तत्र शालायाम्। अथ। अत्र वार्तिकम्। अव्ययादापो लुग्वचनानर्थक्यं लिङ्गा-

---

"अव्ययादाप्सुपः"॥ 'तत्र शालायामिति'। शालाशब्दसन्निधौ स्त्रीत्वयुक्तद्रव्यगतकारकशक्त्यभिधानात्तस्यामितिवत्तत्रेत्यत्रापि यदि स्त्रीप्र-त्ययः स्यात्तदादेव स्त्रीत्वं प्रतीयेतेति व्यामोहनिवृत्त्यर्थं टापो लुग्वक्तव्यो यथा षट्सञ्ज्ञकेभ्यः प्रतिषेध इति भावः। वार्त्तिककारस्त्वाह। 'अव्यया-दापो लुग्वचनानर्थक्यं लिङ्गाभावादि' ति। 'कृत्वा हृत्वेति'। यदा 'बहुषु बहुवचन' मित्यादेः स्वादिविधिवाक्येनैकवाक्यता तदा निःसङ्ख्येभ्यो निष्कारकेभ्यश्चाव्ययेभ्योऽस्मादेव लुग्विधानाल्लिङ्गात्स्वादयो भवन्ति, भिन्नवा-

स्वाभाविक्येवेति। (कै)

अव्ययात्परसुबदर्शनमेव लुक् सम्बन्धमिति भावः॥ ननु पूर्वोक्त-रीत्या सिद्धौ किं सुबुत्पत्त्येत्याशङ्क्याह

प्रसक्तेति॥ (कै)

स्वादिवाक्ये एकत्वादीनामनुपादानादाह

वाक्यैकेति॥ (कै)

वाक्यान्तरनिरपेक्षत्वादिति। (कै)

उत्पन्नानां नियम इति भाष्यस्यार्थनियम एवेत्याशयः॥

एकवाक्यतापक्षेऽपीति। (कै)

सामान्यापेक्षप्रत्ययनियमेऽपीत्यपि बोध्यम्। अत्र पक्षत्रयेऽपि सप्तानामपि विभक्तीनामुत्पत्तिरिति बोध्यम्॥

---

भावादिति। न च स्त्रियामिति सूत्रे स्त्रीसमानाधिकरणादिति पक्षः स्थितः। भूतमियं ब्राह्मणीत्यादावतिव्याप्तेः। विहितविशेषणान्नेह। अत्युच्चैसौ॥

---

क्यतायामपि नियमपक्षे तुल्यजातीयस्य नियमेन व्यावृत्तिः बहुष्वेव बहुवचनं न द्वयोर्नैकस्मिन्द्वयोरेव द्विवचनं नैकस्मिन्न बहुषु, एकस्मिन्नेवैकवचनं न द्वयोर्न बहुषु इत्यव्ययेभ्यः स्वादीनां सम्भवः। त्रिकपक्षे तु यत्र सङ्ख्या सम्भवति तत्रैव सा वाच्यत्वेन विधीयते, अव्ययेभ्यस्तु निःसङ्ख्येभ्यः सामान्यविहिताः स्वादयो विद्यन्त एवेति सर्वथाव्ययेभ्यः सुबुत्पत्तिरेषितव्या प्रत्ययलक्षणेन पदसञ्ज्ञा यथा स्यादिति। सुबिति च सप्तमीबहुवचनस्य पकारेण प्रत्याहारो न कपः, आपः पृथगुपादानात्॥

# तृतीयासप्तम्योर्बहुलम्। २। ४। ८४॥

तत्र वर्त्तिपदानामिति। (कै)

एकविंशतिर्भरद्वाजा इत्यनयोः स्वार्थोपसर्ज्जनवंश्या इत्यर्थाभिधायित्वादित्यर्थः। एवं हि अङ्गानतिक्रान्तो ऽत्यङ्ग इति न सिध्येत् तस्माद्भाष्यकारप्रयोगादत्र लुगभाव इति हरदत्तः। युक्तिरहितं चैतत्। अन्यथा विदानामपत्यं वैद इत्यादि सिध्यर्थं तद्राजसूत्रे उक्तवार्त्तिक-

---

तृतीयासप्तम्योर्बहुलम्॥ अनयोर्बहुलं स्यात्। पूर्वेण नित्ये प्राप्ते आरम्भः। उपकुम्भमुपकुम्भेन वा कृतम्। उपकुम्भमुपकुम्भे स्थितः। अत्र वार्तिकम्। सप्तम्या ऋद्धिनदीसमाससंख्यावयवेभ्यो नित्यम्॥ ऋद्धिः, सुमद्रम्। नदीसमास उन्मत्तगङ्गम्। संख्यावयव, एकविंशतिभारद्वाजम्। त्रिपञ्चाशद्गौतमम्। एकविंशतिभरद्वाजा वंश्यास्त्रिपञ्चाशद्गौतमा वंश्या इति विग्रहः। संख्यावंश्येनेति समासः। ननु भरद्वाजाद्विदाद्यञो यञञोश्चेति लुक् प्राप्नोति। एवं गोतमादृष्यणः। अत्रिभृग्वित्यारम्भात्। न च वर्तिपदानां स्वार्थोपसर्जनैकत्वविशिष्टार्थान्तरोपसंक्रमाल्लुगभाव इति कैयटोक्तं युक्तम्। वृत्तिप्रवेशात्प्रागेव प्राप्तवतोन्तरङ्गस्य लुको दुर्वारत्वात्। अन्यथा गर्गाणां कुलं गर्गकुलमित्यपि न स्यात्। अत्राहुः। भाष्यकारप्रयोगादेव लुगभावोत्र बोध्य इति। इदं च वार्त्तिकं बहुलग्रहणासिद्धार्थकथनपरम्॥

"तृतीयासप्तम्योर्बहुलम्"॥ 'सुमद्रमिति'। मद्राणां समृद्धिरित्यव्ययीभावः, ततः सप्तमी, तस्या नित्यमम्भावः। 'एकविंशतिभारद्वाजमिति'। एकविंशतिर्भरद्वाजा वंश्या इति 'सङ्ख्या वंश्येने'ति समासः। तत्र वर्तिपदार्थानां स्वार्थोपसर्ज्जनार्थान्तराभिधायित्वाद्भारद्वाजशब्द एकत्वविशिष्टार्थान्तरे सङ्क्रान्त इत्यञो लुगभावः। नेति वयम्। गर्गाणां कुलं गर्गकुलमित्यादावपि प्रसङ्गात्। तस्माद्भाष्यकारप्रयोगादत्र लुगभावः॥

भाष्यासङ्गत्यापत्तिः । एतद्भाष्यप्रामाण्यादिमावुपकादिषु बोध्याविति बोध्यम् ॥

---

# लुटः प्रथमस्य डारौरसः । २ । ४ । ८५ ॥

प्रथमतः परत्वादेत्वे त्यकाकृतिन्यायेन डारौरसौ न प्राप्नुवन्तीत्याशयेन वार्त्तिकम् । भाष्ये

टितामिति । (भा)

डादयस्तु परस्मैपदे चरितार्था इति भावः । पूर्वविप्रतिषेधेन डादौ सकृद्गतिन्यायाश्रयणादेत्वाभाव इति तात्पर्यम् ॥ तद्ध्वनयन्नाह

तिप्तस्झीनामिति ॥ (कै)

आत्मनेपदानाञ्चेति । (कै)

न परस्मैपदम् ॥ भाष्ये

---

लुटः प्रथमस्य डारौरसः ॥ लुडादेशस्य प्रथमपुरुषस्य डारौरसः क्रमात्स्युः । कर्त्ता । शयिता । ननु परद्वये द्वौ त्रिकौ प्रथमपुरुषौ । तथा च षट् स्थानिनः त्रय आदेशाः तत्कथं वैषम्ये संख्यातानुदेशाः । अत्राहुः । डारौरसश्च डारौरसश्चेति कृतद्वन्द्वानामेकशेषात् षडेवादेशाः ।

---

"लुटः प्रथमस्य डारौरसः" ॥ 'परस्मैपदस्यात्मनेपदस्य चेति' । यद्येवं परस्मैपदे त्रयः, प्रथमपुरुषसंज्ञकास्तिबादयः, आत्मने पदेष्वपि त्रयस्तादय इति षट् स्थानिनस्त्रय आदेशा इति वैषम्यात्संख्यातानुदेशो न प्राप्नोति । मा भूत्संख्यातानुदेशः, आन्तर्यतो व्यवस्था भविष्यति, अर्थत-

**पुनः प्रसङ्गेति।** (भा)

पुनरेत्वं तु न लक्ष्ये लक्षणस्येति न्यायादिति भावः॥ प्रकृतैक-शेषद्वन्द्वपक्षस्य दुष्टत्वात्प्रश्नानुपपत्तिरत आह

**सामान्येन प्रश्न इति॥** (कै)

**अत्रेति** (भा)

भाष्यस्यैवंविधे विषय इत्यर्थः। उदाहरणान्तरविषयः प्रश्न इति भावः॥

**बहुशक्तिकिटकानिति।** (भा)

"जातिरप्राणिनामि"(२।४।६)त्येकवत्त्वं बहुशब्दोपात्तबहुत्वा-न्वयानुपपत्त्या कृतैकशेषाणामत्र द्वन्द्वः। बहुशक्तिकिटकानीत्यत्र बहुवचनान्यथानुपपत्त्या कृतद्वन्द्वानामेकशेष इति बोध्यम्। तस्मा-दुभयमपि न्याय्यम्। प्रकृते तु कृतद्वन्द्वानामेकशेषो न्याय्य इति बोध्यम्॥ डापा विकारे इत्यर्थे ऽनुपपत्तिरत आह

---

यदा। अर्थत आन्तर्याद्यवस्था। एकार्थस्यैकार्थो द्व्यर्थस्य द्व्यर्थ इत्यादि, एकार्थत्वादिनिर्णयस्तु व्यवहारात्। यद्यपि नानुबन्धकृतमनेकाल्त्वं तथापि डा इत्यस्य सर्वादेशत्वमानुपूर्व्याद्बोध्यम्। प्रतिपादितं चेदमनेकाल्शि-दिति सूत्रे। न चात्मनेपदे अध्येता ऽध्येतारावित्यादौ डारौरसः कृतेषु टेरेत्वं स्यादिति चेन्न। अस्मिन्नेव प्रयोगे संकृत्प्रवृत्ततया चरितार्थत्वात्।

---

स्यान्तर्यम्, एकार्थस्यैकार्थो द्व्यर्थस्य द्व्यर्थो बह्वर्थस्य बह्वर्थः। कथं पुनर्डादी-नामेकार्थाध्यवसायः। यावता यस्तिपः स्थाने स एकार्थो यस्तसः स्थाने स द्व्यर्थो यो झेः स्थाने स बह्वर्थो, नेत्याह, प्रयोगदर्शनादप्येकार्थादिकम-ध्यवसातुं शक्यम्। अथ वादेशा अपि सदैव निर्दिश्यन्ते। कथम्, एकार्थे-

डादेश इति । (कै).

कर्मधारय इति भावः ॥

नानुबन्धकृतमिति । (कै)

अनुबन्धत्वायोग्यकृतमित्यर्थः । ध्वनितश्चेदमनेकाल्शिदि(१।१।५२)ति सूत्रे भाष्ये ॥ भाष्ये

निघातप्रसङ्गस्त्विति । (भा)

शित्वे शित्वे च सर्वथा ऽयं दोष इति सूचयितुं तु शब्दः ॥ ननु श्वःपदयोगे तिङन्तनिघात एव भविष्यतीति किमनेन सार्वधातुकानुदात्तत्वविचारेणेत्यत आह

यस्त्विति ॥ (कै)

भाष्ये

---

तथाहि । एवं डादयस्त्रयोऽभयमपि शब्दान्तरप्राप्त्या ऽनित्यम् । तत्र परत्वादेत्वे कृते पुनःप्रसङ्गविज्ञानाड्डादयः । यद्वा । तिङ आदेशेषु टेरेत्वं न भवति । एधिरेचोऽस्यासः सेध्व एकारोच्चारणाज्ज्ञापकात् । स्यादेतत् । तिप्तयोर्द्वयोरपि डादेशेन्तोदात्तत्वमिष्यते । तत्र तिबादेशस्यान्तरतम्यादनुदात्तत्वे सत्युदात्तनिवृत्तिस्वरेणोदात्तत्वं सिद्ध्यतु तादेशस्य तु न

---

सनिर्देशात् । डारौरसश्च डारौरसश्चेति कृतद्वन्द्वानामेकशेषः । यदि तु डा च डा च डा । रौ च रौ च रौ । रस् च रस् च रस् । डा च रौ च रस् च डारौरस इति कृतैकशेषाणां द्वन्द्वः स्यादनिष्टः संख्यातानुदेशः प्राप्नोति । तिप्तसोर्डा । झितयो रौ । थातांझयोरसिति । 'कर्तेति' । लुट्, तिप्, तस्य टा इत्ययं सर्वादेशः । नानुबन्धकृतमनेकाल्त्वम् । अस्तु

**अनित्यत्वादिति।** (भा)

इयमेकदेश्युक्तिः। अनुबन्धलयोग्यत्वेन तल्लुताऽनेकाल्त्वाभावात्लुट् इत्यादौ प्रत्ययशब्द उपदिश्यमानप्रत्ययावयवपरो ऽपीत्यन्त्यादेशे-ऽपि डस्येत्वसिद्धिः। सर्वादेशे च तस्मिन् कृते एकादेश इति कृतैकादेशनिर्देशसामर्थ्यादादेशकाले एकादेशस्य नैव प्रवृत्ति-रित्यर्थः॥ ननु तिङवयवमादायैव सा किं न स्यादत आह·

**अक्तपरिमाणस्येति॥** (कै)

भाष्ये

**अनन्यवदिति।** (भा)

अर्थाधिकविकाराध्यायेनासिद्धिः स्थानिवदित्यतिदेशप्रवृत्तेरुप-लक्षणमिदमिति बोध्यम्॥ भाष्ये

**तत्रान्तरङ्गत्वादिति।** (भा)

तासेः परं लसार्वधातुकमित्यनुदात्तत्वस्य बह्वपेक्षत्वादित्यर्थः॥

---

सिध्यति। तथाहि। तप्रत्ययस्य डादेशे कृते लसार्वधातुकस्वरात्परत्वा-ट्टिलोपः। न चेदानीमुदात्तनिवृत्तस्वरो लभ्यः। अनुदात्तत्वात्प्रागेव लोपात्। ननु स्वरभिन्नस्य प्राप्नुवन्ननित्यो डादेशः। शब्दान्तरस्य प्राप्नुवन्ननुदात्तोऽप्य-नित्यः। उभयोरनित्ययोः परत्वादनुदात्तत्वे कृते पुनः प्रसङ्गविज्ञानाड्डा-देशे कृते उदात्तनिवृत्तिस्वरः सुलभ इति चेन्न? अन्तरङ्गत्वाड्डादेश-

---

तर्ह्यन्त्यस्यैव, तिपस्तकारेण सह टिलोपो भवति। ननु तकारान्तमङ्गं न भवति। हित्करणसामर्थ्यादनङ्गस्यापि भविष्यति, यथा सिद्धान्तेऽभस्यापि। अथ वानुपूर्व्यात्सिद्धम्। कथम्। अन्त्यस्याप्ययं स्थाने भवन्प्रत्ययः स्याद् असत्यां प्रत्ययसंज्ञायां इकारस्येत्संज्ञा नास्ति, असत्या चेत्संज्ञायाम-

परत्वाट्टिलोपेनेति। (भा)

ङित्वसामर्थ्येनाङ्गत्वभत्वैकल्पे ऽपि टेरिति (६।४।१४३) शास्त्रस्यैव प्रवृत्त्या तस्य परत्वादिति भावः। एवञ्चानुदात्ते उदात्तलोपाभावादुदात्तनिवृत्तिस्वराप्राप्तौ प्रत्ययस्वरप्राप्तावुदात्तस्वरमेव श्रूयेतेति तात्पर्यम्॥ किमपेक्षया न्याय्यत्वमित्याशङ्क्याह

पूर्वप्रदर्शित इति। (कै)

"न्याय्य एवे"ति भाष्यस्य न्याय्यस्त्वयमित्यर्थः॥

श्वेति। (कै)

व्याख्यातृचिन्तापूर्वमपि परविप्रतिषेधस्यैवोक्तेरिति बोध्यम्॥ टिलोपात्पूर्वमेतत्सम्प्रधारणाया असम्भवादाह

डारौरसिति॥ (कै)

टिलोपे चेति। (कै)

परत्वादिति भावः॥ भाष्ये

---

प्रवृत्तेः। अत्राहुः। अस्तूक्तरीत्या परत्वाट्टिलोपः। तथाप्यसावनुदात्ते अविद्यमानोदात्ते पर इत्यर्थः। अनुदात्तस्यचेति सूत्रे ह्यनुदात्तग्रहणं प्रत्याख्यास्यते, तत्स्थौकारेपि शास्त्रीयोनुदात्तो न गृह्यते, किन्तूदात्तभिन्नः। न च प्रत्ययाद्युदात्तप्रवृत्तेरिदमपि दुर्लभमिति वाच्यम्। परिहृत्य चापवादविषयमिति न्यायेन लसार्वधातुकानुदात्तविषये प्रत्ययस्वराप्रवृत्तेः।

---

नेकाल्, यदानेकाल् तदा सर्वादेशः, यदा सर्वादेशस्तदा प्रत्ययः, यदा प्रत्ययस्तदेत्संज्ञा, यदेत्संज्ञा तदा लोपस्तदैकाल्, न चेदानीं प्रत्यावृत्त्यान्त्यादेशो भवितुमर्हति, तदेतदानुपूर्व्यात्सिद्धम्। 'कर्तारौ कर्तार इति। 'रि चे' ति तासस्त्योर्लोपः। 'अध्येतेति'। इङ् अध्ययने। अथात्र डारौ-

**पुनःप्रसङ्गविज्ञानादित्यपि** (भा)

पर्जन्यवल्लक्षणप्रवृत्त्या लसार्वधातुकानुदात्तत्वे कृते इत्यर्थः॥

**नन्वकृते इति।** (कै)

अपिर्द्विविधं इत्यर्थः॥ ननूदात्तनिवृत्तिस्वराभावे ऽपि परेण टिलोपेन प्रत्ययस्वरापवादस्य लसार्वधातुकानुदात्तत्वस्य सकृद्गति-न्यायेन बाधितत्वात्पुनरप्रवृत्तौ प्रत्ययस्वरप्रवृत्त्येष्टसिद्धिरत आह

**पुनः प्रसङ्गेति।** (कै)

तत्रानुदात्तस्य च यत्रेत्यत्र। ततश्च उदात्तनिवृत्तिस्वरानु-दात्तत्वयोः समप्रधारणा युक्तैवेत्यर्थः॥ ननु तासेरपि प्रत्ययस्वरा-त्प्रागेव परत्वाट्टिलोपे उदात्तनिवृत्तेरेवाभावात्कथमुदात्तनिवृत्ति-स्वरोऽत आह भाष्ये

---

न च तासेः प्रत्ययस्वरात्प्रागेव परत्वाट्टिलोपः शंक्यः। प्रत्ययस्वरस्य प्रत्यय-संनियोगशिष्टत्वेनान्तरङ्गत्वात्। तथा च भाष्ये संग्रहश्लोकौ। प्रत्ययस्वरा-पवादो लसार्वधातुकानुदात्तत्वम्। तेन तत्र न प्रसक्तः प्रत्ययस्वरः कदा चित्॥ प्रत्ययस्वरस्य तासेर्वृत्तिसंनियोगशिष्टः। तेन चाप्यसावुदात्तो लोप्यते तथा न दोषः॥ वृत्तिः प्रवृत्तिः, यदैव तासिः प्रवर्तेत तदैवापवा-दाभाववदुदात्तत्वयुक्तो इत्यर्थः॥

---

रस्, कृतेषु टेरेत्वं कस्मान्न भवति, पूर्वमेवास्मिन्योगे स्थानिषु प्रवृत्तत्वात्। इह हि तच्छब्दस्य टेरेत्वं च प्राप्नोति डादेशश्च। द्वयोरपि शब्दान्तरप्राप्ते-रनित्यत्वात्परत्वाट्टेरेत्वे कृते पुनः प्रसङ्गविज्ञानाड्डादेशः, एवं रौरसोरपि द्रष्टव्यम्। अथवा पूर्वमेव डारौरसो भवन्तु, थासः सेवचनं ज्ञापकं ये तिङादेशास्तेषां टेरेत्वं न भवतीति। अन्यथा थासः स इत्येव वाच्यं स्यात्। 'कर्तासीति'। तासस्त्योरिति सलोपः॥

तासेस्तीति । (भा)

एवञ्च प्रत्ययसन्नियोगशिष्टतयान्तरङ्गत्वादपवादप्रसक्त्यभावाच्चोदात्तत्वयुक्त एवोत्पद्यत इति भावः ॥

इति श्रीशिवभट्टसुतसतीगर्भजनागेशभट्टविरचिते
महाभाष्यप्रदीपोद्योते द्वितीयोऽध्यायः ॥ ० ॥
समाप्तं चाह्निकम् ॥
शुभमस्तु ॥

---

अपीत्थं संस्कारं बहितमनसा मुद्रणविधौ
मयानीतो यत्नाद्विबुधजनसन्तोषजननः ।
प्रसन्ने गम्भीरे सकलपदलाभैकसरणौ
प्रदीपोद्द्योतोऽयं विलसतु महाभाष्यगहने ॥

इति वङ्गदेशीयकाश्यपगोत्रोत्पन्नचट्टोपाध्यायवंशसमुद्भव-
बहुवल्लभशर्मविरचिते महाभाष्यप्रदीपोद्द्योतविषमपदव्याख्याने
द्वितीयोऽध्यायः ॥

शिवम् ॥



# महाभाष्यप्रदीपोद्योतस्थद्वितीयाध्यायस्य सूत्र-वार्त्तिकमहाभाष्यादीनां वर्णानुक्रम-सूचीपत्रकम् ।

## अ ।

## आ ।

ई ।



उ ।

ऐ।



औ।



क।

## ख।



## ग।

ङ।



च।



छ।



ज।

थ ।

## द ।

## ध ।

## प ।

## फ।



## ब।

## भ ।

## र ।

## ल ।

## व ।

ष ।

## स ।

